# रघुवंशम्

महाकवि कालिदास-विरचितम् ।

महामहोपाध्याय श्रीमन्मल्लिनाथसूरिकृत
सञ्जीवनाख्यटीका तथा अन्वयेन च
समन्वितम् ।




---

श्रीयुक्त हरिपद चट्टोपाध्यायेन सम्पादितम् ।

द्वितीयसंस्करणम् ।

कलिकाता-नगर्य्याम् ।
१२ नं० हरीतकीबागान-लेनस्थ
शास्त्रप्रकाश कार्य्यालयात्
सम्पादकेन प्रकाशितम् ।

---

१३२२

---

मूल्यं सार्द्धरौप्यकद्वयम् ।

# टोलेर संस्कृत पाठ्य ग्रन्थावली।

(देवनागर अक्षरे)

**भट्टिकाव्यम्।** १—९ सर्ग पर्य्यन्त, (प्रथम खण्ड) मूलश्लोक, जयमङ्गल ओ भरतकृत टीकासम्बलित।

**भट्टिचन्द्रिका।** (१—९ सर्गेर व्याख्याखण्ड) अन्वय, वाच्यान्तर, सरलार्थ, धातुरूप, बङ्गानुवाद, इंराजी अनुवाद, हिन्दी अनुवाद, परीक्षार प्रश्नमाला, सर्गसंक्षेप, टिप्पनी, संक्षिप्तसार, सुपद्म ओ कलाप व्याकरणेर ज्ञातव्य विषय प्रभृति छात्रगणेर पाठ्योपयोगी समुदय विषय विशदभावे विवृत हइयाछे। उभय खण्ड एकत्र बाँधाइ ३॥०

**भट्टि।** (द्वितीय खण्ड १०—२२ सर्ग) मूल, टीका ओ अनुवाद सह मूल्य २),

**रघुवंशम्।** १—१९ सर्ग, भट्टिर न्याय दुइ खण्डे सम्पूर्ण प्रथम खण्डे मूल ओ मल्लिनाथकृत सञ्जीवनी टीका; द्वितीय खण्डे रघुचन्द्रिकाय व्याकरण सम्बन्धीय विषय, पौराणिकी वार्त्ता, भौगलिक विवरण, कालिदासेर जीवनी, अन्वय, वाच्यान्तर, सरलार्थ, भावार्थ, बङ्गानुवाद, इंराजी अनुवाद, हिन्दी अनुवाद ओ परीक्षार प्रश्नमाला इत्यादि समुदय ज्ञातव्य विषय सन्निवेशित हइयाछे। उभय खण्डेर मूल्य २॥०

**मालविकाग्निमित्रम्।** (नाटकम्, सटीकम्) मूल्य १॥०

**दशकुमारचरितम्।** (सटीकम्) मूल्य १॥०

**उत्तररामचरितम्।** (नाटकम् सटीकम्) मूल्य २)

**किरातार्ज्जुनीयम्।** १—७ सर्ग सम्पूर्णम्। रघुवंशेर न्याय समुदय विषय लिखित हइयाछे॥ मूल्य २) टाका।

**शिशुपालबधम्।** (सटीकम् सम्पूर्णम्) मूल्यम् मुद्रा-त्रयम्।

**मेघदूतम्।** दुइ खण्डे सम्पूर्ण। रघु ओ कुमारेर न्याय विशदभावे लिखित, मूल्य १) टाका।

**সাহিত্যদর্পণম্।** (নূতন সংস্করণ) বিশ্বনাথ কবিরাজ কৃত মূলবৃত্তি, রামচরণতর্কবাগীশ কৃত দর্পণবিবৃতি নামক টীকা, উদাহৃতশ্লোকের ব্যাখ্যা সহিত, মূল্য ২৷৷০

**শ্রীশ্রীচণ্ডী।** (তালপত্রে মুদ্রিত) সঙ্কল্প, অর্গল, কীলক, স্তব, কবচ, চণ্ডীমাহাত্ম্য প্রভৃতি সকল জ্ঞাতব্য বিষয় বিবৃত হইয়াছে। মূল্য ১) টাকা।

**সংস্কৃত বোধিকা।** প্রথম ভাগ, প্রথম সংস্কৃতপাঠার্থীগণের বিশেষ উপযোগী পুস্তক। মূল্য ৶ আনা।

## বঙ্গাক্ষরে মুদ্রিত সংস্কৃত পুস্তকাবলী।

**হিতোপদেশম্**—(মিত্রলাভ) অন্বয়, বাচ্যান্তর ও বঙ্গানুবাদ সহ (দ্বিতীয় সংস্করণ) মূল্য ৸৵০ আনা।

**শ্রুতবোধঃ**—সুবোধিনী ব্যাখ্যা সহ মূল্য ৵০ আনা।

**কলাপসূত্রম্**—কৃৎপরিশেষশিক্ষা, পরিভাষা, বলাবলসূত্রম্ মূল্য ৴০ আনা।

**ছন্দোমঞ্জরী**—কাব্যোপাধি পরীক্ষার পাঠ্য, মূল্য ।৵০ আনা।

**অমরকোষঃ**—মূল, সংশোধিত সংস্করণ মূল্য ।৵০ আনা।

**মুগ্ধবোধং ব্যাকরণম্**—দুর্গাদাস ও রামতর্কবাগীশ কৃত টীকা এবং নন্দকিশোর ভট্টাচার্য্য বিরচিত পরিশিষ্ট, পদপরিচয়, বঙ্গানুবাদ, আগু মধ্য ও উপাধি পরীক্ষার প্রশ্নমালা সহ উৎকৃষ্ট বাঁধাই, মূল্য ৩৲।

**সন্ধি কড়চা**—অল্পবয়স্ক বালকগণের বিশেষ উপযোগী, ছাত্রগণ অধ্যাপকের বিনা সাহায্যে নিজে নিজে বুঝিতে পারিবেন। মূল সূত্র, টীকা, পদচ্ছেদ, যোজনা ও যে সমুদয় বিভাগে সংক্ষিপ্তসার অধীত হইয়া থাকে, তৎবিভাগীয় চলিত ভাষায় বঙ্গানুবাদ করা হইয়াছে। মূল্য বাঁধাই ৶০।

**সুবন্ত কড়চা**—সন্ধি কড়চার ন্যায় সমুদয় বিষয় সন্নিবেশিত, মূল্য ৶০

**আগ্নেয়ং পর্ব্ব**—মাধবীয় ভাষ্য ও বঙ্গানুবাদ সহ মূল্য ১৷৷০

**পাতঞ্জল যোগসূত্রম্**—ভোজবৃত্তি টীকা সহ মূল্য ৸০

☞ আমাদের **শাস্ত্রপ্রকাশ কার্য্যালয়** হইতে ১৬ খণ্ডে সমাপ্ত সমুদয় উপনিষৎ বাহির হইয়াছে, মূল্য ২০৲ টাকা।

**শ্রীমদ্ভাগবতম্**—(১০ম স্কন্ধ মূল, অন্বয়, টীকা ও বঙ্গানুবাদ সহ) বিস্তৃত পুস্তক—মূল্য ১২৲ টকা।

# रघुवंशम्

## प्रथमः सर्गः।

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १

अन्वयः। (अहं) वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्दे ॥ १

इह खलु सकलकविशिरोमणिः कालिदासः, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां, 'काव्यालापांश्च वर्जयेत्' इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्, रघुवंशाख्यं महाकाव्यं चिकीर्षुः; चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, 'आशीर्नमस्क्रिया-वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् काव्यनिर्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च 'शब्दजातमशेषन्तु धत्ते शर्वस्य वल्लभा। अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः' इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तत्वदर्शनात् तत्प्रतिपित्सया तावेवाभिवादयते।

वागर्थाविवेति। वागर्थाविवेत्येकं पदम्। इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्चेति वक्तव्यम् एवमन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दार्थाविव। सम्पृक्तौ नित्यसम्बद्धावित्यर्थः नित्यसम्बद्धयोरुपमानत्वेनोपादानात्। "नित्यः शब्दार्थसम्बन्धः" इति मीमांसकाः। जगतः लोकस्य पितरौ। माता च पिता च पितरौ, 'पिता मात्रा' इति द्वन्द्वैकशेषः। 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः। एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वञ्च सूच्यते।

क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २
मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३

अन्वयः । सूर्य्यप्रभवो वंशः क्व, अल्पविषया मे मतिश्च क्व, ( अहं ) मोहात् उडु
दुस्तरं सागरं तितीर्षुः अस्मि ॥ २

अन्वयः । ( अहं ) मन्दः कवियशःप्रार्थी फले लोभात् उद्बाहुर्वामन इव उपहास्य
गमिष्यामि ॥ ३

पर्वतस्यापत्यं स्त्री पार्वती, 'तस्यापत्यम्' इत्यण् । 'टिड्ढाणञ्' इत्यादिना ङीप् । पार्वती च
च परमेश्वरश्च पार्वतीपरमेश्वरौ । परमशब्दः सर्वोत्तमत्वद्योतनार्थः मातुरभ्यर्हितत्वादभ्य
र्हितत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थम् । वन्दे
ऽभिवादये । अत्र उपमालङ्कारः स्फुट एव । यथोक्तम्—'स्वतःसिद्धेन भिन्नेन सम्पन्नेन
धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा ॥' इति प्रायिकश्चोपमालङ्का
कालिदासोक्तकाव्यादौ । भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते । तदु
क्तम्—'शुभदो मो भूमिमयः' इति । वकारस्यामृतबीजत्वात् प्रचयगमनादिसिद्धिः ॥ १
( अलङ्कृतेरत्र विचारणा या तर्कोऽस्ति यो व्याकरणाश्रितो वा क्वचित् क्वचित् सा स
दिश्यते वै प्रणम्य भक्त्या चरणौ विधातुः )

सम्प्रति कविः स्वाहङ्कारं परिहरति 'क्व सूर्य्य' इत्यादिश्लोकद्वयेन—प्रभवति अस्मा
इति प्रभवः कारणम् । 'ऋदोरप्' । 'अकर्त्तरि च कारके संज्ञायाम्' इति साधुः । सूर्य्यः
प्रभवो यस्य सः सूर्य्यप्रभवः वंशः क्व अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा
क्व । द्वौ क्वशब्दौ महदन्तरं सूचयतः । सूर्य्यवंशमाकलयितुं न शक्नोमीत्यर्थः । तथा
तद्विषयप्रबन्धनिरूपणन्तु दूरापास्तमिति भावः । तथाहि—दुस्तरं तरितुमशक्यम्, 'ईषद्दुःसु
इत्यादिना खल्प्रत्ययः । सागरं मोहादज्ञानात् उडुपेन प्लवेन । 'उडुपन्तु प्लवः कोल
इत्यमरः । अथवा चर्मावनद्धेन पानपात्रेण । 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्
इति सज्जनः । तितीर्षुस्तरीतुमिच्छुः अस्मि भवामि तरतेः सन्नन्तात् उप्रत्ययः । अल्पसाधने
रधिकारम्भो न सुकर इति भावः । इदञ्च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम्
'प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः' इति ॥ २

मन्द इति । किञ्च, मन्दो मूढः । "मूढाल्पापटुनिर्भाग्या मन्दाः स्यु"रित्यमरः । तथा
कवियशःप्रार्थी कवीनां यशः यत् काव्यनिर्माणेन जातं तत्प्रार्थनाशीलः अहं प्रांशुना
उन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभादुद्बाहुः फलग्रहणाय उच्छ्रितहस्तो वामनः
खर्वं इव । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । उपहास्यतामुपहासविषयताम् । 'ऋहलो
र्ण्यत् इति ण्यत्प्रत्ययः । गमिष्यामि प्राप्स्यामि ॥ ३

अथवा क्षतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभि: ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गति: ॥ ४
सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६

अन्वय: । अथवा पूर्व्वसूरिभि: क्षतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य इव मे गतिरस्ति ॥ ४

अन्वय: । सोऽहं तनुवाग्विभवोऽपि तद्गुणै: कर्णमागत्य चापलाय प्रणोदित: सन्; आजन्मशुद्धानाम्, आफलोदयकर्म्मणाम्, आसमुद्रक्षितीशानाम्, आनाकरथवर्त्मनाम्, यथाविधिहुताग्नीनाम्, यथाकामार्च्चितार्थिनाम्, यथापराधदण्डानाम्, यथाकालप्रबोधिनाम्, त्यागाय सम्भृतार्थानाम्, सत्याय मितभाषिणाम्, यशसे विजिगीषूणाम्, प्रजायै गृहमेधिनाम्, शैशवे अभ्यस्तविद्यानाम्, यौवने विषयैषिणाम्, वार्द्धके मुनिवृत्तीनाम्, अन्ते योगेन तनुत्यजां रघूणाम् अन्वयं वक्ष्ये ॥ ५, ६, ७, ८, ९,

ननु चेत् तर्हि त्यज्यतामयमुद्योग इत्यत आह—अथवेति । अथवा पक्षान्तरे पूर्वै: सूरिभि: कविभि: वाल्मीक्यादिभि:, क्षतवाग्द्वारे क्षतं रामायणादिप्रबन्धरूपा या वाक् सा एव द्वारं प्रवेशो यस्य तस्मिन्, अस्मिन् सूर्य्यप्रभवे वंशे कुले, जन्मनैकलक्षण: सन्तान: वंश: । वज्रेण मणिवेधकसूचीविशेषेण । 'वज्र" त्वस्त्री कुलिशशस्त्रयो: । मणिवेधे रत्नभेदे' इति केशव: । समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्य इव मे मम गति: सञ्चार: अस्ति । वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थ: ॥ ४

एवं रघुवंशे लब्धप्रवेशस्तद्वर्णनां प्रतिजानान: 'सोऽहम्' इत्यादिभि: पञ्चभि: श्लोकै: कुलकेनाह, सोऽहमिति । स: अहं 'रघूणामन्वयं वक्ष्ये' इत्युत्तरेण सम्बन्ध: । किंविधानां रघूणाम्? इत्यत्र उत्तराणि विशेषणानि योज्यानि । आजन्मन: जन्म आरभ्येत्यर्थ: । 'आङ्मर्य्यादाभिविध्यो:' इत्यव्ययीभाव: । शुद्धानाम् सुप्सुपेति समास: एवमुत्तरत्रापि द्रष्टव्यम् । आजन्मशुद्धानां निषेकादिसर्वसंस्कारसम्पन्नानामित्यर्थ: । आफलोदयमाफलसिद्धे: कर्म्म येषां ते तथोक्ता: तेषां, प्रारब्धान्तगामिनामित्यर्थ: । आसमुद्रं क्षितेरीशानां सार्वभौमाणामित्यर्थ: । आनाकं रथवर्त्म येषां ते तेषाम्, इन्द्रसहचारिणामित्यर्थ: । अत सर्वत्र आङोऽभिविध्यर्थत्वं द्रष्टव्यम्, मर्य्यादार्थत्वे तु जन्मादिषु शुद्ध्यभावप्रसङ्ग: ॥ ५

यथाविधीति । विधिमनतिक्रम्य यथाविधि । 'यथा साहश्ये' इत्यव्ययीभाव: । तथा हुतशब्देन सुप्सुपेति समास: एवं यथाकामार्चितेत्यादीनामपि द्रष्टव्यम् । यथाविधि हुता अग्नयो यै: तेषाम् । यथाकाममभिलाषमनतिक्रम्य अर्चितार्थिनाम् । यथापराधम् अपराधमनतिक्रम्य दण्डो येषां, ते तेषाम् । यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधन-

त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९

शीलानाम् । चतुर्भिर्विशेषणैः देवतायजनार्थिसत्कारदण्डधरत्वप्रजापालनसमयजागरू त्वादीनि विवक्षितानि ॥ ६

त्यागायेति । त्यागाय सत्पात्रे विनियोगः त्यागः तस्मै । 'त्यागो विहापनं दान' इत्यमरः । सम्भृतार्थानां सञ्चितधनानां, नतु दुर्व्यापाराय । सत्याय मितभाषिणां मित भाषणशीलानां, न तु पराभवाय । यशसे कीर्त्तये । 'यशः कीर्त्तिः समज्ञा च" इत्यमरः । विजिगीषूणां विजेतुम् इच्छूनां' नतु अर्थसंग्रहाय । प्रजायै सन्तानाय गृहमेधिनां दा परिग्रहशीलानां, नतु कामोपभोगाय । अत्र त्यागायेत्यादिषु 'चतुर्थी तादर्थ्ये' इत्यादि तादर्थ्ये चतुर्थीसमासविधानज्ञापकात् चतुर्थी । गृहैः दारैः मेधन्ते सङ्गच्छन्ते इति गृ मेधिनः । 'दारेष्वपि गृहाः' इत्यमरः । 'जाया च गृहिणी गृहम्' इति हलायुधः । मेधृ सङ्गमे इति धातोर्णिनिः । एभिर्विशेषणैः परोपकारित्वं सत्यवचनत्वं यशःपर पितॄणां शुद्धत्वञ्च विवक्षितानि ॥ ७

शैशव इति । शिशोर्भावः शैशवं बाल्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्र' इत्यञ् प्रत्ययः । 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । तस्मिन् वयसि अभ्यस्तविद्यानाम्, एते ब्रह्मचर्य्याश्रमो विवक्षितः । यूनो भावः यौवनं तारुण्यम् । युवादित्वात् अण्प्रत्ययः 'तारुण्यं यौवनं समम्' इत्यमरः । तस्मिन् वयसि विषयैषिणां भोगाभिलाषिणाम्, एते गृहस्थाश्रमो विवक्षितः । वृद्धस्य भावः वार्द्धकं वृद्धत्वम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्, "वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्म्मणि" इति विश्वः । तस्मिन् वार्द्धके वयसि मुनी वृत्तिरिव वृत्तिर्येषाम्, तेषाम्, एतेन वानप्रस्थाश्रमो विवक्षितः । अन्ते शरीरत्यागका योगेन परमात्मध्यानेन । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । तनुं दे त्यजन्ति इति तनुत्यजां देहत्यागिनाम् । 'कायो देहः क्लीवपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः इत्यमरः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । एतेन भिक्षाश्रमो विवक्षितः ॥ ८

रघूणामिति । सोऽहं लब्धप्रवेशः, तनुवाग्विभवोऽपि स्वल्पवाणीप्रसारोऽपि स तेषां रघूणां गुणैः तद्गुणैः आजन्मशुद्धादिभिः कर्त्तृभिः कर्णं मम श्रोत्रम् आगत्य चापला चापलं चपलकर्म्म अविमृश्यकरणरूपं कर्त्तुम् । युवादित्वात् कर्म्मण्यण् 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी । प्रचोदितः प्रेरितः सन् रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये कु कम् ॥ ९

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १०
वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११
तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२
व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्त्रो धर्म इवाश्रितः ॥ १३

अन्वयः । सदसद्व्यक्तिहेतवः सन्तः तं श्रोतुम् अर्हन्ति हेम्नः विशुद्धिः श्यामिकापि वा अग्नौ संलक्ष्यते हि ॥ १०

अन्वयः । मनीषिणां माननीयः छन्दसां प्रणव इव महीक्षिताम् आद्यो वैवस्वतो नाम मनुः आसीत् ॥ ११

अन्वयः । शुद्धिमति तदन्वये शुद्धिमत्तरः दिलीप इति राजेन्दुः क्षीरनिधौ इन्दुरिव प्रसूतः ॥ १२

अन्वयः । ( स कथम्भूतः ? ) व्यूढोरस्कः वृषस्कन्धः शालप्रांशुः महाभुजः ( अतः ) आत्मकर्मक्षमं देहम् आश्रितः क्षात्त्रो धर्म्म इव ( स्थितः ) ॥ १३

सम्प्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते तमिति । तं रघुवंशाख्यं प्रबन्धं सदसतोः गुणदोषयोः व्यक्तेः हेतवः कर्त्तारः सन्तः श्रोतुम् अर्हन्ति तथाहि हेम्नः विशुद्धिः निर्दोषस्वरूपं श्यामिका अपि लोहान्तरसंसर्गात्मको दोषोऽपि वा अग्नौ संलक्ष्यते, न अन्यत्र । तद्वत् अत्रापि सन्त एव गुणदोषविवेकाधिकारिणो न अन्ये इति भावः ॥ १०

वर्ण्यं वस्तु उपक्षिपति, वैवस्वत इति । मनस ईषिणो मनीषिणो धीराः विद्वांस इति यावत् । पृषोदरादित्वात् साधुः । तेषां माननीयः पूज्यः छन्दसां वेदानाम् । 'छन्दः पद्ये च वेदे च' इति विश्वः । प्रणव ओंकार इव । महीं क्षियन्ति ईशते इति महीक्षितः क्षितीश्वराः, क्षिधातोरैश्वर्य्यार्थात् क्विप् तुगागमश्च । तेषाम् आद्यः आदिभूतः । विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतो नाम वैवस्वतो इति प्रसिद्धो मनुरासीत् ॥ ११

तदन्वये इति । शुद्धिरस्यास्तीति शुद्धिमान् तस्मिन् शुद्धिमति तदन्वये तस्य मनोः अन्वये वंशे । 'अन्ववायोऽन्वयो वंशो गोत्रञ्चाभिजनः कुलम्' इति हलायुधः । अतिशयेन शुद्धिमान् शुद्धिमत्तरः । 'द्विवचनविभज्योप' इत्यादिना तरप् । दिलीप इति प्रसिद्धः । राजा इन्दुरिव राजेन्दुः राजश्रेष्ठः । उपमितं व्याघ्रादिना समासः । क्षीरनिधौ इन्दुरिव प्रसूतः जातः ॥ १२

व्यूढे ति । 'व्यूढे" इत्यादिभिः श्लोकैर्दिलीपं विशिनष्टि । व्यूढं विपुलमुरो यस्य सः व्यूढोरस्कः । 'उरःप्रभृतिभ्यः कप्' । 'व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठञ्च' इति

सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना॥ १४
आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भ आरम्भसदृशोदयः॥ १५
भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥ १६
रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः॥ १७

अन्वयः। (पुनः) सर्व्वातिरिक्तसारेण सर्व्वतेजोभिभाविना सर्व्वोन्नतेन आत्मना मेरुरिव उर्व्वीं क्रान्त्वा स्थितः॥ १४

अन्वयः। (पुनः) (सः) आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः आगमैः सदृशारम्भः आरम्भसदृशोदयः (आसीत्)॥ १५

अन्वयः। स भीमकान्तैः, नृपगुणैः उपजीविनाम् यादोरत्नैः अर्णव इव अधृष्यः अभिगम्यश्च बभूव॥ १६

यादवः। वृषस्य स्कन्ध इव स्कन्धो यस्य सः तथा। "सप्तम्युपमान" इत्यादिना उत्तरपदलोपी बहुव्रीहिः। शाली वृक्ष इव प्रांशुः उन्नतः शालप्रांशुः। 'प्राकारवृक्षयोः शालः शालः सर्ज्जतरुः स्मृतः' इति यादवः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः। महाभुजः महाबाहुः, आत्मकर्मक्षमं स्वव्यापारानुरूपं देहम् आश्रितः प्राप्तः क्षात्रः क्षात्रसम्बन्धी धर्म इव स्थितः। मूर्त्तिमान् पराक्रम इव स्थित इत्युत्प्रेक्षा॥ १३

सर्वातिरिक्तेति। सर्वातिरिक्तसारेण सर्वेभ्यः भूतेभ्यः अधिकबलेन। 'सारो बले स्थिरांशे च' इत्यमरः। सर्वाणि भूतानि तेजसा अभिभवति इति सर्वतेजोऽभिभावी तेन, सर्वेभ्य उन्नतेन आत्मना शरीरेण। 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति विश्वः। मेरुरिव उर्वीं क्रान्त्वा आक्रम्य स्थितः। मेरावपि विशेषणानि तुल्यानि। 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः। तस्मादभिभवत्येष सर्वभूतानि तेजसा।' इति मनुवचनात् राज्ञः सर्वतेजोऽभिभावित्वं ज्ञेयम्॥ १४

आकारेति। आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः, प्रज्ञया सदृशागमः प्रज्ञानुरूपशास्त्रपरिश्रमः आगमैः सदृश आरम्भः कर्म यस्य सः तथोक्तः, आरभ्यते इति आरम्भः कर्म तत्सदृश उदयः फलसिद्धिर्यस्य सः तथोक्तः॥ १५

भीमेति। भीमैः कान्तैश्च नृपगुणैः राजगुणैः तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च सः दिलीपः उपजीविनाम् आश्रितानां यादोभिः जलजीवैः। 'यादांसि जलजन्तवः' इत्यमरः। रत्नैश्च अर्णव इव अधृष्यः अनभिभवनीयश्च अभिगम्य आश्रयणीयश्च बभूव॥ १६

रेखामात्रमिति। नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य सम्बन्धिन्यः नेमीनां

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८

सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥१९

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २०

अन्वयः । नियन्तुस्तस्य (सर्व्वान्वियः) नेमिवृत्तयः प्रजाः आमनोः क्षुणात् वर्त्मनः परं रेखामात्रमपि न व्यतीयुः ॥ १७

अन्वयः । सः प्रजानां भूत्यर्थमेव ताभ्यः बलिम् अग्रहीत्, ( तथाहि ) रविः सहस्रगुणम् उत्स्रष्टुम् रसम् आदत्ते ॥ १८

अन्वयः । तस्य सेना परिच्छदः (अभूत), शास्त्रेषु अकुण्ठिता बुद्धिः धनुषि आतता मौर्वी च एतद्द्वयम् अर्थसाधनम् ( बभूव ) ॥ १९

अन्वयः । संवृतमन्त्रस्य गूढाकारेङ्गितस्य च तस्य प्रारम्भाः प्राक्तनाः संस्काराः इव फलानुमेयाः ( आसन् ) ॥ २०

चक्रधारायां वृत्तिरिव वृत्तिर्व्यापारो यासां ताः । 'चक्रधारा प्रधिर्नेमिः' इति यादवः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः । प्रजाः आ मनोः मनुमारभ्य । इत्यभिविधिः, पदद्वयं चैतत् समासस्य विभाषितत्वात् । क्षुण्णात् अभ्यस्तात् प्रहताच्च वर्त्मनः आचारपद्धतेः अध्वनश्च परम् अधिकम् इतस्ततः इत्यर्थः । रेखा प्रमाणमस्येति रेखामात्रं रेखाप्रमाणम् ईषदपीत्यर्थः । 'प्रमाणे द्वयसज्' इत्यादिना मात्रच्प्रत्ययः । परशब्दविशेषणं चैतत् । न व्यतीयुः न अतिक्रान्तवत्यः । कुशलसारथिप्रेरिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरिति भावः ॥ १७

प्रजानामिति । सः राजा प्रजानां भूत्यै अर्थाय, भूत्यर्थं वृद्ध्यर्थम् एव । अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या. ग्रहणक्रियाविशेषणञ्चैतत् । ताभ्यः प्रजाभ्यो बलिं षष्ठांशरूपं करम् अग्रहीत् । 'भागधेयः करो बलिः' इत्यमरः । तथाहि—रविः सहस्रं गुणा यस्मिन् कर्म्मणि तत् यथा तथा सहस्रगुणं सहस्रधा उत्स्रष्टुं दातुम् । उत्सर्जनक्रियाविशेषणञ्चैतत् । रसमम्बु आदत्ते गृह्णाति । 'रसो गन्धे रसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे' इति विश्वः ॥ १८

सम्प्रति बुद्धिशौर्य्यसम्पन्नस्य तस्य अर्थसाधनेषु परानपेक्षत्वमाह सेनेति । तस्य राज्ञः सेना चतुरङ्गबलं, परिच्छाद्यते अनेनेति परिच्छदः उपकरणं बभूव छत्रचामरादितुल्यमभूदित्यर्थः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । 'छादेर्घेऽद्व्युपसर्गस्य' इति उपधाह्रस्वः । अर्थस्य प्रयोजनस्य तु साधनं द्वयम् एव, शास्त्रेषु अकुण्ठिता अव्याहता बुद्धिः । 'व्यापृता' इत्यपि पाठः । धनुषि आतता आरोपिता मौर्वी च । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । नीतिपुरःसरमेव तस्य शौर्य्यमभूदित्यर्थः ॥१९

राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह तस्येति । संवृतमन्त्रस्य गुप्तविचारस्य । 'वेद-

जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।
गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव ॥ २२

अन्वयः । सः अत्रस्तः एव आत्मानं जुगोप, अनातुरः एव धर्म्मं भेजे, अगृध्नुरेव अर्थम् आददे, असक्त एव सुखम् अन्वभूत् ॥ २१

अन्वयः । ज्ञाने मौनम्, शक्तौ क्षमा, त्यागे श्लाघाविपर्य्ययः अतस्तस्य गुणाः गुणानुबन्धित्वात् सप्रसवा इव (बभूवुः) ॥ २२

भेदे गुप्तवादे मन्त्रः' इत्यमरः। शोकहर्षादिसूचको भ्रूकुटीमुखरागादिः आकारः, इङ्गितं चेष्टितं हृदयगतविकारो वा। 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' इति सज्जनः। गूढे आकारेङ्गिते यस्य, स्वभावचपलत्वात् भ्रमपरम्परया मुखरागादिलिङ्गैर्वा अप्रतीयगामिमन्त्रस्य तस्य, प्रारभ्यन्ते इति प्रारम्भाः सामाद्युपायप्रयोगाः, प्रागित्यव्ययेन पूर्वजन्म उच्यते तत्र भवाः प्राक्तनाः। 'सायंचिर' इत्यादिना ट्युल्प्रत्ययः। संस्काराः पूर्व्वकर्म्मवासनाः इव फलेन कार्य्येण अनुमेयाः अनुमातुं योग्याः आसन्। अत्र याज्ञवल्क्यः, 'मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्। कुर्य्यात् यथा तन्न विदुः कर्म्मणामाफलोदयात्' इति ॥ २०

सम्प्रति सामाद्युपायान् विनैव आत्मरक्षादिकं कृतवानित्याह, जुगोपेति। अत्रस्तः अभीतः सन्। 'त्रस्तो भीरुभीरुकभीलुकाः' इत्यमरः। त्रासोपाधिम् अन्तरेणैव त्रिवर्गसिद्धेः प्रथमसाधनत्वादेव आत्मानं शरीरं जुगोप रक्षितवान्। अनातुरः अरुग्न एव धर्मं सुकृतं भेजे अर्जितवानित्यर्थः। अगृध्नुः अगर्धनशीलः एव अर्थम् आददे स्वीकृतवान्। 'गृध्नुस्तु गर्धनोलुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ' इत्यमरः। 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः। असक्त आसक्तिरहित एव सुखमन्वभूत् ॥ २१

ननु अत्रस्तस्य जनस्य आत्मरक्षणं कथं सङ्गच्छते, यः कस्मादपि न बिभ्यति स आत्मानं रक्षितुम् कथं यतते सत्यम् धर्म्मार्थकामान् साधयितुम् आत्मरक्षणं सर्व्वथा युक्तमेव इति विरोधस्य परिहारः। सर्व्वत्रैवं ज्ञातव्यम्।

परस्परविरुद्धानामपि गुणानां तत्र साहचर्य्यमासीदित्याह, ज्ञाने इति। ज्ञाने परवृत्तान्तज्ञाने सति अपि मौनं वाङ्नियमनम्। यथाह कामन्दकः—'नात्मीपतापि वचनं मौनं व्रतचरिष्णुता' इति। शक्तौ प्रतीकारसामर्थ्येऽपि क्षमा अपकारसहनम्। अत्र चाणक्यः 'शक्तानां भूषणं क्षमा' इति। त्यागे वितरणे सत्यपि श्लाघायाः विकत्थनस्य विपर्य्ययः अभावः। अत्राह मनुः—'न दत्त्वा परिकीर्त्तयेत्' इति इत्थं तस्य गुणाः ज्ञानादयः गुणैः विरुद्धैः मौनादिभिः अनुबन्धित्वात् सहचारित्वात् सह प्रसवो जन्म येषां ते सप्रसवाः सोदराः इव अभूवन्। विरुद्धा अपि गुणाः तस्मिन् अविरोधेनैव स्थिता इत्यर्थः ॥२२

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्म्मरतेरासीद् वृद्धत्वं जरसा विना ॥ २३
प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४
स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म्म एव मनीषिणः ॥ २५

अन्वयः । विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्म्मरतेः, तस्य जरसा विना वृद्धत्वम् आसीत ॥ २३

अन्वयः । सः विनयाधानात् रक्षणात् भरणादपि प्रजानां पिता (आसीत्) तासां पितरः केवलं जन्महेतव (आसन्) ॥ २४

अन्वयः । स्थित्यै दण्ड्यान् दण्डयतः प्रसूतये परिणेतुः मनीषिणस्तस्य अर्थकामौ अपि धर्म्म एव आस्ताम् ॥ २५

द्विविधं वृद्धत्वं ज्ञानेन वयसा च, तत्र तस्य ज्ञानेन वृद्धत्वमाह, अनाकृष्टस्येति । विषयैः शब्दादिभिः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः । अनाकृष्टस्य अवशीकृतस्य, विद्यानां वेदवेदाङ्गादीनां पारदृश्वनः पारमन्त दृष्टवतः । दृशेः क्वनिप् । धर्मे रतिर्यस्य तस्य राज्ञः जरसा जरया विना । 'विस्रसा जरा' इत्यमरः । 'षिद्भिदादिभ्योऽङ्' इति अङ्प्रत्ययः । 'जराया जरसन्यतरस्याम्' इति जरसादेशः । वृद्धत्वं वार्द्धकम् आसीत् । तस्य यूनोऽपि विषयवैराग्यादिज्ञानगुणसम्पत्त्या ज्ञानतोवृद्धत्वमासीदित्यर्थः । नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा 'अनाकृष्टस्य' इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशीलवृद्धत्वान्युक्तानीत्यवोचत् ॥ २३

प्रजानामिति । प्रजायन्ते इति प्रजाः जनाः । 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः । 'प्रजा स्यात् सन्ततौ जने' इत्यमरः । तासां विनयस्य शिक्षायाः आधानात् करणात् । सन्मार्गप्रवर्त्तनात् इति यावत्, रक्षणात् भयहेतुभ्यः त्राणात्, आपन्निवारणात् इति यावत् । भरणात् अन्नपानादिभिः पोषणादपि । अपि समुच्चये । सः राजा पिता अभूत्, तासां पितरस्तु जन्महेतवः जन्ममात्रकर्त्तारः केवलमुत्पादका एवाभूवन् । जननमात्र एव पितॄणां व्यापारः, सदा शिक्षारक्षणादिकन्तु स एव करोतीति तस्मिन् पितृत्वव्यपदेशः । आहुश्च,—'स पिता यस्तु पोषकः' इति ॥ २४

स्थित्यै इति । दण्डम् अर्हन्तीति दण्ड्याः । दण्डादिभ्यो यः इति यप्रत्ययः । 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥' इति शास्त्रवचनात् । तान् दण्ड्यान् एव स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः, प्रसूतये सन्तानाय एव परिणेतुः दारान् परिगृह्णतः मनीषिणः विदुषः दीर्घज्ञस्य इति यावत् । "विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः । धीरो मनीषी" इत्यमरः । तस्य दिलीपस्य अर्थकामौ अपि धर्मे एव आस्तां जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयो-

दुदोह गां स यज्ञाय शस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७

द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८

अन्वयः । स यज्ञाय गां, मघवा शस्याय दिवं दुदोह, उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः ॥२६

अन्वयः । राजानः रक्षितुः तस्य यशः न अनुययुः किल, यत् तस्करता परस्वेभ्यो व्यावृत्ता श्रुतौ स्थिता ॥ २७

अन्वयः । शिष्टः द्वेष्योऽपि आर्त्तस्य औषधं यथा ( तथा ) तस्य सम्मतः, दुष्टः प्रियोऽपि उरगक्षता अङ्गुलीव ( तस्य ) त्याज्य आसीत् ॥ २८

लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेन अनुष्ठानात् अर्थकामावपि धर्मशेषतामापादयन् स राजा धर्मोत्तरोऽभूदित्यर्थः। आह च गौतमः,—'न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्यात् यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यादिति ॥ २५

दुदोहेति । सः राजा यज्ञाय यज्ञं कर्त्तुं गां भुवं दुदोह, करग्रहणेन रिक्तां चकार इत्यर्थः। मघवा देवेन्द्रः शस्याय शस्यं वर्द्धयितुं दिवं स्वर्गं दुदोह, द्युलोकात् महीलोके वृष्टिमुत्पादयामास इत्यर्थः। 'क्रियार्थोपपदस्य' इत्यादिना यज्ञशस्याभ्यां चतुर्थी। एवमुभौ सम्पदः विनिमयेन परस्परमादानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञैरिन्द्रः लोकम्, इन्द्रश्च उदकेन भूलोकं पुपोष इत्यर्थः। उक्तञ्च दण्डनीतौ—'राजा त्वर्थान् समाहृत्य कुर्य्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् । इति ॥ २६

न किलेति । राजानः अन्ये नृपा रक्षितुः भयेभ्यस्त्रातुः तस्य राज्ञः यशः न अनुययुः किल न अनुचक्रुः खलु । कुतः, यत् यस्मात् कारणात् तस्करता चौर्य्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता । अपहार्य्यान्तराभावात् तस्करशब्द एव अपहृतः इत्यर्थः। अथवा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेन शब्दे स्थिता स्फुरिता न स्वरूपतोऽस्ति इत्यर्थः ॥ २७

ननु धनादिकमेव तस्करताशब्दस्य विषयीभूतं तर्हि कथं वाचकशब्दे तस्य अवस्थानं सम्भवति ? शब्देन विना अभावज्ञानस्य विकाशो न भवेत्, "आकाशकुसुममस्ति" इत्यादौ शब्देन आकाशकुसुमस्य अत्यन्ताभावः सूच्यते नतु ज्ञानेनेतिभावः ।

द्वेष्य इति । शिष्टः जनः द्वेष्यः शत्रुः अपि आर्त्तस्य रोगिणः औषधं यथा औषधम् इव तस्य सम्मतः अनुमतः आसीत् दुष्टः जनः प्रियः अपि प्रेमास्पदीभूतोऽपि उरगक्षता सर्पदष्टा

तं वेधा विदधे नूनं महाभूतसमाधिना।
तथाहि सर्वे तस्यासन् परार्थैकफला गुणाः॥ २९
स वेलावप्रवलयां परिखीकृतसागराम्।
अनन्यशासनामुर्वीं शशासैकपुरीमिव॥ ३०
तस्य दाक्षिण्यरूढ़ेन नाम्ना मगधवंशजा।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा॥ ३१

अन्वयः। वेधा महाभूतसमाधिना तं विदधे नूनम्, तथाहि तस्य सर्वे गुणाः परार्थैकफला आसन्॥ २९

अन्वयः। सः वेलावप्रवलयां परिखीकृतसागराम् अनन्यशासनां उर्वीम् एकपुरीमिव शशास॥ ३०

अन्वयः। तस्य मगधवंशजा दाक्षिण्यरूढेन नाम्ना अध्वरस्य दक्षिणेव सुदक्षिणेति पत्नी आसीत्॥ ३१

अङ्गुली इव "छिन्द्याद्‌ बाहुमपि दुष्टात्मनः" इति न्यायात्। त्याज्यः आसीत्। तस्य शिष्ट एव बन्धुः दुष्ट एव शत्रुरित्यर्थः॥ २८

तस्य परोपकारित्वमाह, तमिति। वेधाः स्रष्टा। 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः। तं दिलीपं समाधीयते अनेनेति समाधिः कारणसामग्री, महाभूतानां यः समाधिः तेन महाभूतसमाधिना, विदधे ससर्ज नूनं ध्रुवम् इत्युत्प्रेक्षा। तथाहि, तस्य राज्ञः सर्वे गुणाः रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनम् एव एकं मुख्यं फलं येषां ते तथोक्ताः आसन्। महाभूतगुणोपमानेन कारणगुणाः कार्य्ये संक्रामन्तीति न्यायः सूचितः॥ २९

स इति। सः दिलीपः वेलाः समुद्रकूलानि। 'वेला कूलेऽपि वारिधेः' इति विश्वः। ताः एव वप्रवलयाः प्राकारवेष्टनानि यस्याः ताम्। "स्याच्चयो वप्रमस्त्रियाम् प्राकारो वरणः शालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः। परितः खातं परिखा दुर्गवेष्टनं खातम्। "खातंखेयन्तु परिखा" इत्यमरः। अन्येष्वपि दृश्यते इत्यत्र अपिशब्दात् खनेड प्रत्ययः। अपरिखा परिखाः सम्पद्यमानाः कृताः परिखीकृताः सागराः यस्याः ताम्। अभूततद्भावे च्विः। अविद्यमानम् अन्यस्य राज्ञः शासनं यस्याः ताम् अनन्यशासनाम् उर्वीम् पृथ्वीं एकपुरीमिव शशास, अनायासेन शासितवान् इत्यर्थः॥ ३०

तस्येति। तस्य राज्ञः मगधवंशे जाता मगधवंशजा। 'सप्तम्यां जनेड' इति डप्रत्ययः। एतेनाभिजात्यमुक्तम्। दाक्षिण्यं परच्छन्दानुवर्त्तनम्। "दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु" इति शाश्वतः। तेन रूढं प्रसिद्धं तेन नाम्ना अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाख्या पत्नी इव सुदक्षिणा इति प्रसिद्धा पत्नी आसीत्। अत्रश्रुतिः। 'यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरस' इति। 'दक्षिणाया दाक्षिण्यं नाम ऋत्विज्ञो दक्षिणत्वं प्रापकत्वं ते दधन्तो दक्षिणां प्रतिगृह्य' इति च॥ ३१

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५

अन्वयः । वसुधाधिपः महति अवरोधेऽपि मनस्विन्या तया लक्ष्म्या च आत्मानं कलत्रवन्तं मेने ॥ ३२

अन्वयः । सः आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकः सन् विलम्बितफलैः मनोरथैः कालं निनाय ॥ ३३

अन्वयः । तेन सन्तानार्थाय विधये स्वभुजात् अवतारिता गुर्वी जगतो धूः सचिवेषु निचिक्षिपे ॥ ३४

अन्वयः । अथ पुत्रकाम्यया तौ दम्पती प्रयतौ विधातारम् अभ्यर्च्य गुरोर्वसिष्ठस्य आश्रमं जग्मतुः ॥ ३५

कलत्रवन्तमिति । वसुधाधिपः अवरोधे अन्तःपुरवर्गे महति सति अपि मनस्विन्या दृढ़चित्तया पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमया इत्यर्थः, तथा सुदक्षिणया लक्ष्म्या च आत्मानं कलत्रवन्तं भार्य्यावन्तं मेने । 'कलत्रं श्रोणिभार्य्ययोः' इत्यमरः । वसुधाधिप इत्यनेन वसुधया चेति गम्यते ॥ ३२

तस्यामिति । सः राजा आत्मानुरूपायां तस्याम् आत्मनः जन्म यस्य असौ आत्मजन्मा पुत्रः तस्मिन् समुत्सुकः यद्वा आत्मनः जन्मनि पुत्ररूपेण उत्पत्तौ समुत्सुकः सन् । "आत्मा वै पुत्रनामासि" इति श्रुतेः । विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैः मनोरथैः कदा मे पुत्रो भवेत् इत्याशाभिः कालं निनाय यापयामास ॥ ३३

सन्तानेति । तेन दिलीपेन सन्तानः अर्थः प्रयोजनं यस्य तस्मै सन्तानार्थाय विधये अनुष्ठानाय स्वभुजात् अवतारिता अवरोपिता जगतः लोकस्य गुर्वी धूः भारः सचिवेषु निचिक्षिपे निहिता ॥ ३४

अथेति । अथ धुरोऽवतारानन्तरं पुत्रकाम्यया आत्मनः पुत्रेच्छया "काम्यच" इति पुत्रशब्दात् काम्यच्प्रत्ययः । 'अप्रत्ययात्' इति पुत्रकाम्यधातोरकारप्रत्ययः ततः टाप् । तया तौ दम्पती जायापती । राजदन्तादिषु जायाशब्दस्य दमिति निपातनात् साधुः । प्रयतौ पूतौ विधातारं ब्रह्माणम् अभ्यर्च्य । 'स खलु पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः । गुरोः कुलगुरोः वसिष्ठस्य आश्रमं जग्मतुः पुत्रप्राप्त्युपायापेक्षया इति शेषः ॥ ३५

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमाश्रितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६
माभूदाश्रमपीड़ेति परिमेयपुर: सरौ ।
अनुभावविशेषात् तु सेनापरिवृताविव ॥ ३७
सेव्यमानौ सुखस्पर्शैः शालनिर्य्यासगन्धिभि: ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभि: ॥ ३८
मनोऽभिरामा: शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनी: केका द्विधाभिन्ना: शिखण्डिभि: ॥ ३९

अन्वय: । (तौ दम्पती कथंभूतौ ?) स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनम् (तादृशम्) प्रावृषेण्यम् पयोवाहम् विद्युदैरावती इव आश्रितौ ॥ ३६

अन्वय: । (पुन:) आश्रमपीड़ा माभूत् इति परिमेयपुर:सरौ, अनुभावविशेषात् तु सेनापरिवृतौ इव (स्थितौ) ॥ ३७

अन्वय: । (पुन: ?) शालनिर्य्यासगन्धिभि: आधूतवनराजिभि: पुष्परेणूत्किरैः सुखस्पर्शैः वातै: सेव्यमानौ ॥ ३८

अन्वय: । (पुन: ?) रथनेमिस्वनोन्मुखैः शिखण्डिभि: द्विधा भिन्ना: षड्ज संवादिनी: मनोभिरामा: केका: शृण्वन्तौ ॥ ३९

स्निग्धेति । स्निग्ध: मधुर: गम्भीर: निर्घोष: यस्य तम्, एकं स्यन्दनं रथम् । प्रावृषि भव: प्रावृषेण्य: । 'प्रावृष एण्य' इति एण्यप्रत्यय: । तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावतौ इव आश्रितौ आरूढ़ौ जग्मतु: इति पूर्वेण सम्बन्ध: । इरा: आप: । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमर: । इरावान् समुद्र: तत्र भव: ऐरावत: अभ्रमातङ्ग: । 'ऐरावताभ्रमातङ्गैरावणाभ्रमुवल्लभा' इत्यमर: । 'अभ्रमातङ्गत्वाच्चाभ्रस्थत्वादभ्ररूपत्वात्" इति चीरस्वामी । अतएव मेघारोहणं विद्युत्साहचर्य्यञ्च घटते । किञ्च विद्युत ऐरावतसाहचर्य्यादेव ऐरावती संज्ञा ऐरावतस्य स्त्री ऐरावतीति चीरस्वामी । तस्मात् सुष्ठूक्तं विद्युदैरावताविवेति । एकरथारोहणोक्त्या कार्य्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं सूचयति ॥ ३६

माभूदिति । पुन: किञ्च तौ दम्पती ? आश्रमपीड़ा माभूत् मा अस्त्विति हेतो: । "माङि लुङ्" इत्याशीरर्थेलुङ्, "न माङ्योगे" इत्यड़ागमनिषेध: । परिमेयपुरसरौ परिमितपरिचरौ, अनुभावविशेषात्तु तेजोविशेषात्, सेनापरिवृतौ इव स्थितौ ॥ ३७

पुन: कथम्भूतौ । सुख: शीतलत्वात्प्रिय: स्पर्शो येषां तै:, शालनिर्य्यासगन्धिभि: सर्जतरुनिस्यन्दगन्धवद्भि: । "शाल: सर्जतरु: स्मृत:" इति शाश्वत: । उत्किरन्ति विक्षिपन्तीत्युत्किरा: । "इगुपध—" इत्यादिना किरते: कप्रत्यय: । पुष्परेणूनामुत्किरास्तै:, आधूता मान्द्यादीषत्कम्पिता वनराजयो यैस्तैर्वातै: सेव्यमानौ ॥ ३८

रथनेमिस्वनोन्मुखैः मेघध्वनिशङ्कया उन्नमितमुखैरित्यर्थ: । शिखण्डिभिर्मयूरैर्द्विधा-भिन्ना: । शुद्धविकृतभेदेनाविकृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविध:, तस्मा-

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४०

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१

पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२

अन्वयः । (पुनः ?) अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ ॥ ४०

अन्वयः । (पुनः ?) श्रेणीबन्धात् अस्तम्भां तोरणस्रजम् वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचित् उन्नमिताननौ ॥ ४१

अन्वयः । (पुनः ?) प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात् तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ ॥ ४२

दृश्यात्केका अपि द्विधा भिन्ना इत्युच्यते। अतएवाह—षड्जसम्वादिनीरिति। षड्भ्यः स्थानेभ्यो जातः षड्जः। तदुक्तम्—"नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन्। षड्भ्यः संजायते यस्मात्तस्मात् षड्ज इति स्मृतः॥" स च तन्त्रीकण्ठजन्मा स्वरविशेषः। "निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः॥" इत्यमरः। षड्जेन सम्वादिनीः सदृशीः। तदुक्तं मातङ्गेन—"षड्जं मयूरी वदति" इति मनोभिरामा मनसः प्रियाः। के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः। "केका वाणी मयूरस्य" इत्यमरः। ताः केकाः शृण्वन्तौ इति श्लोकार्थः॥ ३९

विश्रम्भाददूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु। स्यन्दनाबद्धदृष्टिषु स्यन्दने रथे आबद्धा आसञ्जिता दृष्टिर्नेत्रं यैस्तेषु। "दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुधः। कौतुकवशाद्रथासक्तदृष्टिष्वित्यर्थः मृगश्च मृगाश्च मृगाः। "पुमान् स्त्रिया" इत्येकशेषः। तेषां द्वन्द्वेषु मिथुनेषु। "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरः। परस्पराक्ष्णां सादृश्यं पश्यन्तौ। द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपः, दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणा इत्येवं विवेक्तव्यम् ॥ ४०

श्रेणीबन्धात्पंक्तिबन्धनाद्धेतोरस्तम्भामाधारस्तम्भरहिताम्। तोरणं बहिर्द्वारम्। 'तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः। तत्र या स्रग्विरच्यते तां तोरणस्रजं वितन्वद्भिः कुर्वद्भिरिवेत्यर्थः। उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेन गम्योत्प्रेक्षेयम्। कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः करणैः क्वचिदुन्नमिताननौ। 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः। ४१

प्रार्थनासिद्धिशंसिनोऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वात्गन्तव्य-

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५

काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६

अन्वयः । ( पुनः ? ) वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणं सरसीषु अरविन्दाना आमोदम् उपजिघ्रन्तौ ॥ ४३

अन्वयः । ( पुनः ? ) आत्मविसृष्टेषु यूपचिह्नेषु ग्रामेषु यज्वनाम् अमोघाः आशिषः अर्घ्यानुपदं प्रतिगृह्णन्तौ ॥ ४४

अन्वयः । ( पुनः ? ) हैयंगवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । ४५

अन्वयः ; व्रजतोः शुद्धविषयोः तयोः हिमनिर्मुक्तयोः चित्राचन्द्रमसोरिव योगे सति कापि अभिख्या आसीत् ॥ ४६

दिगभिमुखत्वात् । तुरगोत्कीर्णैः रजोभिरस्पृष्टा अलका देव्याः वेष्टनमुष्णीषं च राज्ञो ययोक्तौ तथोक्तौ "शिरसा वेष्टनशोभिना सुतः" ( ८ । १२ ) इति वक्ष्यति ॥ ४२

सरसीषु वीचिविक्षोभशीतलं ऊर्मिसङ्घट्टनेन शीतलं, स्वनिःश्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम्, एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम् । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३

आत्मविसृष्टेषु स्वदत्तेषु । यूपो नाम संस्कृतपशुबन्धाय दारुविशेषः, यूपा एव चिह्नानि येषां तेषु ग्रामेषु, अमोघाः सफलाः, यज्वनां विधिनेष्टवताम् । "यज्वा तु विधिनेष्टवान्" इत्यमरः । 'सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः । आशिषः आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । "पादार्घाभ्यां च" इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः । अर्घ्यस्यानुपदमन्वक्, अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । पदस्य पश्चादनुपदम् पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इत्यमरः ॥ ४४

ह्यस्तनगोदोहोद्भवं घृतं हैयङ्गवीनम् । ह्यः पूर्वेद्युर्भवम् । 'तत्तु हैयङ्गवीनं यद्ह्योगोदोहोद्भवं घृतम्" इत्यमरः । "हैयङ्गवीनं संज्ञायाम्" इति निपातः । तत्सद्योघृतमादाय उपस्थितान् घोषवृद्धान् । "घोष आभीरपल्ली स्यात्" इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । "दुह्याच्—" इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । कुलकम् ॥ ४२

व्रजतो गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणादिलीपयोः । हिमनिर्मुक्तयो-

तत्तद्भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः॥ ४७

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः॥ ४८

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्य्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः॥४९

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः॥ ५०

अन्वयः। बुधोपमः प्रियदर्शनः भूमिपतिः पत्न्यै तत् तत् दर्शयन् लङ्घितमपि अध्वानं न बुबुधे॥ ४७

अन्वयः। दुष्प्रापयशाः श्रान्तवाहनः महिषीसखः सः सायं संयमिनः तस्य महर्षेः आश्रमं प्रापत्॥ ४८

अन्वयः। (कथम्भूतम्) वनान्तरात् उपावृत्तैः समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्य्यमाणम्॥ ४९

अन्वयः। (पुनः) नीवारभागधेयोचितैः उटजद्वाररोधिभिः मृगैः ऋषिपत्नीनाम् अपत्यैरिव आकीर्णम्॥ ५०

शिवाचन्द्रमसोरिव योगे सति, कापि अनिर्वाच्या अभिख्या शोभा आसीत्। 'अभिख्या नामशोभयोः" इत्यमरः। "आतश्चोपसर्गे" इत्यङ्प्रत्ययः। चित्रा नक्षत्रविशेषः। शिशिरापगमे चित्रां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः॥ ४६

प्रियं दर्शनं सकर्मकं यस्यासौ प्रियदर्शनः, दर्शनीयः इत्यर्थः। भूमिपतिः, पत्न्यै तत्तद्भूतं वस्तु दर्शयन्, लङ्घितमपि वाहितमपि अध्वानं न बुबुधे न ज्ञातवान्। बुधः सौम्य उपमा उपमानं यस्येति विग्रहः। इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैतस्य ज्ञातत्व-सूचनार्थम॥ ४७

दुष्प्रापयशाः दुष्प्रापम् अन्यदुर्लभं यशो यस्य सः तथोक्तः, श्रान्तवाहनो दूरोपगमनात् क्लान्तयुग्यः। महिष्याः सखा महिषीसखः। "राजाहः सखिभ्यष्टच्" इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वशिष्ठस्याश्रमं प्रापत् प्राप। पुषादित्वादङ्॥ ४८

तमाश्रमं विशिनष्टि—वनान्तरादन्यावनादुपावृत्तैः प्रत्यावृत्तैः। समिधश्च कुशांश्च फलानि च आहर्तुं शीलं येषामिति समित्कुशफलाहराः तैः। "आङि ताच्छील्ये" इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैस्तपस्विभिः पूर्य्यमाणम्। "प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति" इति श्रुतेः। यथाह—'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनि-वाहरन् इति॥ ४९

नीवाराणां भाग एव भागधेयः अंशः। 'रूपनामभागेभ्यो धेयः' इति वक्तव्यसूत्रात्

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१
आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२
अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३
अथ यन्तारमादिश्य धुर्य्यान् विश्रामयेति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥ ५४

अन्वयः । (पुनः) सेकान्ते मुनिकन्याभिः आलवालाम्बुपायिनां विहङ्गानां विश्वासाय तत्क्षणोज्झितवृक्षकम् ॥ ५१

अन्वयः । (पुनः) आतपात्ययसंक्षिप्तनीवारासु उटजाङ्गनभूमिषु निषादिभिर्मृगैः वर्त्तितरोमन्थम् ॥ ५२

अन्वयः । (पुनः) अभ्युत्थिताग्निपिशुनैः आहुतिगन्धिभिः पवनोद्धूतैः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् ॥ ५३

अन्वयः । अथ सः यन्तारं धुर्य्यान् विश्रामय इति आदिश्य तां पत्नीं रथात् अवारोहयत्, (स्वयम्) च अवततार ॥ ५४

स्वाभिधेये येयप्रत्ययः । तस्योचितैः, अतएव उटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैः ऋषिपत्नीनामपत्यैरिव आकीर्णं व्याप्तम् ॥ ५०

सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः सेक्त्रीभिः आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनाम् । 'स्यादालवालमावालमावापः' इत्यमरः । विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय । 'समौ विश्वासविश्रम्भौ' इत्यमरः । तत्क्षणे सेकक्षणे उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिन् तम् । ह्रस्वार्थे कप्रत्ययः ॥ ५१

आतपस्यात्यये अपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु 'नीवारास्तृणधान्यानि' इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु । 'पर्णशालोटजोऽस्त्रियाम्' इति । "अङ्गनं चत्वराजिरे" इति चामरः । निषादिभिरुपविष्टैर्मृगैर्वर्त्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् ॥ ५२

अभ्युत्थिताः प्रज्वलिताः, होमयोग्या इत्यर्थः । "समिद्धेऽग्नावाहुतीर्जुहोति" इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः, पवनोद्धूतैः, आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन् पुनानं पवित्रीकुर्वाणम् । कुलकम् ॥ ५३

अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिम्, धुरं वहन्तीति धुर्य्याः युग्याः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । "धूर्वहेधुर्य्यधौरेयधुरीणाः सधुरंधराः" इत्यमरः । धुर्य्यान् रथाश्वान् विश्रामयः विनीतश्रमान् कुरु इत्यादिश्य आज्ञाप्य तां पत्नीं रथादवारोहयत् अव-

तस्मै सभ्याः सभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७

अन्वयः । सभ्याः गुप्ततमेन्द्रियाः मुनयः सभार्य्याय गोप्त्रे नयचक्षुषे अर्हते तस्मै अर्हणां
चक्रुः ॥ ५५

अन्वयः । सः सायन्तनस्य विधेः अन्ते अरुन्धत्या अन्वासितं तपोनिधिं स्वाहया
अन्वासितं हविर्भुजमिव ददर्श ॥ ५६

अन्वयः । मागधी राज्ञी राजा च तयोः पादान् जगृहतुः, गुरुपत्नी गुरुश्च प्री
तौ प्रतिननन्दतुः ॥ ५७

तारितवान् स्वयं च अवततार । "विश्रमय" इति ह्रस्वपाठे "जनीजॄष्—" इति मि
"मितां ह्रस्वः । दीर्घपाठे "मितां ह्रस्वः" इति सूत्रे "वा चित्तविरागे" "इत्यतो"
इत्यनुवर्त्त्य व्यवस्थितविभाषाश्रयणाद्ध्रस्वाभाव इति वृत्तिकारः ॥ ५४

सभायां साधवः सभ्याः । "सभाया यः" इति यप्रत्ययः । गुप्ततमेन्द्रियाः अत्यन्त
नियतेन्द्रिया मुनयः, सभार्य्याय गोप्त्रे रक्षकाय, नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं य
तस्मै नयचक्षुषे, अतएव अर्हते प्रशस्ताय पूज्यायेत्यर्थः । "अर्हः प्रशंसायाम्" इति श
प्रत्ययः । तस्मै राज्ञेऽर्हणां पूजां चक्रुः । "पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समा
इत्यमरः ॥ ५५

स राजा सायन्तनस्य सायंभवस्य । "सायंचिरम्—" इत्यादिना ट्यु ट्युल्प्रत्ययः । विधेः
होमाद्यनुष्ठानस्य अन्ते अवसाने, अरुन्धत्या अन्वासितं पश्चादुपवेशनेन उपसेवितम् । कर्म्म
क्तः, उपसर्गवशात्सकर्म्मकत्वम्, "अन्वास्यैनाम्" इत्यादिवदुपपद्यते । तपोनिधिं वशिष्ठ
स्वाहया स्वाहादेव्या । "अथ-ग्नायी स्वाहा च हुतभुक्प्रिया" इत्यमरः । अन्वासितं हवि
र्भुजमिव, ददर्श । "समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्व्वाणं
नाभिवाद्यो द्विजो भवेत् ।" इत्यनुष्ठानस्य मध्ये अभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम्
अन्वासनं चात्र पतिव्रताधर्म्मत्वेनोक्तं न तु कर्माङ्गत्वेन विधेरन्तो इति कर्म्मणः समाप्त्यभिध
नात् ॥ ५६

मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोः अरुन्धतीवसिष्ठयोः पादाञ्
जगृहतुः । "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी
गुरुश्च कर्त्तारौ । सा च स च तौ सुदक्षिणादिलीपौ कर्म्मभूतौ । प्रीत्या हर्षेण प्रति
नन्दतुः । आशीर्वादादिभिः सम्भावयांचक्रतुरित्यर्थः ॥ ५७

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८
अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९
उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम् ॥ ६०

अन्वयः । मुनिः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं राज्याश्रममुनिं तं ( दिलीपं ) राज्ये कुशलं पप्रच्छ ॥ ५८

अन्वयः । अथ विजितारिपुरः वदतां वरः अर्थपतिः अथर्व्वनिधेस्तस्य पुरः अर्थ्यां वाचम् आददे ॥ ५९

अन्वयः । सप्तसु अङ्गेषु शिवम् उपपन्नं ननु, यस्य मे दैवीनां मानुषीणाञ्च आपदां त्वं प्रतिहर्त्ता ॥ ६०

मुनिः । अतिथ्यर्थमातिथ्यम् । "अतिथेर्ञ्यः" इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया, तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् राजाश्रमेवाश्रमस्तत्र मुनिम्, मुनितुल्यमित्यर्थः । तं दिलीपं राज्ये कुशलं पप्रच्छ । पृच्छतेस्तु द्विकर्म्मकत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्म्मवचनः, तथाप्यत्र सप्ताङ्गवचनः । 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु" ( १।६० ) इत्युत्तरविरोधात् । तथाह मनुः—"स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते ।" इति । तत्र ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥" इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम् । अतएवोक्तम् "राजाश्रममुनिम्" इति ॥ ५८

अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः । 'यतश्च निर्धारणम्" इति षष्ठी । अर्थपतिः राजा, अथर्वणोऽथर्ववेदस्य निधेस्तस्य मुनेः, पुरः अग्रे, अर्थ्याम् अर्थादनपेताम् । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । वाचमाददे वक्तुमुपक्रान्तवानित्यर्थः । अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात् तत्कर्म्मनिर्व्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः—'त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः । अथर्वविहितं कुर्य्यान्नित्यं शान्तिकपौष्टिकम् ।" इति ॥ ५९

हे गुरो, सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गानि" इत्यमरः । शिवं कुशलमुपपन्नं ननु युक्तमेव । नन्ववधारणे । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । कथमित्यत आह—यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनाम्, मानुषीणां मनुष्येभ्य आगतानां चौरभयादीनाम् । उभयत्रापि 'तत आगतः' इत्यण् । "टिड्ढाणञ्" इत्यादिना ङीप् । आपदां व्यसनानां त्वं प्रतिहर्त्ता वारयितासि ।

तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम् ॥ ६२

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३

अन्वयः । दूरात् प्रशमितारिभिर्मन्त्रकृतस्तव मन्त्रैः दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्त इव ॥ ६१

अन्वयः । हे होतस्त्वया अग्निषु विधिवत् आवर्जितं हविः अवग्रहविशोषिणां शस्यानां वृष्टिर्भवति ॥ ६२

अन्वयः । मदीयाः प्रजाः पुरुषायुषजीविन्यः निरातङ्काः निरीतयः इति यत् तस्य त्वद्ब्रह्मवर्चसं हेतुः ॥ ६३

अत्राह कामन्दकः—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः ॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्" इति ॥ ६०

तत्र मानुषापत्प्रतीकारमाह—दूरात्परोक्ष एव प्रशमितारिभिः । मन्त्रान् कृतवान्मन्त्रकृत् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ॥ ६१

सम्प्रति दैविकापत्प्रतीकारमाह—हे होतः, त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ अवग्रहो वर्षप्रतिबन्धः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यच् प्रत्ययः । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः । तेन विशोषिणां विशुष्यतां शस्यानां वृष्टिर्भवति । वृष्टिरूपेण शस्यान्युपजीवयतीति भावः । अत्र मनुः—'अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।' इति ॥ ६२

मदीयाः प्रजाः । आयुर्जीवितकालः, पुरुषस्यायुः पुरुषायुषम्, वर्षशतमित्यर्थः । "शतायुर्वै पुरुषः" इति श्रुतेः । "अचतुर—" इत्यादिसूत्रेणाच्-प्रत्ययान्तो निपातः । पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्का निर्भयाः । "आतङ्को भयमाशङ्का" इति हलायुधः । निरीतयोऽतिवृष्ट्यादिरहिता इति यत् तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसम्पत्तिरेव हेतुः । "व्रताध्ययनसम्पत्तिरित्येतद्ब्रह्मवर्चसम्" इति हलायुधः ।

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥ ६४
किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५
नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६
मत् परं दुर्लभं मत्वा नूनमावर्ज्जितं मया ।
पयः पूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते ॥ ६७

अन्वयः। ब्रह्मयोनिना गुरुणा त्वया एवं चिन्त्यमानस्य निरापदो मे सम्पदः कथं सानुबन्धाः न स्युः ॥ ६४

अन्वयः। किन्तु तव एतस्यां वध्याम् अदृष्टसदृशप्रजं मां सद्वीपा रत्नसूरपि मेदिनी न अवति ॥ ६५

अन्वयः। मत्तः परं पिण्डविच्छेददर्शिनः वंश्याः स्वधासंग्रहतत्पराः श्राद्धे न प्रकामभुजो नूनम् ॥ ६६

अन्वयः। पूर्वैः मत् परं दुर्लभं मत्वा मया आवर्ज्जितं पयः स्वनिश्वासैः कवोष्णम् उपभुज्यते ॥ ६७

ब्रह्मणो वर्चो ब्रह्मवर्चसम्। "ब्रह्महस्तिभ्यां वर्चसः" इत्यच्प्रत्ययः। अतिवृष्टिरनावृष्टि- र्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेत ईतयः स्मृताः।" इति कामन्दकः ॥ ६३

ब्रह्म योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वया एवमुक्तप्रकारेण चिन्त्यमानस्य अनुध्यायमानस्य, अतएव निरापदो व्यसनहीनस्य, मे मम सम्पदः सानुबन्धाः सानुस्यूतयः अविच्छिन्ना इति यावत्, कथं न स्युः स्युरेवेत्यर्थः ॥ ६४

सम्प्रत्यागमनप्रयोजनमाह—किन्तु तवैतस्यां वध्वां स्नुषायाम्। "वधूर्जाया स्नुषा चैव" इत्यमरः। अदृष्टा सदृशी अनुरूपा प्रजा येन तं मां, सद्वीपापि, रत्नानि सूयत इति रत्नसूरपि। "सत्सूद्विष—" इत्यादिना क्विप्। मेदिनी नावति न प्रीणाति। अवधातुः रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने। रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५

तदेव प्रतिपादयति—मत्तः परं मदनन्तरम्। "पञ्चम्यास्तसिल्।" पिण्डविच्छेद- दर्शिनः पिण्डदानविच्छेदमुत्प्रेक्षमाणाः। वंशेभवा वंश्याः पितरः। स्वधेत्यव्ययं पितृ- भोज्ये वर्त्तते, तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्म्मणि। "पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः" इत्यमरः। प्रकामभुजः पर्याप्तभोजिनो न भवति नूनं सत्यम्। "कामं प्रकामं पर्याप्तम्" इत्यमरः। निर्धना ह्यापद्धनं कियदपि संरक्षन्तीति भावः ॥ ६६

मत्परं मदनन्तरम्। "अन्यारात्"—इत्यादिना पञ्चमी। दुर्लभं दुर्लभ्यं मत्वा मया

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६८
लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्म्मणे ॥ ६९
तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७०

अन्वयः । सः अहं इज्याविशुद्धात्मा प्रजालोपनिमीलितः ( च सन् ) लोकालोक अचलः इव प्रकाशः अप्रकाशश्चास्मि ॥ ६८

अन्वयः । तपोदानसमुद्भवं पुण्यं लोकान्तरसुखं, शुद्धवंश्या सन्ततिः इह परत्र शर्म्मणे हि ॥ ६९

अन्वयः । हे विधातः ! तया हीनं मां स्नेहात् स्वयं सिक्तं वन्ध्यम् आश्रमवृक्षकमि पश्यन् कथं न दूयसे ॥ ७०

आवर्जितं दत्तं पयः पूर्वैः पितृभिः स्वनिश्वासैर्दुःखजैः कवोष्णमीषदुष्णं यथा तथोपभुज्यते नूनमिति तर्के । कवोष्णमिति कुशब्दस्य कवादेशः । "कोष्णं कवोष्णं मन्दोष्णं कदु त्रिषु तद्वति" इत्यमरः ॥ ६७

इज्या यागः । "व्रजयजोर्भावे क्यप्" इति क्यप्प्रत्ययः । तया विशुद्धात्मा विशुद्धचेत प्रजालोपेन सन्तत्यभावेन निमीलितः कृतनिमीलनः सोऽहम् लोक्यत इति लोकः, न लोक इत्यलोकः, लोकश्चालोकश्चात्र स्त इति लोकश्चासावलोकश्चेति वा लोकालोकश्चक्रवालोऽच इव । 'लोकालोकश्चक्रवालः' इत्यमरः । प्रकाशत इति प्रकाशश्च देवर्णविमोचनात् । प्रकाशतइत्यप्रकाशश्च पितृणाविमोचनात् । पचाद्यच् । अस्मीति शेषः । लोकालोकोऽप्यव सूर्य्यसम्पर्कार्द्दहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम् ॥ ६८

ननु तपोदानादिसम्पन्नस्य किमपत्यैरित्यत्राह—समुद्भवत्यस्मादिति समुद्भवः कारणम् तपोदाने समुद्भवौ यस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम् शुद्धवंशे भवा शुद्धवंश्या सन्ततिर्हि परत्र परलोके इह च लोके शर्म्मणे सुखाय । "शर्मशात सुखानि च" इत्यमरः । भवतीति शेषः ॥ ६९

हे विधातः स्रष्टः,तया सन्तत्या हीनमनपत्यं माम्, स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसे केन वर्द्धितं वन्ध्यमफलम् । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । आश्रमस्य वृक्षकं वृक्षपोत मिव । पश्यन् कथं दूयसे न परितप्यसे ? विधातरित्यनेन समर्थोऽप्युपेक्षसे इति गम्यते ॥ ७०

असह्यपीड़ं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१
तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२
इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३

अन्वयः । हे भगवन् ! त्वं मे अन्त्यम् ऋणम् अनिर्व्वाणस्य दन्तिनः अरुन्तुदम् आलानमिव असह्यपीड़म् अवेहि ॥ ७१

अन्वयः । हे तातः ! तस्मात् यथा मुच्ये तथा संविधातुम् अर्हसि, हि इक्ष्वाकूणां दुरापे अर्थे सिद्धयः त्वदधीना ॥ ७२

अन्वयः । ऋषिः राज्ञा इति विज्ञापितः ध्यानस्तिमितलोचनः सन् सुप्तमीनो ह्रद इव क्षणमात्रं तस्थौ ॥ ७३

हे भगवन् ! मे मम अन्त्यमृणं पैतृकमृणम्, अनिर्वाणस्य मज्जनरहितस्य । "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः । दन्तिनो गजस्य । अरुर्मर्म्म तुदतीत्यरुन्तुदं मर्म्मस्पृक् । "व्रणोऽस्त्रियामीर्ममरुः" इति, "अरुन्तुदस्तु मर्म्मस्पृक् इति चामरः । "विध्वरुषोस्तुदः" इति खश्प्रत्ययः । "अरुर्द्विषद—" इत्यादिना मुमागमः । आलानं बन्धनस्तम्भमिव । 'आलानं बन्धनस्तम्भेऽत्यमरः ।' असह्या सोढुमशक्या पीड़ा दुःखं यस्मिन् तत् अवेहि, दुःसहदुःखजनकं विद्धीत्यर्थः । "निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि" इति पालकाव्ये । 'ऋणं देवस्य यागेन ऋषीणां पाठकर्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ॥ ७१

हे तात, तस्मात् पैतृकात् ऋणाद्यथा मुच्ये मुक्तो भवामि कर्मकर्त्तरि लट् । तथा संविधातुं कर्त्तुमर्हसि । हि यस्मात्कारणात् इक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुत्वणो लुक् । दुरापे दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीनास्त्वायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी । "न लोक—" इत्यादिना कृद्योगे षष्ठीनिषेधात् ॥ ७२

विचारः । मुच्ये इत्यत्र क्रिया, कर्म्मसमवायिनी न दृश्यते, तर्हि कथं कर्मकर्त्तरि लट् ? "ऋषिः मां मुञ्चति तस्मात्, अहं स्वयमेव तस्मात् मुच्ये ईदृग्वाक्ये क्रियायाः कर्म्मसमवायित्वं युज्यते, साम्प्रतम् ऋषेः मोचनक्रियायाः कर्त्तृत्वं नास्ति यतः इतः परं स पितृणबन्धनस्य कारणं राज्ञे ज्ञापयिष्यति । तर्हि कथं तस्य कर्त्तृत्वमधुना ? सत्यं भाविनि भूतवदुपचारः ।

इति राज्ञा विज्ञापितः ऋषिर्ध्यानेन स्तिमिते लोचने यस्य सः ध्यानस्तिमितलोचनो निश्चलाक्षः सन् क्षणमात्रम् सुप्तमीनो ह्रद इव तस्थौ ॥ ७३

सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम्।
भावितात्मा भुवो भर्त्तुरथैनं प्रत्यबोधयत्॥ ७४
पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः।
आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि॥ ७५
धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः॥ ७६
अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥ ७७

अन्वयः। भावितात्मा सः प्रणिधानेन भुवो भर्त्तुः सन्ततेः स्तम्भकारणम् अपश्यत्, एनं प्रत्यबोधयत्॥ ७४

अन्वयः। पुरा शक्रम् उपस्थाय उर्व्वीं प्रति यास्यतः तव पथि सुरभिः कल्पतरुच्छायाम् आश्रिता आसीत्॥ ७५

अन्वयः। ऋतुस्नाताम् इमां राज्ञीं धर्मलोपभयात् स्मरन् प्रदक्षिणक्रियार्हायां त्वं साधु न आचरः॥ ७६

अन्वयः। यस्मात् माम् अवजानासि, अतः मत्प्रसूतिम् अनाराध्य ते प्रजा न भविष्यति इति सा त्वां शशाप॥ ७७

स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणः भुवो भर्त्तुर्नृपस्य सन्ततेः स्तम्भकारणं सन्तानप्रतिबन्धकारणम् अपश्यत् अथानन्तरमेनं नृपं प्रत्यबोधयत्, ज्ञापितवानित्यर्थः। एनमिति "गतिबुद्धि—" इत्यादिना णिचि कर्त्तुः कर्म्मत्वम्॥ ७४

पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्य उर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत्। तत्र स्थितेत्यर्थः॥ ७५

ततः किमित्यत आह—धर्म्मलोपेति। ऋतुः पुष्पम्, रज इति यावत्। 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः। ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां ऋत्वभिगमनलक्षणस्य धर्म्मस्य लोपाद्भ्रंशाद्भयं तस्मात् स्मरन् ध्यायन्। 'मृदङ्गं देवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्॥' इति शास्त्रात् प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं न आचरः नाचरितवानसि। व्यासक्ता हि विस्मरन्तीति भावः। ऋतुकालाभिगमने मनुः—'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा' इति। अकरणे दोषमाह, पराशरः—'ऋतुस्नातां तु यो भार्य्यां स्वस्थः सन्नोपगच्छति। बालगोघ्नापराधेन विध्यते नात्र संशयः।' इति॥ ७६

यस्मात्कारणान्मामवजानासि तिरस्करोषि, अतः कारणान्मत्प्रसूतिं मम सन्ततिमनाराध्य असेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप। 'शप आक्रोशे'॥ ७७

स शापो न त्वया राजन् न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८
ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९
हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८०
सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१

अन्वयः । हे राजन् ! उद्दामदिग्गजे आकाशगङ्गायाः स्रोतसि नदति सति स शापः न श्रुतः सारथिना च न श्रुतः ॥ ७८

अन्वयः । तदवज्ञानात् आत्मनः ईप्सितं सार्गलं विद्धि, पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति हि ॥७९

अन्वयः । सा च इदानीम् दीर्घसत्रस्य प्रचेतसः हविषे भुजङ्गपिहितद्वारं पातालम् अधितिष्ठति ॥ ८०

अन्वयः । तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः सपत्नीकः ( त्वम् ) आराधय, हि ( यस्मात् ) सा प्रीता कामदुघा ॥ ८१

कथं तदस्माभिर्न श्रुतमित्याह—स शाप इति हे राजन् ! स शापस्त्वया न श्रुतः । सारथिना च न श्रुतः । श्रु श्रवणे । हेतुमाह—क्रीडार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तथोक्ते आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥ ७८

अस्तु, प्रस्तुते किमायातमित्यत आह— ईप्सितमिति । तदवज्ञानात्तस्या धेनोरवज्ञाना-दपमानादात्मनः स्वस्य आप्तुमिष्टमीप्सितं मनोरथम् । आप्नोतेः सन्नन्तात्क्तः, ईकारश्च । सार्गलं सप्रतिबन्धं, विद्धि जानीहि तथाहि—पूज्यपूजाया व्यतिक्रमोऽतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९

तर्हि गत्वा तामाराधयामि, सा वा कथंचिदागमिष्यतीत्याशा न कर्त्तव्येत्याह—हविषे इति । सा च सुरभिरिदानीं दीर्घं सत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति, पाताले तिष्ठतीत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥ ८०

तर्हि का गतिरित्यत आह—सुतामिति । तस्याः सुरभेरियं तदीया, तां सुतां सुरभेः प्रतिनिधिं कृत्वा. शुचिः शुद्धः । सह पत्न्या वर्तत इति सपत्नीकः सन् । 'नद्यृतश्च' इति कप्प्रत्ययः । आराधय । हि यस्मात्कारणात् सा प्रीता तुष्टा सती, कामान्दोग्धीति काम-दुघा भवति । 'दुहः कब्घश्च' इति कप्रत्ययः, घादेशश्च ॥ ८१

२

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्रवेनाभिवर्षन्ती वत्सालोकप्रवर्त्तिना ॥ ८४

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५

अन्वयः । इति वादिन एव अस्य होतुः आहुतिसाधनं नन्दिनी नाम अनिन्द्या वनात् आववृते ॥ ८२

अन्वयः । ( नन्दिनी कथंभूता ? ) पल्लवस्निग्धपाटला ललाटोदयम् आभुग्नं श्वेतरोमाङ्कं बिभ्रती नवं शशिनं बिभ्रती सन्ध्येव ( स्थिता ) ॥ ८३

अन्वयः । ( पुनः ) कुण्डोध्नी वत्सालोकप्रवर्त्तिना कोष्णेन अवभृथादपि मेध्येन प्रस्रवेन भुवम् अभिवर्षन्ती ॥ ८४

अन्वयः । ( पुनः ) खुरोद्धूतैः अन्तिकात् गात्रं स्पृशद्भिः रजःकणैः महीक्षितः तीर्थाभिषेकजां शुद्धिम् आदधाना ॥ ८५

इति वादिनो वदत एव होतुर्हवनशीलस्य । 'तृन्' इति तृन्प्रत्ययः । अस्य आहुतीनां साधनं कारणम् । नन्दयतीति व्युत्पत्त्या नन्दिनी नाम, अनिन्द्या अगर्ह्या धेनुर्वनादाववृते प्रत्यागता । 'अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम्' — भावः ॥ ८२

सम्प्रति धेनुं विशिनष्टि—ललाटोदयमिति । पल्लववत्स्निग्धा चासौ पाटला सन्ध्या यामर्थ्ये तद्विशेषणं योज्यम् । ललाटे उदयो यस्य स ललाटोदयः तम्, आभुग्नम् ईषद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'उदितश्च' इति — तस्य नत्वम् । श्वेतरोमाण्येव अङ्कस्तं बिभ्रती, नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥ ८३

कोष्णेन किञ्चिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेशः । अवभृथादपि स्नानादपि मेध्येन पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमरः । वत्सस्यालोकेन प्रवर्त्तिना प्रवहता प्रस्रवेन क्षीराभिस्यन्देनेन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डमिव — आपीनं यस्याः सा कुण्डोध्नी । 'ऊधस्तु क्लीवमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' इत्यनङादेशः । "बहुव्रीहेरूधसो ङीष्" इति ङीष् ॥ ८४

खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति — पञ्चमी । रजसां कणैः । महीं क्षियते ईष्टे इति महीक्षित् तस्य । तीर्थाभिषेकेण — तीर्थाभिषेकजाम् शुद्धिम्, आदधाना कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् ।

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६

अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥ ८७

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९

अन्वयः । निमित्तज्ञः तपोनिधिः पुण्यदर्शनां तां दृष्ट्वा आशंसितावन्ध्यप्रार्थनं याज्यं अब्रवीत् ॥ ८६

अन्वयः । हे राजन् ! आत्मनः सिद्धिम् अदूरवर्त्तिनीं विगणय, यत् कल्याणी इयं ... कीर्त्तिते एव उपस्थिता ॥ ८७

अन्वयः । वन्यवृत्तिः सन् शश्वत् आत्मानुगमनेन अभ्यसनेन विद्यामिव इमां गाम् ...दयितुम् अर्हसि ( त्वमिति शेषः ) ॥ ८८

अन्वयः । अस्यां प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिम् आचरेः, निषण्णायां निषीद, ...म्भसि अपः पिबेः ( सर्व्वत्र त्वमिति शेषः ) ॥ ८९

...—'आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं ...नः स्मृतम् ॥' इति ॥ ८५

...निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वशिष्ठः, पुण्यं दर्शनं यस्यास्तां तां धेनुं, दृष्ट्वा, आशंसितं ...र्थः । नपुंसके भावे क्तः । तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम्, अवन्ध्यमनोरथ-...र्थः । याजयितुं योग्यं याज्यं पार्थिवं, पुनरब्रवीत् ॥ ८६

...हे राजन् ! आत्मनः कार्य्यस्य सिद्धिमदूरवर्त्तिनीं शीघ्रभाविनीं विगणय विद्धि । यद्य-...च्चारणात् कल्याणी मङ्गलमूर्त्तिः । 'बह्वादिभ्यश्च' इति ङीप् । इयं धेनुर्नाम्नि कीर्त्तिते ...सति एव उपस्थिता ॥ ८७

...वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन्, इमां गां, शश्वत् सदा, ...प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्त्तुः, अनुगमनेनानुसरणेन, अभ्यसनेनानुष्ठातुर-...न विद्यामिव, प्रसादयितुं प्रसन्नां कर्त्तुमर्हसि ॥ ८८

...अस्यां नन्दिन्यां, प्रस्थितायां, प्रतिष्ठेथाः प्रयाहि । 'समवप्रविभ्यः स्थः' इत्यात्मने-...पदम् । स्थितायां निवृत्तगतिकायां, स्थितिमाचरेः स्थितिं कुरु, तिष्ठेत्यर्थः । निषण्णा-...उपविष्टायां, निषीद उपविश । विध्यर्थे लोट् । पीतमम्भो यया तस्यां ...म्, अपः पिबेः पिब ॥ ८९

वधूर्भक्तिमती चैनामर्च्चितामातपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९०
इत्या प्रसादादस्यास्त्वं परिचर्य्यापरो भव।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्त्रिणाम् ॥ ९१
तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२
अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्।
सूनुः सूनृतवाक् स्रष्टुर्विससर्ज्जोदितश्रियम् ॥ ९३

अन्वयः। वधूर्भक्तिमती प्रयता च सती अर्च्चिताम् एनाम् प्रातः आ त अन्वेतु, सायमपि प्रत्युद्व्रजेत् ॥ ९०

अन्वयः। इति त्वम् आ प्रसादात् अस्याः परिचर्य्यापरो भव, ते अविघ्नम् अ पितेव पुत्त्रिणां धुरि स्थेयाः ॥ ९१

अन्वयः। देशकालज्ञः प्रीतिमान् शिष्यः सपरिग्रहः आनतः सन् शासितुः तथेति प्रतिजग्राह ॥ ९२ .

अन्वयः। अथ प्रदोषे दोषज्ञः सूनृतवाक् स्रष्टुः सूनुः उदितश्रियं विशाम्पतिं विससर्ज्ज ॥ ९३

वधूर्जाया च भक्तिमती प्रयता सती, गन्धादिभिरर्च्चितामेनां गां, प्रातः आ तपो आङ् मर्य्यादायाम्, पदद्वयं चैतत्। अन्वेतु अनुगच्छतु। सायमपि प्रत्युद्व्रजेत् प्रत्यु विध्यर्थे लिङ् ॥ ९०

इति अनेन प्रकारेण, त्वमा प्रसादात्प्रसादपर्य्यन्तम्। आङ्मर्य्यादाभिविध्योः वैभाषिकत्वादसमासत्वम्। अस्या धेनोः, परिचर्य्यापरः शुश्रूषापरो भव। अविघ्नं विघ्नस्याभावः अस्तु। 'अव्ययं विभक्ति—' इत्यादिनार्थाभावेऽव्ययीभावः। पुत्त्रिणां सत्पुत्त्रवताम्। प्रशंसायामिन्प्रत्ययः। धुरि अग्रे, स्थेयाः तिष्ठेः। लिङ्। 'एर्लिङि' इत्याकारस्यैकारादेशः। त्वत्सदृशो भवत्पुत्त्रोऽस्त्विति भावः॥

देशकालज्ञः। देशः अग्निसन्निधिः, कालः अग्निहोत्रावसानसमयः, वि कालोत्पन्नमार्षं ज्ञानमव्याहतम् इति जानन्, अत एव प्रीतिमान् शिष्यः अन्तेवासी सपरिग्रहः सपत्नीकः। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। विनयनम्रः सन्, शासितुः गुरोः, आदेशम् आज्ञां, तथेति प्रतिजग्राह स्वीचकार॥

अथ प्रदोषे रात्रौ, दोषज्ञः विद्वान्। 'विद्वान् विपश्चिद्दोषज्ञः' इत्यमरः। सत्यप्रियवाक्। 'प्रियं सत्यञ्च सूनृतम्' इति हलायुधः। स्रष्टुः सूनुः ब्रह्मपुत्रः अनेन प्रक्रान्तकार्य्यनिर्व्वाहकत्वं सूचयति। उदितश्रियं विशाम्पतिं मनुजेश्वरम् विशौ वैश्यमनुजौ' इत्यमरः। संवेशाय निद्रायै, 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यमरः। विससर्ज्ज आज्ञापयामास ॥ ९३

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः।
कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्॥ ९४
निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय॥ ९५

अन्वयः। कल्पवित् मुनिः तपःसिद्धौ सत्यामपि नियमापेक्षया अस्य वन्यामेव संविधां कल्पयामास॥ ९४

अन्वयः। सः (राजा) कुलपतिना निर्दिष्टां पर्णशालाम् अध्यास्य प्रयतपरिग्रहद्वितीयः कुशशयने संविष्टः तच्छिष्याध्ययननिवेदितावसानां निशां निनाय॥ ९५

कल्पवित् व्रतप्रयोगाभिज्ञो मुनिः, तपःसिद्धौ सत्यामपि तपसा एव राजयोग्याहार-सम्पादनसामर्थ्ये सत्यपि इत्यर्थः। नियमापेक्षया तदाप्रभृत्येव व्रतचर्यापेक्षया, अस्य राज्ञः, वन्यामेव, संविधीयते अनयेति संविधां कुशादिशयनसामग्रीम्। 'आतश्चोपसर्गे' इति कप्रत्ययः। 'अकर्त्तरि च कारके संज्ञायाम्' इति कर्माद्यर्थत्वम्। कल्पयामास सम्पादयामास॥ ९४

सः राजा, कुलपतिना मुनिकुलेश्वरेण वशिष्ठेन, निर्दिष्टां पर्णशालाम्, अध्यास्य अधिष्ठानं कृत्वा इत्यर्थः। 'अधिशीङ्' इत्यादिना आधारस्य कर्मत्वं, कर्मणि द्वितीया। प्रयतः नियतः परिग्रहः पत्नी द्वितीयः यस्येति सः तथोक्तः, कुशानां शयने संविष्टः सुप्तः सन्, तस्य वशिष्ठस्य शिष्याणाम् अध्ययनेन अपररात्रे वेदपाठेन निवेदितम् अवसानं यस्याः तां निशां, निनाय गमयामास। अपररात्रे अध्ययने मनुः—'निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्'। 'न चापररात्रमधीत्य पुनः स्वपेत्' इति गौतमश्च। प्रहर्षणीवृत्तमेतत्। तदुक्तम्—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्"॥ ९५

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये वशिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः।

—

# द्वितीयः सर्गः ।



अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १

तस्याः खुरन्यासपवित्रपांशुमपांशुलानां धुरि कीर्त्तनीया ।
मार्गं मनुष्येश्वरधर्म्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २

अन्वयः । अथ यशोधनः प्रजानाम् अधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्यां पी प्रतिबद्धवत्सां ऋषेर्धेनुं वनाय मुमोच ॥ १

अन्वयः । अपांशुलानां धुरि कीर्त्तनीया मनुष्येश्वरधर्म्मपत्नी खुरन्यासपवित्रपां तस्याः मार्गं स्मृतिः श्रुतेः अर्थमिव अन्वगच्छत् ॥ २

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दाननसुन्दरि ! त्वाम् ॥

अथ निशानयनानन्तरं यशोधनः प्रजानाम् अधिपः प्रजेश्वरः प्रभाते प्रातःकाले, जाय सुदक्षिणया प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तयी पीतं पानम् अस्यास्तीति पीतः पीतवानित्यर्थः । "अर्श आदिभ्योऽच्" इति अच्प्रत्य पीता गावो भुक्ता ब्राह्मणाः इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धः वत्सः यस्याः त ऋषेर्धेनुं, वनाय वनं गन्तुम् । "क्रियार्थोपपद" इत्यादिना चतुर्थी । मुमोच मुक्तवा जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसन्धेयम् । तथाहि श्रुतिः—"प जायां प्रविशति गर्भोभूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जा जाया भवति यदस्यां जायते पुनः" इति । यशोधन इत्यनेन पुत्रवतां कीर्त्तिलोभ राजानहं गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन् सर्गे वृत्तमुपजातिः—"अनन्तरोदीरि लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ॥ १

विचारः । ननु वनायेत्यादौ कथं "क्रियार्थोपपदेत्यादिना" चतुर्थीति मल्लिनाथे व्याख्यायते, वनाय वनं गन्तुमिति तेनैवोक्तम् । तर्हि गत्यर्थकर्म्मणि द्वितीयाचतु चेष्टायामनध्वनीति सूत्रेण न कथं चतुर्थी स्यात् ? गत्यर्थस्य धातोः कर्म्मत्वं वनार्थ मल्लिनाथः स्वयमेव उक्तवान् । सत्यं, मुमोचेति समापिकायाः क्रियायाः गत्यर्थाभा ऊह्यमानायाः गन्तुमिति क्रियायाः उपपदे अध्याहाराच्च क्रियार्थोपपदेत्यादिसूत्र विषयीभूतं युक्तमिति ।

पांशवः दोषाः आसां सन्तीति पांशुलाः स्वैरिण्यः । "स्वैरिणी पांशुला" इत्यमर 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः । पांशुलानां पतिव्रतानां धुरि अग्रे कीर्त्तनीया प गणनीया मनुष्येश्वरधर्म्मपत्नी, खुरन्यासैः पवित्राः पांशवः यस्य तम् । 'रेणुर्द्वयोः स्त्रि धूलिः, पांशुर्ना न द्वयोरजः' इत्यमरः । तस्याः धेनोः मार्गं, स्मृतिः मन्वादिवाक्यं श्रु वेदवाक्यस्य अर्थम् अभिधेयमिव, अन्वगच्छत् अनुसृतवती । यथा स्मृतिः श्रुतिचक्षमेवार्थ

निवर्त्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्व्वीम्॥ ३
व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः।
न चान्यतस्तस्य शरीररक्षा स्ववीर्य्यगुप्ता हि मनोः प्रसूतिः॥ ४
आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत्॥ ५

अन्वयः। दयालुः यशोभिः सुरभिः राजा तां दयितां निवर्त्त्य सौरभेयीं पयोधरीभूतचतुःसमुद्रां गोरूपधराम् उर्व्वीमिव जुगोप॥ ३

अन्वयः। व्रताय धेनोः अनुचरेण तेन शेषोऽपि अनुयायिवर्गः न्यषेधि, तस्य शरीररक्षा अन्यतः नच, मनोः प्रसूतिः स्ववीर्य्यगुप्ता हि॥ ४

अन्वयः। सम्राट् सः आस्वादवद्भिः तृणानां कवलैः कण्डूयनैः दंशनिवारणैः अव्याहतैः स्वैरगतैश्च तस्याः समाराधनतत्परः अभूत॥ ५

मनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससार इत्यर्थः। धर्म्मपत्नीत्यत्र अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात्। पांशुलपथप्रवृत्तावप्यपांशुलानामिति विरोधालङ्कारो ध्वन्यते॥ २

दयालुः कारुणिकः। 'स्याद् दयालुः कारुणिकः' इत्यमरः। 'स्पृहिगृहि' इत्यादिना आलुच्प्रत्ययः। यशोभिः सुरभिः मनोज्ञः। 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः। राजा तां दयितां निवर्त्त्य सौरभेयीं कामधेनुसुतां नन्दिनीं। धरन्तीति धराः, पचाद्यच्। पयसां धराः पयोधराः स्तनाः। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। अपयोधराः पयोधराः सम्पाद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः, 'कुगतिप्रादयः' इति समासः। पयोधरीभूताश्चत्वारः समुद्रा यस्याः ताम्। 'अनेकमन्यपदार्थे' इत्यनेकपदार्थग्रहणसामर्थ्यात् त्रिपदो बहुव्रीहिः। गोरूपधरामुर्व्वीमिव जुगोप ररक्ष, भूरक्षणप्रयत्नेनैव ररक्ष इति भावः। धेनुपक्षे पयसा दुग्धेन अधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्तां, दुग्धतिरस्कृतसागरामित्यर्थः॥ ३

व्रताय धेनोरनुचरेण न तु जीवनाय इति भावः। तेन दिलीपेन, शेषः अवशिष्टोऽपि अनुयायिवर्गः, अनुचरवर्गः न्यषेधि निवर्त्तितः। शेषत्वं सुदक्षिणापेक्षया। कथं तर्हि आत्मरक्षणम्? अत आह—न चेति। तस्य दिलीपस्य शरीररक्षा च अन्यतः पुरुषान्तरात् न। कुतः? हि यस्मात् कारणात्, मनोः प्रसूयते इति प्रसूतिः सन्ततिः स्ववीर्य्यगुप्ता स्ववीर्य्येणैव रक्षिता। न हि स्वनिर्वाहकस्य परापेक्षा इति भावः॥ ४

सम्राट् मण्डलेश्वरः। "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः। सः राजा आस्वादवद्भिः रसवद्भिः स्वादयुक्तैरित्यर्थः, तृणानां कवलैः ग्रासैः। "ग्रासस्तु कवलार्थकः" इत्यमरः। कण्डूयनैः खर्जनैः दंशानां वनमक्षिकाणां निवारणैः। "दंशस्तु वनमक्षिका" इत्यमरः। अव्याहतैः अप्रतिहतैः स्वैरगतैः

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्॥ ६
स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः॥ ७
लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान् विनेष्यन्निव दुष्टसत्त्वान्॥ ८

अन्वयः। भूपतिस्तां स्थितां (सतीं) स्थितः सन्, प्रयातां (सतीम्) उच्चलितः स
निषेदुषीं (सतीं) आसनबन्धधीरः सन्, जलम् आददानां सतीं जलाभिलाषी सन्, छ
छायेव अन्वगच्छत्॥ ६

अन्वयः। न्यस्तचिह्नामपि तेजोविशेषानुमितां राजलक्ष्मीं दधानः सः (राजा) अ
विष्कृतदानराजिः अन्तर्मदावस्थः द्विपेन्द्र इव आसीत्॥ ७

अन्वयः। लताप्रतानोद्ग्रथितैः केशैः (उपलक्षितः) अधिज्यधन्वा सः मुनिहोमधे
रक्षापदेशात् वन्यान् दुष्टसत्त्वान् विनेष्यन् इव दावं विचचार॥ ८

स्वच्छन्दगमनैश्च तस्याः धेन्वाः समाराधनतत्परः शुश्रूषासक्तः अभूत्। तदेव परं प्रध
यस्य इति तत्परः। "तत्परौ प्रसितासक्तौ" इत्यमरः॥ ५

भूपतिः तां गां स्थितां सतीं स्थितः सन्, स्थितिः ऊर्द्ध्वावस्थानम्। प्रयातां प्रस्थि
सतीं उच्चलितः प्रस्थितः सन्, निषेदुषीं निषण्णां सतीं उपविष्टामित्यर्थः। "भाषायां सदव
श्रुवः" इति क्वसुप्रत्ययः "उगितश्च" इति ङीप्। आसनबन्धे उपवेशने धीरः स्थितः उ
विष्टः सन् इत्यर्थः। जलम् आददानां पिबन्तीं जलाभिलाषी पिबन् इत्यर्थः इत्थं छा
इव अन्वगच्छत् अनुसृतवान्॥ ६

विचारः। छायेवेत्यादौ उपमानोपमेययोर्लिङ्गभेदेऽपि न भग्नप्रक्रमतादोषः साधार
धर्म्मस्य अनन्यथाभावात्।

न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्याः तां तथाभूतामपि तेजोविशे
प्रभावातिशयेन अनुमितां "सर्व्वथा राजा एवायं भवेत् इति ऊहितां राजलक्ष्मीं दधानः
राजा, अनाविष्कृतदानराजिः बहिरप्रकटितमदरेखः, अन्तर्गता महावस्था यस्य
अन्तर्मदावस्थः, तथाभूतः द्विपेन्द्र इव आसीत्॥ ७

लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिः उद्ग्रथिताः उन्नमय्य ग्रथिताः ये केशाः तैरु
लक्षितः। "इत्थम्भूतलक्षणे" इति तृतीया। सः राजा अधिज्यम् आरोपितमौर्वी
धनुर्यस्य सः अधिज्यधन्वा सन्। "धनुषश्च" इत्यनङादेशः। मुनिहोमधेनोः रक्षापदेश
रक्षणव्याजात् वन्यान् वने भवान् दुष्टसत्त्वान् दुष्टजन्तून्। "द्रव्येषु व्यवसायेषु सत्त्वमस्
तु जन्तुषु" इत्यमरः। विनेष्यन् शिक्षयिष्यन् इव दावं वनम्। "वने च वनवह्नौ च दवो

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १०

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११

अन्वयः। विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमाः उन्मदानां वयसां विरावैः आलोकशब्दम् उदीरयामासुरिव ॥ ९

अन्वयः। मरुत्प्रयुक्ताः बाललताः आरात् अभिवर्त्तमानं मरुत्सखाभम् अर्च्यं तं प्रसूनैः पौरकन्या आचारलाजैरिव अवाकिरन् ॥ १०

अन्वयः। धनुर्भृतोऽपि अस्य विशङ्कैः अन्तःकरणैः दयार्द्रभावम् आख्यातं वपुः विलोकयन्त्यो हरिण्यः अक्ष्णां प्रकामविस्तारफलम् आपुः ॥ ११

दाव इहेष्यते" इति यादवः। विचचार वने चचार इत्यर्थः। "देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" इति दावस्य कर्मत्वम् ॥ ८

विसृष्टेत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह विसृष्टेति। विसृष्टाः पार्श्वानुचराः पार्श्ववर्त्तिनो जना येन तस्य, पाशभृता वरुणेन समस्य तुल्यस्य। "प्रचेता वरुणः पाशी" इत्यमरः। अनुभावोऽनेन सूचितः। तस्य राज्ञः, पार्श्वद्रुमाः, उन्मदानाम् उत्कटमदानाम् वयसां खगानाम्। "खगबाल्यादिनोर्वयः" इत्यमरः। विरावैः शब्दैः, आलोकस्य शब्दं वाचकम् आलोकय इति शब्दं, जयशब्दमित्यर्थः। "आलोको जयशब्दः स्यात्" इति विश्वः। उदीरयामासुरिव अवदन्निव इत्युत्प्रेक्षा ॥ ९

विचारः। पाशभृता समस्येतिविशेषणेन राज्ञः को नाम उत्कर्षः प्रतिपद्यते ? स्वस्य वरुणावस्थानात् जलसंसर्गेण उद्भिज्जानां पुष्टिसाधनं यथा सम्भवेत् तथा राज्ञः अवस्थानात् विघ्ननिवारणेन तेषां तदपि सिध्यतीतिभावः।

मरुत्प्रयुक्ताः वायुना प्रेरिताः, बाललताः, आरात् समीपे अभिवर्त्तमानम्। "आरात् दूरसमीपयोः" इत्यमरः। मरुतः वायोः सखा मरुत्सखः अग्निः स इव आभातीति मरुत्सखाभम्। "आतश्चोपसर्गे" इति कप्रत्ययः। अर्च्यं पूज्यं, तं दिलीपं, प्रसूनैः पुष्पैः, पौरकन्याः पौराश्च ताः कन्याः, आचारार्थैर्लाजैः आचारलाजैः इव अवाकिरन्, तस्योपरि विक्षिप्तवत्य इत्यर्थः। सखा हि सखायमागतमुपचरति इति भावः ॥ १०

धनुर्भृतोऽपि अस्य राज्ञः, एतेन भयसम्भावना दर्शिता। तथापि विशङ्कैः निर्भीकैः अन्तःकरणैः कर्तृभिः, दयया कृपारसेन आर्द्रः भावः अभिप्रायः यस्य तत् दयार्द्रभावं तत् आख्यातं

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२
पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३
शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने ॥ १४

अन्वयः । सः मारुतपूर्णरन्ध्रैः कूजद्भिः कीचकैः, आपादितवंशकृत्यं कुञ्जेषु वनदेवताभिः उद्गीयमानम् उच्चैः स्वं यशः शुश्राव ॥ १२

अन्वयः । गिरिनिर्झराणां तुषारैः पृक्तः अनोकहाकम्पितपुष्पगन्धी पवनः आचारपूतम् अनातपत्रम् आतपक्लान्तं तं सिषेवे ॥ १३

अन्वयः । गोप्तरि तस्मिन् वनं गाहमाने वृष्ट्या विनापि दवाग्निः शशाम, फलपुष्पवृद्धिः विशेषा आसीत् सत्त्वेषु अधिकः ऊनं न बबाधे ॥ १४

दयार्द्रभावमेतदित्याख्यातमित्यर्थः । भावः "सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः । तथाविधं वपुः विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारस्य अत्यन्तविशालतायाः फलम् आपुः । "विमल कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुञ्च" इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ॥ ११

सः दिलीपः मारुतपूर्णरन्ध्रैः अत एव कूजद्भिः स्वनद्भिः कीचकैः वेणुविशेषैः । "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः । वंशः सुषिरवाद्यविशेषः । "वंशादिकं तु सुषिरम्" इत्यमरः । आपादितं सम्पादितं वंशस्य कृत्यं कार्यं यस्मिन् कर्मणि तत् तथा, कुञ्जेषु लतागृहेषु । "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः । वनदेवताभिः उद्गीयमानम् उच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान् ॥ १२

गिरिषु निर्झराणां वारिप्रवाहाणाम् । "वारिप्रवाहो निर्झरो झरः" इत्यमरः । तुषारैः सीकरैः । "तेशारौ हिमसीकरौ" इति शाश्वतः । पृक्तः सम्पृक्तः अनोकहानां वृक्षाणाम् आकम्पितानि ईषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीति आकम्पितपुष्पगन्धी ईषत्कम्पितपुष्पगन्धवान्, एवं शीतः मन्दः सुरभिः पवनः वायुः अनातपत्रं व्रतार्थं परिहृतच्छत्रम् अतएव आतपक्लान्तम् आचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात् स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ॥ १३

गोप्तरि तस्मिन् राज्ञि, वनं गाहमाने प्रविशति सति, वृष्ट्या विना अपि दवाग्निः वनाग्निः । "दवदावौ वनानले" इति हैमः । शशाम । फलानां पुष्पाणाञ्च वृद्धिः, विशिष्यते इति विशेषा अतिशयिता आसीत् । कर्मार्थे घञ्प्रत्ययः । सत्त्वेषु जन्तुषु मध्ये । "युतश्च

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५
तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६
स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥ १७

अन्वयः । पल्लवरागताम्रा पतङ्गस्य प्रभा मुनेर्धेनुश्च दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते निलयाय गन्तुं प्रचक्रमे ॥ १५

अन्वयः । मध्यमलोकपालः देवतापितृतिथिक्रियार्थां ताम् अन्वग्ययौ, स च सतां मतेन तेन ( राज्ञा ) उपपन्ना सती, सतां मतेन विधिना उपपन्ना साक्षात् श्रद्धेव बभौ ॥ १६

अन्वयः । सः पल्वलोत्तीर्णवराहयूथानि आवासवृक्षोन्मुखबर्हिणानि मृगाध्यासित-शाद्वलानि श्यामायमानानि वनानि पश्यन् ययौ ॥ १७

निर्द्धारणम्" इति सप्तमी । अधिकः प्रबलः व्याघ्रादिः, ऊनं दुर्बलं हरिणादिकं न बबाधे ॥ १४

विचारः । ननु शशामेत्यादौ कथं वृष्टिं विना दवाग्नेः प्रशमनं सम्भवेत् ? अन्ययोग-व्यवच्छेदकोऽनापेरर्थः तर्हि अन्येषां निवारकाणां पदार्थानामभावे किमुत वृष्टेरभावेऽपि दवाग्नेः प्रशमनं भवति कथमेतत् सङ्गच्छते ? सत्यम्' विभावना विना हेतुं कार्य्योत्पत्ति-र्यदुच्यते इत्यालङ्कारिकवचनात् वृष्टिगतं हेतुं विना प्रशमनं कार्यं घटते, फलानां पुष्पाणां च वृद्धेः, अधिकेन ऊनबाधनस्य च गोप्तरि पदार्थगतहेतुत्वात् काव्यलिङ्गमेतयोरङ्गाङ्गिभावेन सङ्करः ॥

पल्लवस्य रागो वर्णः पल्लवरागः । "रागोऽनुरक्तौ मात्सर्य्ये क्लेशादौ लोहितादिषु" इति शाश्वतः । स इव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्य्यस्य प्रभा कान्तिः । "पतङ्गः पक्षिसूर्य्ययोः" इति शाश्वतः । मुनेर्धेनुश्च दिगन्तराणि दिशामवकाशान् । "अन्तरमवकाशा-वधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायं-काले निलयाय अस्तमयाय, धेनुपक्षे आलयाय च गन्तुं प्रचक्रमे ॥ १५

मध्यमलोकपालः भूपालः, देवतापितृतिथीनां क्रियाः यागश्राद्धदानानि ता एव अर्थः प्रयोजनं यस्याः तां धेनुम्, अन्वक् अनुपदं ययौ । "अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इत्यमरः । सतां मतेन सन्निमान्येन । "गतिबुद्धि" इत्यादिना वर्त्तमाने क्तः "क्तस्य च वर्त्तमाने" इति षष्ठी । तेन राज्ञा उपपन्ना युक्ता सा धेनुः, सतां मतेन विधिना अनु-ष्ठानेन, उपपन्ना युक्ता, साक्षात् प्रत्यक्षा श्रद्धा आस्तिक्यबुद्धिरिव बभौ च ॥ १६

सः राजा पल्वलेभ्यः अल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि, बर्हाणि एषां सन्तीति बर्हिणः मयूराः । "मयूरो बर्हिणो बर्ही" इत्यमरः ।

आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम्॥ १८
वशिष्ठधेनोरनुयायिनन्तमावर्त्तमानं वनिता वनान्तात्।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्॥ १९
पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्म्मपत्न्या।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या॥ २०

अन्वयः। गृष्टिः नरेन्द्रश्च उभौ आपीनभारोद्वहनप्रयत्नात् वपुषो गुरुत्वाच्च अञ्चिताभ्यां गताभ्यां तपोवनावृत्तिपथम् अलञ्चक्रतुः॥ १८

अन्वयः। वशिष्ठधेनोः अनुयायिनं वनान्तात् आवर्त्तमानं तं वनिता निमेषालसपक्ष्मपंक्तिः सती लोचनाभ्याम् उपोषिताभ्यामिव पपौ॥ १९

अन्वयः। वर्त्मनि पार्थिवेन पुरस्कृता पार्थिवधर्म्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे दिनक्षपामध्यगता सन्ध्येव विरराज॥ २०

फलवर्हाभ्यामिनच्प्रत्ययो वक्तव्यः। आवासवृक्षाणाम् उन्मुखाः वर्हिणः येषु तानि, श्याम-यमानानि वराहवर्हिणादिमलिनिम्ना अश्यामानि श्यामानि भवन्तीति श्यामायमानानि "लोहितादिडाज्भ्यः क्यष्" इति क्यष्प्रत्ययः. "वा क्यषः" इत्यात्मनेपदे शानच्। मृगैः अध्यासिताः अधिष्ठिताः शाद्वलाः येषु तानि. शादाः शष्पाणि एषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। "शाद्वलः शादहरिते" इत्यमरः। "शादः कर्द्दमशष्पयो" इति विश्वः। "नडशादाड्ड्वलच्" इति ड्वलच्प्रत्ययः। वनानि पश्यन् ययौ॥ १७

गृष्टिः सकृत् प्रसूता गौः। "गृष्टिः सकृतप्रसूता गौः" इति हलायुधः। नरेन्द्रश्च उभौ. यथाक्रमम् आपीनमूधः। "ऊधस्तु क्लीवमापीनम्" इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात् प्रयासात्, वपुषः गुरुत्वात् आधिक्याच्च, अञ्चिताभ्यां चारुभ्यां गतभ्यां गमनाभ्यां, तपोवनात् आवृत्तेः पन्थाः तं तपोवनावृत्तिपथम्। 'ऋक्पूः" इत्यादिना समासान्तः अप्रत्ययः। अलञ्चक्रतुः भूषितवन्तौ॥ १८

वशिष्ठधेनोरनुयायिनम् अनुचरं वनान्तात् आवर्त्तमानं प्रत्यागतं तं दिलीपं, वनिता सुदक्षिणा, निमेषेषु अलसा मन्दा पक्ष्मणां पङ्क्तिः यस्याः सा निर्निमेषा सती इत्यर्थः। लोचनाभ्यां करणाभ्याम् उपोषिताभ्यामिव उपवासः भोजननिवृत्तिः तद्वद्भ्यामिव। वसतेः कर्त्तरि क्तः। पपौ यथोपोषितः अतितृष्णया जलमधिकं पिबति तद्वदतितृष्णया अधिकं व्यलोकयदित्यर्थः॥ १९

वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण। "तस्येश्वरः" इत्यञ्प्रत्ययः। पुरस्कृता अग्रे कृता धर्म्मस्य पत्नी धर्म्मार्थपत्नीत्यर्थः। अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः। पार्थिवस्य धर्म्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे तयोर्दम्पत्योर्मध्ये दिनक्षपयोः दिनरात्र्योः मध्यगता सन्ध्या इव, विरराज॥ २०

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१
वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत् सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२
गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यञ्च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३
तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४

अन्वयः । साक्षतपात्रहस्ता सुदक्षिणा पयस्विनीं तां प्रदक्षिणीकृत्य प्रणम्य च अस्याः विशालं शृङ्गान्तरम् अर्थसिद्धेः द्वारमिव आनर्च ॥ २१

अन्वयः । सा वत्सोत्सुकापि स्तिमिता सती सपर्यां प्रत्यग्रहीत् इति हेतोः तौ ननन्दतुः, तथाहि भक्त्या उपपन्नेषु तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२

अन्वयः । भुजोच्छिन्नरिपुः दिलीपः सदारस्य गुरोः पादौ निपीड्य सान्ध्यं विधिम् समाप्य च दोहावसाने निषण्णां दोग्ध्रीं पुनरेव भेजे ॥ २३

अन्वयः । गोप्ता गृहिणीसहायः अन्तिकन्यस्तबलिप्रदीपां ताम् अन्वास्य क्रमेण सुप्ताम् अनुसंविवेश, प्रातः सुप्तोत्थिताम् अनु उदतिष्ठत् ॥ २४

अक्षतानां पात्रेण सह वर्त्तेते इति साक्षतपात्रौ तौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च अस्याः धेन्वाः विशालं शृङ्गान्तरं शृङ्गमध्यम्, अर्थसिद्धेः कार्य्यसिद्धेः द्वारं प्रवेशमार्गमिव, आनर्च अर्चयामास । अर्चतेर्भौवादिकाल्लिट् ॥ २१

सा धेनुः वत्सोत्सुकापि वत्से उत्कण्ठितापि स्तिमिता निश्चला सती, सपर्यां पूजां प्रत्यग्रहीत् इति हेतोः तौ दम्पती ननन्दतुः । पूजास्वीकारस्य आनन्दहेतुत्वमाह— भक्त्येति । पूज्येषु अनुरागः भक्तिः, तया उपपन्नेषु युक्तेषु विषये, तद्विधानां तस्या धेन्वा विधा इव विधा प्रकारः येषां तेषां महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि पूजास्वीकारादीनि, पुरः फलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दी युज्यते इत्यर्थः । २२

भुजोच्छिन्नरिपुर्द्दिलीपः, सदारस्य दारैः अरुन्धत्या सह वर्त्तमानस्य गुरोः, उभयोरपीत्यर्थः । 'भार्य्या जायाथ पुं भूम्नि दाराः' इत्यमरः । पादौ निपीड्य अभिवन्द्य सान्ध्यं सन्ध्यायां विहितं विधिमनुष्ठानं च समाप्य दोहावसाने निषण्णाम् आसीनां दोग्ध्रीं दोहनशीलाम् । 'तृन्' इति तृन्प्रत्ययः । धेनुमेव पुनः भेजे सेवितवान् । दोग्ध्रीमिति उपपदप्रयोगात् कामधेनुत्वं गम्यते ॥ २३

गोप्ता रक्षकः गृहिणीसहायः पत्नीद्वितीयः सन्, उभावपि इत्यर्थः । अन्तिके न्यस्ता

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्त्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥२५

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढ़शष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६

सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥२७

अन्वयः । इत्थं प्रजार्थं महिष्या समं व्रतं धारयतः महनीयकीर्त्तेः दीनोद्धरणोचि
तस्य त्रिगुणानि सप्त दिनानि व्यतीयुः ॥ २५

अन्वयः । अन्येद्युः मुनिहोमधेनुः आत्मानुचरस्य भावं जिज्ञासमाना सती
प्रपातान्तविरूढ़शष्पं गौरीगुरोः गह्वरम् आविवेश ॥ २६

अन्वयः । सा हिंस्रैः मनसापि दुष्प्रधर्षा इति हेतोः अद्रिशोभाप्रहितेक्षणेन
अलक्षिताभ्युत्पतनः सिंहः प्रसह्य तां चकर्ष किल । २७

वलयः प्रदीपाश्च यस्याः तां तथोक्तां, तां निषण्णां धेनुम्, अन्वास्य अनूपविश्य, क्रमेण
अनु अनन्तरं संविवेश सुष्वाप । प्रातः सुप्तोत्थितामनु उदतिष्ठत् उत्थितवान् । अत्र
शब्देन धेनुराजव्यापारयोः पौर्वापर्य्यमुच्यते, क्रमशब्देन धेनुव्यापाराणामिति अपौनरु
'कर्म्मप्रवचनीययुक्ते" इति द्वितीया ॥ २४

इत्थमनेन प्रकारेण, प्रजार्थं सन्तानाय, महिष्या समम् अभिषिक्तपत्न्या सह ।
भिषेक्ता महिषी' इत्यमरः । व्रतं धारयतः, महनीया पूज्या कीर्त्तिर्यस्य तस्य दीना
उद्धरणं दैन्यविमोचनं तत्र उचितस्य परिचितस्य तस्य नृपस्य त्रयः गुणाः आवृत्तयः
तानि त्रिगुणानि त्रिरावृत्तानि सप्तदिनानि एकविंशतिदिनानि व्यतीयुः ॥ २५

अन्येद्युः अन्यस्मिन् दिने द्वाविंशे दिने । "सद्यः परुत्परारि" इत्यादिना निपात
व्ययम् । "अद्यात्राह्नाय पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् । तथा धराव्यान्यतरेतरात् पूर्वे
द्युः' इत्यमरः । मुनिहोमधेनुः आत्मानुचरस्य भावम् अभिप्रायं दृढभक्तिलम् ।
ऽभिप्राय आशयः" इति यादवः । जिज्ञासमाना ज्ञातुमिच्छन्ती । 'ज्ञाश्रुस्मृदृशां
इत्यात्मनेपदे शानच् । प्रपतति अस्मिन् इति प्रपातः पतनप्रदेशः. गङ्गायाः प्रपातः
अन्ते समीपे विरूढ़ानि जातानि शष्पाणि बालतृणानि यस्मिन् तत् । 'शष्पं बाल
घासः' इत्यमरः । गौरीगुरोः पार्व्वतीपितुः, गह्वरं गुहाम् आविवेश ॥ २६

सा धेनुः हिंस्रैः व्याघ्रादिभिः मनसा अपि दुष्प्रधर्षा दुर्धर्षा इति हेतोः अद्रिशो
प्रहितेक्षणेन दत्तदृष्टिना नृपेण अलक्षितम् अभ्युत्पतनम् आभिमुख्येन उत्पतनं यस्य

तदीयमाक्रन्दितमार्त्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्त्तयामास नृपस्य दृष्टिम् ॥ २८

स पाटलायां गवि तस्थिवांसं धनुर्धरः केशरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः ॥ ३०

अन्वयः । गुहानिबद्धप्रतिशब्ददीर्घं तदीयम् आक्रन्दितम् आर्त्तसाधोः नृपस्य नगेन्द्रसक्तां दृष्टिं रश्मिषु आदायेव निवर्त्तयामास ॥ २८

अन्वयः । धनुर्धरः सः पाटलायां गवि तस्थिवांसं केशरिणं सानुमतः धातुमय्याम् अधित्यकायाम् तस्थिवांसं प्रफुल्लं लोध्रद्रुममिव ददर्श ॥ २९

अन्वयः । अतो मृगेन्द्रगामी शरण्यः प्रसभोद्धृतारिः नृपतिः जाताभिषङ्गः सन् वध्यस्य मृगेन्द्रस्य वधाय निषङ्गात् शरं उद्धर्त्तुं ऐच्छत् ॥ ३०

सिंहः, तां वेत्तुं प्रसह्य हठात् । "प्रसह्य तु हठार्थकम्" इत्यमरः । चकार्थं, क्वचित्-सौवि ॥ २७

: गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घं, तस्य इदं तदीयम् आक्रन्दितम् आर्त्त-घोषणम्. आर्त्तेषु आपन्नेषु साधोः हितकारिणः नृपस्य, नगेन्द्रसक्तां दृष्टिं, रश्मिषु प्रग्रहेषु । "किरणप्रग्रहौ रश्मी," इत्यमरः । आदाय इव गृहीत्वा इह निवर्त्तयामास ॥२८

धनुर्धरः सः नृपः पाटलायां रक्तवर्णायां गवि, तस्थिवांसं स्थितम् । "क्वसुश्च" इति क्वसुप्रत्ययः । केशरिणं सिंहं, सानुमतः अद्रेः, धातोः गैरिकस्य विकारः धातुमयी तस्याम् अधित्यकायाम् ऊर्द्ध्वभूमौ । "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपा-धिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः । प्रफुल्लः विकसितः तम् । फुल्लः विकसने इति धातोः पचाद्यच् । प्रफुल्लतमिति तकारपाठे ञि फला विशरणे इति धातोः कर्त्तरि क्तः "उत्परस्यातः" इत्युकारादेशः लोध्राख्य द्रुममिव ददर्श ॥ २९

ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी, शरणं रक्षणम् । "शरणं रक्षणे गृहे" इति यादवः । "शरणं गृहरक्षित्रोः" इत्यमरः । शरणे साधुः शरण्यः । 'तत्र साधुः' इति यत्प्रत्ययः । प्रसभेन बलात्कारेण उद्धृताः अरयः येन सः, नृपतिः राजा, जाताभिषङ्गः जातपराभवः सन् । "अभिषङ्गः पराभवः" इत्यमरः । वध्यस्य वधार्हस्य । "दण्डादिभ्यो यत्" इति यत्प्रत्ययः । मृगेन्द्रस्य वधाय निषङ्गात् तूणीरात् । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । शरमुद्धर्त्तुमैच्छत् ॥ ३०

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुंख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१
बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥ ३२
तमार्य्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥३३

अन्वयः। प्रहर्त्तुस्तस्य वामेतरः करः नखप्रभाभूषितकङ्कपत्रे सायकपुंखे। सक्ताङ्गुलिः, सन् चित्रार्पितारम्भ इव अवतस्थे ॥ ३१

अन्वयः। बाहुप्रतिष्टम्भविवृद्धमन्युः राजा मन्त्रौषधिरुद्धवीर्य्यः भोगीव अभ्यर्णम् आगस्कृतम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत ॥ ३२

अन्वयः। निगृहीतधेनुः सिंहः आर्य्यगृह्यम् मनुवंशकेतुं सिंहोरुसत्त्वम् आत्मवृत्तौ विस्मितं मनुष्यवाचा विस्माययन् निजगाद ॥ ३३

प्रहर्तुस्तस्य वामेतरः दक्षिणः करः, नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कपक्षिविशेषस्य पत्राणि यस्य तस्मिन्। "कङ्कः पक्षिविशेषे स्यात् गुप्ताकारे युधिष्ठिरे" इति विश्वः। "कङ्कस्तु कर्कटः" इति यादवः। सायकस्यपुङ्खे एव कर्त्तर्य्याख्ये मूलप्रदेशे 'कर्त्तरि पुङ्खे' इति यादवः। सक्ताङ्गुलिः सन् चित्रार्पितारम्भः चित्रलिखितशरोद्धरणोद्योग इव अवतस्थे ॥ ३१

बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन। "प्रतिबन्धः प्रतिष्टम्भः" इत्यमरः। विवृद्धमन्युः प्रवृद्धरोषः राजा, मन्त्रौषधिभ्यां रुद्धवीर्य्यः प्रतिबद्धशक्तिः, भोगी सर्पः इव। "भोगी राजभुजङ्गयोः" इति शाश्वतः। अभ्यर्णम् अन्तिकम्। "उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः। आगस्कृतम् अपराधकारिणम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत। "अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि" इति यादवः ॥ ३२

निगृहीता पीड़िता धेनुर्येन सः सिंहः आर्य्याणां सतां गृह्यं पक्ष्यम्। "पदास्वैरिबाह्यापक्ष्येषु च" इति क्यप्। मनुवंशस्य केतुं चिह्नं, केतुवत् व्यावर्त्तकम्। सिंह इव उरुसत्त्वं महाबलः तम्, आत्मनः वृत्तौ बाहुस्तम्भरूपे व्यापारे, अभूतपूर्वत्वात् विस्मितम्। कर्त्तरि क्तः। तं दिलीपं, मनुष्यवाचा करणेन पुनः विस्माययन् विस्मयमाश्चर्य्यं प्रापयन् निजगाद। 'स्मिङ्ईषद्धसने' इति धातोर्णिचि वृद्धौ आयादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम्। "विस्मापयन्" इति पाठे पुगागमभावं वक्तव्यं तत्र "नित्यं स्मयतेः" इति हेतुभयविवक्षायामेवेति। "भीस्म्योर्हेतुभये" इत्यात्मनेपदे विस्मापयमान इति स्यात् तस्मात् मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् करणविवक्षायां न कश्चिद्दोषः ॥ ३३

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४
कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५
अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६
कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७

अन्वयः । हे महीपाल ! तव श्रमेण अलम्, इतः प्रयुक्तमपि अस्त्रं वृथा स्यात्, मारुतस्य पादपोन्मूलनशक्ति रंहः शिलोच्चये न मूर्च्छति ॥ ३४

अन्वयः । कैलासगौरं वृषम् आरुरुक्षोः अष्टमूर्त्तेः पादार्पणानुग्रहपूतपृष्ठं कुम्भोदरं नाम निकुम्भमित्रं किङ्करं माम् अवेहि ॥ ३५

अन्वयः । पुरः अमुं देवदारुं पश्यसि ? असौ वृषभध्वजेन पुत्रीकृतः, यः स्कन्दस्य मातुः हेमकुम्भस्तननिःसृतानां पयसां रसज्ञः ॥ ३६

अन्वयः । कदाचित् कटं कण्डूयमानेन वन्यद्विपेन अस्य त्वक् उन्मथिता, अथ अद्रेस्तनया असुरास्त्रैः आलीढं सेनान्यमिव एनं शुशोच ॥ ३७

हे महीपाल ! तव श्रमेण अलं, साध्याभावात् श्रमो न कर्त्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात् तृतीया । उक्तञ्च—"न्यासोद्द्योते न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य, अपि तर्हि गम्यमानापि" इति । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । इतः अस्मिन् मयि । सार्वविभक्तिकस्तसिः । प्रयुक्तमपि अस्त्रं वृथा स्यात् । तथाहि, पादपोन्मूलने शक्ति यस्य तत् तथोक्तं मारुतस्य रंहः वेगः शिलोच्चये पर्व्वते न मूर्च्छति न प्रसरति ॥ ३४

कैलास इव गौरः शुभ्रः तम् । 'चामीकरञ्च शुभ्रञ्च गौरमाहुर्मनीषिणः' इति शाश्वतः । वृषं वृषभम् आरुरुक्षोः आरोढुमिच्छोः, स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः अष्टौ मूर्त्तयो यस्य सः तस्य अष्टमूर्त्तेः शिवस्य, पादार्पणं पादन्यासः तदेव अनुग्रहः प्रसादः तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं माम् अवेहि विद्धि । "पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्य्याचन्द्रमसौ सोमयाजी चेत्यष्ट मूर्त्तयः ।" इति यादवः ॥ ३५

पुनः अग्रतः अमुं देवदारुं पश्यसि ? इति काकुः । असौ देवदारुः वृषभो ध्वजो यस्य सः तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः । अभूततद्भावे च्विः । यो देवदारुः, स्कन्दस्य मातुः, गौर्य्याः, हेम्नः कुम्भ एव स्तनः तस्मात् निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः, पयसां क्षीराणाम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । स्कन्दसमानप्रेमास्पदमितिभावः ॥ ३६

कदाचित् कटं कपोलं कण्डूयमानेन कर्षता । 'कण्ड्वादिभ्यो यक्' इति यक् ततः

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९

स त्वं निवर्त्तस्व विहाय लज्जां गुरोर्भवान् दर्शितशिष्यभक्तिः।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४०

अन्वयः। तदाप्रभृत्येव वनद्विपानां त्रासार्थं शूलभृता अङ्कागतसत्त्ववृत्ति सिं[ह]त्वं विधाय अहम् अस्मिन् अद्रिकुक्षौ व्यापारितः ॥ ३८

अन्वयः। परमेश्वरेण प्रदिष्टकाला उपस्थिता एषा शोणितपारणा, चान्द्रमसी सुरद्विष इव, क्षुधितस्य तस्य मे तृप्त्यै अलम् ॥ ३९

अन्वयः। स त्वं लज्जां विहाय निवर्त्तस्व, भवान् गुरोः दर्शितशिष्यभक्तिः, यत् शस्त्रेण अशक्यरक्षं तत् शस्त्रभृतां यशः न क्षिणोति ॥ ४०

शानच्। वन्यद्विपेन अस्य देवदारोः त्वक् उन्मथिता। अथ अद्रेस्तनया गौरी अस्य[...] आलोढ़ं क्षतं, सेनां नयतीति सेनानीः स्कन्दः। 'पार्व्वतीनन्दनः स्कन्दः सेनानीः' इत्य[...] "सत्सूद्विष' इत्यादिना क्विप्। तस्मिव एनं देवदारुं शशोच ॥ ३७

तदा तत्कालः प्रभृतिरादिर्यस्मिन् कर्म्मणि तत् तथा तदाप्रभृत्येव वनद्विपानां त्रा[सा]मयार्थं शूलभृता शिवेन अङ्कं समीपम् आगताः प्राप्ताः सत्त्वाः प्राणिनः वृत्तिर्यस्मिन् [...] "अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः" इति केशवः। सिंहत्वं विधाय [...] अद्रिकुक्षौ गुहायाम्, अहं व्यापारितः नियुक्तः ॥ ३८

विचारः—ननु "तस्मिन् काले" इत्यर्थे वर्त्तमानस्य तदेत्यव्ययस्य तत्कालः [...] मल्लिनाथव्याख्यातार्थः कथं सङ्गच्छते ? कथं वा तेन समासः कृतः ? आधारा[...] अस्य समासान्तरघटकता, यथा "अस्य प्रभृत्यवनताङ्गी" इति कुमारः।

परमेश्वरेण प्रदिष्टः निर्दिष्टः कालः भोजनवेला यस्याः सा उपस्थिता प्राप्ता एषा [...] शोणितपारणा रुधिरस्य व्रतान्तभोजनं सुरद्विषः राहोः चन्द्रमसः इयं चान्द्रमसी सुधा [...] क्षुधितस्य बुभुक्षितस्य तस्य अङ्कागतसत्त्ववृत्तेः मे मम सिंहस्य तृप्तेः अलं पर्य्याप्ता। "[...] स्वस्ति" इत्यादिना चतुर्थी ॥ ३९

सः एवमुपायशून्यः त्वं लज्जां विहाय निवर्त्तस्व। भवान् त्वं गुरोः दर्शिता प्रक[टी...] शिष्यस्य कर्त्तव्या भक्तिर्येन सः तथोक्तः असि। ननु गुरुधनं विनाश्य कथं तत्[...] गच्छेयमत आह—शस्त्रेणेति। यत् रक्ष्यं धनं, शस्त्रेण आयुधेन। "शस्त्रमायुधलोह[...] इत्यमरः। अशक्या रक्षा यस्य तत् अशक्यरक्षं रक्षितुमशक्यमित्यर्थः तत् रक्ष्यं नष्ट[...] शस्त्रभृतां यशः न क्षिणोति न छिनत्ति। अशक्यार्थेष्वप्रतिविधानं न दोषाय [...] भावः ॥ ४०

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार॥ ४१

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः॥ ४२

संरुद्धचेष्टस्य मृगेन्द्र! कामं हास्यं वचस्तद्यदहं विवक्षुः।
अन्तर्गतं प्राणभृतां हि वेद सर्व्वं भवान् भावमतोऽभिधास्ये॥ ४३

अन्वयः। पुरुषाधिराजः मृगाधिराजस्य इति प्रगल्भं वचः निशम्य गिरिशप्रभावात् प्रत्याहतास्त्रः आत्मनि अवज्ञां शिथिलीचकार॥ ४१

अन्वयः। तत्पूर्व्वभङ्गे इषुप्रयोगे वितथप्रयत्नः वज्रं मुमुक्षन् त्र्यम्बकवीक्षणेन जडीकृतः वज्रपाणिरिव स्थितः सन् (एनं) प्रत्यब्रवीत्॥ ४२

अन्वयः। हे मृगेन्द्र! संरुद्धचेष्टस्य मे तत् वचः कामं हास्यम्, यत् वचः अहं विवक्षुः हि (यतः) भवान् प्राणभृताम् अन्तर्गतं सर्व्वं भावं वेद, अतः अहम् अभिधास्ये॥ ४३

पुरुषाणामधिराजः नृपः, इति प्रगल्भं मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्य ईश्वरस्य प्रभावात् प्रत्याहतास्त्रः कुण्ठितास्त्रः सन् आत्मनि विषये अवज्ञामपमानं शिथिलीचकार तत्याज इत्यर्थः। अवज्ञातोऽहमिति निर्वेदं न प्राप इत्यर्थः। समानेषु हि क्षत्रियाणामभिमानी, न सर्वेश्वरं प्रति इति भावः॥ ४१

स एव पूर्वः प्रथमः भङ्गः प्रतिबन्धः यस्य तस्मिन् तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नः विफलप्रयासः अतएव वज्रं कुलिशं मुमुक्षन् मोक्तुमिच्छन्। अम्बकं लोचनम्। 'दृग् दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुधः। त्रीणि अम्बकानि यस्य सः त्र्यम्बको हरः तस्य वीक्षणेन जडीकृतः निष्पन्दीकृतः, वज्रं पाणौ यस्य सः वज्रपाणिः इन्द्रः। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्' इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। स इव स्थितो नृपः एनं सिंहं प्रत्यब्रवीच्च। 'बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः' इति महाभारते॥ ४२

पुरा किल वज्रपाणिः स्तनन्धयं मातुरङ्केऽवस्थितं स्कन्दं विलोक्य अयं बालः कालेन मे इन्द्रत्वं लभेत इति मनसि आशङ्क्य वज्रेण तं बालं हन्तुमुद्यतः वज्रपाणिः शिवस्य रोषकषायितकटाक्षेण जडीकृतोऽभूदिति पौराणिकीवार्त्ता अवगन्तव्या।

हे मृगेन्द्र! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तत् वचः वाक्यं कामं हास्यं परिहसनीयम् यद् वचः "स त्वं मदीयेन' (२।४५) इत्यादिकम् अहं विवक्षुः वक्तुमिच्छुरस्मि। तर्हि तूष्णीं स्थीयतामित्याशङ्क्य ईश्वरकिङ्करत्वात् सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति। हि यतः भवान् प्राणभृतामन्तर्गतं हृद्गतं वाग्व्यापारबहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति। 'विदो लटो वा" इति णलादेशः। अतः अहम् अभिधास्ये वक्ष्यामि, वच इति प्रकृतं कर्म्म सम्बध्यते। अन्ये त्वाहवचनमाकर्ण्य सभ्याः वितार्थमेतदित्युपहसन्ति अतस्तु मौनमेव भूषणं त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि, अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः॥ ४३

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत् पुरस्तादनुपेक्षणीयम् ॥ ४४

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्त्ती किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥

अन्वयः । स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः स मे मान्यः, पुरस्तात् नश्यत् आहिताग्नेः गुरोः इदं धनमपि अनुपेक्षणीयम् ॥ ४४

अन्वयः । स त्वं मदीयेन देहेन शरीरवृत्तिं निर्वर्त्तयितुं प्रसीद, दिनावसानोत्सुकबालवत्सा महर्षेरियं धेनुः विसृज्यताम् ॥ ४५

अन्वयः । अथ भूतेश्वरपार्श्ववर्त्ती स दंष्ट्रामयूखैः गिरिगह्वराणाम् अन्धकारं शकलानि कुर्वन् किञ्चित् विहस्य अर्थपतिं भूयो बभाषे ॥ ४६

अन्वयः । एकातपत्रं जगतः प्रभुत्वं, नवं वयः, इदं कान्तं वपुश्च इत्येवं बहु अल्पस्य हेतोः हातुम् इच्छन् त्वं विचारमूढः प्रतिभासि ॥ ४७

प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां, जङ्गमानां मनुष्यादीनां, सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरः मे मम मान्यः पूज्यः अलङ्घ्यशासन इत्यर्थः । 'मा सिंहत्वमङ्कागतसत्ववृत्ति (२।३८) इत्युक्तरूपम् । तर्हि विसृज्य गम्यतां नेत्याह गुरोरपीति । पुरस्तात् अग्रे नश्यदिदमाहिताग्नेर्गुरोः धनमपि गोरूपम् अनुपेक्षणीयम् आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४

सः अङ्कागतसत्त्ववृत्तिः त्वं, मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्त्तयितुं सम्पादयितुं प्रसीद । दिनावसाने उत्सुकः 'माता समागमिष्यति' इत्युत्कण्ठितः बालवत्सो यस्याः सा महर्षेरियं धेनुः विसृज्यताम् ॥ ४५

अथ भूतेश्वरस्य पार्श्ववर्त्ती अनुचरः स सिंहः, गिरिगह्वराणां गुहानाम् । 'देवखातबिले गुहा गह्वरम्' इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन् निरस्यन् इत्यर्थः । किञ्चित् विहस्य अर्थपतिं नृपं भूयो बभाषे । हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' (२।४७) इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६

अथान्धकारं शकलानि कुर्वन्नित्यत्र कृधातोर्द्विकर्मकत्वं नाशङ्कनीयं, शकलान्धकारशब्दयोः विधेयोद्देश्यरूपेण प्रयोगात् ।

एकातपत्रम् एकच्छत्रं जगतः प्रभुत्वं स्वामित्वं नवं वयः यौवनम् इदं कान्तं

भूतानुकम्पा तव चेदियं गौ-रेका भवेत् स्वस्तिमती त्वदन्ते ।
जीवन् पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ ! पितेव पासि ॥ ४८
अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद्विभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः ॥४९
तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५०

अन्वयः । तव भूतानुकम्पा चेत्, त्वदन्ते इयमेका गौः स्वस्तिमती भवेत्, हे प्रजानाथ ! त्वं जीवन् पुन पितेव प्रजाः उपप्लवेभ्यः शश्वत् पासि ॥ ४८

अन्वयः । अथ एकधेनोः अपराधचण्डात् कृशानुप्रतिमात् गुरोः विभेषि ? घटोघ्नीः कोटिशः गाः स्पर्शयता भवता अस्य मन्युः विनेतुं शक्यः ॥ ४९

अन्वयः । तत् कल्याणपरम्पराणां भोक्तारम् ऊर्जस्वलम् आत्मदेहं रक्ष, ऋद्धं राज्यं महीतलस्पर्शनमात्रभिन्नम् ऐन्द्रं पदम् आहुः ॥ ५०

वपुश्च इत्येवं बहु अल्पस्य हेतोः अल्पेन कारणेन अल्पफलाय इत्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी हातुं त्यक्तुम् इच्छन् त्वं, विचारे कार्याकार्यविमर्शे, मूढः, मूर्खः मे मम प्रतिभासि ॥ ४७

तव भूतेषु अनुकम्पा चेत् । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । कृपैव वर्त्तते यदीत्यर्थः । तर्हि त्वदन्ते तव नाशे सति इयम् एका गौः, स्वस्ति क्षेमम् अस्या अस्तीति स्वस्तिमती, भवेत् जीवेदित्यर्थः । "स्वस्त्याशीः क्षेमपुण्यादौ" इत्यमरः । हे प्रजानाथ ! जीवन्, पुनः पिता इव प्रजाः उपप्लवेभ्यः विघ्नेभ्यः शश्वत् सदा । "पुनः सदार्थयोः शश्वत्" इत्यमरः । पासि रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणादवरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥ ४८

न धर्मलोपादियं प्रवृत्तिः, किन्तु गुरुभयादित्यत आह—अथेति । अथेति पक्षान्तरे एकधेनोः एका एव धेनुर्यस्य तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । अत एव अपराधे गवोपेक्षालक्षणे सति चण्डात् अतिकोपनात् । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । अतएव कृशानुः प्रतिमा उपमा यस्य तस्मात् अग्निकल्पात् गुरोः विभेषि इति काकुः । भीत्रार्थानां भयहेतुः" इत्यपादानात् पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहा इति भावः । अस्य गुरोः मन्युः क्रोधः । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः । घटा इव ऊधांसि यासां ताः घटोघ्नीः । "ऊधसोऽनङ्" इत्यनङादेशः, "बहुव्रीहेरूधसो ङीष्" इति ङीष् । कोटिशः गाः स्पर्शयता प्रतिपादयता । "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरः । भवता विनेतुम् अपनेतुं शक्यः ॥ ४९

तत् तस्मात् कारणात् कल्याणपरम्पराणां भोक्तारम् । कर्मणि षष्ठी । ऊर्जो बलमस्यास्तीति ऊर्जस्वलम् । "ज्योत्स्नातमिस्रा" इत्यादिना वलच्प्रत्ययान्तो निपातः । आत्मदेहं रक्ष । ननु गामुपेक्ष्य आत्मदेहरक्षणे स्वर्गहानिः स्यात् नेत्याह—महीतलेति ।

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव॥ ५१
निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः॥ ५२
क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढ़ः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा॥ ५३

अन्वयः। मृगेन्द्रे एतावत् उक्त्वा विरते सति शिलोच्चयोऽपि अस्य गुहागतेन प्रतिस्वनेन प्रीत्या क्षितिपालम् तमेवार्थम् उच्चैः अभाषतेव॥ ५१

अन्वयः। मनुष्यदेवः देवानुचरस्य वाचं निशम्य तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्यमाणः अतएव सुतरां दयालुः सन् पुनरपि उवाच॥ ५२

अन्वयः। क्षतात् त्रायते किल इति उदग्रः क्षत्रस्य शब्दः भुवनेषु रूढ़ः, तद्विपरीतवृत्तेः राज्येन उपक्रोशमलीमसैः प्राणैर्वा किम्?॥ ५३

ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नम्, ऐन्द्रम् इन्द्रस्य पदं स्थानम् आहुः, स्वर्गान्न भिद्यते इत्यर्थः॥ ५०

मृगेन्द्रे एतावत् उक्त्वा विरते सति, गुहागतेन अस्य सिंहस्य प्रतिस्वनेन शिलोच्चयोऽपि प्रीत्या तमेव अर्थं क्षितिपालम् उच्चैरभाषत इव इत्युत्प्रेक्षा। भाषिरयं ब्रुविनार्थत्वात् द्विकर्मकः; ब्रुविस्तु द्विकर्मकेषु पठितः। तदुक्तम्—"दुह्याचिरुधिप्रच्छिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना" इति॥ ५१

देवानुचरस्य ईश्वरकिङ्करस्य सिंहस्य वाचं निशम्य मनुष्यदेवः राजा पुनरपि उवाच ... भूतः सन्? तेन सिंहेन यत् अध्यासितं व्याक्रमणम्। नपुंसके भावे क्तः। तेन ... अक्षिणी यस्याः तया। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'—इति षच्। 'षिद्गौरादिभ्यश्च' इति ङीष्। किंवा वक्ष्यतीति भीत्यैवं स्थितया इत्यर्थः। धेन्वा निरीक्ष्यमाणः अतएव सुतरां दयालुः सन्। 'सुतरामित्यत्र द्विवचनविभज्य' इत्यादिना सुशब्दात् 'किमेत्तिङव्ययं' इत्यादिना आम्प्रत्ययः 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा॥५२

किमुवाचेत्याह—क्षतादिति। क्षणु हिंसायामिति धातोः सम्पदादित्वात् 'गमादीनाम्' इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम्' क्षतः ... त्रायते इति क्षत्त्रः। सुपीति योगविभागात् कः। तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति क्षतादित्यादिना। उदग्रः उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दः वाचकः क्षत्त्रशब्द इत्यर्थः, ... इति व्युत्पत्त्या भुवनेषु रूढ़ः किल प्रसिद्धः खलु, नाश्वकर्णादिवत् केवलरूढः ... दिवत् योगरूढ़ इत्यर्थः। ततः किमित्यत आह—तस्य क्षत्त्रशब्दस्य विपरीत...

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ५४
सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५
भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६

अन्वयः । महर्षेः अनुनयः अन्यपयस्विनीनां विश्राणनात् कथं नु शक्यः, इमां सुरभेः अनूनाम् अवेहि, रुद्रौजसा तु त्वया अस्यां प्रहृतम् ॥ ५४

अन्वयः । मया स्वदेहार्पणनिष्क्रयेण सा इयं भवत्तः मोचयितुं न्याय्या, एवं सति तव पारणा विहता, न स्यात्, मुनेः क्रियार्थः अलुप्तश्च भवेत् ॥ ५५

अन्वयः । परवान् भवानपि इदम् अवैति हि ( यतः ) तव देवदारौ महान् यत्नः, रक्ष्यं विनाश्य स्वयम् अक्षतेन सता नियोक्तुः अग्रे स्थातुं नहि शक्यम् ॥ ५६

विरुद्धव्यापारस्य क्षतत्राणमकुर्वतः पुंसः राज्येन किम् ? उपक्रोशमलीमसैः निन्दा मलिनैः । 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः । 'ज्योत्स्ना तमिस्रा' इत्यादिना मलीमसशब्दो निपातितः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्" इत्यमरः । तैः प्राणैर्वा किम् ? निन्दितस्य सर्वं व्यर्थमित्यर्थः । एतेन 'एकातपत्रम्' (२ । ४७ ) इत्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम् ॥ ५३

'अथैकधेनोः' ( २ । ४९ ) इत्यत्रोत्तरमाह—कथमिति । अनुनयः क्रोधापनयः । चकारो वाकारार्थः । महर्षेरनुनयो वा । अन्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनात् 'त्यागो वितरणं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्" इत्यमरः । कथं नात् । नु शक्यः ? न शक्य इत्यर्थः । अत्र हेतुमाह—इमां गां सुरभेः कामधेनोः । 'पञ्चमी विभक्ते" इति पञ्चमी । अनूनाम् अन्यूनाम् अवेहि जानीहि । तर्हि कथमस्याः परिभवोऽभूदित्याह—रुद्रौजसेति । अस्यां गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु । नपुंसके भावे क्तः । रुद्रौजसा ईश्वरसामर्थ्येन, न तु स्वयमित्यर्थः । 'सप्तम्यधिकरणे च" इति सप्तमी ॥ ५४

तर्हि किं चिकीर्षितमित्याह—सेयमिति । सा इयम् गौः, मया । निष्क्रीयते प्रत्याक्रियते अनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम् । 'एरच्' इति अच्प्रत्ययः । स्वदेहार्पणमेव निष्क्रयः तेन भवत्तः त्वत्तः । पञ्चम्यास्तसिल् । मोचयितुं न्याय्या न्यायादनपेता युक्तेत्यर्थः । 'धर्मपथ्यर्थ" इत्यादिना यत्प्रत्ययः । एवं सति तव पारणा भोजनं विहता न स्यात् । मुनेः क्रिया होमादिः स एव अर्थः प्रयोजनं, स च अलुप्तः भवेत् । स्वप्राणव्ययेनापि स्वाधिगुरुधनं संरक्ष्यमिति भावः ॥ ५५

अत्र भवानेव प्रमाणमित्याह—भवानिति । परवान् स्वामिपरतन्त्रः भवान् अपि ।

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥
सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते।
तद्भूतनाथानुग! नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥५८॥
तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत् पिण्डमिवामिषस्य ॥५९॥

अन्वयः। किमपि अहं तव अहिंस्यः मतश्चेत् तर्हि मे यशःशरीरे दयालुर्भव; मद्विधानाम् एकान्तविध्वंसिषु भौतिकेषु पिण्डेषु अनास्था खलु ॥ ५७

अन्वयः। सम्बन्धम् आभाषणपूर्वम् आहुः, वनान्ते सङ्गतयोः नौ स वृत्तः, तत् भूतनाथानुग! त्वं सम्बन्धिनो मे प्रणयं विहन्तुं नार्हसि ॥ ५८

अन्वयः। तथेति गाम् उक्तवते हरये सद्यः प्रतिष्टम्भविमुक्तबाहुः स दिलीपः न्यस्तशस्त्रः सन् स्वदेहम् आमिषस्य पिण्डमिव उपानयत् ॥ ५९

'परतन्त्रः पराधीनः परवान् नाथवानपि' इत्यमरः। इदं वक्ष्यमाणम् अवैति भवता प्रश्रूयते एव इत्यर्थः। "शेषे प्रथमः" इति प्रथमपुरुषः। किमित्यत आह—हि यस्मात् हेतोः 'हि हेतावधारणे' इत्यमरः। तव देवदारौ विषये महान् यत्नः महता यत्नेन रक्ष्यते इत्यर्थः। इदं शब्दोक्तमर्थं दर्शयति—स्थातुमिति। रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयम् अक्षतेन अव्रणेन नियुक्तेन इतिः शेषः नियोक्तुः स्वामिनः अग्रे स्थातुं शक्यं न हि ॥ ५६

सर्वथा चैतद्गातिहार्य्यमित्याह,—किमिति। किमपि किंवा अहं तव अहिंस्यः अवध्यः मतः चेत् तर्हि मे यश एव शरीरं तस्मिन् दयालुः कारुणिकः भव। "स्याद् दयालुः कारुणिकः" इत्यमरः। ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेश अत आह:—एकान्तेति। मद्विधानां मादृशानां विवेकिनाम् एकान्तविध्वंसिषु अवश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेषु अनास्था खलु अनपेक्षा एव। "आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः ॥ ५७

सौहार्दादहमनुसरणीयोऽस्मीत्याह,—सम्बन्धमिति। सम्बन्धं सख्यम् आभाषणम् आलापः पूर्वं कारणं यस्य तम् आहुः। "स्यादाभाषणमालापः" इत्यमरः। स तादृक् सम्बन्धः वनान्ते सङ्गतयोः नौ आवयोः वृत्तः जातः तत् ततः हेतोः हे भूतनाथानुग शिवानुचर। एतेन तस्य महत्त्वं सूचयति, अतएव सम्बन्धिनः मित्रस्य मे प्रणयं याच्ञाम्। "प्रणयास्त्वमी विश्रम्भयाच्ञाप्रेमाणः" इत्यमरः। विहन्तुं न अर्हसि ॥ ५८

तथा इति गाम् उक्तवते हरये सिंहाय। "कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः" इति शाश्वतः। सद्यः तत्क्षणे प्रतिष्टम्भात् प्रतिबन्धात् विमुक्तौ बाहू यस्य सः दिलीपः न्यस्तशस्त्रः त्यक्तायुधः सन्, स्वदेहम् आमिषस्य मांसस्य। "पललं क्रव्यमामिषम्" इत्यमरः। पिण्डं कवलम् इव उपानयत् समर्पितवान्। एतेन निर्ममत्वमुक्तम् ॥ ५९

तस्मिन् क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६०
उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१
तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२
भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३

अन्वयः । तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः अवाङ्मुखस्य प्रजानां पालयितुः उपरि विद्याधरहस्तमुक्ता पुष्पवृष्टिः पपात ॥ ६०

अन्वयः । राजा अमृतायमानम् उत्थितं 'हे वत्स उत्तिष्ठ' इति वचः निशम्य उत्थितः सन् अग्रतः प्रस्रविणीं गां स्वां जननीमिव ददर्श, सिंहं न (ददर्श) ॥ ६१

अन्वयः । विस्मितं तं धेनुः उवाच हे साधो ! मया मायाम् उद्भाव्य परीक्षितोऽसि, ऋषिप्रभावात् मयि अन्तकोऽपि प्रहर्तुं न प्रभुः, अन्यहिंस्राः किमुत ? ॥ ६२

अन्वयः । हे पुत्र ! गुरौ भक्त्या मयि अनुकम्पया च ते प्रीतास्मि, वरं वृणीष्व, मां पयसां प्रसूतिं न अवेहि, किन्तु प्रसन्नां कामदुघाम् अवेहि ॥ ६३

तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः उत्प्रेक्षमाणस्य तर्कयतः अवाङ्मुखस्य अधोमुखस्य । 'स्यादवाङप्यधोमुखः' इत्यमरः । प्रजानां पालयितुः राज्ञः उपरि उपरिष्टात् । 'उपर्युपरिष्टात्' इति निपातः । विद्याधराणां हस्तैः मुक्ता पुष्पवृष्टिः पपात ॥ ६०

राज्ञा, अमृतमिव आचरतीति अमृतायमानं तत् । 'उपमानादाचारे' इति क्यच्, ततः शानच् । उत्थितम् उत्पन्नं "हे वत्स ! उत्तिष्ठ" इति वचः निशम्य श्रुत्वा उत्थितः सन् अस्तेः शतृप्रत्ययः । अग्रतः अग्रे प्रस्रवः क्षीरस्रावः अस्ति यस्याः सा तां प्रस्रविणीं गां, स्वां जननीम् एव ददर्श, न सिंहं ददर्श ॥ ६१

विस्मितम् आश्चर्यं गतम् । कर्त्तरि क्तः । तं दिलीपं धेनुः उवाच । किमित्यत्राह— हे साधो ! मया मायाम् उद्भाव्य कल्पयित्वा परीक्षितः असि । ऋषिप्रभावात् मयि अन्तकः यमः अपि प्रहर्तुं न प्रभुः न समर्थः अन्ये हिंस्राः घातुकाः । "शरारुर्घातुको हिंस्रः" इत्यमरः । 'नमिकम्पि" इत्यादिना रप्रत्ययः । किमुत ? सुष्ठु न प्रभव इति योज्यम् । 'बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे" इत्यमरः ॥ ६२

हे पुत्र ! गुरौ भक्त्या मयि अनुकम्पया च ते तुभ्यं प्रीता अस्मि । "क्रियाग्रहणमपि कर्त्तव्यम्" इति चतुर्थी । वरं देवेभ्यो वरणीयम् अर्थम् । "देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिये" इत्यमरः । वृणीष्व स्वीकुरु । तथाहि, मां केवलानां पयसां प्रसूतिं न अवेहि न विद्धि, किन्तु प्रसन्नां मां कामान् दोग्धीति कामदुघा, ताम् अवेहि 'दुहः कप् घश्च' इति कप्प्रत्ययः ॥ ६३

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्त्तारमनन्तकीर्त्तिं सुदक्षिणायां तनयं ययाचे॥ ६४
सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश॥ ६५
वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः!।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः॥ ६६
इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण॥ ६७

अन्वयः। ततः मानितार्थी स्वहस्तार्ज्जितवीरशब्दः स हस्तौ समानीयवंशस्य कर्त्ता[रम्] अनन्तकीर्त्तिं तनयं सुदक्षिणायां ययाचे॥ ६४

अन्वयः। सा पयस्विनी सन्तानकामाय राज्ञे कामं तथेति प्रतिश्रुत्य हे पुत्र पत्रपुटे मदीयं पयो दुग्ध्वा उपभुङ्क्ष्व इति तम् आदिदेश॥ ६५

अन्वयः। हे मातः! ऋषेः अनुज्ञाम् अधिगम्य वत्सस्य होमार्थविधेश्च शेषं तव औध[स्यम्] रक्षितायाः उर्व्याः षष्ठांशमिव उपभोक्तुम् इच्छामि॥ ६६

अन्वयः। क्षितीशेन इत्थं विज्ञापिता वशिष्ठधेनुः प्रीततरा बभूव, तदन्विता च है[म]वतात् कुक्षेः अश्रमेण आश्रमं प्रत्याययौ॥ ६७

ततः मानितार्थी स्वहस्तार्जितो वीर इति शब्दो येन सः! एतेनास्य दातृत्वं दैन्यराहि[त्यं] चोक्तम्। सः राजा, हस्तौ समानीय सन्धाय अञ्जलिं बद्ध्वा इत्यर्थः वंशस्य कर्त्तारं प्रवर्त्त[यि]तारम्, अतएव रघुकुलमिति प्रसिद्धिः! अनन्तकीर्त्तिं स्थिरयशसं तनयं सुदक्षिणा[यां] ययाचे॥ ६४

सा पयस्विनी गौः, सन्तानं कामते इति सन्तानकामः। कर्म्मण्यण्। तस्मै राज्ञे, तथेति, काम्यते इति कामो वरः। कर्म्मार्थे घञ्प्रत्ययः। प्रतिश्रुत्य प्रतिज्ञाय 'हे पुत्र मदीयं पयः 'पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वा उपभुङ्क्ष्व पिब। 'उपयुङ्क्ष्व' इति वा पाठः इति तम् आदिदेश आज्ञापितवती॥ ६५

हे मातः! वत्सस्य वत्सपीतस्य शेषं वत्सपीतावशिष्टमित्यर्थः होम एव अर्थः तस्य विधि[ः] अनुष्ठानं तस्य शेषं होमावशिष्टमित्यर्थः। तव ऊधसि भवम् औधस्यम् क्षीरम्। 'शरीरा[व]यवाच्च इति यत्प्रत्ययः। रक्षिताया उर्व्याः षष्ठांशं षष्ठभागम् इव ऋषेरनुज्ञामधिगम्य उप[भो]क्तुमिच्छामि॥ ६६

विचारः। "ऊधसः सोनङ्" इति सूत्रेण तस्य नत्वे कृते ऊधन्यमिति साधुपदं सि[ध्य]त्येव। अत्र तु "औधस्य"मिति पदस्य साधुत्वं सुधीभिर्विभाव्यमिति।

इत्थं क्षितीशेन विज्ञापिता वशिष्ठस्य धेनुः प्रीततरा, पूर्वं शुश्रूषया प्रीता सम्प्रति एत[त्] विज्ञापनया प्रीततरा अतिसन्तुष्टा बभूव, तदन्विता तेन दिलीपेन अन्विता हैमवतात् हिम[व]त्सम्बन्धिनः कुक्षेः गुहायाः सकाशात् अश्रमेण अनायासेन आश्रमं प्रत्याययौ आगता च[॥ ६७]

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वशिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥ ६९

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वशिष्ठः ॥ ७०

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्त्तुररुन्धतीञ्च ।
धेनुं सवत्साञ्च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१

अन्वयः । प्रसन्नेन्दुमुखः नृपाणां गुरुः प्रहर्षचिह्नानुमितं तस्याः प्रसादं पुनरुक्तयेव वाचा गुरवे निवेद्य (पश्चात्) प्रियायै शशंस ॥ ६८

अन्वयः । अनिन्दितात्मा सद्वत्सलः स वशिष्ठेन कृताभ्यनुज्ञः वत्सहुतावशेषं नन्दिनीस्तन्यं शुभ्रं मूर्त्तः यशः इव अतितृष्णः सन् पपौ ॥ ६९

अन्वयः । वशी वशिष्ठः प्रातः यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य तौ दम्पती स्वां राजधानीं प्रति प्रस्थापयामास ॥ ७०

अन्वयः । नृपः हुतं हुताशं, भर्त्तुः अनन्तरम् अरुन्धतीञ्च, सवत्सां धेनुञ्च प्रदक्षिणीकृत्य सन्मङ्गलोदग्रतरप्रभावः सन् प्रतस्थे ॥ ७१

प्रसन्नेन्दुरिव मुखं यस्य सः नृपाणां गुरुः दिलीपः, प्रहर्षचिह्नैः मुखरागादिभिः अनुमितम् ऊहितं तस्याः धेनोः प्रसादम् अनुग्रहं, प्रहर्षचिह्नैरेव ज्ञातत्वात् पुनरुक्तया एव वाचा गुरवे निवेद्य विज्ञाप्य, पश्चात् प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः, न चेह तदस्ति, किन्तु चिह्नैः कथितप्रायत्वात् पुनरुक्तयेव स्थितया इत्युत्प्रेक्षा ॥ ६८

अनिन्दितात्मा अगर्हितस्वभावः सत्सु वत्सलः प्रेमवान् सद्वत्सलः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । वशिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः सः राजा, वत्सस्य हुतस्य च अवशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरं शुभ्रं मूर्त्तं परिच्छिन्नं यश इव, अतितृष्णः सन् पपौ ॥ ६९

वशी वशिष्ठः प्रातः यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्य अङ्गभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवं तत्कालोचितमित्यर्थः । "कालाट्ठञ्" इति ठञ् प्रत्ययः । "यथाकथञ्चित् गुणवृत्त्यापि काले वर्त्तमानात् तत्तत्प्रत्यय इष्यते" इति वृत्तिकारः ईयते प्राप्यते अनेनेति अयनं स्वस्त्ययनं शुभावहम् आशीर्वादं प्रयुज्य तौ दम्पती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७०

नृपः, हुतं अर्पितम् । हुतमश्नातीति हुताशः अग्निः । कर्मण्यण्, तं । भर्त्तुः मुनेः अनन्तरं प्रदक्षिणानन्तरमित्यर्थः । अरुन्धतीञ्च, ... सवत्सां धेनुं दक्षिणं

श्रोत्राभिरामध्वनिना रथेन स धर्म्मपत्नीसहितः सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४

अन्वयः। धर्म्मपत्नीसहितः सहिष्णुः स श्रोत्राभिरामध्वनिना अनुद्घातसुखेन रथे
( तादृशेन ) पूर्णेन स्वेन मनोरथेनेव मार्गं ययौ ॥ ७२

अन्वयः। प्रजास्तृप्तिम् अनाप्नुवद्भिः नेत्रैः अदर्शनेन आहितौत्सुक्यं प्रजार्थव्रतकर्शि
ताङ्गं नवोदयम् ओषधीनां नाथमिव तं पपुः ॥ ७३

अन्वयः। पुरन्दरश्रीः सः पौरैः अभिनन्द्यमानः उत्पताकं पुरं प्रविश्य भुजङ्गेन्द्र
समानसारे भुजे भूमेर्धुरं भूयः आससञ्ज ॥ ७४

प्रदक्षिणम्। "तिष्ठद्गुप्रभृतीनि च, इत्यव्ययीभावः, ततः च्विः अप्रदक्षिणं प्रदक्षिणं सम्पद्य
मानं कृत्वा प्रदक्षिणीकृत्य, सद्भिः मङ्गलैः प्रदक्षिणादिभिः मङ्गलाचारैः उदग्रतरप्रभावः स
प्रतस्थे ॥ ७१

धर्म्मपत्नीसहितः सहिष्णुः व्रतादिदुःखसहनशीलः सः नृपः, श्रोत्राभिरामध्वनिना कर्ण
ह्लादकरस्वनेन, अनुद्घातः पाषाणादिप्रतिघातरहितः अतएव सुखयतीति सुखः तेन रथेन
स्वेन पूर्णेन सफलेन मनोरथेन इव, मार्गम् अध्वानं ययौ। मनोरथपक्षे—ध्वनिः श्रुति
अनुद्घातः प्रतिवन्धनिवृत्तिः ॥ ७२

अदर्शनेन प्रवासनिमित्तेन आहितौत्सुक्यं जनितदर्शनोत्कण्ठं प्रजार्थेन सन्तानार्थेन व्रतेगुरु
नियमेन कर्शितं कृशीकृतम् अङ्गं यस्य तं नवोदयं नवाभ्युदयं प्रजाः तृप्तिम् अनाप्नुवद्भिः
अतिगृध्नुभिः नेत्रैः ओषधीनां नाथं सोमम् इव तं राजानं पपुः अत्यास्थया ददृशुरित्यर्थः
चन्द्रपक्षे—अदर्शनं कलाक्षयनिमित्तं, प्रजार्थं लोकहितार्थं व्रतं, देवताभ्यः कलादाननियमः
"तञ्च सोमं पपुर्देवाः पर्य्यायेणानुपूर्व्वशः" इति व्यासः। उदयः आविर्भावः, अन्यत्
समानम् ॥ ७३

पुरः पुरीः असुराणां दारयतीति पुरन्दरः शक्रः। "पू सर्व्वयोर्दारिसहोः" इति खच्
प्रत्ययः, "वाचं यमपुरन्दरौ च" इति मुमागमो निपातितः। तस्य श्रीरिव श्रीर्यस्य सः नृपः
पौरैरभिनन्द्यमानः, उत्पताकम् उच्छ्रितध्वजम्। "पताका वैजयन्ती स्यात् केतनं ध्वज
मस्त्रियाम्" इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। "सारो बले
स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः। भुजे भूयः भूमेर्धुरम् आससञ्ज स्थापित
वान् ॥ ७४

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५

अन्वयः । अथ द्यौः अत्रेः नयनसमुत्थं ज्योतिरिव सुरसरित् वह्निनिष्ठ्यूतम् ऐशं तेजः इव राज्ञी नरपतिकुलभूत्यै गुरुभिः लोकपालानुभावैः अभिनिविष्टं गर्भम् आधत्त ॥ ७५

अथ द्यौः सुरवर्त्म । "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः । अत्रेः महर्षेः नयनयोः समुत्थम् उत्पन्नं नयनसमुत्थम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । ज्योतिरिव चन्द्रमिव इत्यर्थः । 'अत्रेश्च स्यादविनेत्रप्रसूतः' इति हलायुधः । चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे,—'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः । तद्गर्भविधिना हृष्टा दिशो देव्या दधुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयन् लोकान् शीतांशुः सर्वभावनः" इति । सुरसरित् गङ्गा वह्निना निष्ठ्यूतं विक्षिप्तम् । 'ष्ठिवुः शूड़नुनासिके च' इत्यनेन निपूर्वात् ष्ठीवतेर्वकारस्य ऊट् । 'नुन्ननुत्तास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः" इत्यमरः । ऐशं तेजः स्कान्दमिव । अत्र रामायणम्—'ते गत्वा पर्वतं राम ! कैलासं धातुमण्डितम् । अग्निं नियोजयामास पुत्रार्थं सर्वदेवताः । देवकार्य्यमिदं देव ! समाधत्स्व हुताशन ! । शैलपुत्र्यां महातेजो गङ्गायां तेजउत्सृज । देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि ! देवतानामिदं प्रियम् । इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य्य च । समन्ततस्तु तां देवीमभ्यसिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन !' इति । राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै सन्ततिलक्षणायै गुरुभिः महद्भिः लोकपालानाम् अनुभावैः तेजोभिः अभिनिविष्टम् अनुप्रविष्टं गर्भम् आधत्त दधौ इत्यर्थः । अत्र मनुः—'अष्टानां लोकपालानां वपुर्धारयते नृपः" इति । अत्र आधत्तेत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते, तथा मन्त्रे च दृश्यते,—'यथेयं पृथिवी मह्यमुत्तानगर्भमादधे । एवं तं गर्भमाधेहि दशमे मासि सूतये' इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारण आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ७५

ननु हरिवंशे व्यासवर्णितं चन्द्रस्य सम्भवः अत्रिनेत्रसम्भूतत्वं सत्यञ्चेत् तर्हि कथं मन्थनसमये स एव चन्द्रः समुद्रात् देवैर्लब्धः चिन्त्यमेतत् सुधिभिः । कालिदासेनोक्तं प्रह्लादनं ज्योतिरजन्यनेन ॥ रघु० ॥ १३ न

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि—
कालिदासकृतौ रघुवंशे महाकाव्ये नन्दिनीवर-
प्रदानो नाम द्वितीयः सर्गः ।

# तृतीयः सर्गः।

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम्।
निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २

अन्वयः। अथ सुदक्षिणा उपस्थितोदयं भर्तुः ईप्सितं सखीजनोद्वीक्षणकौमुदीमुखम् इक्ष्वाकुकुलस्य सन्ततेः निदानं दौर्हृदलक्षणं दधौ ॥ १

अन्वयः। शरीरसादात् असमग्रभूषणा लोध्रपाण्डुना मुखेन (उपलक्षिता) प्रभातकल्पा विचेयतारका तनुप्रकाशेन शशिना (उपलक्षिता) शर्व्वरी इव अलक्ष्यत।

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

राज्ञी "गर्भमाधत्त" (२।७५) इत्युक्तं, सम्प्रति गर्भलक्षणानि वर्णयितुं प्र
अथेति। अथ गर्भधारणानन्तरं सुदक्षिणा उपस्थितोदयं प्राप्तकालं भर्तुः दिलीपस्य मनोरथम्। भावे क्तः। पुनः सखीजनस्य उद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रि प्रादुर्भावम्। यद्वा, कौमुदी नाम दीपोत्सवतिथिः। तदुक्तं भविष्योत्तरे,— मोदन्ते जना यस्यां तेनासौ कौमुदी मता" इति। यस्याः मुखं प्रारम्भम्। केचित् "कौमुदीमहम्" इति पाठं पठन्ति। इक्ष्वाकुकुलस्य सन्ततेः अविच्छेदस्य मूलकारणम्। "निदानन्त्वादिकारणम्" इत्यमरः। एवंविधं दौर्हृदलक्षणं गर्भ वक्ष्यमाणं दधौ। स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी। यथाह वाग्भ "मातृजन्यस्य हृदयं मातुश्च हृदयञ्च तत्। सम्बद्धं तेन गर्भिण्या श्रेष्ठं श्रद्धाभिमानन इति। तत्सम्बन्धिलाद्गर्भो दौर्हृदमित्युच्यते, सा च तद्योगात् दौर्हृदि तदुक्तं। संग्रहे, 'द्विहृदयां नारीं दौर्हृदिनीमाचक्षते' इति। अत्र दौर्हृदलक्षणस्येप्सि कौमुदीमुखत्वेन च निरूपणात् रूपकालङ्कारः। अस्मिन् सर्गे वंशस्थं वृत्तम्—"जतौ वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १

सम्प्रति क्षामताख्यं गर्भलक्षणं वर्णयति, शरीरेति। शरीरस्य सादात् का असमग्रभूषणा परिमिताभरणा लोध्रपुष्पेण इव पाण्डुना मुखेन उपलक्षिता सा सुद विचेयाः मृग्याः तारकाः यस्यां सा तथोक्ता विरलनक्षत्रा इत्यर्थः। तनुप्रकाशेन कान्तिना शशिना उपलक्षिता ईषदसमाप्तप्रभाता प्रभातकल्पा प्रभातादीषदूना इ "तसिलादिष्वाकृत्वसुचः" इति प्रभातशब्दस्य पुंवद्भावः। शर्वरी रात्रिरिव अलक्ष शरीरसादादिगर्भलक्षणमाह वाग्भटः—"क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम्। प्रसेकः सदनं रोमराज्यः प्रकाशनम्" इति ॥ २

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३
दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान् विलङ्घ्य सा ॥ ४
न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ॥ ५

अन्वयः । शुचिव्यपाये पयोमुचां पृषतैः सिक्तं वनराजिपल्वलम् उपाघ्राय करीव क्षितीश्वरः रहसि मृत्सुरभि तदाननम् उपाघ्राय तृप्तिं न ययौ ॥ ३

अन्वयः । तत्सुतो हि दिगन्तविश्रान्तरथः सन् मरुत्वान् दिवमिव भुवं भोक्ष्यते, अतः सा अन्यरसान् विलङ्घ्य प्रथमं तथाविधे अभिलाषे मनो बबन्ध ॥ ४

अन्वयः । "मागधी ह्रिया किञ्चित् ईप्सितं मे न शंसति, केषु वस्तुषु स्पृहावती" इति अनुवेलम् आदृतः उत्तरकोशलेश्वरः प्रियासखीः पृच्छति स्म ॥ ५

क्षितीश्वरः, रहसि मृत्सुरभि मृदा सुगन्धि तस्याः आननं तदाननं सुदक्षिणामुखम् उपाघ्राय, तृप्तिं न आययौ । कः कमिव ? शुचिव्यपाये ग्रीष्मावसाने । "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यात् उपधाशुद्धमन्त्रिणि" इति विश्वः । पयोमुचां मेघानां पृषतैः विन्दुभिः । "पृषन्ति विन्दुपृषताः" इत्यमरः । सिक्ताम् उक्षितं वनराज्याः पल्वलम् उपाघ्राय करी गजः इव । अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसन्धेयः । गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव । एतेन दौहृदाख्यं गर्भलक्षणमुच्यते ॥ ३

दौहृदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते.—दिवमिति । हि यस्मात् दिगन्तविश्रान्तरथः चक्रवर्त्ती तस्याः सुतः तत्सुतः मरुत्वान् इन्द्रः । "इन्द्रो मरुत्वान् मघवा" इत्यमरः । दिवं स्वर्गम् इव, भुवं भोक्ष्यते । "भुजोऽनवने" इत्यात्मनेपदम् । अतः प्रथमं सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे अभिलष्यते इति अभिलाषः भोग्यवस्तु तस्मिन् । कर्म्मणि घञ् प्रत्ययः । रस्यन्ते स्वाद्यन्ते इति रसाः भोग्यार्थाः । अन्ये च ते रसाश्च तान् विलङ्घ्य विहाय मनः बबन्ध विदधावित्यर्थः । दौहृदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्ष्यते ॥ ४

मगधस्य राज्ञः अपत्यं स्त्री मागधी सुदक्षिणा । "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण्प्रत्ययः । ह्रिया किञ्चित् किमपि ईप्सितम् इष्टं मे मह्यं न शंसति न आचष्टे, केषु वस्तुषु स्पृहावती इति अनुवेलम् अनुक्षणम् आदृतः आदृतवान्, कर्त्तरि क्तः । "आदृतौ सादरार्चितौ" इत्यमरः । प्रियायाः सखीः सहचरीः उत्तरकोशलेश्वरः दिलीपः पृच्छति स्म पप्रच्छ । "लट् स्मे" इत्यनेन भूतार्थे लट् सखीनां विश्रम्भभूमित्वात् इति भावः ॥ ५

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६

क्रमेण निस्तीर्य्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञपल्लवा ॥ ७

दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८

अन्वयः । सा दोहददुःखशीलताम् उपेत्य यदेव वव्रे तत् आहृतम् अपश्यत्, अधि ज्यधन्वनः अस्य भूपतेस्त्रिदिवेऽपि इष्टम् अनासाद्यं नाभूत् ॥ ६

अन्वयः । सा क्रमेण दोहदव्यथां निस्तीर्य्य च प्रचीयमानावयवा पुराणपत्रापगमा अनन्तरं सन्नद्धमनोज्ञपल्लवा लतेव रराज ॥ ७

अन्वयः । दिनेषु गच्छत्सु नितान्तपीवरम् आनीलमुखं तदीयं स्तनद्वयम् भ्रम भिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियं तिरश्चकार ॥ ८

दोहदं गर्भिणीमनोरथः । "दोहदं दौर्हृदं श्रद्धा लालसञ्च समं स्मृतम्" इति ह युधः । सा सुदक्षिणा, दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावताम् उपे प्राप्य यत् वस्तु वव्रे आचकाङ्क्ष, तत् आहृतम् आनीतं भर्त्रा इति शेषः, अपश्यत् अलभत इत्यर्थः । कुतः ? हि यस्मात् अस्य भूपतेः त्रिदिवे अपि स्वर्गे अपि इष्टं अनासाद्यम् अनवाप्यं न अभूत् । किं याञ्चया ? नेत्याह—अधिज्यधन्वन इति । न वीरपत्नीनामलभ्यं नाम किञ्चिदस्ति इति भावः । अत्र वाग्भटः—"पादशोफो विदाही श्रद्धा च विविधात्मिका" इति । एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसम्भवात् राज्ञः प्रीतिलौल्यात् । तदुक्तम्—"देयमप्यहितं तस्मै हिताय हितमल्पकम् । श्रद्धाविघा गर्भस्य विकृतिश्च्युतिरेव वा ॥" अन्यच्च "दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् इति ॥

सा सुदक्षिणा क्रमेण दोहदव्यथाञ्च निस्तीर्य्य प्रतीयमानावयवा पुष्यमाणावयवा पुराणपत्राणाम् अपगमात् नाशात् अनन्तरं सन्नद्धाः सञ्जाताः प्रत्यग्रत्वात् मनोज्ञाः प यस्याः सा लता इव रराज ॥ ७

लक्षणान्तरं वर्णयति, दिनेष्विति । दिनेषु दोहददिवसेषु गच्छत्सु, नितान्तपीव अतिस्थूलम् आ समन्तात् नीले मुखे चूचुके यस्य तत् तदीयं स्तनद्वयं, भ्रमरैरभिलीन अभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चका अत, वाग्भटः—"श्यामता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ" इति ॥ ८

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥९

प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानाञ्च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥१०

सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ ११

अन्वयः । नृपः ससत्त्वां महिषीं निधानगर्भां सागराम्बरामिव, अभ्यन्तरलीनपावकां शमीमिव, अन्तःसलिलाम् सरस्वतीम् नदीम् इव अमन्यत ॥ ९

अन्वयः । धीरः सः प्रियानुरागस्य, मनःसमुन्नतेः, भुजार्जितानां दिगन्तसम्पदाञ्च धृतेश्च सदृशीः पुंसवनादिकाः क्रियाक्रमं व्यधत्त ॥ १०

अन्वयः । गृहागतो नृपः सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया उपचाराञ्जलिखिन्नहस्तया पारिप्लवनेत्रया तया ननन्द ॥ ११

नृपः ससत्त्वाम् आपन्नसत्त्वां गर्भिणीमित्यर्थः । "आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । महिषीं निधानं निधिः गर्भे यस्याः तां सागराम्बरां समुद्रवसनां भूमिमिव इत्यर्थः । "भूतधात्री रत्नगर्भा विपुला सागराम्बरा" इति कोषः । अभ्यन्तरे लीनः पावकः यस्याः तां शमीम् इव । शमीतरौ वह्निरस्ति इत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति । अन्तःसलिलाम् अन्तर्गतजलां सरस्वतीं नदीम् इव अमन्यत् । एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ॥ ९

धीरः सः राजा, प्रियायाम् अनुरागस्य स्नेहस्य, मनसः समुन्नतेः औदार्य्यस्य भुजेन स्वबलेन करेण वा अर्जितानां, न तु वाणिज्यादिना, दिगन्तेषु सम्पदां, धृतेः 'पुत्त्रो मे भविष्यति' इति सन्तोषस्य च । "धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु" इति विश्वः । सदृशीः अनुरूपाः पुमान् सूयते अनेनेति पुंसवनं तत् आदि यासां ताः क्रियाः यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान् । आदिशब्देन अनवलोभनसीमन्तोन्नयने गृह्येते । अत्र मासि द्वितीये तृतीये वा पुंसवनम् । यदाह—"पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्" इति पारस्करः । "चतुर्थेऽनवलोभनम्" इति आश्वलायनः । "षष्ठेऽष्टमे वा सीमन्तः" इति याज्ञवल्क्यः ॥ १०

गृहागतः नृपः सुरेन्द्राणां लोकपालानां मात्राभिः अंशैः,आश्रितस्य अनुप्रविष्टस्य गर्भस्य गौरवात् प्रयत्नेन मुक्तासनया आसनादुत्थितया इत्यर्थः । उपचारस्य अञ्जलौ अञ्जलीकरणे खिन्नहस्तया, पारिप्लवनेत्रया तरलाक्ष्या । "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः । तया सुदक्षिणया, ननन्द । "सुरेन्द्रमात्राश्रित" इत्यत्र मनुः—"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः" इति ॥ ११

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्म्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्य्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥

अन्वयः । कुमारभृत्याकुशलैः आप्तैः भिषग्भिः गर्भभर्म्मणि अनुष्ठिते सति । प्रतीतः काले प्रसवोन्मुखीं प्रियाम् अभ्रितां दिवमिव ददर्श ॥ १२

अन्वयः । ततः शचीसमा ( राज्ञी ) समये उच्चसंश्रयैः असूर्य्यगैः पञ्चभिः सूचितभाग्यसम्पदं पुत्रं त्रिसाधना शक्तिः अक्षयम् अर्थमिव असूत ॥ १३

अथ कुमारभृत्या बालचिकित्सा । "संज्ञायां समजनिषद" इत्यादिना क्यप् । कुशलैः कृतिभिः "कृती कुशल" इत्यमरः । आप्तैः हितैः भिषग्भिः वैद्यैः । 'भिषक् चिकित्सके" इत्यमरः । गर्भस्य भर्म्मणि भरणे । 'भरणे पोषणे भर्म्म' इति "भृतिर्भर्म्म" इति शाश्वतः । भृञो मनिच्प्रत्ययः । गर्भकर्म्मणीति पाठे गर्भाधानप्रभृ- चित्यभङ्गः । अनुष्ठिते कृते सति काले दशमे मासि, अन्यत्र ग्रीष्मावसाने गर्भमोचनस्य, उन्मुखीम् आसन्नप्रसवामित्यर्थः । "स्यादुत्पादे फले पुष्पे प्रसवो गर्भ- इत्यमरः । प्रियां भार्य्याम् । अभ्राणि अस्याः सञ्जातानि अभ्रिता ताम् । सञ्जातं तारकादिभ्य इतच्' इति इतच्प्रत्ययः । दिवमिव पतिः भर्त्ता प्रतीतः सन् । 'ख्याते हृष्टे प्रतीतः' इत्यमरः । ददर्श दृष्टवान् ॥ १२

ततः शच्या इन्द्राण्या समा । "पुलोमजा शचीन्द्राणी" इत्यमरः । सा सुदक्षिणा प्रसूतिकाले सति दशमे मासि इत्यर्थः । "दशमे मासि जायते" इति श्रुतेः । उच्चसंस्थैः तुङ्गस्थानगैः, असूर्य्यगैः अनस्तमितैः, कैश्चित् यथासम्भवं पञ्चभिः ग्रहैः भाग्यसम्पद् यस्य तं, त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनानि उत्पादकानि सा त्रिसाधना शक्तिः । "शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । अक्षयम् इव असूत । षूङ्प्राणिगर्भविमोचने इत्यात्मनेपदिषु पठ्यते तस्माद्धातोः कर्त्तरि अत्रेदमनुसन्धेयम्,—"अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः" इति । सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषमादयो राशयः श्लोकोक्तक्रमविशिष्टाः उच्चस्थानानि, स्वस्वतुङ्गात् सप्तमस्थानानि च नीचानि, तत्रोच्चेष्वपि दशमादयो राशिविंशांशाः यथाक्रमम् परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । नारदः—"त्रिशङ्गागात्मकं लग्नम् इति । सूर्य्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । लघुजातके—"रविणास्तमयो योगो वियोगस्तूदयो भवेत्' इति । ते च स्वोच्चस्थाः नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वर्क्षकेऽर्द्धं सुहृद्भे- त्रिङ्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किञ्चित् पादं नूनं

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्॥ १४

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव॥ १५

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसम्मिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे॥ १६

अन्वयः। तत्क्षणं दिशः प्रसेदुः, मरुतः सुखाः ववुः, अग्निः प्रदक्षिणार्चिः हविः आददे, इत्थं सर्व्वं शुभशंसि बभूव, तथाहि तादृशां भव लोकाभ्युदयाय (भवति)॥ १४

अन्वयः। अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा सहसा हतत्विषो निशीथदीपाः आलेख्यसमर्पिता इव बभुवुः॥ १५

अन्वयः। भूपतेः अमृतसम्मिताक्षरं कुमारजन्म शंसते शुद्धान्तचराय जनाय त्रयमेव अदेयम् आसीत्, शशिप्रभं छत्रम् उभे चामरे च॥ १६

दाति" इति। तदिदमाह कविः—उच्चसंश्रयैरसूर्य्यगैरिति च। एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गा भवति। तदुक्तं कूटस्थीये—खिनः प्रकृष्टकार्य्या राजप्रतिरूपकाश्च राजानः। एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः" इति तदिदमाह पञ्चभिरिति॥ १३

तत्क्षणं तस्मिन् क्षणे। कालाध्वनोरत्यन्तसंयोगे द्वितीया। दिशः प्रसेदुः प्रसन्ना बभुवुः। मरुतः वाताः सुखाः मनोहराः ववुः। अग्निः प्रदक्षिणार्चिः सन्, हविः आददे स्वीचकार। इत्थं सर्वं शुभशंसि शुभसूचकं बभूव। तथाहि—तादृशां रघुप्रकाराणाम् भवः जन्म, लोकाभ्युदयाय भवति इति शेषः, ततो देवा अपि सन्तुष्टा इत्यर्थः॥ १४

"अरिष्टं सूतिकागृहम्" इत्यमरः। अरिष्टे सूतिकागृहे शय्यां तल्पं परितः अभितः। "अभितः परितःसमयानिकषाहाप्रतियोगेषु दृश्यते" इति द्वितीया। विसारिणा सुजन्मनः शोभनोत्पत्तेः। "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः। तस्य शिशोः निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयः। निशीथदीपाः अर्द्धरात्रप्रदीपः "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः। आलेख्यसमर्पिताः चित्रार्पिताः इव बभूवुः। निशीथशब्दो दीपानां प्रभाधिक्यसम्भावनार्थः॥ १५

भूपतेः दिलीपस्य अमृतसम्मिताक्षरम् अमृतसमानाक्षरम्। "सरूपसमसम्मिताः" इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचराय अन्तःपुरचारिणे जनाय त्रयम् एव अदेयम् आसीत्। किं तत्? शशिप्रभम् उज्ज्वलं छत्रम्, उभे चामरे छत्रादीनां राज्ञः प्रधानाङ्गत्वात् इति भावः॥ १६

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिवतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १

सुखश्रवा मङ्गलतूर्य्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥

अन्वयः । निवातपद्मस्तिमितेन चक्षुषा कान्तं सुताननं पिवतो नृपस्य गुरुः ।
इन्दुदर्शनात् गुरुः महोदधेः पूरः इव आत्मनि न प्रबभूव ॥ १७

अन्वयः । तपस्विना पुरोधसा तपोवनात् एत्य अखिले जातकर्मणि कृते
प्रयुक्तसंस्कारः स दिलीपसूनुः आकरोद्भवः मणिरिव अधिकं बभौ ॥ १८

अन्वयः । सुखश्रवाः मङ्गलतूर्य्यनिस्वनाः वारयोषितां प्रमोदनृत्यैः सह मागधी
सद्मनि केवलं न, दिवौकसां पथ्यपि व्यजृम्भन्त ॥ १९

निवातः निर्वातप्रदेशः । "निवातावाश्रयावातौ" इत्यमरः । तत्र यत् पद्मं
स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण, कान्तं सुन्दरं सुताननं पुत्रमुखं, पिबतः तृष्णया
नृपस्य गुरुः उत्कटः प्रहर्षः कर्त्ता इन्दुदर्शनाद् गुरुः महोदधेः पूरः जलौघः इव
शरीरे न प्रबभूव स्थातुं न शशाक, अन्तः न माति स्म इति यावत् । न
अधिकं मीयते इति भावः । यद्वा हर्षः आत्मनि स्वस्मिन् विषये न प्रबभूव,
नियन्तुं न शशाक, किन्तु बहिर्निर्जगाम इत्यर्थः ॥ १७

स दिलीपसूनुः, तपस्विना पुरोधसा पुरोहितेन । "पुरोधास्तु पुरोहितः" इत्य
वशिष्ठेन । तपस्वित्वात् तदनुष्ठितं कर्म सवीर्य्यं स्यात् इति भावः । तपोवनात्
आगत्य अखिले समये जातकर्मणि जातस्य कर्त्तव्यसंस्कारविशेषे कृते सति, प्रयुक्तः सं
शाणोल्लेखनादिः यस्य सः तथोक्तः आकरोद्भवः खनिप्रभवः । "खनिः स्त्रियामाकरः
इत्यमरः । मणिः इव, अधिकं बभौ वशिष्ठमन्त्रप्रभावात् तेजिष्ठोऽभूदित्यर्थः । अत्र
"प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते" इति ॥ १८

सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखा इत्यर्थः । मङ्गलतूर्य्यनि
मङ्गलवाद्यध्वनयः, वारयोषितां वेश्यानाम् । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्य
प्रमोदनृत्यैः हर्षनर्त्तनैः सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृहे एव न व्यजृ
किन्तु द्यौः ओकः येषां ते दिवौकसः देवाः पृषोदरादित्वात् साधुः । तेषां पथि अ
ऽपि व्यजृम्भत । तस्य देवांशत्वात् देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ।

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद् यं सुतजन्महर्षितः ।
ऋणाभिधानात् स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥२०

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम् ॥२१

पितुः प्रयत्नात् स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२

अन्वयः । रक्षितुस्तस्य ( कश्चित् ) संयतो न बभूव, ( सः ) सुतजन्महर्षितः सन् यं विसर्ज्जयेत्, स तदा पितॄणाम् ऋणाभिधानात् बन्धनात् केवलं स्वयमेव मुमुचे ॥ २०

अन्वयः । अर्थवित् पार्थिवः अयम् अर्भकः श्रुतस्य अन्तं यायात् तथा युधि परेषां अन्तं यायात् इति धातोः गमनार्थम् अवेक्ष्य आत्मसम्भवं नाम्ना रघुं चकार ॥ २१

अन्वयः । स समग्रसम्पदः पितुः प्रयत्नात् शुभैः शरीरावयवैः हरिदश्वदीधितेः अनुप्रवेशात् बालचन्द्रमा इव दिने दिने वृद्धिं पुपोष ॥ २२

रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य, अतएव चौराद्यभावात् संयतः बद्धः न बभूव न अभूत । किं तेनात आह—विसर्जयेदिति । सुतजन्मना हर्षितः तोषितः सन् सः यं बद्धं विसर्जयेत् विमोचयेत् । किन्तु सः राजा तदा पितॄणाम् ऋणाभिधानात् बन्धनात् केवलम् एकं यथा तथा स्वयम् एव एक एव इत्यर्थः । 'केवलः कृत्स्न एकश्च केवलश्चावधारितः' इति शाश्वतः । मुमुचे । कर्म्मकर्त्तरि लिट् । स्वयमेव मुक्त इत्यर्थः । अस्मिन्नर्थे— 'एष वा अनृणी यः पुत्री' इति श्रुतिः प्रमाणम् ॥ २०

अर्थवित् शब्दार्थज्ञः पार्थिवः पृथिवीश्वरः दिलीपः, अयम् अर्भकः बालकः, श्रुतस्य शास्त्रस्य अन्तं पारं यायात, तथा युधि परेषां शत्रूणाम् अन्तं पारञ्च यायात् यातुं शक्नुयादित्यर्थः । "शकि लिङ् च" इति शक्त्यर्थे लिङ् । इति हेतोः धातोः "लघिवघिलघिगत्यर्थाः" इति लघिधातोः गमनाख्यम् अर्थम् अर्थवित्त्वात् अवेक्ष्य आलोच्य आत्मसम्भवं पुत्रं नाम्ना रघुं चकार । 'लङ्घिवंह्योर्नलोपश्च' इत्युप्रत्यये 'बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्खः—'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते" इति ॥ २१

सः रघुः, समग्रसम्पदः पूर्णलक्ष्मीकस्य, पितुः दिलीपस्य प्रयत्नात्, शुभैः मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्य्यरश्मेः । 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । अनुप्रवेशात् बालचन्द्रमाः इव दिने दिने प्रतिदिनम् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । वृद्धिं पुपोष । अत्र वराहसंहितावचनम्—'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ।' इति ॥ २२

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥२३
रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत् प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत् तयोः परस्परस्योपरि पर्य्यचीयत ॥ २४
उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥

अन्वयः । उमावृषाङ्कौ शरजन्मना यथा ( ननन्दतुः ) शचीपुरन्दरौ जयन्तेन ( ननन्दतुः ) तथा तत्समौ सा मागधी नृपश्च उभौ तत्सदृशेन सुतेन ननन्दतुः ॥ २३

अन्वयः । रथाङ्गनाम्नोरिव तयोः भावबन्धनं परस्पराश्रयं तत् प्रेम बभूव तत् एक विभक्तमपि परस्परस्य उपरि पर्य्यचीयत ॥ २४

अन्वयः । सः अर्भकः धात्र्या प्रथमोदितं वचः उवाच ( इति यत् ), तदीयाम् अङ्गुलिम् अवलम्ब्य ययौ ( इति यत् ), प्रणिपातशिक्षया नम्रः अभूत् ( इति च य तेन ( असौ ) पितुर्मुदं ततान ॥ २५

विचारः । ननु शरीरावयवैरित्यत्र चेत् शरीरस्य अवयवाः इत्थं समासो वि तर्हि अवयवानां वृद्धिरवाप्यते न तु शरीरस्य, द्वन्द्वसमासेन समाहारस्य विधानं भवि ततः एकत्वं स्यात्. ततः का गतिः सत्यं, करणे उपलक्षणे वा तृतीयाप्रयोगः । युक्तः अ सार्द्धं शरीरस्य अभेदसम्बन्धात् शरीरस्यापि वृद्धि र्जातव्येति । उपमानस्य चन्द्र असमानाम्नी महाकला एव शरीरं अपराः कलाः अवयवाः बोद्धव्याः ।

उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्त्तिकेयेन । 'कार्त्तिकेयो महासेनः जन्मा षड़ानन" इत्यमरः । यथा ननन्दतुः, शचीपुरन्दरौ जयन्तेन पाकशासनि "जयन्तः पाकशासनिः" इत्यमरः । यथा ननन्दतुः. तथा तत्समौ ताभ्याम् उमावृषा शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजय सदृशेन सुतेन ननन्दतुः । मागधी प्राक् व्याख्याता ॥ २३

रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । "पुमान् स्त्रिया" इ शेषः । तयोरिव. तयोर्दम्पत्योः, भावबन्धन हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयं प्रेम बभूव. तत् एकेन केवलेन ताभ्याम् अन्येन वा । "एके मुख्यान्यकेवलाः" इत्यम सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्य्यचीयत ववृधे । कर्मकर्त्तरि अकर्मकत्वात् स्वयमेव उपचितमित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम, सम्प्रति द्वितीयविषयलाभेऽपि नाई प्रत्युतोपचितमेवाभूदिति भावः ॥ २४

सः अर्भकः शिशुः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यम धात्र्या उपमात्रा । "धात्री जनन्यामलकी वसुमत्युपमातृषु' इति विश्वः । प्रथमम्

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवाऽमृतं त्वचि।
उपान्तसम्मीलितलोचनो नृपश्चिरात् सुतस्पर्शरसज्ञतां ययौ ॥२६
अमंस्त चानेन परार्द्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम्।
स्वमूर्त्तिभेदेन गुणाग्र्यवर्त्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७
स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८

अन्वयः। शरीरयोगजैः सुखैः त्वचि अमृतं नि·षिञ्चन्तमिव तम् अङ्कम् आरोप्य उपान्तसम्मीलितलोचनः सन् नृपः चिरात् सुतस्पर्शरसज्ञतां ययौ ॥ २६

अन्वयः। स्थितेः अभेत्ता (सः) परार्द्ध्यजन्मना गुणाग्र्यवर्त्तिना स्वमूर्त्तिभेदेन अनेन आत्मनः अन्वयम् (स्थितेः अभेत्ता) प्रजानां पतिः परार्द्ध्यजन्मना गुणाग्र्यवर्त्तिना तदीयस्वमूर्त्तिभेदेन (विष्णुना) आत्मनः सर्गमिव स्थितिमन्तम् अमंस्त ॥ २७

अन्वयः। वृत्तचूलः सः चलकाकपक्षकैः सवयोभिः अमात्यपुत्रैः अन्वितः सन् लिपेः यथावत् ग्रहणेन वाङ्मयं (कश्चित् मकरादिः) नदीमुखेन समुद्रमिव आविशत् ॥ २८

तम् उपदिष्टं वचः उवाच, तदीयाम् अङ्गुलिम् अवलम्ब्य ययौ च, प्रणिपातस्य शिक्षया उपदेशेन नम्रः अभूत् च, इति यत्, तेन पितुर्मुदं ततान ॥ २५

शरीरयोगजैः सुखैः त्वचि त्वगिन्द्रिये अमृतं निषिञ्चन्तं वर्षन्तम् इव, तं पुत्रम् अङ्कम् आरोप्य, मुदाविर्भावात् उपान्तयोः प्रान्तयोः सम्मीलितलोचनः सन् नृपः, चिरात् सुतस्पर्शरसज्ञतां ययौ। रसः स्वादः ॥ २६

स्थितेः अभेत्ता मर्य्यादापालकः सः नृपः, परार्द्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा, अन्वयं वंशं, प्रजानां पतिः ब्रह्मा, गुणाः सत्त्वादयः तेषु अग्र्येण सत्त्वेन सत्त्वेन वर्त्तते याभ्रियते इति गुणाग्र्यवर्त्ती तेन, स्वस्य मूर्त्तिभेदेन अवतारविशेषेण विष्णुना, आत्मनः सर्गं सृष्टिम् इव स्थितिमन्तं प्रतिष्ठावन्तम् अमंस्त मन्यते स्म, मन्यतेरनुदात्तत्वात् इट्प्रतिषेधः। अत्र उपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि। तत्र, रघुपक्षे गुणाः वैद्याविनयादयः। "गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। सत्त्वे सत्त्वादिसन्ध्यादिवैद्यादि-हरितादिषु ॥" इति विश्वः। शेषं सुगमम् ॥ २७

"चूड़ा कार्य्या द्विजातीनां सर्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्या श्रुतिचोदनात् ॥" इति मनुस्मरणात् तृतीये वर्षे वृत्तचूलः निष्पन्नचूड़ाकर्म्मा सन्। डलयोरभेदः। सः रघुः। "प्राप्ते तु पञ्चमे वर्षे विद्यारम्भञ्च कारयेत्" इति वचनात् पञ्चमे वर्षे चलकाकपक्षकैः चञ्चलशिखण्डकैः। "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः। सवयोभिः स्निग्धैः। 'स्निग्धो वयस्यः सवयाः' इत्यमरः। अमात्यपुत्रैः अन्वितः सन् लिपेः पञ्चाशद्वर्णात्मिकायाः मातृकायाः यथावद्ग्रहणेन सम्यक् बोधेन उपायभूतेन, वाङ्मयं शब्दजातं, तस्याः मुखं द्वारम्। "मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः" इति यादवः। तेन कश्चित् मकरादिः समुद्रमिव, आविशत् प्रविष्टः ज्ञातवानित्यर्थः ॥ २८

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी॥ ६०

यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः॥ ६१

संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत्॥ ६२

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव॥ ६३

अन्वयः। ततः (सः) संयमी तत्त्वज्ञानेन इन्द्रियाख्यान् रिपूनिव पारसीकान् जेतुं स्थलवर्त्मना प्रतस्थे॥ ६०

अन्वयः। स यवनीमुखपद्मानां मधुमदं न सेहे, (कथमिव) अकालजलदोदयः अब्जानां बालातपमिव॥ ६१

अन्वयः। तस्य अश्वसाधनैः पाश्चात्यैः (सह) रजसि शार्ङ्गकूजितविज्ञेयप्रतियोधे सति तुमुलः संग्रामः अभूत॥ ६२

अन्वयः। सः भल्लापवर्जितैः श्मश्रुलैः तेषां शिरोभिः सरघाव्याप्तैः क्षौद्रपटलैः मही तस्तार॥ ६३

ततः सः रघुः, संयमी योगी, तत्त्वज्ञानेन इन्द्रियाख्यान् इन्द्रियनामकान् रिपून् इव पारसीकान् राज्ञः जेतुं स्थलवर्त्मना प्रतस्थे" न तु नेदिष्ठेनापि जलपथेन, समुद्रस्य निषिद्धत्वादिति भावः॥ ६०

सः रघुः, यवनीनां यवनस्त्रीणाम्। 'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। पद्मानि इव मुखपद्मानि उपमितसमासः। तेषां मधुना मद्येन यः मदः मदरागः। कारणभूतयोरभेदेन निर्देशः। तं न सेहे। कमिव? अकाले प्रावृड्व्यतिरिक्ते जलदोदयः प्रायेण प्रावृषि पद्मविकासस्याप्रसक्तत्वात् अब्जानां सम्बन्धिनं बालातपम्। अब्जहितत्वादब्जसम्बन्धित्वं सौरातपस्य॥ ६१

तस्य रघोः, अश्वसाधनैः वाजिसैन्यैः। 'साधनं सिद्धिसैन्ययोः' इति हैमः। पाश्चात्यैः यवनैः सह। "दक्षिणापश्चात्पुरसस्त्यक्"। सहार्थे तृतीया शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः। "शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। नये च विहिते चापेऽप्याह विशेषतः।" इति केशवः। अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजितैः विज्ञेयाः अनुमेयाः प्रतियोधा प्रतिभटाः यस्मिन् तस्मिन् रजसि तुमुलः संग्रामः सङ्कुलः अभूत्। "तुमुलं रणसङ्कुले" इत्यमरः॥ ६२

सः रघुः भल्लापवर्जितैः बाणविशेषकृत्तैः। "क्षुद्रोदलफलो भल्लः" इति यादवः

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६

अन्वयः । शेषाः अपनीतशिरस्त्राणाः तं शरणं ययुः, तथाहि महात्मनां संरम्भः प्रणिपातप्रतीकारः ॥ ६४

अन्वयः । तद्योधाः आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु मधुभिः विजयश्रमं विनयन्ते स्म ॥ ६५

अन्वयः । ततो रघुः भास्वानिव शरैः उस्रैरिव उदीच्यान् रसानिव उद्धरिष्यन् कौबेरीं दिशं प्रतस्थे ॥ ६६

श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः । "सरघा मधुमक्षिका" इत्यमरः । क्षुद्राः सरघाः । "क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका" इत्यमरः । क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । "मधु क्षौद्रं माक्षिकादि" इत्यमरः । "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायामञ्प्रत्ययः । तेषां पटलैः सञ्चयैः इव । "पटलं तिलके नेत्ररोगे छन्दसि सञ्चये । पटिके परिवारे च" इति हैमः । मही तस्तार आच्छादयामास ॥ ६३

शेषाः हतावशिष्टाः अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः । "शीर्षकं । शीर्षण्यञ्च शिरस्त्रे" इत्यमरः । शरणागतलक्षणमेतत् । तं रघुं शरणं ययुः । तथाहि, महात्मनां संरम्भः कोपः । "संरम्भः सम्भ्रमे कोपे" इति विश्वः । प्रणिपातः प्रणतिरेव प्रतीकारः यस्य सः । महतां परकीयमौद्धत्यमेवासह्यं, न तु जीवितमिति भावः ॥ ६४

तस्य रघोः, योधाः भटाः, आस्तीर्णानि अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु । "मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः । मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदं । "लट् स्मे" इति भूतार्थे लट् ॥ ६५

ततः रघुः, भास्वान् सूर्यः इव, शरैः बाणैः, उस्रैः किरणैः इव । "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः । उदीच्यान् उदग्भवान् नृपान्, रसान् उदकानि इव उद्धरिष्यन्, कौबेरीं कुबेरसम्बन्धिनीं दिशम् उदीचीं प्रतस्थे । अनेकेनैवशब्देनेयमुपमा । यथाह दण्डी—"एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा" इति ॥ ६६

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५
नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीयुवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥३६
विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव नातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७

अन्वयः । ततः आत्मना चिरं धृतां नितान्तगुर्वीं प्रजानां धुरं लघयिष्यता नृपेण असौ निसर्गसंस्कारविनीत इति युवराजशब्दभाक् चक्रे ॥ ३५

अन्वयः । गुणाभिलाषिणी ( राजाश्रया ) श्रीः नरेन्द्रमूलायतनात् अनन्तरं युवराज-संज्ञितं तदास्पदं ( पद्माश्रया श्रीः ) कमलात् नवावतारम् उत्पलमिव अंशेन अगच्छत् ॥ ३६

अन्वयः । सारथिना वायुना विभावसुरिव, सारथिना घनव्यपायेन गभस्तिमानिव, सारथिना कटप्रभेदेन करीव, पार्थिवः सारथिना तेन ( सुतेन ) अतितरां सुदुःसहः बभूव ॥ ३७

सम्प्रति तस्य यौवराज्यमाह—तत इति । ततः आत्मना चिरं धृतां नितान्तगुर्वीम् । "वोतो गुणवचनात्" इति ङीप् । प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता । "तत् करोति तदाचष्टे" इति लघुशब्दात् णिच्, ततो "लृटः सद्वा" इति शतृप्रत्ययः । नृपेण दिलीपेन, "असौ रघुः निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतः नम्रः" इति हेतोः "युवराजः" इति शब्दं भजतीति तथोक्तः । "भजोण्विः" इति ण्विप्रत्ययः । चक्रे कृतः । "द्विविधो विनयः स्वाभाविकः कृत्रिमश्च" इति कौटिल्यः । तदुभयसम्पन्नत्वात् पुत्रं युवराजं चकार इत्यर्थः । अत्र कामन्दकः,—'विनयोपग्राहान् भूत्यै कुर्वीत नृपतिः सुतान् । अविनीतकुमारं हि कुलमाशु विशीर्य्यते । विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्' । इति ॥ ३५

गुणान् विनयादीन् सौरभ्यादींश्च अभिलष्यतीति गुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रः दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् अपादानात् अनन्तरं स्थितं, युवराजः इति संज्ञा अस्य सञ्जाता युवराजसंज्ञितम् । तारकादित्वात् इतच्प्रत्ययः । आत्मनः पदं स्थानम् आस्पदम् "आस्पदं प्रतिष्ठायाम्" इति निपातः । सः रघुः इति आस्पदं तदास्पदं, कमलात् चिरोत्पन्नात् नवावतारम् अचिरोत्पन्नम् उत्पलम् इव अंशेन अगच्छत् । स्त्रियो हि यूनि रज्यन्ते इति भावः ॥ ३६

सारथिना सहायभूतेन । एतद्विशेषणमुत्तरवाक्येष्वपि अनुषञ्जनीयम् । वायुना विभावसुः वह्निः इव । "सूर्यवह्नी विभावसू" इत्यमरः । घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान् सूर्यः इव, कटः गण्डः । "गण्डः कटो मदो दानम्" इत्यमरः । तस्य प्रभेदः स्फुटनं मदोदयः इत्यर्थः । तेन करी इव, पार्थिवः दिलीपः तेन रघुणा अतितराम् अत्यन्तं सुदुःसहः सुष्ठु असह्यः बभूव ॥ ३७

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम्।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः॥ ३८

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः॥३९

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितञ्च तत्।
वशिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी॥ ४०

तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम्।
अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः॥४१

अन्वयः। शतक्रतूपमः सः राजसुतैः अनुद्रुतं धनुर्धरं तं होमतुरङ्गरक्षणे नियुज्य एकेन अपूर्णं क्रतूनां शतम् अपविघ्नम् आप॥ ३८

अन्वयः। ततः परं यज्वना तेन मखाय पुनः उत्सृष्टम् अनर्गलं तुरङ्गं शक्रः गूढ-विग्रहः सन् धनुर्भृतां रक्षिणाम् अग्रत एव जहार किल। ३९

अन्वयः। तत् कुमारसैन्यं सपदि विषादलुप्तप्रतिपत्ति विस्मितं सत् स्थितञ्च, अथ श्रुतप्रभावा यदृच्छया आगता नन्दिनी नाम वसिष्ठधेनुः ददृशे च॥ ४०

अन्वयः। सतां पुरस्कृतः दिलीपनन्दनः पुण्येन तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य अतीन्द्रियेषु अपि भावेषु उपपन्नदर्शनो बभूव॥ ४१

शतक्रतुः इन्द्रः उपमा यस्य सः शतक्रतूपमः, सः दिलीपः "शतं वै तुल्या राजपुत्रा देवा आशापालाः" इत्यादिश्रुत्या। राजसुतैः अनुद्रुतम् अनुगतं धनुर्धरं तं रघुं, होमतुरङ्गाणां रक्षणे नियुज्य, एकेन क्रतुना अपूर्णम् एकोनं क्रतूनाम् अश्वमेधानाम् शतम् अपविघ्नम् अपगतविघ्नं यथा तथा आप॥ ३८

ततः परम् एकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुन पुनरपि मखाय मखं कर्तुम्। "क्रियार्थोपपदस्य" इत्यादिना चतुर्थी। उत्सृष्टं मुक्तम् अनर्गलम् अप्रतिबन्धम् अव्याहतस्वैरगतिमित्यर्थः, "अपर्य्यावर्त्तयन्तोऽश्वमनुचरन्ति" इति आपस्तम्ब-स्मरणात्। तुरङ्गं धनुर्भृतां रक्षिणां रक्षकाणाम् अग्रत एव शक्रः गूढविग्रहः सन् जहार किल। किल इति ऐतिह्ये॥ ३९

तत् कुमारसैन्यं सेना सपदि। विषाद इष्टनाशकृतो मनोभङ्गः तदुक्तम्, "विषाद-श्चेतसो भङ्ग उपायाभावनाशयोः" इति। तेन लुप्ता प्रतिपत्तिः कर्त्तव्यज्ञानं यस्य तत् तथोक्तं, विस्मितम् अश्वनाशस्य आकस्मिकत्वात् आश्चर्य्याविष्टं सत् स्थितं तस्थौ। अथ श्रुतप्रभावा यदृच्छया स्वेच्छया आगता, रघोः स्वप्रसादलब्धत्वात् अनुजिघृक्षया इति भावः। नन्दिनी नाम वशिष्ठधेनुश्च ददृशे। द्वौ चकारावविलम्बसूचकौ॥ ४०

सतां पुरस्कृतः पूजितः दिलीपनन्दनः रघुः, पुण्येन तस्याः नन्दिन्याः यत् अङ्गं तस्य

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः ।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२
शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्त्तयन्निव ॥ ४३
मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्त्तसे ॥ ४४
त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत् स्वयं कर्म्मसु धर्म्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥

अन्वयः । नरदेवसम्भवः रथरश्मिसंयतं पुनः पुनः सूतनिषिद्धचापलम् अश्वं हरन्तं पर्वतपक्षशातनं देवं पूर्वतः ददर्श ॥ ४२

अन्वयः । रघुः तम् अनिमेषवृत्तिभिः अक्ष्णां शतैः, हरिभिः वाजिभिश्च हरिं विदित्वा एनं गगनस्पृशा धीरेण स्वरेण निवर्त्तयन्निव अवोचत् ॥ ४३

अन्वयः । हे देवेन्द्र ! मनीषिभिस्त्वमेव मखांशभाजां प्रथमः सदा निगद्यसे, तथापि अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्त्तसे ? ॥ ४४

अन्वयः । त्रिलोकनाथेन दिव्यचक्षुषा त्वया मखद्विषः सदा नियम्याः ननु, सः धर्म्मचारिणां कर्म्मसु स्वयम् अन्तरायो भवसि चेत्, विधिश्च्युतः ॥ ४५

निस्यन्दः द्रवः एव जलं सूत्रमित्यर्थः । तेन लोचने प्रक्षाल्य शोधयित्वा, अतीन्द्रियेषु इन्द्रियाणि अतिक्रान्तेषु । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः, द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधात् विशेष्यनिघ्नत्वम् । भावेषु अपि वस्तुषु उपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिः बभूव ॥ ४१

नरदेवसम्भवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः । "किरणप्रग्रहौ रश्मी" इत्यमरः । संयतं बद्धम् अश्वं हरन्तं पर्वतपक्षाणां शातनं छेदकं देवम् इन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ॥ ४२

रघुः तम् अश्वहर्त्तारम् अनिमेषवृत्तिभिः निमेषव्यापारशून्यैः अक्ष्णां शतैः हरिभिः हरिद्वर्णैः । "हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः" इति विश्वः । वाजिभिः अश्वैश्च हरिम् इन्द्रं विदित्वा । "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु" इति विश्वः । एनम् इन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गभीरेण स्वरेण ध्वनिना एव निवर्त्तयन् इव अवोचत् ॥ ४३

हे देवेन्द्र ! मनीषिभिः त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे, तथापि अजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय, क्रियां विहन्तुमित्यर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । कथं प्रवर्त्तसे ॥ ४४

त्रयाणां लोकानां नाथः त्रिलोकनाथः । 'तद्धितार्थः' इत्यादिना उत्तरपदसमासः । तेन

तदङ्गमग्र्यं मघवन् महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६
इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्त्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७
यदात्थ राजन्यकुमार ! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८

अन्वयः । हे मघवन् ! महाक्रतोः अग्र्यम् अङ्गम् अमुं तुरङ्गं प्रतिमोक्तुं अर्हसि, …तेः पथः दर्शयितारः ईश्वराः मलीमसां पद्धतिं न आददते ॥ ४६

अन्वयः । दिवौकसाम् अधिपतिः रघुणा समीरितम् इति प्रगल्भं वचः निशम्य …विस्मयः सन् रथं निवर्त्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७

अन्वयः । हे राजन्यकुमार ! त्वम् यत् आत्थ तत् तथा, तु ( किन्तु ) यशोधनैः …: परतः रक्ष्यम्, भवद्गुरुः जगत्प्रकाशम् अशेषं मम तत् ( यशः ) इज्यया लङ्घयितुम् उद्यतः ॥ ४८

…त्रैलोक्यनियामकेन दिव्यचक्षुषा अतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्याः ननु शिक्ष्याः खलुः, सः त्वं धर्मचारिणां कर्मसु क्रतुषु स्वयम् अन्तरायः विघ्नः भवसि चेत् विधिः अनुष्ठानं च्युतः च्युतः, लोके सत्कर्मकथैवास्तमियादित्यर्थः ॥ ४५

हे मघवन् ! तत् तस्मात् कारणात् महाक्रतोः अश्वमेधस्य अग्र्यं श्रेष्ठम् अङ्गं साधनम् अमुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुम् अर्हसि । तथाहि—श्रुतेः पथः दर्शयितारः सन्मार्गप्रदर्शकाः ईश्वरा महान्तः मलीमसां मलिनां पद्धतिं मार्गं न आददते न स्वीकुर्व्वते, असन्मार्गं नावलम्बन्ते इत्यर्थः। "मलीमसन्तु मलिनं कच्चरं मलदूषितम्" इत्यमरः ॥४६

ननु श्रुतेः पथ इत्यादौ न लोकेत्यादिना तृण्प्रत्ययस्य योगे कथं पथं इत्यत्र षष्ठीस्यात् ? कर्म्मणि वहुत्वेन पदमेतत् रचितुं शक्यं सत्यम् ईश्वरज्ञानलाभरूपेण एकेन पथा सर्व्वे वेदाः गच्छन्ति ततः वहुत्वस्य प्रयोजनं नास्ति, शीलार्थस्य तृण्प्रत्ययस्य योगेन षष्ठीनिषेधः कर्त्तरि न ।

इति रघुणा समीरितं प्रगल्भं वचः निशम्य आकर्ण्य, दिवौकसः स्वर्गौकसः । "दिवं स्वर्गेऽन्तरीक्षे च" इति विश्वः । तेषाम् अधिपतिः देवेन्द्रः रघुप्रभावात् सविस्मयः सन् रथं निवर्त्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७

हे राजन्यकुमार ! क्षत्रियकुमार ! "मूर्द्धाभिषिक्तो राजन्यो वाहुजः क्षत्रियो विराट्" इत्यमरः । यत् वाक्यम् आत्थ ब्रवीषि । "ब्रुवः पञ्चानाम्" इत्यादिना आहादेशः । तत् तथा सत्यं, किन्तु यशोधनैः अस्मादृशैः परतः शत्रुतः यशः रक्ष्यम् । ततः किमत आह—भवद्गुरुः त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धम् अशेषं सर्वं मम तत् यशः, इज्यया यागेन, लङ्घयितुं तिरस्कर्त्तुम् उद्यतः उद्युक्तः ॥ ४८

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥
अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः ॥
ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ।

अन्वयः । यथा हरिः एकः पुरुषोत्तमः स्मृतः त्र्यम्बक एव महेश्वरः स्मृतः अपरः न, तथा मुनयः मां शतक्रतुं विदुः, नः एषः शब्दः द्वितीयगामी नहि ॥ ४९

अन्वयः । अतः त्वदीयस्य पितुः अयमश्वः कपिलानुकारिणा मया अपहारितः, अत्र प्रयत्नेन अलम्, सगरस्य सन्ततेः पदव्यां पदं मा निधाः ॥ ५०

अन्वयः । ततस्तुरगस्य रक्षिता प्रहस्य अपभयः सन् पुरन्दरं पुनर्बभाषे यदि ते एषः सर्गः तदा शस्त्रं गृहाण, भवान् रघुम् अनिर्जित्य कृती न खलु ॥ ५१

किं तद्द यश इत्याह—हरिरिति । पुरुषेषु उत्तमः इति सप्तमीसमासः 'न निर्धारणे' इति षष्ठीसमासनिषेधात्, कर्मधारये तु "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इत्युत्तमपुरुष स्यात् । यथा हरिः विष्णुः एकः एव पुरुषोत्तमः स्मृतः, यथा च त्र्यम्बकः शिवः महेश्वरः स्मृतः, न अपरः, अपरः पुमान् न, तथा मां मुनयः शतक्रतुं विदुः विदन्ति 'विदो लटो वा' इति झेर्जुसादेशः । नः अस्माकं हरिहरयोर्मम च इत्यर्थः, एषः त्रि अपि शब्दः द्वितीयगामी न हि । द्वितीयाप्रकरणे गमिगाम्यादीनामुपसंख्यानं समासः ॥ ४९

यतः अहमेव शतक्रतुः अतः त्वदीयस्य पितुः अयं शततमः अश्वः कपिलानुकारि कपिलमुनितुल्येन मया अपहारितः अपहृतः । अपहारित इति स्वार्थे णिच् । तव अत्रे प्रयत्नेन अलं, प्रयत्नः माकारि इत्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया सगरस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां पदं मा निधाः न निधेहि । निपूर्वाद्द धाधातोर्लु 'न माङ्योगे' इत्यडागमप्रतिषेधः । महदास्कन्दनं ते विनाशमूलं भवेदिति भावः ॥ ५०

पुरा किल सगरनृपतिः नवनवतितमं अश्वमेधनामकं यज्ञं निष्पादयितुं यज्ञीयं मुमोच, शतक्रतुः स्वस्य शतमन्युत्वरक्षणाय, सगरनृपतेरभ्युत्थानं च विनाशयितुम् तमश्वमपहृत्य बलिसद्मनि ध्याननिमग्नस्य कपिलमुनेः सकाशवर्त्तिनि तरौ बद्धा च अन्तर्दधे सगरतनयाः भूपृष्ठमवदार्य्य कपिलमुनेराश्रमे तमेवाश्वं दृष्ट्वा अयमेव मुनिरस्माकं पितुर्यज्ञीयमश्वं अपजहार इति मनसि कृत्वा तस्मिन् प्रजह्रुः स मुनिः क्रुद्धः सन् शापेन षष्टिसहस्राणि सगरपुत्रान् भस्मीचकारेति पौराणिकीवार्त्तानुसन्धेया ।

ततः तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा, अपभयः निर्भीकः सन् पुनः पुरन्दरं बभाषे । किमिति हे ? देवेन्द्र ! यदि एषः अश्वामोचनरूपः ते तव सर्गः निश्चयः । "शस्त्रं

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढ़विशेषशोभिना वपुःप्रकर्षेण विड़म्बितेश्वरः ॥ ५२

रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्त्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४

अन्वयः । सः उन्मुखः सन् मघवन्तम् एवम् उक्त्वा शरासनं सशरं करिष्यमाणः आलीढ़विशेषशोभिना वपुःप्रकर्षेण विड़म्बितेश्वरः अतिष्ठत् ॥ ५२

अन्वयः । रघोः अवष्टम्भमयेन पत्त्रिणा हृदि क्षतः अमर्षणः गोत्रभिदपि नवाम्बुदानीकमुहूर्त्तलाञ्छने धनुषि अमोघं सायकं समधत्त ॥ ५३

अन्वयः । भीमासुरशोणितोचितः आशुगः दिलीपसूनोः बृहत् भुजान्तरं प्रविश्य अनास्वादितपूर्वं मनुष्यशोणितं कुतूहलेनेव पपौ ॥ ५४

स्वभावनिर्मोचनिश्चयाध्यायसृष्टिषु' इत्यमरः । तर्हि शस्त्रं गृहाण भवान् रघुं माम् अनिर्जित्य, कृतमनेनेति कृतीकृत कल्पः न खलु । 'इष्टादिभ्यश्च' इति इनिप्रत्ययः रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१

सः रघुः उन्मुखः सन् मघवन्तम् इन्द्रम् एवम् उक्त्वा शरासनं चापं सशरं करिष्यमाणः, आलीढ़ेन आलीढ़ाख्येन स्थानभेदेन विशेषशोभिना अतिशशोभिना वपुःप्रकर्षेण देहौन्नत्येन, विड़म्बितेश्वरः अनुकृतपिनाकी सन् अतिष्ठत् । आलीढ़लक्षणमाह यादवः—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति । अन्वर्थं स्यात् समपदमालीढ़न्तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढ़ं विपर्य्ययः" इति ॥ ५२

रघोः अवष्टम्भमयेन स्तम्भरूपेण । "अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि" इति विश्वः । पत्त्रिणा बाणेन हृदि हृदये क्षतःविद्धः अतएव अमर्षणः असहनः क्रुद्धः इत्यर्थः । गोत्रभित् इन्द्रः अपि । "सम्भावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः" इति विश्वः । नवाम्बुदानाम् अनीकस्य वृन्दस्य मुहूर्त्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि, दिव्ये धनुषीत्यर्थः । अमोघम् अवन्ध्यं सायकं बाणं समधत्त संहितवान् ॥ ५३

भीमानां भयङ्कराणाम् असुराणां शोणिते रुधिरे उचितः परिचितः सः इन्द्रमुक्तः आशुगः सायकः, दिलीपसूनोः रघोः बृहत् विशालं भुजान्तरं वक्षः प्रविश्य, अनास्वादितपूर्वं पूर्वम् अनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेन इव पपौ ॥ ५४

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥
जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥
तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥
अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥

अन्वयः। कुमारविक्रमः कुमारोऽपि सुरद्विपास्फालनकर्कशाङ्गुलौ शचीप[त्रविशेष]काङ्किते हरेर्भुजे स्वनामचिह्नं सायकं निचखान ॥ ५५

अन्वयः। (सः रघुः) अन्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजं [जहार] च, सः इन्द्रः सुरश्रियः प्रसह्य केशव्यपरोपणादिव तस्मै भृशं चुकोप ॥ ५६

अन्वयः। जयैषिणोः तयोः गरुत्मदाशीविषभीमदर्शनैः ऊर्ध्वमुखैः अधोमुखैश्च [पत्रिभिः] उपान्तस्थितसिद्धसैनिकं तुमुलं युद्धं बभूव ॥ ५७

अन्वयः। वासवः अतिप्रबन्धप्रहितास्त्रवृष्टिभिः दुष्प्रसहस्य तेजसः आश्रयं [तम्] अम्बुदः (अतिप्रबन्धप्रहिताभिः) अद्भिः दुष्प्रसहस्य तेजसः आश्रयं स्वतश्च्युतं [वह्निम् इव] निर्वापयितुं न शशाक ॥ ५८

कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य सः तथोक्तः। "सप्तम्युपमान[पूर्वपदस्य]" इत्यादिना समासः। कुमारः अपि रघुरपि, सुरद्विपस्य, ऐरावतस्य आस्फालनेन [कर्कशौ] अङ्गुलयो यस्य सः तस्मिन्, शच्याः पत्रविशेषकैः अङ्किते शचीपत्रविशेषकाङ्किते इन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान्। [...] मात्रस्यायं महानभिभव इति भावः ॥५५

अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण शक्रस्य इन्द्रस्य महाशनिध्वजं [महान्] अशनिरूपं ध्वजं जहार चिच्छेद च। सः शक्रः सुरश्रियः प्रसह्य बलात्[...] व्यपरोपणात् अवतारणात् छेदनात् इव तस्मै रघवे भृशम् अत्यर्थं चुकोप, तं [...] इत्यर्थः। 'क्रुधद्रुह' इत्यादिना सम्प्रदानात् चतुर्थी ॥ ५६

जयैषिणोः अन्योन्यजयाकाङ्क्षिणोः तयोः इन्द्ररघ्वोः गरुत्मन्तः पक्षवन्तः। "[गरुत्पक्ष]च्छदाः पत्रम्" इत्यमरः। आशीविषाः आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः पृषोदरादित्वात् साधुः। 'स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः। ते इव भीम[दर्शनाः] सपक्षाः सर्पाः इव द्रष्टॄणां भयावहाः इत्यर्थः। तैः अधोमुखैः ऊर्ध्वमुखैश्च, [...] देशावस्थितत्वादिति भावः। पत्रिभिः बाणैः, उपान्तस्थिताः तटस्थाः सिद्धाः देवाः सैनिकाश्च रघोः यस्मिन् तत् तथोक्तं तुमुलं सङ्कुलं युद्धं बभूव ॥ ५७

वासवः अतिप्रबन्धेन अतिसातत्येन प्रहिताभिः प्रयुक्ताभिः अस्त्रवृष्टिभिः, दु[ष्प्रसहस्य]

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्विडौजसः ॥ ५९

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६०

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६१

अन्वयः। ततः रघुः हरिचन्दनाङ्किते प्रकोष्ठे प्रमथ्यमानार्णवधीरनादिनीम् विडौजसः शरासनज्यां शशाङ्कार्धमुखेन पत्रिणा अलुनात् ॥ ५९

अन्वयः। विवृद्धमत्सरः स चापम् उत्सृज्य प्रबलस्य विद्विषः प्रणाशनाय महीध्रपक्षव्यपरोपणोचितम् स्फुरत्प्रभामण्डलम् अस्त्रम् आददे ॥ ६०

अन्वयः। रघुस्तेन भृशं वक्षसि ताडितः सन् सैनिकाश्रुभिः सह भूमौ पपात, निमेषमात्रात् तद्व्यथाम् अवधूय सैनिकहर्षनिःस्वनैः सह उत्थितः ॥ ६१

दुःखेन प्रसह्यते इति दुष्प्रसहम् तस्य दुःखेनाप्यसह्यस्येत्यर्थः। तेजसः प्रतापस्य आश्रयं रघुम्। अम्बुदः अग्निः खतः च्युतं निर्गतं वह्निम् इव निर्वापयितुं न शशाक। रघोऽपि लोकपालात्मकसेन्द्रांशसम्भवत्वादिति भावः ॥ ५८

ततो रघुः, हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्तां। वेवेष्टि व्याप्नोतीति विट् व्यापकम् तेन ओजो यस्य सः तस्य विडौजसः इन्द्रस्य। पृषोदरादित्वात् साधुः। शरासनज्यां धनुर्ज्यां शशाङ्कस्य अर्धः खण्डः इव मुखं फलं यस्य तेन पत्रिणा, अलुनात् अच्छिनत् ॥ ५९

विवृद्धमत्सरः प्रवृद्धवैरः सः इन्द्रः चापम् उत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय, महीं धारयन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात् कप्रत्ययः। तेषां पक्षव्यपरोपणे पक्षच्छेदे उचितं, स्फुरत्प्रभामण्डलम् अस्त्रं वज्रायुधम् आददे ॥ ६०

रघुः, तेन वज्रेण भृशम् अत्यर्थं वक्षसि ताडितः हतः सन्, सैनिकानाम् अश्रुभिः सह भूमौ पपात, तस्मिन् पतिते ते रुरुदुरित्यर्थः। निमेषमात्रात् तद्व्यथां दुःखम् अवधूय निरस्य, सैनिकानां हर्षेण ये निस्वनाः क्ष्वेड़ाः तैः सह उत्थितश्च, तस्मिन् उत्थिते हर्षात् क्ष्वेडनादांश्चक्रुरित्यर्थः ॥ ६१

निमेषमात्रादित्यादौ न कथं यब्लोपे पञ्चमी स्यात्? 'यब्लोपे कर्मण्यधिकरणयोः' रिति निमेषमात्रमवलम्ब्येत्यत्र यब्लोपे कर्मणि पञ्चमी न निवारणीया, सत्यं, निमेषमात्रेण व्यथाया अवधूननस्य असम्भवात् यब्लोपे पञ्चमी न युक्ता। पतनोत्थानयोरन्तरे व्यथायाः अवधूननेन "सप्तमीपञ्चम्यावन्तरे" इति सूत्रेण निमेषमात्रादित्यादौ पञ्चमी सङ्गता दुष्परिहरदिति।

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्य्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२
असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढ़मायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥ ६३
ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत् सुरेश्वरम् ॥ ६४
अमोच्यमश्वं यदि मन्यसे प्रभो ! ततः समाप्ते विधिनेव कर्मणि
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥

अन्वयः । तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरं तस्थुषः अस्य वीर्य्याति... वृत्रहा तुतोष, तथाहि गुणैः सर्व्वत्र पदं निधीयते ॥ ६२

अन्वयः । सारवत्तया अद्रिष्वपि असङ्गं मे आयुधं त्वदन्येन न विसोढ़म्, मां ... अवेहि, तुरङ्गमात् ऋते किम् इच्छसि इति वासवः स्फुटम् आह ॥ ६३

अन्वयः । ततः नरेन्द्रसूनुः निषङ्गात् असमग्रम् उद्धृतं सुवर्णपुङ्खद्युतिरञ्जिता... इषुं प्रतिसंहरन् प्रियंवदं सुरेश्वरं प्रत्यवदत् ॥ ६४

अन्वयः । हे प्रभो ! अश्वम् अमोच्यं मन्यसे यदि ततः अजस्रदीक्षाप्रय... मद्गुरुः विधिनेव कर्म्मणि समाप्ते क्रतोः अशेषेण फलेन युज्यताम् ॥ ६५

तथापि वज्रपातेऽपि शस्त्राणाम् आयुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे ... भावे शात्रवे चिरं तस्थुषः स्थितवतः अस्य रघोः वीर्य्यातिशयेन, हवं हतवान् वृत्रहा । "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विप् । तुतोष । स्वयं वीर एव वीरं ... भावः । कथं शत्रौ सन्तोषोऽत आह—गुणैः सर्व्वत्र शत्रुमित्रोदासीनेषु पदम् निधीयते, गुणैः सर्व्वत्र संक्रम्यते इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ॥ ६२

सारवत्तया अद्रिषु अपि असङ्गम् अप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न वि... अतः मां प्रीतं सन्तुष्टम् अवेहि, तुरङ्गमात् ऋते तुरङ्गं वर्जयित्वा । 'अन्यारादितरर्ते... पञ्चमी । किम् इच्छसि, इति स्फुटं वासवः आह, तुरङ्गमात् अन्यद्देयं ... भावः ॥ ६३

ततः निषङ्गात् तूणीरात् असमग्रं यथा तथा उद्धृतं सुवर्णपुङ्खद्युतिभिः ... अङ्गुलयः येन तम् इषुं प्रतिसंहरन् निवर्त्तयन्, 'नाप्रहरन्तं प्रहरेत्' इति निषेधादिति ... प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः, "अरुर्द्विष" इ... मुमागमः । नरेन्द्रसूनुः रघुः सुरेश्वरं प्रत्यवदत् न तु प्राहरदिति भावः ॥ ६४.

हे प्रभो ! इन्द्र ! अश्वम् अमोच्यं मन्यसे यदि, ततः तर्हि अजस्रदीक्षायां प्र... मद्गुरु, मम पिता विधिना एव कर्म्मणि समाप्ते सति क्रतोः यत् फलं ते... अशेषेण कृत्स्नेन युज्यतां युक्तः अस्तु । अश्वमेधफललाभे किमश्वेन इति भावः ॥ ६५

## तृतीयः सर्गः ।

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशाम्पतिः शृणोति लोकेश ! तथा विधीयताम् ॥ ६६
तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्त्तत ॥ ६७
तमभ्यनन्दत् प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन् हर्षजड़ेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८
इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९

अन्वयः । सदोगतः त्रिलोचनैकांशतया दुरासदः स विशांपतिः यथा इमं वृत्तान्तं तव सन्देशहरादेव शृणोति च, हे लोकेश ! तथा विधीयताम् ॥ ६६

अन्वयः । मातलिसारथिः रघोः कामं तथेति प्रतिशुश्रुवान् यथागतं ययौ, सुदक्षिणासूनुरपि नातिप्रमनाः सन् नृपस्य सदोगृहं ( प्रति ) न्यवर्त्तत ॥ ६७

अन्वयः । हरेः शासनहारिणा प्रथमं बोधितः प्रजेश्वरः हर्षजड़ेन पाणिना कुलिशव्रणाङ्कितं तदीयम् अङ्गं परामृशन् तम् अभ्यनन्दत् ॥ ६८

अन्वयः । महनीयशासनः क्षितीशः आयुषः क्षये दिवम् आरुरुक्षुः ( सन् ) इति महाक्रतूनां नवाधिकां नवतिं सोपानपरम्परामिव ततान ॥ ६९

सदोगतः सदोगृहं गतः त्रिलोचनस्य ईश्वरस्य एकांशतया अष्टानाम् अन्यतममूर्त्तित्वात्, दुरासदः अस्मादृशैः दुष्प्रापः विशाम्पतिः यथा इमं वृत्तान्तं तव सन्देशहरात् वार्त्ताहरात् एव शृणोति च, हे लोकेश ! इन्द्र ! तथा विधीयताम् ॥ ६६

मातलिसारथिः इन्द्रः, रघोः सम्बन्धिनं कामं मनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान् । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । यथागतं ययौ, सुदक्षिणासूनुः रघुः अपि नातिप्रमनाः विजयलाभेऽप्यश्वनाशान्नातीव तुष्टः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नृपस्य सदोगृहं प्रति न्यवर्त्तत ॥ ६७

हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधित ज्ञापितः, वृत्तान्तमिति शेषः । प्रजेश्वरः दिलीपः हर्षजड़ेन हर्षशिशिरेण पाणिना, कुलिशव्रणाङ्कितं तस्य रघोः इदं तदीयम् अङ्गं शरीरं, परामृशन् सन् तं रघुम् अभ्यनन्दत् ॥ ६८

महनीयशासनः पूजनीयाज्ञः क्षितीशः, इति अनेन प्रकारेण । "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः महाक्रतूनाम् अश्वमेधानां नवभिरधिकां नवतिम् एकोनशतम्, आयुषः क्षये सति, दिवं स्वर्गम् समारुरुक्षुः आरोढुमिच्छुः सोपानानां परम्परां पङ्क्तिम् इव ततान ॥ ६९

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७०

अन्वयः । अथ विषयव्यावृत्तात्मा सः यूने सूनवे नृपतिककुदं सितातपवा[रणं] यथाविधि दत्त्वा तया देव्या सह मुनिवनतरुच्छायां शिश्रिये, तथाहि गलितवय[सां] इक्ष्वाकूणाम् इदं कुलव्रतम् ॥ ७०

अथ विषयेभ्यः व्यावृत्तात्मा निवृत्तचित्तः सः दिलीपः, यथाविधि यथाशास्त्रं यूने सू[नवे] नृपतिककुदं राजचिह्नम् । 'ककुदत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि' इति वि[श्वः ।] सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां शि[श्रिये] श्रितवान्, वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । तथाहि गलितवयसां वृद्धानाम्, इक्ष्वाकू[णाम्] इक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इदं वनगमनं कुलव्रतम् । देव्या स[हे]नेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः—'सुतविन्यस्तपत्नीको [वा] तयानुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥" इति । हरि[णी] वृत्तमेतत् । तदुक्तम्—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" । इति ॥ ७०

विचारः । ननु गलितवयसामित्यादौ कथं ऋन्नदीसर्पिरादेरित्यादिना कप् न स्या[त्] सत्यं, समासान्तविधेरनित्यत्वात् कप् समासान्तः न विधीयते ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि—
कालिदासकृतौ रघुवंशे महाकाव्ये
रघुराज्याभिषेको नाम
तृतीयः सर्गः ।

---

# चतुर्थः सर्गः ।



स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३

अन्वयः। स गुरुणा दत्तं राज्यं प्रतिपद्य दिनान्ते सवित्रा निहितं तेजः ( प्रतिपद्य ) हुताशन इव अधिकं बभौ ॥ १

अन्वयः। दिलीपानन्तरं तं राज्ये प्रतिष्ठितं निशम्य राज्ञां हृदये पूर्वं प्रधूमितः अग्निः उत्थित इव ॥ २

अन्वयः। पुरुहूतध्वजस्येव तस्य नवाभ्युत्थानदर्शिन्यः उन्नयनपङ्क्तयः सप्रजाः प्रजाः ननन्दुः ॥ ३

शारदा शारदाम्भोज-वदना वदनाम्बुजे ।
सर्व्वदा सर्व्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

सः रघुः, गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म्म प्रजा-परिपालनात्मकम्। पुरोहितादि-त्वाद्यक्। प्रतिपद्य प्राप्य, दिनान्ते सायंकाले सवित्रा सूर्य्येण निहितं तेजः प्रतिपद्य, हुताशनः अग्निः इव अधिकं बभौ। 'सौरं तेजः सायमग्निं संक्रमते। आदित्यो वा अस्तं यन् अग्निमनुप्रविशति। अग्निं वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिः प्रमाणम् ॥ १

दिलीपानन्तरं, राज्ये प्रतिष्ठितम् अवस्थितं तं रघुं निशम्य, पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य सञ्जातः प्रधूमितः अग्निः सन्तापाग्निः उत्थितः इव प्रज्वलितः इव पूर्वेभ्योऽधिकसन्तापोऽभूत् इत्यर्थः। राजकर्त्तृकस्यापि निशमनस्याश्रावुपचारान्न समान-कर्त्तृकत्वविरोध इति ॥ २

पुरुहूतध्वजः इन्द्रध्वजः। स किल राजभिर्वृष्ट्यर्थं पूज्यते इत्युक्तं भविष्योत्तरे—'एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर !। पर्ज्जन्यः कामवर्षी स्यात् तस्य राज्ये न संशयः ॥" इति

समसेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥ ४
छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५
परिकल्पितसान्निध्या काले काले च वन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६

अन्वयः । द्विरदगामिना तेन समसेव द्वयं समाक्रान्तम् पित्र्यं सिंहासनम् अखि-
अरिमण्डलञ्च ॥ ४

अन्वयः । पद्मा स्वयम् अदृश्या किल छायामण्डललक्ष्येण पद्मातपत्रेण साम्राज्यदी-
तं भेजे ॥ ५

अन्वयः । सरस्वती च काले काले वन्दिषु परिकल्पितसान्निध्या सती अर्थ्यं
स्तुतिभिः स्तुत्यं तं उपतस्थे ॥ ६

"चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावह
पुरुहूतध्वजस्य इव तस्य रघोः नवम् अभ्युत्थानम् अभ्युन्नतिम् अभ्युदयञ्च पश्य
नवाभ्युत्थानदर्शिन्यः उत ऊर्द्ध्वं प्रस्थिताः उच्छ्वसिताश्च नयनपङ्क्तयः यासां ताः
ससन्ताना: प्रजाः जनाः । "प्रजा स्यात् सन्ततौ जने" इत्युभयत्राप्यमरः । ननन्दुः ॥

द्विरदः इव द्विरदैश्च गच्छन्तीति द्विरदगामिना । "कर्त्तर्य्युपमाने" इति "सुप्यजा
इति च णिनिः । तेन रघुणा समं युगपत् एव द्वयं समाक्रान्तम् अधिष्ठितम् । किं
द्वयम् ? पितुरागतं पित्र्यम् । "पितुर्यत्" इति यत्प्रत्ययः । सिंहासनम्, अखि
अरीणाम् मण्डलं राष्ट्रञ्च ॥ ४

सिंहासनारोहणानन्तरं तस्य लक्ष्मीसन्निधानमाह,—छायेति । अत्र रघोस्तेजोवि
स्वयं सन्निहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्ष्यते । पद्मा लक्ष्मीः । "लक्ष्मीः पद्मा
पद्मा कमला श्रीर्हरिप्रिया" इत्यमरः । स्वयम् अदृश्या किल । किलेति सम्भावनाया
सती, छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन न तु स्वरूपतो दृश्येन । छायामण्डल
नेन अनातपज्ञानं लक्ष्यते । "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्युभ
प्यमरः । पद्मातपत्रेण पद्ममेव आतपत्रं तेन करणभूतेन, साम्राज्यदीक्षितं साम
साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितम् अभिषिक्तं तं भेजे । अन्यथा कथमेता
कान्तिसम्पत्तिरिति भावः ॥५

सम्प्रति सरस्वतीसान्निध्यमाह—परिकल्पितेति । सरस्वती च काले काले सर्वेषु
योग्यकालेषु । "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम् । वन्दिषु परिकल्पितसान्नि
कृतसन्निधाना सती, स्तुत्यं स्तोत्रार्हं तं रघुम् अर्थ्याभिः अर्थात् अनपेताभिः । "धर्मप

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥ ७
स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८
मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गमे इव प्रजा ॥ ९

अन्वयः। वसुन्धरा मान्यैः मनुप्रभृतिभिः राजभिः भुक्ता यद्यपि, तथापि तस्मिन् अनन्यपूर्वेव आसीत् ॥ ७

अन्वयः। हि (यस्मात्) स युक्तदण्डतया नातिशीतोष्णः दक्षिणः नभस्वानिव सर्वस्य लोकस्य मनः आददे ॥ ८

अन्वयः। तेन प्रजाः गुरौ सहकारस्य फलेन पुष्पोद्गमे इव ततो गुणाधिकतया मन्दोत्कण्ठाः कृताः ॥ ९

न्यायादनपेते" इति यत्प्रत्ययः। स्तुतिभिः स्तोत्रैः उपतस्थे देवताबुद्ध्या पूजितवती इत्यर्थः। देवतात्वञ्च "ना विष्णुः पृथिवीपतिः" इति वा लोकपालात्मकत्वाद्वेत्यनुसन्धेयम्। एवञ्च सति "उपाद्देवपूजासङ्गतिकरणमित्रकरण-पथिषु" इति वक्तव्यादात्मनेपदं सिध्यति ॥ ६

वसुन्धरा, मनुप्रभृतिभिः मन्वादिभिः मान्यैः पूज्यैः राजभिः भुक्ता यद्यपि भुक्तैव इत्यर्थः। यद्यपीत्यवधारणे। "अप्यर्थे यदि वार्थे स्यात्" इति केशवः। तथापि तस्मिन् राज्ञि, अन्यः पूर्वः यस्याः सा अन्यपूर्वा, अन्यपूर्वा न भवतीति अनन्यपूर्वा अनन्योपभुक्तेव आसीत् तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥ ७

अत्र कारणमाह—स होति। हि यस्मात् कारणात् सः रघुः युक्तदण्डतया यथापराध-दण्डतया सर्व्वस्य लोकस्य मनः आददे जहार। क इव ? अतिशीतः अत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणः दक्षिणदिग्भवः नभस्वान् वायुः इव मलयानिल इव इत्यर्थः। युक्तदण्डतयेत्यत्र कामन्दकः,—"उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्मात् युक्तदण्डः प्रशस्यते।" इति ॥ ८

विचारः। ननु दक्षिणः नभस्वान् सर्व्वस्य मनः आदातुं कथं शक्नोति दक्षिणस्य नभसतः सस्पर्शेण विरहिणां चित्तानि दुन्वन्ति तर्हि सर्व्वशब्दस्य प्रयोगो न सङ्गच्छते सत्यं, दक्षिणानिलस्य स्पर्शेन विरहिनामपि चित्तेषु सुखाविर्भावात् सर्व्वशब्दस्य प्रयोगो न दोषावहः।

तेन रघुणा, प्रजाः, गुरौ दिलीपविषये, सहकारः "अतिसौरभः चूतः। "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः। तस्य फलेन पुष्पोद्गमे पुष्पोदये इव, ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठाः अल्पोत्सुक्याः कृताः। गुणोत्तरस्य उत्तरो विषयः पूर्वं विस्मारयतीति भावः ॥ ९

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः ॥ १०
पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११
यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैवं सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२
कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना ॥ १३

अन्वयः । नयविद्भिः नवे राज्ञिः सत् असच्च उपदर्शितम्, तस्मिन् पूर्व एव अभवत्, उत्तरो नाभवत् ॥ १०

अन्वयः । पञ्चानामपि भूतानां गुणाः उत्कर्षं पुपुषुः, तस्मिन् नवे महीपाले सर्वं नवमिव अभवत् ॥ ११

अन्वयः । यथा चन्द्रः प्रह्लादनात् अन्वर्थः, यथा तपनः प्रतापात् अन्वर्थः, तथैव राजा प्रकृतिरञ्जनात् अन्वर्थः अभूत् ॥ १२

अन्वयः । तस्य विशाले लोचने कामं कर्णान्तविश्रान्ते, चक्षुष्मत्ता तु सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण (अभूत्) ॥ १३

नयविद्भिः नीतिशास्त्रज्ञैः नवे तस्मिन् राज्ञि विषये तमधिकृत्य इत्यर्थः, सत् धर्म्मादिकम् असत् कूटयुद्धादिकञ्च उपदर्शितं तस्मिन् राज्ञि पूर्व्वः पक्षः एव अभवत् इत्यर्थः । उत्तरः पक्षः न अभवत् न संक्रान्तः इत्यर्थः । तत्र सदसतोर्मध्ये सदेवा नासत्, तदुद्भावनन्तु ज्ञानार्थमेव इत्यर्थः । पक्षः साधनयोग्यार्थः । "पक्षः पार्श्व साध्यसहायबलभित्तिषु" इति केशवः ॥ १०

पृथिव्यादीनां पञ्चानां भूतानाम् अपि गुणाः गन्धादयः उत्कर्षम् अतिशयम् पु अथोत्प्रेक्ष्यते—तस्मिन् रघौ नाम नवे महीपाले सति, सर्वं वस्तुजातं नवम् इव अ तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ॥ ११

यथा चन्दयति आह्लादयतीति चन्द्रः इन्दुः । चदिधातोरौणादिको रप्रत्ययः । दनात् आह्लादकरणात् अन्वर्थः अनुगतार्थनामकः अभूत् । यथा च तपतीति सूर्य्यः । नन्द्यादित्वात् ल्युप्रत्ययः । प्रतापात् सन्तापजननादित्यर्थः । तथैव सः प्रकृतिरञ्जनात् अन्वर्थः सार्थकराजशब्दः अभूत । यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात् प्रत्ययान्तो न तु रञ्जेः, तथापि धातुनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥ १२

विशाले तस्य रघोः लोचने, कामं कर्णान्तयोः विश्रान्ते कर्णप्रान्तगते । चक्षु चक्षुःफलं तु इत्यर्थः, सूक्ष्मान् कार्य्यार्थान् कर्त्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मका दर्शिना शास्त्रेण एव । शास्त्रं दृष्टिर्विवेकिनामिति भावः ॥ १३

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा ॥ १४

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५

वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७

अन्वयः । अथ लब्धप्रशमनस्वस्थम् एनं पङ्कजलक्षणा शरत् द्वितीया पार्थिवश्रीरिव समुपस्थिता ॥ १४

अन्वयः । निर्वृष्टलघुभिर्मेघैः मुक्तवर्त्मा सुदुःसहः तस्य भानोश्च प्रतापः युगपत् दिशः व्यानशे ॥ १५

अन्वयः । इन्द्रः वार्षिकं धनुः संजहार, रघुः जैत्रं धनुः दधौ, हि ( यस्मात् ) तौ प्रजार्थसाधने पर्यायोद्यतकार्मुकौ ( बभूवतुः ) ॥ १६

अन्वयः । पुण्डरीकातपत्रः विकसत्काशचामरः ऋतुः ( पुण्डरीकातपत्रं विकसत्काशचामरं ) तं विडम्बयामास, तच्छ्रियं पुनः न प्राप ॥ १७

अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनाम् अनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तम् एनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् शरत् । द्वितीया पार्थिवश्रीः राजलक्ष्मीः इव, समुपस्थिता प्राप्ता । "रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिङ्गिषु दानवृत्तिकरणं त्यागः ससानेऽर्चनं कार्याण्येव महीभुजां प्रशमभान्येतानि राज्ये नवे' ॥ १४

निःशेषं वृष्टाः निर्वृष्टाः, कर्त्तरि क्तः । अत एव लघवः तैः मेघैः मुक्तवर्त्मा त्यक्तमार्गः अतएव सुदुःसहः तस्य रघोः भानोश्च प्रतापः पौरुषम् आतपश्च । 'प्रतापौ पौरुषातपौ' इति यादवः । युगपत् दिशः व्यानशे व्याप ॥ १५

इन्द्रः वर्षासु भवं वार्षिकं वर्षानिमित्तमित्यर्थः । "वर्षाभ्यष्टक्" इति ठक् प्रत्ययः । धनुः संजहार । रघुः, जैत्रं जयशीलम् । जेतृशब्दात् तृन्नन्तात् "प्रज्ञादिभ्यश्च" इति स्वार्थे अण् प्रत्ययः । धनुः दधौ, हि यस्मात् तौ इन्द्ररघू प्रजानाम् अर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधनविषये पर्यायेण उद्यते कार्मुके याभ्यां तौ पर्यायोद्यतकार्मुकौ । पर्यायोद्यमविश्रमौ इति पाठान्तरे पर्यायेण उद्यमः विश्रमश्च ययोः तौ पर्यायोद्यमविश्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः ॥ १६

पुण्डरीकं सिताम्भोजम् एव आतपत्रं यस्य सः तथोक्तः । विकसन्ति काशानि

प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः॥ १८

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव॥ १९

इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः॥ २०

अन्वयः। प्रसादसुमुखे तस्मिन् विशदप्रभे चन्द्रे च द्वयोः तदा चक्षुष्मतां प्रीतिः समरसा आसीत्॥ १८

अन्वयः। हंसश्रेणीषु तारासु कुमुद्वत्सु वारिषु च तदीयानां यशसां विभूतयः पर्य्यस्ता इव॥ १९

अन्वयः। इक्षुच्छायनिषादिन्यः शालिगोप्यः गोप्तुस्तस्य गुणोदयम् आकुमारकथोद्घातं यशः जगुः॥

काशाख्यतृणकुसुमानि एव चामराणि यस्य सः। तथोक्तः ऋतुः शरदृतुः, पुण्डरीकाणि पत्रं काशनिभचामरं तं रघुं विडम्बयामास अनुचकार, तस्य रघोः श्रियं पुनः शोभां प्राप। "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते" इति शाश्वतः॥ १७

प्रसादेन सुमुखे तस्मिन् रघौ, विशदप्रभे निर्मलकान्तौ चन्द्रे च, द्वयोर्विषये चक्षुष्मतां प्रीतिः अनुरागः समरसा समस्वादा तुल्यभोगा इति यावत्। "रसो गन्धे स्वादे" इति विश्वः। आसीत्॥ १८

हंसानां श्रेणीषु पङ्क्तिषु तारासु नक्षत्रेषु, कुमुदानि सन्ति येषु इति कुमुद्वत्सु 'कुमुद्वान् कुमुदप्रायः' इत्यमरः। 'कुमुदनड़वेतसेभ्यो' ड्मतुप्। तेषु कुमुदप्रायेषु वारिषु च तदीयानां रघुसम्बन्धिनां यशसां विभूतयः सम्पदः पर्य्यस्ताः इव प्रसारिता इत्युत्प्रेक्षा। अन्यथा कथमेषां धवलिमेति भावः॥ १९

इक्षूणां छाया इक्षुच्छायम्। "छाया बाहुल्ये" इति नपुंसकत्वम्। तत्र निषादिन्यः। स्त्रीलिङ्गपाठे इक्षोः छाया इति विग्रहः, अन्यथा बहुले नपुंसकत्वप्रसङ्गात्। शालीन् गोपायन्ति रक्षन्तीति शालिगोप्यः शस्यपालिकाः स्त्रियः। कर्म्मणि "टिड्ढाणञ्" इत्यादिना ङीप्। गोप्तुः रक्षकस्य तस्य रघोः गुणेभ्यः उदयः यस्य तं गुणोदयं गुणोत्पन्नम् आकुमारं कुमारात् आरभ्य कथोद्घातः कथारम्भः यस्य तत् कुमारैः सूयमानमित्यर्थः यशः जगुः गायन्ति स्म। अथवा कुमारस्य सतः रघोः याः कथाः विजयादयः ततः आरभ्य आकुमारकथम्। तत्राप्यभिविधौ अव्ययीभावः। आकुमारकथम् उद्घातः यस्मिन् कर्म्मणि, गानक्रियाविशेषणमेतत्। "स्यादभ्यादानमुद्घात" इत्यमरः। आकुमारकथोद्भूतमिति पाठे कुमारस्य सतः तस्य कथाभिः चरितैः उद्भूतं यशः तत् यशः आरभ्य यशो जगुरिति व्याख्येयम्॥ २०

## चतुर्थः सर्गः ।

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१
मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२
प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३
सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै नोदयामास तं शक्तेः प्रथमं शरत् ॥ २४

अन्वयः । महौजसः कुम्भयोनेः उदयात् अम्भः प्रससाद, महौजसो रघोः उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे ॥ २१

अन्वयः । मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः महोक्षाः तस्य लीलाखेलं विक्रमम् अनुप्रापुः ॥ २२

अन्वयः । मदगन्धिभिः सप्तपर्णानां प्रसवैः आहतास्तन्नागाः असूययेव सप्तधैव प्रसुस्रुवुः ॥ २३

अन्वयः । सरितः गाधाः पथश्च आश्यानकर्दमान् कुर्व्वती शरत् शक्तेः प्रथमं तं यात्रायै नोदयामास ॥ २४

महौजसः कुम्भयोनेः अगस्त्यस्य । "अगस्त्यः कुम्भसम्भवः" इत्यमरः । उदयात् अम्भः प्रससाद प्रसन्नं बभूव, महौजसः रघो उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे कालुष्यं प्राप । "अगस्त्योदये जलानि प्रसीदन्ति" इत्यागमः ॥ २१

मदोदग्राः मदोन्नताः ककुदेषमस्तीति ककुद्मन्तः महाककुद इत्यर्थः । यवादित्वात् मकारस्य वत्वाभावः । सरितां कूलानि उद्रुजन्तीति कूलमुद्रुजाः । 'उदि कूले रुजिवहोः' इति खश्प्रत्ययः । "अरुर्द्विष"—इत्यादिना मुमागमः । महान्तः उक्षाणः महोक्षाः । "अचतुर"—इत्यादिना निपातनात् अकारान्तः । लीलाखेलं विलाससुभगं तस्य रघोः उत्साहवतः वपुष्मतः परभञ्जकस्य विक्रमं शौर्य्यम् अनुप्रापुः अनुचक्रुः ॥ २२

मदस्येव गन्धो येषां तैः मदगन्धिभिः । "उपमानाच्च" इतीकारः समासान्तः । सप्तपर्णानां वृक्षविशेषाणाम् । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः । "गजेऽपि नागमातङ्गौ" इत्यमरः । असूयया इव आहुतिनिमित्तया स्पर्द्धया इव सप्तधा एव प्रसुस्रुवुः मदं ववृषुः, प्रतिगजगन्धाभिमानादिति भावः । "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इति पालकाव्ये । करात् नासारन्ध्राभ्यामित्यर्थः ॥ २३

सरितः गाधाः सुप्रतराः कुर्व्वती । पथः मार्गान् च आश्यानकर्दमान् शुष्कपङ्कान्

तस्मै सम्यक हुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥
स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥
अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः ।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥

अन्वयः । वाजिनीराजनाविधौ सम्यक् हुतो वह्निः प्रदक्षिणार्चिर्व्याजेन हस्ते तस्मै जयं ददौ ॥ २५

अन्वयः । गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिः अयान्वितः स षड्विधं बलम् आदाय दि जिगीषया प्रतस्थे ॥ २६

अन्वयः । वयोवृद्धाः पौरयोषितः लाजैः तं क्षीरोर्मयः मन्दरोद्धूतैः पृषतैः अच्युतमि अवाकिरन् ॥ २७

कुर्वती । "संयोगादेरातो धातोर्यण्वतः" इति श्रुतेर्निष्ठातस्य नत्वम् । शरत् शर तं रघुं शक्तेः उत्साहशक्तेः प्रथमं" प्राक् यात्रायै दण्डयात्रायै नोदयामास प्रेरयाम प्रभावमन्त्रशक्तिसम्पन्नस्य शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थः ॥ २४

वाजिनाम् अश्वानां, नीराजनाविधौ नीराजनाख्ये शान्तिकर्म्मणि, सम्यक् विधिवत् हु होमसमिद्धः वह्निः प्रगता दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । प्रदक्षि या अर्चिः ज्वाला तस्याः व्याजेन हस्तेन इव तस्मै जयं ददौ । उक्तमाहवयात्राया "इद्धः प्रदक्षिणगतो हुतभुङ् नृपस्य धात्रीं समुद्ररशनां वशगां करोति" इति । वाजिग्र गजादीनामप्युपलक्षणं तेषामपि नीराजनाविधानात् ॥ २५

गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गश्च येन सः गुप्तमूलप्रत्यन्तः । शुद्धपार्ष्णि उद्धृतपृष्ठशत्रुः, सेनया रक्षितपृष्ठदेशो वा । अयान्वितः शुभदैवान्वितः । 'अयः शुभावहो विधिः' इत्यमरः । सः रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम् । "मौलं भृ सुहृच्छ्रेणी द्विषदाटविकं बलम्" इति कोषः । आदाय, दिशां जिगीषया नेतुमिच्छया प्रतस्थे चचाल ॥ २६

वयोवृद्धाः पौरयोषितः, तं रघुं प्रयान्तम्, लाजैः आचारलाजैः, मन्दरोद्धूतैः पृष बिन्दुभिः क्षीरोर्म्मयः क्षीरसमुद्रोर्म्मयः अच्युतं विष्णुम् इव, अवाकिरन् पर्य्यक्षिपन् ॥ २७

विचारः । अच्युतशब्दानन्तरं इव शब्दस्य प्रयोगेन श्रौत्युपमा लक्ष्यते तर्हि वयोवृद्धा र्द्धं क्षीरोर्म्मीणां साम्यं वर्त्तते । वयोवृद्धाः लाजान् विकीर्य्य आशीर्भिस्तं सम्भावय ननु क्षीरोर्म्मीणां कथं वृद्धात्वं संभवेत् ? सत्यं, सृष्टेः प्राक् आप एव अभवन् तत ए वृद्धात्वं युक्तं ।

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्ज्जयन्निव केतुभिः ॥ २८

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २९

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३०

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१

अन्वयः । प्राचीनबर्हिषा तुल्यः सः अनिलोद्धूतैः केतुभिः अहितान् तर्ज्जयन्निव प्रथमं प्राचीं ययौ ॥ २८

अन्वयः । स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः गजैश्च ( यथाक्रमम् ) व्योम भूतलमिव भूतलञ्च व्योमेव कुर्व्वन् ( ययौ ) ॥ २९

अन्वयः । अग्रे प्रतापः, ततः शब्दः, तदनन्तरं परागः, पश्चात् रथादि इति सा चमूः चतुःस्कन्धेव ययौ ॥ ३०

अन्वयः । सः शक्तिमत्त्वात् मरुपृष्ठानि उदम्भांसि, नाव्याः नदीः सुप्रतराः, विपिनानि प्रकाशानि चकार ॥ ३१

प्राचीनबर्हिं र्नाम कश्चिन्महाराज इति केचित् । प्राचीनबर्हिः इन्द्रः । 'पर्य्यन्यो मघवा वृषा हरिहयः प्राचीनबर्हिस्तथा' इति इन्द्रपर्य्यायेषु हलायुधाभिधानात् । तेन तुल्यः सः रघुः, अनिलेन अनुकूलवातेन उद्धूतैः केतुभिः ध्वजैः अहितान् रिपून् तर्जयन् इव भर्त्सयन् इव । तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात् परस्मैपदमिति वामनः । प्रथमं प्राचीं दिशं ययौ ॥ २८

किं कुर्व्वन् ? स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैः गजैश्च यथाक्रमं व्योम आकाशं भुवः तलम् इव भूतलञ्च व्योम इव कुर्व्वन् ययौ इति पूर्व्वेण सम्बन्धः ॥ २९

अग्रे प्रताप, तेजोविशेषः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । ततः शब्द, सेनाकलकलः, तदनन्तरं परागः धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः । पश्चात् रथादि रथाश्वादिकं चतुरङ्गबलम् । रथानीकमिति पाठे इतिशब्दाध्याहारेण योज्यमिति इत्थं चतुःस्कन्धा इव चतुर्व्यूहा इव । 'स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । सा चमूः ययौ ॥ ३०

सः रघुः शक्तिमत्त्वात् समर्थत्वात् मरुपृष्ठानि निर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । उदम्भांसि उद्भूतजलानि चकार । नाव्याः नौभिस्तार्य्याः नदीः । "नाव्यं त्रिलिङ्गं नौतार्य्ये" इत्यमरः । नौवयोधर्म्मविषमूलेत्यादिना यत्प्रत्ययः । सुप्रतराः

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम्।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः॥ ३२
त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः॥ ३३
पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी।
प्राप तालीवनश्याममुपकण्ठं महोदधेः॥ ३४

अन्वयः। महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः हरजटाभ्रष्टां गङ्गां (पूर्व-सागरगामिनीं) कर्षन् भगीरथ इव बभौ॥ ३२

अन्वयः। फलं त्याजितैः बहुधा भग्नैश्च नृपैः पादपैः दन्तिनः इव तस्य उल्बणः आसीत्॥ ३३

अन्वयः। जयी (सः) पौरस्त्यान् तांस्तान् जनपदान् एवम् आक्रामन् तालीवन-श्यामं महोदधेः उपकण्ठं प्राप॥ ३४

सुखेन तार्थ्यांश्चकार, विपिनानि अरण्यानि। "अटव्यरण्यं विपिनम्" इत्यमरः। प्रक-निर्वृत्तानि चकार। मार्गस्य उत्कर्षात् तस्यागम्यं किमपि नासीदिति भावः॥ ३१

महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः रघुः, हरस्य जटाभ्यः भ्रष्टां गङ्गां ग-सापि पूर्वसागरगामिनी। भगीरथः इव बभौ। भगीरथो नाम कश्चित् कपिलद-सागराणां नप्ता तत्पावनाय हरकिरीटात् गङ्गाम्प्रवर्त्तयिता राजा, यत्सम्बन्धाद् भागीरथीति गीयते॥ ३२

विचारः। हरजटाभ्रष्टां गङ्गामिव सेनां कर्षन्नित्यादौ अधिकपदतादोषः भवेत्, उपमानस्य गङ्गाशब्दस्य हरजटाभ्रष्टामिति विशेषणेन उपमेयस्य कापि सार्थक-दृश्यते। सत्यं, अत्र तु रघोः राजधान्याः पूर्वदिग्भागस्य क्रमावनतत्वात् तत्सेनापि क्रमनिम्नगामिनीति धारणया पूर्वोक्तो दोषः कथमपि समाधेयः। पुरा किल विष्णोश्चरणावतीर्णा गङ्गा हरजटां आश्रिश्रिये ततः हिमवति प्रवहन्तीं तां सगरपुरं आनिनायेति वार्त्तानुसंधातव्या।

'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः। फलं लाभं प्रसवञ्च, त्याजितैः। त्यजेर्ण्यन्तात् द्विकर्मकात् अप्रधाने कर्मणि क्तः। उत्खातैः दात् त्याजितैः, अन्यत्र उत्पाटितैः। बहुधा भग्नैः रणे जितैः अन्यत्र छिन्नैः। पादपैः दन्तिनः गजस्य इव, तस्य रघोः मार्गः उल्बणः प्रकाशः आसीत्। "प्रकाश-स्पष्टम् उल्बणं विशदं स्फुटम्" इति यादवः॥ ३३

जयी जयनशीलः। जिदृक्षिविश्रीत्यादिना इनिप्रत्ययः। सः रघुः एवं भवान् पौरस्त्यान् प्राच्यान्। "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः। तान् सर्वानित्यर्थः। वीप्सायां द्विरुक्तिः। जनपदान् देशान् आक्रामन्, तालीवनैः महोदधेः उपकण्ठम् अन्तिकं प्राप॥ ३४

अनम्राणां समुद्धर्तुस्तस्मात् सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ३६

आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८

अन्वयः। अनम्राणां समुद्धर्तुः तस्मात् सिन्धुरयादिव सुह्मैः वैतसीं वृत्तिम् आश्रित्य आत्मा संरक्षितः ॥ ३५

अन्वयः। नेता (सः) नौसाधनोद्यतान् वङ्गान् तरसा उत्खाय गङ्गास्रोतोऽन्तरेषु जयस्तम्भान् निचखान ॥ ३६

अन्वयः। उत्खातप्रतिरोपिताः आपादपद्मप्रणताः ते कलमा इव रघुं फलैः संवर्धयामासुः ॥ ३७

अन्वयः। सः बद्धद्विरदसेतुभिः सैन्यैः कपिशां तीर्त्वा उत्कलादर्शितपथः कलिङ्गाभिमुखः सन् ययौ ॥ ३८

अनम्राणाम्। कर्मणि षष्ठी। समुद्धर्तुः उन्मूलयितुः तस्मात् रघोः सकाशात्। "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी। सिन्धुरयात् नदीवेगात् इव सुह्मैः सुह्मदेशीयैः। सुह्मादयः शब्दाः जनपदवचनाः क्षत्रियमाचक्षते। वैतसीं वेतससम्बन्धिनीं वृत्तिं प्रणतिमित्यर्थः। आश्रित्य, आत्मा संरक्षितः। अत्र कौटिल्यः—"बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतौ वेतसधर्ममातिष्ठेत्" इति ॥ ३५

नेता नायकः सः रघुः, नौभिः साधनैः उद्यतान् सन्नद्धान् वङ्गान् राज्ञः, तरसा बलेन। "तरसी बलरंहसी" इति यादवः। उत्खाय उन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणाम् अन्तरेषु द्वीपेषु जयस्तम्भान् निचखान स्थापितवानित्यर्थः ॥ ३६

आपादपद्मम् अङ्घ्रिपद्मपर्यन्तं प्रणताः अत एव उत्खाताः पूर्वमुद्धृता अपि प्रतिरोपिता पश्चात् स्थापिताः ते वङ्गाः, कलमाः इव शालिविशेषाः इव। "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः। तेऽपि आपादपद्मं पादपद्ममूलपर्यन्तं प्रणताः। "पादो अंशतुरीयांशशैलप्रत्यन्तपर्वताः" इति विश्वः। उत्खातप्रतिरोपिताश्च। रघुं फलैः धनैः, अन्यत्र शस्यैः, संवर्धयामासुः। "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः। शस्ये" इति केशवः ॥ ३७

सः रघुः बद्धा द्विरदा एव सेतवो यैः तैः सैन्यैः, कपिशां नाम नदीम् "करभाम्" इति केचित् पठन्ति। तीर्त्वा, उत्कलैः राजभिः आदर्शितपथः सन्दर्शितमार्गः सन् कलिङ्गाभिमुखः ययौ ॥ ३८

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९
प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४०
द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१
ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः ॥ ४२

अन्वयः। सः महेन्द्रस्य मूर्ध्नि तीक्ष्णं प्रतापं यन्ता गम्भीरवेदिनो द्विरदस्य तीक्ष्णमङ्कुशमिव न्यवेशयत् ॥ ३९

अन्वयः। गजसाधनः सन् कालिङ्गः अस्त्रैस्तं पक्षच्छेदोद्यतं शक्रं शिलावर्षी [illegible] इव प्रतिजग्राह ॥ ४०

अन्वयः। काकुत्स्थः तत्र द्विषां नाराचदुर्दिनं विषह्य सन्मङ्गलस्नात इव [illegible] प्रतिपेदे ॥ ४१

अन्वयः। तत्र योधाः रचितापानभूमयः ताम्बूलीनां दलैः नारिकेलासवं [illegible] शात्रवं यशश्च पपुः ॥ ४२

सः रघुः, महेन्द्रस्य कुलपर्वतविशेषस्य। "महेन्द्रो मलयः सह्यः शक्तिमानृक्षप[र्वतः।] [वि]न्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः।" इति विष्णुपुराणात्। मूर्ध्नि तीक्ष्णं [दु]ःसहं प्रतापं यन्ता सारथिः गम्भीरवेदिनः द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितम् अ[ङ्कुशम्] इव, न्यवेशयत् निक्षिप्तवान्। 'त्वग्भेदाच्छोणितस्रावात् मांसस्य क्रथनादपि। [आत्मानं] यो न जानाति तस्य गम्भीरवेदिता।' इति राजपुत्रीये। "चिरकालेन यो वेत्ति [शिक्षां] परिचितामपि। गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः।" इति मृगचर्म्मीये ॥ ३९

गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा। द्व्यञ्मगधकलिङ्गेत्यादिना [अण्] प्रत्ययः। अस्त्रैः आयुधैः तं रघुं, पक्षाणां छेदे उद्यतम् उद्युक्तं शक्रं शिलावर्षी [पर्वत] इव प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४०

काकुत्स्थः रघुः, तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दु[र्दिनं] लक्षणया वर्षमुच्यते, विषह्य सहित्वा सन् यथाशास्त्रं मङ्गलस्नातः इव विजयमङ्ग[ल] अभिषिक्तः इव जयश्रियं प्रतिपेदे प्राप। "यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमरीचकम्" [इति] यादवः ॥ ४१

तत्र महेन्द्रादौ युध्यन्ते इति योधाः। पचाद्यच्। रचिताः कल्पिताः आपानभू[मयः] पानयोग्यप्रदेशाः यैः ते तथोक्ताः सन्तः, नारिकेलसवं नारिकेलमद्यं ताम्बूलीनां नागव[ल्लीनां] दलैः पपुः तत्र विजह्रुरित्यर्थः। शात्रवं यशश्च पपु जह्रुरित्यर्थः ॥ ४२

चतुर्थः सर्गः ।

गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४

स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५

अन्वयः । धर्म्मविजयी स नृपः गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रियं जहार मेदिनीन्तु न जहार ॥ ४३

अन्वयः । ततः अनाशास्यजयः सन् फलवत्पूगमालिना वेलातटेनैव अगस्त्याचरिताम् आशां ययौ ॥ ४४

अन्वयः । सः गजदानसुगन्धिना सैन्यपरिभोगेण कावेरीं सरितां पत्युः शङ्कनीयामिव अकरोत् ॥ ४५

धर्म्मविजयी धर्म्मार्थं विजयशीलः सः नृपः रघुः, गृहीतश्चासौ प्रतिमुक्तः तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार धर्म्मार्थमिति भावः । मेदिनीं तु न जहार शरणागतवात्सल्यादिति भावः ॥ ४३

ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणीमता । व्रीह्यादित्वात् इनिप्रत्ययः । वेलायाः समुद्रकूलस्य तटेन उपान्तेनैव अगस्त्येन आचरिताम् आशां दक्षिणां दिशम् अनाशास्यजयः अयत्नसिद्धत्वात् अप्रार्थनीयजयः सन् ययौ । "अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः ।" इति ब्रह्मपुराणे ॥ ४४

विचारः । ननु वेलातटेनेत्यादौ तृतीया न कथं अपवर्गे भवति, सत्यं, काले अध्वनि च गम्ये तृतीयापवर्गे भवति तटशब्दस्य पथवाचकत्वे न शक्तिः । पथन्ति गच्छन्ति अनेन इति चेत् व्युत्पत्तिः स्यात् तर्हि कथं तटशब्दस्य शक्तिः पथि न वर्त्तते ? स राजा केवलं तदा सेनाभिः निविड़ वनं छेदयित्वा पन्थानं निर्म्ममौ ततः प्राक् कोपि तेनैव तटेन न जगाम अतः अपवर्गो न ।

सः रघुः गजानां दानेन मदेन, सुगन्धिना सुरभिगन्धिना । "गन्धस्य" इत्यादिना इकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्त्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशस्तथापि निरङ्कुशाः कवयः । तथा माघकाव्ये—"ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः" । ( ६।५० ) नैषधे च—"अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" ( ३।९३ ) इति । "न कर्म्मधारयान्मत्वर्थीयः" इति

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६
ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७
भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदाच्छेदिनामपि ॥ ४८

अन्वयः । विजिगीषोः गताध्वनस्तस्य ( रघोः ) बलैः मारीचोद्भ्रान्तहा मलयाद्रेः उपत्यकाः अध्युषिताः ॥ ४६

अन्वयः । अश्वक्षुण्णानाम् एलानाम् उत्पतिष्णवः फलरेणवः तुल्यगन्धिषु मत्ते ससञ्जुः ॥ ४७

अन्वयः । चन्दनानां भोगिवेष्टनमार्गेषु समर्पितं त्रिपदीच्छेदिनामपि क ग्रैवं नास्रसत् ॥ ४८

निषेधादिनिप्रत्ययपक्षेऽपि जघन्य एव । सेनायां समवेताः सैन्याः । "सेनायां सम सैन्यास्ते सैनिकाश्च ते" इत्यमरः । "सेनायां वा" इति ण्यप्रत्ययः । तेषां पति कावेरीं नाम सरितं सरितां पत्युः समुद्रस्य शङ्कनीयां अविश्वसनीयामिव अकरोत् । स लिङ्गदर्शनाद्भर्तुरविश्वासी भवतीति भावः ॥ ४५

विजिगीषोः विजेतुमिच्छोः गताध्वनः तस्य रघोः, बलैः सैन्यैः । "बलं श सैन्यम्" इति यादवः । मारीचेषु मरीचवनेषु उद्भ्रान्ताः परिभ्रान्ताः हारीताः पक्षि यासु ताः । "तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः" इत्यमरः । मलयाद्रेः त्यकाः आसन्नभूमयः । "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उप त्यकन्" इत्यादिना त्यकन्प्रत्ययः । अध्युषिताः उपत्यकासूषितमित्यर्थः । "उपान्व वसः" इति कर्मत्वम् ॥ ४६

अश्वैः क्षुण्णानाम् एलानाम् एलालतानाम् उत्पतिष्णवः उत्पतनशीलाः । "अलं इत्यादिना इष्णुच्प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु । सप्तम्यु वदित्यतो बहुव्रीहिः मत्तेभानां कटेषु ससञ्जुः सक्ताः । "गजगण्डे कटौ कटौ" कोषः ॥ ४७

चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनात् निम्नेषु समर्पितं त्रिपदीच्छेदिनां पादशृङ्खलच्छेदकानामपि । 'त्रिपदी पादबन्धनम्' इति यादवः । ग्रै ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । 'ग्रीवाभ्योऽण् च' इति अण्प्रत्ययः । नास्रसत् न भूत् । "ध्वंसु भ्रंशु लुङि" इति परस्मैपदे पुषादित्वात् अङ्, "अनिदिताम्" इति लोपः ॥ ४८

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥ ५०

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥५१

असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२

अन्वयः। दक्षिणस्यां दिशि रवेरपि तेजः मन्दायते, तस्यामेव पाण्ड्या रघोः प्रतापं न विषेहिरे ॥ ४९

अन्वयः। ते ताम्रपर्णीसमेतस्य महोदधेः सम्बन्धि सञ्चितं मुक्तासारं स्वं सञ्चितं यश इव तस्मै निपत्य ददुः ॥ ५०

अन्वयः। असह्यविक्रमः सः तटेषु आलीनचन्दनौ तस्याः दिशः स्तनौ इव स्थितौ मलयदर्दुरौ शैलौ यथाकामं निर्विश्य उदन्वता दूरान्मुक्तं स्रस्तांशुकं मेदिन्या नितम्बमिव स्थितं सह्यम् अलङ्घयत् ॥ ५१, ५२

दक्षिणस्यां दिशि रवेः अपि तेजः मन्दायते मन्दं भवति। लोहितादित्वात् क्यष्-प्रत्ययः "वा क्यषः" इत्यात्मनेपदम्। दक्षिणायने तेजोमान्द्यादिति भावः। तस्यामेव दिशि पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः। पाण्डोर्ड्यण्वक्तव्यः। रघोः। प्रतापं न विषेहिरे न सोढ़वन्तः। सूर्य्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥ ४९

ते पाण्ड्याः ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य महोदधेः सम्बन्धि सञ्चितं मुक्तासारं मौक्तिकवरम्। "सारो बले स्थिरांशे च नाय्ये क्लीवं वरे त्रिषु" इत्यमरः। स्वं स्वकीयं सञ्चितं यश इव तस्मै रघवे निपत्य प्रणिपत्य ददुः। यशसः शुभ्रत्वादौपम्यम्। ताम्रपर्णीसंगमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥ ५०

युग्ममेतत्। असह्यविक्रमः सः रघुः, तटेषु सानुषु आलीनचन्दनौ व्याप्तचन्दनद्रुमौ। "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः। स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ तस्याः दक्षिणस्याः दिशः स्तनौ इव स्थितौ मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निर्विश्य उपभुज्य। "निर्वेशो भृतिभोगयोः" इत्यमरः। उदकानि अस्य सन्तीति उदन्वान् उदधिः। "उदन्वानुदधौ च" इति निपातः। उदन्वता दूरात् मुक्तं दूरतः त्यक्तम्। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। स्रस्तांशुकं नितम्बम् इव स्थितं सह्यं सह्याद्रिम् अलङ्घयत् प्राप्तः अतिक्रान्तो वा ॥ ५१, ५२

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः ॥ ५३
भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४
मुरलामारुतोद्धूतमगमत् कैतकं रजः ।
तद्योधवारवाणानामयत्नपटवासताम् ॥ ५५
अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्म्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६

अन्वयः । अपरान्तजयोद्यतैः, विसर्पद्भिः अनीकैः अर्णवः रामास्त्रोत्सारितोऽपि सह्यलग्न इव आसीत् ॥ ५३

अन्वयः । तेन भयोत्सृष्टविभूषाणां केरलयोषिताम् अलकेषु चमूरेणुः चूर्णप्रतिनिधीकृतः ॥ ५४

अन्वयः । मुरलामारुतोद्धूतं कैतकं रजः तद्योधवारवाणानाम् अयत्नपटवासताम् अगमत् ॥ ५५

अन्वयः । चरतां वाहानाम् गात्रशिञ्जितैः वर्म्मभिः पवनोद्धूतराजतालीवनध्वनिः अभ्यभूयत ॥ ५६

सम्प्रति प्रतीचीं दिशमभिययावित्याह, तस्येति । अपरान्तानां पाश्चात्यानां जये उद्यतैः उद्युक्तैः । "अपरान्तास्तु पाश्चात्यास्ते च सूर्य्यरिकादयः" इति यादवः । विसर्पद्भिः गच्छद्भिः तस्य रघोः अनीकैः सैन्यैः । "अनीकं तु रणे सैन्ये" इति विश्वः । अर्णवः रामस्य जामदग्न्यस्य अस्त्रैः उत्सारितः परिसारित अपि सह्यलग्नः इव आसीत् । सैन्यं द्वितीयोऽर्णव इव अदृश्यत इति भावः ॥ ५३

सैन्यानां बहुले समुद्रप्रवाहस्यारोपणात् वाच्योत्प्रेचात्र गम्यते । पुरा किल जामदग्न्यः क्षतचां मही भगवते कश्यपाय दत्त्वा स्वयं स्थातुं पृथिव्यां स्थानं न प्राप ततः वाणैः समुद्रं उत्सार्य्य तस्य गर्भे उवासेति पौराणिकीवार्त्ता ज्ञेया ।

तेन रघुणा भयेन उत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलाङ्गनानाम् अलकेषु चमूरेणुः सेनारजः चूर्णस्य कुङ्कुमादिरजसः प्रतिनिधीकृतः एतेन योषितां पलायनं चमूनाञ्च तदनुधावनं ध्वन्यते ॥ ५४

मुरला नाम केरलदेशेषु काचित् नदी । मुरवीति केचित पठन्ति । तस्याः मारुतैः उद्धूतम् उत्थापितं कैतकं केतकीसम्बन्धि रजः तद्योधवारवाणानां रघुभटकञ्चुकानाम् "कञ्चुकौ वारवाणोऽस्त्री" इत्यमरः । अयत्नपटवासताम् अयत्नसिद्धवस्त्रवासनाद्रव्यत्वम् अगमत् । "पिष्टातः पटवासकः" इत्यमरः ॥ ५५

चरतां गच्छतां वाहानां वाजिनाम् । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः । गात्रशिञ्जितैः गात्रेषु शब्दायमानैः । कर्त्तरि क्तः । 'गात्रसञ्जितैः" इति वा पाठः

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः॥ ५७
अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ।
अपरान्तमहीपालव्याजेन रघवे करम्॥ ५८
मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः॥ ५९

अन्वयः। खर्जूरीस्कन्धनद्धानां करिनां मदोद्गारसुगन्धिषु कटेषु पुन्नागेभ्यः शिलीमुखाः पेतुः॥ ५७

अन्वयः। उदन्वात् रामाय अभ्यर्थितः सन् अवकाशं ददौ किल, रघवे तु अपरान्तमहीपालव्याजेन करं ददौ॥ ५८

अन्वयः। तत्र सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणं त्रिकूटमेव उच्चैर्जयस्तम्भं चकार॥ ५९

सञ्जतेरर्थान्तात् कर्मणि क्तः। वर्मभिः कवचैः "मर्मरः" इति पाठे मर्मरः मर्मरायमाणः इति ध्वनेर्विशेषणम्। वाहानां गात्रशिञ्जितैः गात्रध्वनिभिरित्यर्थः। पवनेन उद्धूतानां कम्पितानां राजतालीवनानां ध्वनिः अभ्यभूयत तिरस्कृतः॥ ५६

खर्जूरीणां तृणद्रुमविशेषाणाम्। 'खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः' इत्यमरः। स्कन्धेषु प्रकाण्डेषु। "अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधेस्तरोः" इत्यमरः। नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण सुगन्धिषु। 'गन्धस्य' इत्यादिना इकारः। कटेषु गण्डेषु पुन्नागेभ्यः नागकेशरेभ्यः पुन्नागपुष्पाणि विहाय। ल्यब्लोपे पञ्चमी। शिलीमुखाः अलयः पेतुः। 'अलिबाणौ शिलीमुखौ' इत्यमरः। ततोऽपि सौगन्ध्यातिशयादिति भावः॥ ५७

उदन्वान् उदधिः रामाय जामदग्न्याय अभ्यर्थितः याचितः सन् अवकाशं स्थानं ददौ किल। किलेति प्रसिद्धौ। रघवे तु अपरान्तमहीपालव्याजेन करं बलिं ददौ। 'बलिहस्तांशवः कराः" इत्यमरः। अपरान्तानां समुद्रमध्यदेशवर्तित्वात् तैर्दत्ते करे समुद्रदत्तत्वोपचारः। करदानञ्च भीत्या, न तु याञ्चयेति रामाद्रघोरुत्कर्षः॥ ५८

तत्र सः रघुः मत्तानाम् इभानां रदनोत्कीर्णानि दन्तक्षतानि एव। भावे क्तः। व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिन् तं तथोक्तं त्रिकूटम् एव उच्चैः जयस्तम्भं चकार। गाढप्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूदित्यर्थः॥ ५९

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६०

यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः ॥ ६१

संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३

अन्वयः। ततः (सः) संयमी तत्त्वज्ञानेन इन्द्रियाख्यान् रिपूनिव पारसी[कान्]
जेतुं स्थलवर्त्मना प्रतस्थे ॥ ६०

अन्वयः। स यवनीमुखपद्मानां मधुमदं न सेहे, (कथमिव) अकालजलदो[दयः]
अब्जानां बालातपमिव ॥ ६१

अन्वयः। तस्य अश्वसाधनैः पाश्चात्यैः (सह) रजसि शार्ङ्गकूजितविज्ञेयप्रति[योधे]
सति तुमुलः संग्रामः अभूत ॥ ६२

अन्वयः। सः भल्लापवर्जितैः श्मश्रुलैः तेषां शिरोभिः सरघाव्याप्तैः क्षौद्रपटलै[रिव]
महीं तस्तार ॥ ६३

ततः सः रघुः, संयमी योगी, तत्त्वज्ञानेन इन्द्रियाख्यान् इन्द्रियनामकान् रिपून्[इव]
पारसीकान् राज्ञः जेतुं स्थलवर्त्मना प्रतस्थे" न तु नेदिष्ठेनापि जलपथेन, समुद्र[यानस्य]
निषिद्धत्वादिति भावः ॥ ६०

सः रघुः, यवनीनां यवनस्त्रीणाम्। 'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। मुख[ानि]
पद्मानि इव मुखपद्मानि उपमितसमासः। तेषां मधुना मद्येन यः मदः मदरागः। [कार्य]
कारणभावयोरभेदेन निर्देशः। तं न सेहे। कमिव ? अकाले प्रावृड्व्यतिरिक्ते [काले]
जलदोदयः प्रायेण प्रावृषि पद्मविकाशस्याप्रसक्तत्वात् अब्जानां सम्बन्धिनं बालातपम्[।]
अब्जहितत्वादब्जसम्बन्धित्वं सौरातपस्य ॥ ६१

तस्य रघोः, अश्वसाधनैः वाजिसैन्यैः। 'साधनं सिद्धिसैन्ययोः' इति हैमः। पश्[चाद्भवैः]
पाश्चात्यैः यवनैः सह। "दक्षिणापश्चात्पुरसस्त्यक्"। सहार्थे तृतीया शृङ्गाणां वि[कारः]
शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः। "शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। नदी च [... ]
विहिते चापिऽप्याह विशेषतः।" इति केशवः। अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजि[तैः]
विज्ञेयाः अनुमेयाः प्रतियोधा प्रतिभटाः यस्मिन् तस्मिन् रजसि तुमुलः संग्रामः सङ्कु[लं युद्धं]
अभूत्। "तुमुलं रणसङ्कुले" इत्यमरः ॥ ६२

सः रघुः भल्लापवर्जितैः बाणविशेषकृतैः। "स्नुहीदलफलो भल्लः" इति या[दवः]

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५

ततः प्रतस्थे कौवेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६

अन्वयः । शेषाः अपनीतशिरस्त्राणाः तं शरणं ययुः, तथाहि महात्मनां संरम्भः प्रणिपातप्रतीकारः ॥ ६४

अन्वयः । तद्योधाः आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु मधुभिः विजयश्रमं विनयन्ते स्म ॥ ६५

अन्वयः । ततो रघुः भास्वानिव शरैः उस्रैरिव उदीच्यान् रसानिव उद्धरिष्यन् कौवेरीं दिशं प्रतस्थे ॥ ६६

श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः । "सरघा मधुमक्षिका" इत्यमरः । क्षुद्राः सरघाः । "क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका" इत्यमरः । क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । "मधु क्षौद्रं माक्षिकादि" इत्यमरः । "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायामञ्प्रत्ययः । तेषां पटलैः सञ्चयैः इव । "पटलं तिलके नेत्ररोगे छन्दसि सञ्चये । पटिके परिवारे च" इति हैमः । महीं तस्तार आच्छादयामास ॥ ६३

शेषाः हतावशिष्टाः अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः । "शीर्षकं । शीर्षण्यञ्च शिरस्त्रे" इत्यमरः । शरणागतलक्षणमेतत् । तं रघुं शरणं ययुः । तथाहि, महात्मनां संरम्भः कोपः । "संरम्भः सम्भ्रमे कोपे" इति विश्वः । प्रणिपातः प्रणतिरेव प्रतीकारः यस्य सः । महतां परकीयमौद्धत्यमेवासह्यं, न तु जीवितमिति भावः ॥ ६४

तस्य रघोः, योधाः भटाः, आस्तीर्णानि अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु । "मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः । मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदं । "लट् स्मे" इति भूतार्थे लट् ॥ ६५

ततः रघुः भास्वान् सूर्यः इव, शरैः वाणैः, उस्रैः किरणैः इव । "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः । उदीच्यान् उदग्भवान् नृपान्, रसान् उदकानि इव उद्धरिष्यन्, कौवेरीं कुवेरसम्बन्धिनीं दिशम् उदीचीं प्रतस्थे । अनेकेनेवशब्देनेयमुपमा । यथाह दण्डी—"एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा" इति ॥ ६६

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान् ॥ ६७
तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८
काम्बोजाः समरे सोढुं तस्य वीर्य्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः ॥ ६९
तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम् ॥ ७०

अन्वयः । सिन्धुतीरविचेष्टनैः विनीताध्वश्रमाः तस्य वाजिनः लग्नकुङ्कुमकेस[illegible] स्कन्धान् दुधुवुः ॥ ६७

अन्वयः । तत्र भर्तृषु व्यक्तविक्रमं रघुचेष्टितं हूणावरोधानां कपोलपाटला[illegible] बभूव ॥ ६८

अन्वयः । काम्बोजाः समरे तस्य वीर्य्यं सोढुम् अनीश्वराः सन्तः गजालानपरि[illegible] अक्षोटैः सार्द्धम् आनताः ॥ ६९

अन्वयः । तेषां सदश्वभूयिष्ठाः तुङ्गाः द्रविणराशयः एव उपदाः शश्वत् कोश[illegible] विविशुः, उत्सेकाः न ( विविशुः ) ॥ ७०

सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः । "देशे नदविशेषेऽब्धौ सिन्धुर्ना [illegible] स्त्रियाम्" इत्यमरः । सिन्धोः तीरे विचेष्टनैः अङ्गपरिवर्त्तनैः विनीताध्वश्रमाः तस्य [illegible] वाजिनः अश्वाः, लग्नाः कुङ्कुमकुसुमकिञ्जल्काः येषां तान्, यद्वा लग्नकुङ्कुमाः केसराः [illegible] येषां तान् । "अथ कुङ्कुमं काश्मीरजन्म" इत्यमरः । "केसरो नागकेसरे । तुरङ्गसिं[illegible] स्कन्धकेशेषु वकुलद्रुमे । पुन्नागवृत्ते किञ्जल्के स्यात्" इति हैमः । स्कन्धान् काया[illegible] "स्कन्धः प्रकाण्डे कायेऽंसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हैमः । [illegible] कम्पयन्ति स्म ॥ ६७

तत्र उदीच्यां दिशि भर्तृषु व्यक्तविक्रमं भर्तृवधेन स्फुटपराक्रममित्यर्थः । रघु[illegible] रघुव्यापारः, हूणाः जनपदाख्याः क्षत्त्रियाः तेषाम् अवरोधाः अन्तःपुरस्त्रियः तासां कपो[illegible] पाटलस्य पाटलिम्नः ताड़नादिकृतारुण्यस्य आदेशि उपदेशकं बभूव । अथवा पा[illegible] आदेशो आदिष्टा यस्य तत् बभूव, स्वरं लक्ष्यायते इत्यर्थः ॥ ६८

काम्बोजाः राजानः समरे तस्य रघोः वीर्य्यं प्रभावम् । "वीर्य्यं तेजःप्रभावयोः" [illegible] हैमः । सोढुम् अनीश्वराः अशक्ताः सन्तः गजानाम् आलानं बन्धनं । भावे ल्युट् 'वि[illegible] बीयते:" इत्यालम् । तेन परिक्लिष्टैः परिचतैः अक्षोटैः वृक्षविशेषैः सार्द्धम् आनताः ॥ ६[illegible]

तेषां काम्बोजानां सद्भिः अश्वैः भूयिष्ठाः बहुलाः तुङ्गाः द्रविणानां हिरण्यादि[illegible]

चतुर्थः सर्गः ।

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१
शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२
भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३

अन्वयः। ततः अश्वसाधनः सन् (सः) गौरीगुरुं शैलम् उद्धूतैः धातुरेणुभिः तत्कूटान् वर्द्धयन्निव आरुरोह ॥ ७१

अन्वयः। तुल्यसत्त्वानां गुहाशयानां सिंहानां परिवृत्यावलोकितं सैन्यघोषेऽपि असंभ्रमं शशंस ॥ ७२

अन्वयः। भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः गङ्गाशीकरिणः मरुतः मार्गे तं सिषेविरे ॥ ७३

हिरण्यं द्रविणं द्युम्नम्" इत्यमरः। राज्ञ्यः एव उपदाः उपायनानि। "उपायनमुपग्राह्य-मुपहारस्तथोपदा" इत्यमरः। कोशलेश्वरं कोशलदेशाधिपतिं तं रघुं, शश्वत् असकृत् विविशुः। "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः। तथापि उत्सेकाः गर्वास्तु न विविशुः, सत्यपि गर्व्वकारणे न जगर्व्व इत्यर्थः ॥ ७०

ततः अनन्तरम् अश्वसाधनः सन् गौर्य्याः गुरुं पितरं शैलं हिमवन्तम् उद्धूतैः अश्वखुरोद्धूतैः धातूनां गैरिकादीनां रेणुभिः तत् कूटान् तस्य शृङ्गाणि। "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। वर्द्धयन् इव आरुरोह। उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायते इति भावः ॥ ७१

तुल्यसत्त्वानां सैन्यैः समानबलानां गुहासु शेरते इति गुहाशयाः तेषाम्। "अधिकरणे शेतेः" इत्यच्प्रत्ययः। "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः। सिंहानां हरीणाम् "सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः। सम्बन्धि परिवृत्य पराहत्य अवलोकितं ग्रीवाभङ्गेनावलोकनं कर्त्तृ सैन्यघोषे सेनाकलकले सम्भ्रमकारणे सत्यपि असम्भ्रमम् अन्तःक्षोभविरहितम्। नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते। शशंस कथयामास। सैन्येभ्य इत्यर्थाल्लभ्यते। वाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः। असम्भ्रान्तत्वे हेतुः 'तुल्यसत्त्वानामिति'। न हि समबलः समबलाद्बिभेतीति भावः ॥ ७२

भूर्जेषु भूर्जपत्रेषु। "भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्म्मिका मता" इति यादवः। मर्म्मरः शुष्कपर्णध्वनिः। "मर्म्मरः शुष्कपर्णानाम्" इति यादवः। अथच शुष्कादिशब्द-

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६

अन्वयः । सैनिकाः नमेरूणां छायासु निषण्णमृगनाभिभिः वासितोत्सङ्गाः दृ
षदः अध्यास्य विशश्रमुः ॥ ७४

अन्वयः । सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ओषधयः नक्तं नेतुः अस्नेहदी
आसन् ॥ ७५

अन्वयः । तस्य उत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः देवदारवः किरा
गजवर्ष्म शशंसुः ॥ ७६

वद्गुणिनि वर्त्तते, प्रयोज्यते च—"मर्म्मरैरगुरुधूपगन्धिभिः" इति, अतः मर्म्मरीभूताः मर्म
शब्दवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः शीतसुखाश्च इति मार
गङ्गाशीकरिणः शीतला इत्यर्थः । मरुतः वाताः, मार्गे तं सिषेविरे ॥ ७३

सैनिकाः सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । नमेरूणां सुरपुन्नागानां छाया
निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिः वासितोत्सङ्गाः सुरभितत
दृषदः शिलाः, अध्यास्य अधिष्ठाय । "अधिशीङ्स्थासां कर्म्म" इति कर्म्म । दृषत्सु
वस्य इत्यर्थः । विशश्रमुः विश्रान्ताः ॥ ७४

सरलेषु देवदारुविशेषेषु आसक्तानि यानि मातङ्गानां गजानां ग्रीवासु भवानि ग्रैवे
कण्ठशृङ्खलानि । "ग्रीवाभ्योऽण् च" इति चकारात् ठञ्प्रत्ययः । तेषु स्फुरितत्विषः
फलितभासः ओषधयः ज्वलन्तः ज्योतिर्लताविशेषाः, नक्तं रात्रौ, नेतुः नायकस्य र
अस्नेहदीपिकाः तैलनिरपेक्षाः प्रदीपाः आसन् ॥ ७५

तस्य रघोः उत्सृष्टेषु उज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जुभिः गजग्री
क्षताः निष्पिष्टाः त्वचः येषां ते देवदारवः, किरातेभ्यः वनचरेभ्यः, गजानां वर्ष्म प्रमाण
"वर्ष्म देहप्रमाणयोः" इत्यमरः । शशंसुः कथितवन्तः । देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्न
मनुमीयते इत्यर्थः ॥ ७६

चतुर्थः सर्गः।

तत्र जन्यं रघोर्घोरं पार्ब्बतीयैर्गणैरभूत्।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्॥ ७७
शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान्॥ ७८
परस्परेण विज्ञातस्तेषूपायनपाणिषु।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा॥ ७९
तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम्॥ ८०

अन्वयः। तत्र रघोः पार्ब्बतीयैः गणैः सह नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् घोरं जन्यम् अभूत्॥ ७७

अन्वयः। स शरैः उत्सवसंकेतान् विरतोत्सवान् कृत्वा किन्नरान् बाह्वोः जयोदाहरणं गापयामास॥ ७८

अन्वयः। उपायनपाणिषु परस्परेण राज्ञा हिमवतः सारो विज्ञातः हिमाद्रिणा च राज्ञः सारो विज्ञातः॥ ७९

अन्वयः। सः तत्र अक्षोभ्यं यशोराशिं निवेश्य पौलस्त्यतुलितस्य अद्रेः ह्रियम् आदधान इव अवरुरोह॥ ८०

तत्र हिमाद्रौ रघोः, पर्व्वते भवैः पार्व्वतीयैः। "पार्व्वताच्च" इति छप्रत्ययः। गणैः उत्सवसङ्केताख्यैः सप्तभिः। 'गणानुत्सवसङ्केतानजयत् सप्त पाण्डवः' इति महाभारते। नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानाम् अश्मनाञ्च निष्पेषेण सङ्घर्षेण उत्पतिताः अनलाः यस्मिन् तत् तथोक्तम्। 'क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः' इति यादवः। घोरं भीमं जन्यं युद्धम् अभूत्। 'युद्धमायोधनं जन्यम्" इत्यमरः॥ ७७॥

सः रघुः, शरैः बाणैः, उत्सवसङ्केतान् नाम गणान् विरतोत्सवान् कृत्वा जित्वा इत्यर्थः। किन्नरान् बाह्वोः स्वभुजयोः जयोदाहरणं जयख्यापकं प्रबन्धविशेषं गापयामास। 'गतिबुद्धि' इत्यादिना किन्नराणां कर्म्मत्वम्॥ ७८

तेषु गणेषु, उपायनयुक्ताः पाणयः येषां तेषु सत्सु परस्परेण अन्योऽन्यं राज्ञा हिमवतः सारः धनरूपः विज्ञातः, हिमाद्रिणा अपि राज्ञः सारः बलरूपः विज्ञातः। एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्ब्बश्च पराजय इति ध्वन्यते॥ ७९

स रघुः, तत्र हिमाद्रौ अक्षोभ्यम् अधृष्यं यशोराशिं निवेश्य निधाय पौलस्त्येन रावणेन तुलितस्य चालितस्य अद्रेः कैलासस्य ह्रियम् आदधानः जनयन् इव अवरुरोह अवततार, कैलासमगत्वैव प्रतिनिवृत्तः इत्यर्थः। न हि शूराः परेण पराजितमभियुञ्जन्ते इति भावः॥ ८०

चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः ।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४

अन्वयः । तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषेश्वरः तद्गजालानतां प्राप्तैः कालागुरुद्रुमैः सह चकम्पे ॥ ८१

अन्वयः । सः रुद्धार्कम् अधारावर्षदुर्दिनम् अस्य रथवर्त्मरजोऽपि न प्रसेहे पताकिनी कुत एव प्रसेहे ॥ ८२

अन्वयः । कामरूपाणाम् ईशः अत्याखण्डलविक्रमं तं भिन्नकटैर्नागैः भेजे, यैः अन्यान् उपरुरोध ॥ ८३

अन्वयः । कामरूपेश्वरः हेमपीठाधिदेवतां तस्य पादयोश्छायां रत्नपुष्पोपहारेण आनर्च ॥ ८४

तस्मिन् रघौ तीर्णो लौहित्यो नाम नदी येन तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषाणां जनपदानाम् ईश्वरः तस्य रघोः गजानाम् आलानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान् ॥ ८१

सः प्राग्ज्योतिषेश्वरः, रुद्धार्कम् आवृतसूर्यम्, अधारावर्षञ्च तत् दुर्दिनञ्च धारां विना दुर्दिनभूतम् अस्य रघोः रथवर्त्मरजः अपि न प्रसेहे पताकिनी सेनां कुत एव प्रसेहे न कुतोऽपीत्यर्थः ॥ ८२

कामरूपाणां नाम देशानाम् ईशः, अत्याखण्डलविक्रमम् अतीन्द्रपराक्रमं तं रघुं भिन्नाः स्रवन्मदाः कटाः गण्डाः येषां तैः नागैः गजैः साधनैः भेजे, नागान् दत्त्वा शरणं गत इत्यर्थः। कीदृशैर्नागैः ? यैः अन्यान् रघुव्यतिरिक्तान् नृपान् उपरुरोध। शूराणामपि शूरो रघुरिति भावः ॥ ८३

कामरूपेश्वरः हेमपीठस्य अधिदेवतां तस्य रघोः पादयोः छायां कनकमयपादपीठव्यापिनीं कान्तिं रत्नानि एव पुष्पाणि तेषाम् उपहारेण समर्पणेन आनर्च अर्चयामास ॥ ८४

इति जित्वा दिशो जिष्णुर्न्यवर्त्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्त्रशून्येषु मौलिषु ॥ ८५

स विश्वजितमाजह्रे यज्ञं सर्व्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६

सत्रान्ते सचिवसखः पुरस्क्रियाभि
र्गुर्व्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८७

अन्वयः । जिष्णुः ( सः ) इति दिशो जित्वा रथोद्धतं रजः राज्ञां छत्त्रशून्येषु मौलिषु विश्रामयन् न्यवर्त्तत ॥ ८५

अन्वयः । सः सर्व्वस्वदक्षिणं विश्वजितं यज्ञम् आजह्रे, सतां वारिमुचामिव आदानं विसर्गाय हि ॥ ८६

अन्वयः । काकुत्स्थः सत्रान्ते सचिवसखः सन् गुर्व्वीभिः पुरस्क्रियाभिः शमित-पराजयव्यलीकान् चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तये अनुमेने ॥ ८७

जिष्णुः जयशीलः । "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः । सः रघुः, इति इत्थं दिशः जित्वा, रथैः उद्धतं रजः, छत्त्रशून्येषु रथोरेकच्छत्त्रकलादिति भावः । राज्ञां मौलिषु किरीटेषु । "मौलि. किरीटे धम्मिल्ले चूडाकङ्केलिमूर्द्धजे" इति हैमः । विश्रामयन् विश्रामयन्नित्यर्थः न्यवर्त्तत निवृत्तः ॥ ८५

सः रघुः सर्व्वस्वं दक्षिणा यस्य तं सर्व्वस्वदक्षिणम् । "विश्वजित् सर्व्वस्वदक्षिणः" इति श्रुतेः । विश्वजितं नाम यज्ञम् आजह्रे कृतवानित्यर्थः । युक्तञ्चैतदित्याह—सतां साधूनां, वारिमुचां मेघानाम् इव, आदानम् अर्ज्जनं विसर्गाय त्यागाय हि, पात्रविनियोगाय इत्यर्थः ॥ ८६

काकुत्स्थः रघुः, सत्रान्ते यज्ञान्ते । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । सचिवानाम् अमात्यानां सखा इति सचिवसखः सन् । 'सचिवो भृतकेऽमात्ये' इति हैमः । विशेषामत्यन्तानुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । "राजाहः सखिभ्यष्टच्" । गुर्व्वीभिः महतीभिः । "गुरुर्महत्याङ्गिरसे पित्रादौ धर्म्मदेशके" इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् । "दुःखे वैलक्ष्ये व्यलीकम्" इति यादवः । चिरविरहेण उत्सुकाः उत्कण्ठिताः अवरोधाः अन्तःपुराङ्गनाः येषां तान्, राज्ञः अपत्यानि राजन्याः क्षत्रियाः तान् । "राजश्वशुराद्‌ यत्" इति अपत्यार्थे यत्प्रत्ययः । मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्त्रियो विराट्" इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनाय अनुमेने अनुज्ञातवान् । प्रहर्षिणी वृत्तमेतत्, तदुक्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति ॥ ८७

ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८

अन्वयः । ते रेखाध्वजकुलिशातपत्रचिह्नं प्रसादलभ्यं सम्राजः चरणयुगम् । प्रस्थानप्रणतिभिः मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रुः ॥ ८८

ते राजानः, रेखाः एव ध्वजाश्च कुलिशानि च आतपत्राणि च ध्वजाद्या इत्यर्थः, तानि चिह्नानि यस्य तत् तथोक्तं, प्रसादेनैव लभ्यं प्रसादलभ्यं सम्राजः र रघोः चरणयुगं, प्रस्थाने प्रयाणसमये याः प्रणतयः नमस्काराः ताभिः करणैः मौलिषु केशबन्धनेषु या स्रजः माल्यानि ताभ्यश्च्युतैः, मकरन्दैः पुष्परसैः। " पुष्परसः" इत्यमरः। रेणुभिः परागैश्च। "परागः सुमनोरजः" इत्यमरः। गौरं चक्रुः। वृत्तमुक्तं प्राक् ॥ ८८

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
सञ्जीवनीसमाख्यया व्याख्यया समेते महाकवि—
कालिदासकृतौ रघुवंशे महाकाव्ये
रघुदिग्विजयो नाम
चतुर्थः सर्गः ।

# पञ्चमः सर्गः ।

—:०*०:—

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १

स मृन्मये वीतहिरण्मयत्वात् पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २

अन्वयः । विश्वजिति अध्वरे निःशेषविश्राणितकोषजातं तं क्षितीशम् उपात्तविद्यो वरतन्तुशिष्यः कौत्सः गुरुदक्षिणार्थी प्रपेदे ॥ १

अन्वयः । अनर्घशीलः यशसा प्रकाशः आतिथेयः सः वीतहिरण्मयत्वात् मृन्मये पात्रे अर्घ्यं निधाय श्रुतप्रकाशम् अतिथिं प्रत्युज्जगाम ॥ २

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ।

विश्वजिति विश्वजिन्नाम्नि अध्वरे यज्ञे । "यज्ञः सवोऽध्वरो यागः" इत्यमरः । निःशेषं विश्राणितं दत्तम् । "श्रण दाने" चुरादिः । कोषाणाम् अर्थराशीनां जातं समूहः येन तं तथोक्तम् । "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । "जातं जनिसमूहयोः" इति शाश्वतः । एतेन कौत्सस्यानवसरप्राप्तिं सूचयति । तं क्षितीशं रघुम्, उपात्तविद्यः लब्धविद्यः वरतन्तोः शिष्यः कौत्सः । "ऋष्यन्धक"—इत्यण् इञोऽपवादः । गुरुदक्षिणार्थी । "पुष्करादिभ्यो देशे" इत्यत्र, "अर्थाच्चासन्निहिते, तदन्ताच्च" इतीनिः अप्रत्याख्येय इति भावः । प्रपेदे प्राप । अस्मिन् सर्गे वृत्तमुपजातिः । तल्लक्षणन्तु 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' । 'उपेन्द्रवज्रा जतजास्ततो गौ' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' । इति ॥ १

अनर्घशीलः अमूल्यस्वभावः असाधारणस्वभावः इत्यर्थः । 'मूल्ये पूजाविधावर्घः' इति, 'शीलं स्वभावे सद्वृत्ते' इति च अमरशाश्वतौ । यशसा कीर्त्या, प्रकाशते इति प्रकाशः । पचाद्यच् । अतिथिषु साधुः आतिथेयः । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । सः रघुः, हिरण्यस्य विकारः हिरण्मयम् । 'दाण्डिनायन' इत्यादिसूत्रेण निपातः । वीतहिरण्मयत्वात् अपगतसुवर्णपात्रत्वात् । यज्ञस्य सर्वस्वदक्षिणकत्वादिति भावः । मृन्मये मृद्विकारे पात्रे, अर्घार्थमिदम् अर्घ्यम् । 'पादार्घाभ्याञ्च' इति यत् । पूजार्थं द्रव्यं निधाय, श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धं, श्रूयते इति श्रुतं वेदशास्त्रम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । अतिथिम् अभ्यागतं कौत्सम् । "अतिथिर्ना गृहागते" इत्यमरः । प्रत्युज्जगाम ॥ २

तमर्च्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशाम्पतिर्विष्टरभाजमारात् कृताञ्जलिः कृत्यविदित्युवाच ॥ ३

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली ? गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४

कायेन वाचा मनसापि शश्वत् यत् संभृतं वासवधैर्य्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५

अन्वयः । विधिज्ञः मानधनाग्रयायी कृत्यवित् विशाम्पतिः कृताञ्जलिः सन् [illegible] विष्टरभाजं तं तपोधनं विधिवत् अर्च्चयित्वा इत्युवाच ॥ ३

अन्वयः । हे कुशाग्रबुद्धे ! मन्त्रकृताम् ऋषीणाम् अग्रणीः ते गुरुः कुशली [illegible] यतस्त्वया अशेषं ज्ञानं लोकेन उष्णरश्मेः चैतन्यमिव आप्तम् ॥ ४

अन्वयः । कायेन वाचा मनसापि वासवधैर्य्यलोपि यत् शश्वत् सम्भृतं (अ[illegible] महर्षेः त्रिविधं तत् तपः अन्तरायैः व्ययं न आपाद्यते कच्चित् ? ॥ ५

विधिज्ञः शास्त्रज्ञः अकरणे प्रत्यवायभीरुरित्यर्थः । मानधनानाम् अग्रयायी [illegible] अपयशोभीरुरित्यर्थः । कृत्यवित् कार्य्यज्ञः, "आगमनप्रयोजनमवश्यं प्रष्टव्यम्" [illegible] कृत्यवित् विशाम्पतिः मनुजेश्वरः । "द्वौ विशौ वैश्यमनुजौ" इत्यमरः । विष्टर[illegible] आसनगतम् उपविष्टमित्यर्थः । "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यम[illegible] "वृक्षासनयोर्विष्टरः" इति निपातः । तं तपोधनं विधिवत् विध्यर्हं यथाशास्त्रमित्य[illegible] तदर्हम्, इति वति प्रत्ययः । अर्चयित्वा आरात् समीपे । "आराद्दूरसमीप[illegible] इत्यमरः । कृताञ्जलिः सन् इति वक्ष्यमाणप्रकारेण उवाच ॥ ३

हे कुशाग्रबुद्धे ! सूक्ष्मबुद्धे ! "कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्" [illegible] इत्यायुधः । मन्त्रकृतां मन्त्रस्रष्टॄणाम् । "सुकर्म्मपापमन्त्र" इत्यादिना [illegible] ऋषीणाम् अग्रणीः श्रेष्ठः ते तव गुरुः, कुशली अपि ? क्षेमवान् किम् ? अपि [illegible] "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः । यतः यस्मात् गुरोः सकाशात् [illegible] अशेषं ज्ञानं, लोकेन उष्णरश्मेः सूर्य्यात् चैतन्यं प्रबोधः इव, आप्तं स्वीकृतम् ॥ ४

कायेन उपवासादिकृच्छ्रचान्द्रायणादिना, वाचा वेदपाठेन, मनसा गायत्रीजपादि[illegible] कायेन वाचा मनसापि करणेन वासवस्य इन्द्रस्य धैर्य्यम् लुम्पतीति वासवधैर्य्यलोपि [illegible] पहारशङ्काजनकमित्यर्थः । यत् तपः शश्वत् असकृत् । "मुहुः पुनः पुनः शश्वदभीक्ष्ण[illegible] सकृत्समाः" इत्यमरः । सम्भृतं सञ्चितं, महर्षेः वरतन्तोः त्रिविधं वाङ्मनःकायजं तत् तपः [illegible] अन्तरायैः विघ्नैः इन्द्रप्रेरिताप्सरःशापैः व्ययं नाशं न आपाद्यते । कच्चित् ? न नीयते किम् [illegible] "कच्चित् कामप्रवेदने" इत्यमरः ॥ ५

आधारबन्धप्रमुखैः प्रयत्नैः संवर्द्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६
क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७
निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८

अन्वयः । आधारबन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्द्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः उपप्लवः न कच्चित् ? ॥ ६

अन्वयः । क्रियानिमित्तेष्वपि कुशेषु मुनिभिः वत्सलत्वात् अभग्नकामा तदङ्कशय्याच्युतनाभिनाला मृगीणाम् प्रसूतिः अनघा कच्चित् ? ॥ ७

अन्वयः । यैः नियमाभिषेकः निर्वर्त्यते, येभ्यः पितॄणां निवापाञ्जलयः ( निर्वर्त्यन्ते ), उञ्छषष्ठाङ्कितसैकतानि तानि वस्तीर्थजलानि शिवानि कच्चित् ? ॥ ८

आधारबन्धप्रमुखैः आलवालनिर्माणादिभिः प्रयत्नैः उपायैः । "आधार आलवालेऽम्बु-बन्धेऽधिकरणेऽपि च" इति विश्वः । सुतेभ्यः निर्गतः विशेषः अतिशयः यस्मिन् कर्मणि तत् तथा संवर्द्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः आदिशब्दाद् दावानलादि-रुपप्लवो बाधकः न कच्चित् ? नास्ति किम् ? ॥ ६

क्रियानिमित्तेषु अपि अनुष्ठानसाधनेषु अपि कुशेषु मुनिभिः वत्सलत्वात् मृगस्नेहात् अभग्नकामा अप्रतिहतेच्छा, तेषां मुनीनाम् अङ्का एव शय्याः तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ताः, मृगीणां प्रसूतिः सन्ततिः, अनघा अव्यसना कच्चित् ? अनपायिनी किम् ? इत्यर्थः । "दुःखैनोव्यसनेष्वघम्" इति यादवः । ते हि व्यालभयाद्दूरात्मङ्के एव धारयन्ति ॥ ७

यैः तीर्थजलैः, नियमाभिषेकः नित्यस्नानादिः निर्वर्त्यते निष्पाद्यते । येभ्यः जलेभ्य इत्युक्त्य इति शेषः । पितॄणाम् अग्निष्वात्तादीनां निवापाञ्जलयः तर्पणाञ्जलयः । "पितृदानं निवापः स्यात्" इत्यमरः । निर्वर्त्यन्ते । उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वात् राजग्राह्यैः अङ्कितानि सैकतानि पुलिनानि येषां तानि तथोक्तानि, युष्माकं तानि तीर्थजलानि, शिवानि भद्राणि कच्चित् ? अनुपप्लवानि किम् ? इत्यर्थः । "उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्" इति यादवः । "षष्ठाष्टमाभ्यां ञ च" इति षष्ठशब्दाद् भागार्थे अन्प्रत्ययः । अतएवापूरणार्थत्वात् "पूरणगुण" इत्यादिना न समासप्रतिषेधः । सिकताः येषु सन्ति सैकतानि । "सिकताशर्कराभ्यां च" इति अण्प्रत्ययः ॥ ८

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९
अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनोयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीय सर्व्वोपकारक्षममाश्रमं ते ॥ १०
तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि सम्भावयितुं वनान्माम् ॥ ११

अन्वयः । कालोपपन्नातिथिकल्प्यभागं वन्यं वः शरीरस्थितिसाधनं नीवार[...] जानपदैः कडङ्गरीयैः न आमृश्यते कच्चित् ? ॥ ९

अन्वयः । त्वं महर्षिणा प्रसन्नेन सता सम्यक् विनीय गृहाय अनुमतः अपि ? (यस्मात्) ते सर्व्वोपकारक्षमम् आश्रमं संक्रमितुम् अयं कालः ॥ १०

अन्वयः । अर्हतस्तव अभिगमेन मे मनः न तृप्तं, किन्तु नियोगक्रियया उत्[...] शासितुः आज्ञया अपि आत्मना वा मां सम्भावयितुं वनात् प्राप्तोऽसि ? ॥ ११

कालेषु योग्यकालेषु, उपपन्नानाम् आगतानाम् अतिथीनां, कल्प्याः भागाः [...] तथोक्तं, वने भवं वन्यं शरीरस्थितेः जीवितस्य साधनं वः युष्माकम् । पच्यते [...] कलं धान्यमिति यावत् । नीवारपाकादि । आदिशब्दाच्छामाकादिधान्यसंग्रहः । [...] पदेभ्यः आगतैः जानपदैः । "तत आगतः" इत्यण् । कडङ्गरीयैः कडङ्गरं तुषम् [...] कडङ्गरीयाः । 'कडङ्गरो बुषं क्लीवे धान्यत्वचि तुषः पुमान्' इत्यमरः । 'कडङ्गरदक्षि[...]' इति छप्रत्ययः । तैः गोमहिषादिभिः नामृश्यते कच्चित् ? न भक्ष्यते किम् ? इत्यर्थः ।

किञ्च । त्वं प्रसन्नेन सता महर्षिणा सम्यक् विनीय शिक्षयित्वा विद्या[...] इत्यर्थः गृहाय गृहस्थाश्रमं प्रवेष्टुम् । "क्रियार्थोपपद"—इत्यादिना चतुर्थी । अपि ? अनुज्ञातः किम् ? हि यस्मात्, ते तव, सर्वेषाम् आश्रमाणां ब्रह्मचर्य्यवान[...] [...]म् उपकारे क्षमं शक्तम् । 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । द्वितीयम् आश्रमं [...] [...]क्रमितुं प्राप्तुम्, अयं कालः । विद्याग्रहणानन्तर्य्यात् तस्य इति भावः । "का[...] [...]वेलासु तुमुन्" इति तुमुन् । सर्व्वोपकारक्षममित्यत्र मनुः—"यथा मातरमा[...] जीवन्ति जन्तवः । वर्त्तन्ते गृहिणस्तद्वत् आश्रित्येतर आश्रमाः ।" इति ॥ १०

तदह. इत्यमर हि इत्यायुर चतीया "गह"

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—तवेति । अर्हतः पूज्यस्य [...] 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । तव अभिगमनेन आगमनमात्रेण मे मनः न तुष्टं, किन्तु, नियोगक्रियया आज्ञाकरणेन उत्सुकं सोत्कण्ठम् । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया । शासितुः गुरोः [...] अपि आत्मना स्वतो वा । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । मां [...] वनात् प्राप्तोऽसि ? गुर्व्वर्थं स्वार्थं वा आगमनम् ? इत्यर्थः ॥ ११

इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२
सर्वत्र नो वार्त्तमवेहि राजन् नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्य्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३
भक्तिः प्रतीच्येष कुलोचिता ते पूर्वान् महाभाग ! तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४

अन्वयः। अर्घ्यपात्रानुमितव्ययस्य रघोः इति उदारामपि गां निशम्य वरतन्तुशिष्यः [स्वा]र्थोपपत्तिं प्रति दुर्बलाशः ( सन् ) तम् इति अवोचत ॥ १२

अन्वयः। हे राजन् ! नः सर्व्वत्र वार्त्तम् अवेहि, त्वयि नाथे सति प्रजानाम् अशुभं [कु]तः, सूर्य्ये तपति सति तमिस्रा लोकस्य दृष्टेः आवरणाय कथं कल्पेत ॥ १३

अन्वयः। प्रतीच्येषु भक्तिः ते कुलोचिता, हे महाभाग ! (त्वम्) तया पूर्वान् [अ]तिशेषे अहन्तु व्यतीतकालः सन् अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः ॥ १४

अर्घ्यपात्रेण मृन्मयेन अनुमितः व्ययः सर्व्वस्वत्यागः यस्य तस्य रघोः, इति उक्तप्रकाराम् [उ]दाराम् औदार्य्ययुक्ताम् अपि गां वाचं, 'मनो नियोगक्रिययोत्सुकं मे, इत्येवंरूपाम्। [स्व]र्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः इत्यमरः। निशम्य [श्रुत्वा], वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्य्यसिद्धिं प्रति दुर्बलाशः सन्, मृन्मयपात्र[दर्श]नात् शिथिलमनोरथः सन्, तं रघुम् इति वक्ष्यमाणप्रकारेण अवोचत् ॥ १२

[अर्थः।] हे राजन् ! त्वं, सर्व्वत्र नः अस्माकं वार्त्तं स्वास्थ्यम् अवेहि जानीहि। 'वार्त्तं वल्गु[नी]रोगे च, इत्यमरः। 'वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम् इति यादवः। न [...] मत्याह—नाथ इति। त्वयि नाथे ईश्वरे सति प्रजानाम् अशुभं दुःखं कुतः ? [अ]र्थान्तरं न्यस्यति सूर्य्य इत्यादिना। सूर्य्ये तपति प्रकाशमाने सति तमिस्रा "तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ। कृष्णपक्षनिशायां च" इति "तमिस्रम् इति पाठे तमिस्रं तिमिरम् तमः" इत्यमरः। लोकस्य 'लोकस्तु भुवने जने' इत्यमरः। दृष्टेः आवरणाय कथं कल्पेत ? दृष्टिमावरितुं । क्रपेरलमर्थत्वात् तद्योगे "नमःस्वस्ति" इत्यादिना चतुर्थी। अलमिति [पर्याप्ति]ग्रहणमिति भगवान् भाष्यकारः। कल्पेत सम्पद्येत इत्यर्थः. क्लृपि सम्पद्यमाने [च] व्यात ॥ १३

"तव.ऽतः" ( ५ । ११ ) इत्यादिनोक्तं यत् तन्न चित्रमित्याह—भक्तिरिति। प्रतीच्येषु [पूज्ये]षु। "पूज्यः प्रतीच्यः" इत्यमरः। भक्तिः अनुरागविशेषः, ते तव कुलोचिता कुला[गत]ता। "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः। हे महाभाग ! सार्व्वभौम ! तया [तय]या पूर्व्वान् अतिशेषे अतिवर्त्तसे। किन्तु, सर्व्वत्र वार्त्तं चेत् तर्हि कथं खेदखिन्न इव

शरीरमात्रेण नरेन्द्र ! तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५

स्थाने भवानेकनराधिपः सन् अकिञ्चनत्वं मखजं व्यनक्ति ।
पर्य्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६

तदन्यतस्तावदनन्यकार्य्यो गुर्वर्थमाहर्त्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७

अन्वयः । हे नरेन्द्र ! तीर्थप्रतिपादितर्द्धिः शरीरमात्रेण तिष्ठन् (त्वम्) आरण्यकोपात्तफलप्रसूतिः स्तम्बेन अवशिष्टः नीवार इव आभासि ॥ १५

अन्वयः । भवान् एकनराधिपः सन् मखजम् अकिञ्चनत्वं व्यनक्ति स्थाने, (हि) सुरैः पर्य्यायपीतस्य हिमांशोः कलाक्षयः वृद्धेः श्लाघ्यतरः ॥ १६

अन्वयः । तत् तावत् अनन्यकार्य्यः सन् अहम् अन्यतः गुर्व्वर्थम् आहर्त्तुं (यतिष्ये), ते स्वस्ति अस्तु चातकोऽपि निर्गलिताम्बुगर्भं शरद्घनं न अर्द्दति ॥ १७

द्रक्ष्यसे ? अत आह—व्यतीतेति । अहं व्यतीतकालः अतिक्रान्तकालः सन्, अर्थित्वात् [?] त्वाम् अभ्युपेतः. इति मे मम विषादः ॥ १४

हे नरेन्द्र ! तीर्थे सत्पात्रे प्रतिपादिता दत्ता ऋद्धिः येन सः तथोक्तः । 'योनौ [?] तारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि ।' इति [?] शरीरमात्रेण तिष्ठन्, आरण्यकाः अरण्ये भवाः मनुष्याः मुनिप्रमुखाः । "अरण्या [?] इति वुञ्प्रत्ययः तैः उपात्ता फलम् एव प्रसूतिर्यस्य सः स्तम्बेन काण्डेन अवशिष्टः [?] दित्वात् तृतीया । नीवार इव आभासि शोभसे ॥ १५

भवान् एकनराधिपः सार्वभौमः सन्, मखजन्यं न विद्यते किञ्चन यस्य [?] अकिञ्चनः । मयूरव्यंसकादित्वात् तत्पुरुषः । तस्य भावः तत्त्वं निर्धनत्वं व्यनक्ति [?] स्थाने युक्तम् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । तथाहि—सुरैः देवैः पर्य्यायेण [?] पीतस्य हिमांशोः कलाक्षयः वृद्धेः उपचयात् श्लाघ्यतरः हि वरः खलु । 'मणिः शाणो [?] समरविजयी हेतिनिहतो, मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः [?] सुरतमृदिता बालवनिता, तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः !" इति [?] अत्र कामन्दकः—"धर्म्मार्थं क्षीणकोषस्य क्षीणत्वमपि शोभते । सुरैः पीत [?] कृष्णपक्षे विधोरिव ।" इति ॥ १६

पर्य्यायपीते कलाक्षये सामान्ये प्रस्तुते वृद्धिरूपविशेषस्य सम्भावनात् [?] प्रशंसालङ्कारो व्यज्यते तद्यथा—क्वचित् विशेषः सामान्यात् सामान्यं वा [?] कार्य्यान्निमित्ते कार्य्यं च हेतोरथ समात् समम् । अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा [?] अप्रस्तुतप्रशंसा स्यात् ।

तत् तस्मात् तावत् अनन्यकार्य्यः । "यावत् तावच्च साकल्येऽवधौ मानेऽ [?]

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन् गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त॥ १८

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे॥ १९

अन्वयः। एतावत् उक्त्वा प्रतियातुकामं तं महर्षेः शिष्यं निषिध्य नृपतिः, हे विद्वन्! त्वया गुरवे प्रदेयं किं वस्तु कियद्वा, इत्यन्वयुङ्क्त॥ १८

अन्वयः। ततो यथावत् विहिताध्वराय स्मयावेशविवर्जिताय वर्णाश्रमाणां गुरवे तस्मै (रघवे) विचक्षणः वर्णी सः (कौत्सः) प्रस्तुतम् आचचक्षे॥ १९

इति विश्वः। प्रयोजनान्तररहितः अहम्, अन्यतः वदान्यान्तरात् गवर्थं गुरुधनम् आहर्तुम् अर्जयितुं यतिष्ये उद्योक्ष्ये, ते तुभ्यं स्वस्ति शुभमस्तु। "नमःस्वस्ति" इत्यादिना चतुर्थी। तथाहि—चातकोऽपि, "धरणीपतितं तोयं चातकानां रुजाकरम्" इति हेतोः, अनन्यगतिकोऽपि इत्यर्थः। निर्गलितम् अम्बु एव गर्भः यस्य तं शरद्घनं न अर्दति न याचते। "अर्द गतौ याचने च" इति धातुः। "याचनार्थे रणोऽर्दनम्" इति यादवः॥ १७

तदन्यतस्तावदित्यत्र तावच्छब्दस्य प्रयोगो दृश्यते, ननु यत्तदोर्नित्यसम्बन्धः इत्यादिना यावच्छब्दोऽन्विष्यते। चेत् अध्याहार्यः स्यात् तर्हि कुत्र स अध्याहारः? निर्दिश्यतां, चेत् न, तर्हि कथं रुंगच्छते, सततं साकल्यार्थस्तावत् शब्दो यावच्छब्दं नानुगच्छतीति।

एतावत् वाक्यम् उक्त्वा प्रतियातुं कामः यस्य तं प्रतियातुकामं गन्तुकामम्। "तुम् काममनसोरपि" इति मकारलोपः। महर्षेः वरतन्तोः शिष्यं कौत्सं, नृपतिः रघुः, निषिध्य निवार्य, हे विद्वन्! त्वया गुरवे प्रदेयं वस्तु किं किमात्मकं, कियत् किं परिमाणं वा? इत्येवं तं कौत्सम् अन्वयुङ्क्त अपृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च इत्यमरः॥ १८

तत यथावत् यथार्हम्। अर्हार्थे वतिः। विहिताध्वराय विधिवत् अनुष्ठितयज्ञाय सदाचाराय इत्यर्थः। स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धताय इत्यर्थः। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्यादीनाञ्च गुरवे नियामकाय। "वर्णाः स्युर्ब्राह्मणादयः" इति "ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्री" इति च अमरः। तत्तत्कार्य्यनिर्वाहकाय इत्यर्थः। तस्मै रघवे, विचक्षणः विद्वान् वर्णी ब्रह्मचारी। 'वर्णिनो ब्रह्मचारिणः' इत्यमरः। "वर्णाद ब्रह्मचारिणि" इति इनिप्रत्ययः। सः कौत्सः, प्रस्तुतं प्रकृतम् आचचक्षे॥ १९

समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत् पुरस्तात् ॥ २०
निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१
सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे सम्प्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२
इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३

अन्वयः । समाप्तविद्येन मया महर्षिः गुरुदक्षिणायै विज्ञापितः अभूत् । स चिराय अस्खलितोपचारां तां मे भक्तिं पुरस्तात् अगणयत्, यद्वा स च चि अस्खलितोपचारां मे भक्तिं पुरस्तात् तामेव अगणयत् ॥ २०

अन्वयः । निर्बन्धसञ्जातरुषा गुरुणा अर्थकार्श्यं अचिन्तयित्वा अहं "वित्तस्य च दश च कोटीः मे आहर" इति विद्यापरिसंख्यया उक्तः ॥ २१

अन्वयः । सोऽहं सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा श्रुतनिष्क्रयस्य अ तरत्वात् सम्प्रति उपरोद्धुम् न अभ्युत्सहे ॥ २२

अन्वयः । द्विजराजकान्तिः एनोनिवृत्तेन्द्रियवृत्तिः जगदेकनाथः ( रघुः ) वेद वरेण द्विजेन इत्थम् आवेदितः एनं भूयो जगाद ॥ २३

समाप्तविद्येन मया, महर्षिः, गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं, विज्ञा अभूत् । स च गुरुः, चिराय अस्खलितोपचारां तां दुष्करां मे भक्तिम् एव पुर प्रथमम् अगणयत् संख्यातवान् । "भक्त्यैव सन्तुष्टः, किं दक्षिणया" इत्युक्तवानित्य अथवा भक्तिम् एव तां दक्षिणाम् अगणयत् इति योज्यम् ॥ २०

निर्बन्धेन प्रार्थनातिशयेन सञ्जातरुषा सञ्जातक्रोधेन गुरुणा, अर्थकार्श्यं द अचिन्तयित्वा अविचार्य्य, अहं वित्तस्य धनस्य चतस्रः दश च कोटीः चतुर्दश को मह्यम् आहर आनय इति विद्यापरिसंख्यया विद्यापरिसंख्यानुसारेणैव उक्तः । अत्र "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतु इति ॥ २१

सः अहं सपर्याविधिभाजनेन अर्घ्यपात्रेण भवन्तं, प्रभुशब्द एव शेषो यस्य तं निःस्वं निश्चित्य इत्यर्थः । श्रुतनिष्क्रयस्य विद्यामूल्यस्य अल्पेतरत्वात् अतिमहत्त्वात् उपरोद्धुं निर्बन्धुं न अभ्युत्सहे ॥ २२

द्विजराजकान्तिः चन्द्रकान्तिः । "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्य "तस्मात् सोमो राजानो ब्राह्मणानाम्" इति श्रुतेः । द्विजराजकान्तित्वेनार्थावाधि

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे माभूत् परीवादनवावतारः ॥ २४

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन् ! यावद् यते साधयितुं त्वदर्थम् ॥ २५

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत् सङ्गरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुवेरात् ॥ २६

अन्वयः । श्रुतपारदृश्वा गुर्वर्थम् अर्थी रघोः सकाशात् कामम् अनवाप्य वदान्यान्तरं गतः इत्ययं मे परीवादनवावतारः माभूत् ॥ २४

अन्वयः । स त्वं महिते प्रशस्ते मदीये अग्न्यगारे चतुर्थः अग्निरिव वसन् द्वित्राणि अहानि सोढुम् अर्हसि, हे अर्हन् ! त्वदर्थं यावत् यते ॥ २५

अन्वयः । अग्रजन्मा प्रतीतः सन् तस्य अवितथं सङ्गरं तथेति प्रत्यग्रहीत, रघुरपि गाम् आत्तसाराम् अवेक्ष्य कुवेरात् अर्थं निष्क्रष्टुं चकमे ॥ २६

वारयति । एनसः पापात् निवृत्ता इन्द्रियवृत्तिः यस्य सः जगदेकनाथः रघुः, वेदविदां वरेण श्रेष्ठेन न कौत्सेन इत्थम् आवेदितः सन् एनं कौत्सं भूयः पुनः जगाद ॥ २३

श्रुतस्य पारं दृष्टवान् श्रुतपारदृश्वा । "दृशेः क्वनिप्" इति क्वनिप् । गुर्वर्थं गुरु-दक्षिणार्थं यथा तथा अर्थी याचकः । विशेषणद्वयेनापि अस्याप्रत्याख्येयत्वमाह । रघोः सकाशात् कामं मनोरथम् अनवाप्य अप्राप्य वदान्यान्तरं दात्रन्तरं गतः । "स्युर्वदान्य स्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः । इत्येवंरूपः अयं परीवादस्य अपवादस्य नवः नूतनः प्रथमः अवतारः आविर्भावः, मे माभूत् मा अस्तु । रघोरिति स्वनामग्रहणं सम्भावितत्वद्योतनार्थम् । तथाच—"सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते" इति भावः ॥ २४

सः त्वं, महिते पूजिते प्रशस्ते प्रसिद्धे मदीये अग्न्यगारे त्रेताग्निशालायां, चतुर्थः अग्निः इव, वसन् द्वित्राणि द्वे त्रीणि वा अहानि दिनानि । "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच् । सोढुम् अर्हसि, हे अर्हन् ! मान्य ! त्वदर्थं तव प्रयोजनम् साधयितुं, यावत् यते यतिष्ये । "यावत् पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ २५

अग्रजन्मा ब्राह्मणः, प्रतीतः प्रीतः सन्, तस्य रघोः, अवितथम् अमोघं सङ्गरं प्रतिज्ञाम् । "अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः" इत्यमरः । 'तां गिरम्' इति केचित् पठन्ति । तथा इति प्रत्यग्रहीत् । रघुः अपि गां भूमिम् आत्तसारां गृहीतधनाम् अवेक्ष्य, कुवेरात् अर्थं निष्क्रष्टुम् आहर्त्तुं चकमे इयेष ॥ २६

वशिष्ठमन्त्रोक्षणजात् प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७
अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८
प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९
तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३०

अन्वयः । वशिष्ठमन्त्रोक्षणजात् प्रभावात् उदन्वदाकाशमहीधरेषु मरुत्सखस्य बलाहकस्येव तद्रथस्य गतिर्नहि विजघ्ने ( केनचिदिति शेषः ) ॥ २७

अन्वयः । अथ प्रदोषे प्रयतः धीरः रघुः सामन्तसम्भावनया एव कैलासनाथम् तरसा जिगीषुः कल्पितशस्त्रगर्भं रथम् अधिशिश्ये ॥ २८

अन्वयः । प्रातः प्रयाणाभिमुखाय तस्मै कोषगृहे नियुक्ताः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तः पतितां हिरण्मयीं वृष्टिं शशंसुः ॥ २९

अन्वयः । भूपतिः अभियास्यमानात् कुबेरात् लब्धं वज्रभिन्नं सुमेरोः पादमिव तं भासुरहेमराशिं समस्तमेव कौत्साय दिदेश ॥ ३०

वशिष्ठस्य यत् मन्त्रेण उक्षणम् अभिमन्त्र्य प्रोक्षणं तज्जात् प्रभावात् सामर्थ्यात् उदन्वदाकाशमहीधरेषु उदन्वति उदधौ आकाशे महीधरेषु वा, मरुत्सखस्य मरुत् सखा इति तत्पुरुषः बहुव्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते । वाहकः बलाहकः । पृषोदरादित्वात् साधुः । तस्य इव मेघस्य इव, तद्रथस्य गतिः न विजघ्ने न विहता हि ॥ २७

अथ प्रदोषे रजनीमुखे, तत्काले यानाधिरोहणविधानात् ? प्रयतः धीरः ए... न्तात् भवः सामन्तः, राजमात्रम् इति सम्भावनया एव कैलसनाथं कुबेरं तरसा जिगीषुः जेतुमिच्छुः सन्, कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथम् अधिशिश्ये, रथे ... वानित्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ २८

प्रातः प्रयाणाभिमुखाय तस्मै रघवे, कोषगृहे नियुक्ताः अधिकृताः भा... सविस्मयाः सन्तः, कोषगृहस्य मध्ये नभस्तः नभसः । पञ्चम्यास्तसिल्प्रत्ययः । हिरण्मयीं सुवर्णमयीम् । "दाण्डिनायन" इत्यादिना निपातनात् साधुः । वृष्टिं कथयामासुः ॥ २९

भूपतिः रघुः, अभियास्यमानात् अभिगमिष्यमाणात् कुबेरात्, लब्धं वज्रेण

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१
अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन् करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२
किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३

अन्वयः । तौ द्वौ अपि साकेतनिवासिनौ जनस्य अभिनन्द्यसत्त्वौ अभूताम्, गुरुप्रदेयाधिकनिस्पृहः अर्थी, अर्थिकामात् अधिकप्रदो नृपश्च ॥ ३१

अन्वयः । प्रीतमनाः महर्षिः कौत्सः संप्रस्थितः सन् उष्ट्रवामीशतवाहितार्थम् आनतपूर्वकायं प्रजेश्वरं करेण स्पृशन् वाचम् उवाच ॥ ३२

अन्वयः । वृत्ते स्थितस्य प्रजानाम् अधिपतेः भूः कामसूर्यदि अत्र किं चित्रम्, किन्तु तव प्रभावः अचिन्तनीयः, येन द्यौरपि मनीषितं दुग्धा ॥ ३३

भिन्नं सुमेरोः पादं प्रत्यन्तपर्व्वतम् इव, स्थितम् । 'पादाः प्रत्यन्तपर्व्वताः,' इत्यमरः । "शृङ्गं सुमेरोः" इति क्वचित् पाठः । तं भासुरं भास्वरम् । "भञ्जभासमिदो घुरच्" इति घुरच् । हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ, न तु चतुर्द्दशकोटिमात्रमित्येवकारार्थः ॥ ३०

तौ अर्थिदातारौ द्वौ अपि, साकेतनिवासिनः अयोध्यावासिनः । "साकेतः स्यादयोध्यायां कोशला ( कोसला ) नन्दिनी च सा" इति यादवः । जनस्य अभिनन्द्यसत्त्वौ स्तुत्यव्यवसायौ अभूताम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । कौ द्वौ ? गुरुप्रदेयात् अधिके अतिरिक्तद्रव्ये निस्पृहः अर्थी, अर्थिकामात् अर्थिमनोरथात् अधिकं प्रददातीति तथोक्तः । "प्रे दाज्ञः" इति क प्रत्ययः । नृपश्च ॥ ३१

अथ प्रीतमनाः महर्षिः कौत्सः, संप्रस्थितः प्रस्थास्यमानः सन् । 'आशंसायां भूतवच्च' इति भविष्यदर्थे क्तः । उष्ट्राणां क्रमेलकानां वामीनां वड़वानाञ्च शतैः वाहितार्थं प्रापितधनम् आनतपूर्वकायं विनयनम्रमित्यर्थः । प्रजेश्वरं रघुं करेण स्पृशन् वाचम् उवाच ॥ ३२

वृत्ते स्थितस्य । "न्यायेनार्जनमर्थस्य वर्द्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ।" इति कामन्दकः । तस्मिन् वृत्ते स्थितस्य प्रजानाम् अधिपतेः नृपस्य, भूः, कामान् सूते इति कामसूः यदि । 'सत्सूद्विषद्रुह' इत्यादिना क्विप् । अत्र कामप्रसवने किं चित्रं न चित्रमित्यर्थः । किन्तु तव प्रभावः महिमा अचिन्तनीयः । येन त्वया द्यौः अपि मनीषितम् अभिलषितं दुग्धा । दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः ।' इति स्मरणात् ॥ ३३

आशास्यमन्यत् पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम्।
राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः॥ ३५

ब्राह्मे मुहूर्त्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६

रूपं तदोजस्वि तदेव वीर्य्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद्विभिदे कुमारः प्रवर्त्तितो दीप इव प्रदीपात्॥

अन्वयः। सर्वाणि श्रेयांसि अधिजग्मुषः ते अन्यत् आशास्यं पुनरुक्तभूतम्, ईड्यं भवन्तं भवतः पितेव आत्मगुणानुरूपं पुत्रं लभस्व ॥ ३४

अन्वयः। अग्रजन्मा इत्थं राज्ञे आशिषं प्रयुज्य गुरोः सकाशम् प्रतीयाय, रा जीवलोकः अर्कात् आलोकमिव, तस्मात् आशु सुतं लेभे ॥ ३५

अन्वयः। तस्य देवी ब्राह्मे मुहूर्त्ते किल कुमारकल्पं कुमारं सुषुवे, अत ब्रह्मण एव नाम्ना तम् आत्मजन्मानम् अजं चकार ॥ ३६

अन्वयः। ओजस्वि रूपं तदेव, वीर्य्यं तदेव, नैसर्गिकम् उन्नतत्वं तदेव, प्र वर्त्तितः दीपः प्रदीपादिव स्वात् कारणात् न विभिदे ॥ ३७

सर्वाणि श्रेयांसि शुभानि अधिजग्मुषः प्राप्तवतः ते तव, अन्यत् पुत्रादि आशास्यम् आशीः साध्यम् आशंसनीयं वा पुनरुक्तभूतं सर्वं सिद्धमित्यर्थः। किन्तु स्तुत्यं भवन्तं भवतः पिता इव, आत्मगुणानुरूपं त्वया तुल्यगुणमित्यर्थः, पुत्रं प्राप्नुहि ॥ ३४

अग्रजन्मा ब्राह्मणः। "अग्रजन्मा द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः" इति इत्थं राज्ञे आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप। राजा जीवलोकः जीवसमूहः। "जीवः प्राणिनि गीष्पतौ" इति विश्वः। अर्कात् आ प्रकाशम् इव, "चैतन्यम्" इति पाठे ज्ञानम् इव, तस्मात् ऋषेः आशु सुतं लेभे प्राप।

तस्य रघोः, देवी महिषी, ब्राह्मे। 'तस्येदमित्यण्। ब्रह्मदेवताके अभिजि मुहूर्त्ते किल ईषत् असमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम्। "ईषदस इत्यादिना कल्पप्प्रत्ययः। कुमारं पुत्रं सुषुवे। "कुमारो बालके स्कन्दे" इति अतो ब्राह्ममुहूर्त्तोत्पन्नत्वात् पिता रघुः, ब्रह्मणः विधेः एव, नाम्ना तम् आत्म पुत्रम् अजम् अजनामकं चकार। "अजो हरौ हरे कामे विधौ छागे रघौ इति विश्वः ॥ ३६

ओजस्वि तेजस्वि बलिष्ठं वा। "ओजस्तेजसि धातूनाम् अवष्टम्भप्रकाशयोः।

उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशञ्च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४०

अन्वयः। गुरुभ्यः विधिवत् उपात्तविद्यं यौवनोद्भेदविशेषकान्तं तमजं (प्रति) साभिलाषापि श्रीः धीरा कन्या पितुरिव गुरोः अनुज्ञाम् आचकाङ्क्ष ॥ ३८

अन्वयः। अथ स्वसुः इन्दुमत्याः स्वयंवरार्थं कुमारानयनोत्सुकेन क्रथकैशिकानाम् ईश्वरेण भोजेन आप्तो दूतः रघवे विसृष्टः ॥ ३९

अन्वयः। असौ तं श्लाघ्यसम्बन्धं पुत्रं दारक्रियायोग्यदशञ्च विचिन्त्य ससैन्यम् एनम् ऋद्धां विदर्भाधिपराजधानीं प्रस्थापयामास ॥ ४०

बले च दीप्तौ च" इति विश्वः। रूपं वपुः। "अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्य्यवपुषि श्लोकशब्दयोः" इति विश्वः। तत एव पैतृकम् एव, वीर्य्यं शौर्य्यं तत एव, नैसर्गिकं स्वाभाविकम् उन्नतत्वं तत एव तादृशमेव इत्यर्थः। कुमारः बालकः प्रवर्त्तितः उत्पादितः दीपः प्रदीपात् स्वोत्पादकदीपात् इव, स्वात् स्वकीयात्। "पूर्व्वादिभ्यो नवभ्यो वा, इति आज्ञावो वैकल्पिकः। कारणात् जनकात् न विभिदे भिन्नो नाभूत् सर्व्वात्मना तादृश एवाभूदित्यर्थः ॥ ३७

गुरुभ्यः विधिवत् यथाशास्त्रम् उपात्तविद्यं लब्धविद्यम्। यौवनस्य उद्भेदात् आविर्भावात् हेतोः विशेषेण कान्तं सौम्यं तम् अजं प्रति साभिलाषा अपि श्रीः धीरा स्थिरा उन्नतचित्ता। 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्य्यमिति संज्ञितम्' इति भूपालः। कन्या पितुः इव गुरोः अनुज्ञाम् आचकाङ्क्ष इयेष। यौवराज्यार्होऽभूदित्यर्थः। अनुज्ञाशब्दात् पितृपारतन्त्र्यमुपमासामर्थ्यात् पाणिग्रहणयोग्यता च व्यज्यते ॥ ३८

अथ स्वसुः भगिन्याः इन्दुमत्याः स्वयंवरार्थं कुमारस्य अजस्य आनयने उत्सुकेन क्रथकैशिकानां विदर्भदेशानाम् ईश्वरेण स्वामिना भोजेन राज्ञा आप्तः हितः दूतः रघवे विसृष्टः प्रेषितः। क्रियामात्रयोगेऽपि चतुर्थी ॥ ३९

असौ रघुः,तं भोजं श्लाघासम्बन्धम्। अनूचानत्वादिगुणयोगात् स्पृहणीयसम्बन्धं,विचिन्त्य विचार्य्य, पुत्रं च दारक्रियायोग्यदशं विवाहयोग्यवयसं विचिन्त्य, ससैन्यम् एनं पुत्रम् ऋद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रस्थापयामास। धीयतेऽस्यामिति धानी। 'करणाधिकरणयोश्च' इति अधिकरणे ल्युट्प्रत्ययः। राज्ञां धानीति विग्रहः ॥ ४०

तस्योपकार्य्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१

स नर्म्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्त्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३

अन्वयः । उपकार्य्यारचितोपचाराः जानपदोपदाभिः वन्येतराः तस्य मनुजेन्द्रसूनोः मार्गे निवासाः उद्यानविहारकल्पा बभूवुः ॥ ४१

अन्वयः । विलङ्घिताध्वा सः अजः सीकरार्द्रैः मरुद्भिः आनर्त्तितनक्तमाले नर्म्मदारोधसि क्लान्तं रजोधूसरकेतु सैन्यं निवेशयामास ॥ ४२

अन्वयः । अथ उपरिष्टात् भ्रमद्भिःभ्रमरैः प्राक्सूचितान्तःसलिलप्रवेशः निर्धौतदानामलगण्डभित्तिः वन्यो गजः सरित्तः उन्ममज्ज ॥ ४३

उपकार्य्यासु राजयोग्येषु पटभवनादिषु । 'सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका' इति अमरवचनव्याख्याने क्षीरस्वामी—उपक्रियते उपकरोति वा पटमण्डपं राजसदनमिति । रचिताः उपचाराः शयनादयः येषु ते तथोक्ताः, जानपदानां जनपदेभ्य आगतानाम् उपदाभिः उपायनैः वन्याः वने भवाः इतरे येषां ते वन्येतराः अवन्या इत्यर्थः । 'न बहुव्रीहौ' इति सर्वनामसंज्ञानिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । तस्य मनुजेन्द्रसूनोः अजस्य मार्गे निवासाः वासनिकाः उद्यानानि आक्रीडाः । 'पुमानाक्रीड उद्यानम्' इत्यमरः । तानि एव विहाराः विहारस्थानानि तत्कल्पाः . तत्सदृशाः इत्यर्थः ईषदसमाप्ताविति कल्पप्प्रत्ययः । बभूवुः । ४१

विलङ्घिताध्वा अतिक्रान्तमार्गः सः अजः, सीकरार्द्रैः शीतलैरित्यर्थः । मरुद्भिः वातैः आनर्त्तिताः कम्पिताः नक्तमालाः चिरविल्वाख्यवृक्षभेदाः । 'चिरविल्वो नक्तमालः करजश्च करञ्जके' इत्यमरः । यस्मिन् तस्मिन् निवेशार्हे इत्यर्थः । नर्म्मदायाः रोधसि रेवाया तीरे, क्लान्तं श्रान्तं रजोभिः धूसराः केतवः ध्वजाः यस्य तत् सैन्यं निवेशयामास ॥ ४२

अथ उपरिष्टात् ऊर्द्धम् । उपर्य्युपरिष्टादिति निपातः । भ्रमद्भिः मदलोभादिति भावः भ्रमरैः प्राक् उन्मज्जनात् पूर्वं सूचितः ज्ञापितः अन्तःसलिले प्रवेशः यस्य सः तथोक्तः निर्धौतदाने क्षालितमदे अतएव अमले गण्डभित्ती यस्य सः तथोक्तः । "दानं गजमदे त्यागे," इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । "प्रशंसावचनैश्च" इति समासः भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ—'मतल्लिकोद्घमिश्राः स्युः प्रकाण्डश्च भित्तयः" इति । भित्तिः प्रदेशो वा । 'भित्तिः प्रदेशे कुड्येऽपि" इति विश्वः । निर्धौतदाना अमला गण्डभित्तिः यस्य इति वा । वन्यः गजः, सरित्तः नर्म्मदायाः सकाशात् पञ्चम्यास्तसिल्प्रत्ययः । उन्ममज्ज उत्थितः ॥ ४३

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्ध्वरेखाशबलेन शंसन् दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन् बृहतस्तरङ्गान् वार्य्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीड़ितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्द्दिनश्रीः ॥ ४७

अन्वयः । (कथंभूतः ?) निःशेषविक्षालितधातुनापि नीलोर्ध्वरेखाशबलेन अश्म-विकुण्ठितेन दन्तद्वयेन ऋक्षवतस्तटेषु वप्रक्रियां शंसन् ॥ ४४

अन्वयः । संहारविक्षेपलघुक्रियेण हस्तेन सशब्दं बृहतस्तरङ्गान् भिन्दन् तीराभिमुखः स गजः वार्य्यर्गलाभङ्गे प्रवृत्त इव बभौ ॥ ४५

अन्वयः । शैलोपमः सः शैवलमञ्जरीणां जालानि उरसा कर्षन् पश्चात् तटम् उत्ससर्प, पूर्वं तदुत्पीड़ितवारिराशिः सरित्प्रवाहः तटम् उत्ससर्प ॥ ४६

अन्वयः । तस्य एकनागस्य कपोलभित्त्योः जलावगाहक्षणमात्रशान्ता मददुर्द्दिनश्रीः वन्येतरानेकपदर्शनेन पुनः दिदीपे ॥ ४७

कथम्भूतो गजः ? निःशेषविक्षालितधातुना अपि धौतगैरिकादिना अपि नीलाभिः ऊर्द्धाभिः रेखाभिः तटाभिघातजनिताभिः शबलेन कर्वुरेण । 'चित्रं किर्म्मीरकल्माषशबलै-ताश्च कर्वुरे' इत्यमरः । अश्मभिः पाषाणैः विकुण्ठितेन कुण्ठीकृतेन, दन्तद्वयेन ऋक्ष-वान् नाम कश्चित् तवत्यः पर्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीड़ाम् उत्खातकेलिमित्यर्थः । "उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीड़ा निगद्यते" इति शब्दार्णवः । शंसन् कथयन् सूचयन् इत्यर्थः । शुभक्रम् ॥ ४४

संहारविक्षेपयोः सङ्कोचनप्रसारणयोः लघुक्रियेण क्षिप्रव्यापारेण । "लघुक्षिप्रमरं द्रुतम्" इत्यमरः । हस्तेन शुण्डादण्डेन । 'हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपि" इति विश्वः । सशब्दं सघोषं बृहतः तरङ्गान् भिन्दन् विदारयन् तीराभिमुखः स गजः, वारी गजबन्धनस्थानम् । "वारी तु गजबन्धनी" इति यादवः । वार्य्याः अर्गलायाः विष्कम्भस्य भङ्गे भञ्जने प्रवृत्तः इव, बभौ ॥ ४५

शैलोपमः सः गजः शैवलमञ्जरीणां जालानि वृन्दानि उरसा कर्षन् पश्चात् तटम् उत्ससर्प । पूर्वं तेन गजेन उत्पीड़ितः नुन्नः वारिराशिः यस्य सः सरित्प्रवाहः तटम् उत्ससर्प ॥ ४६

तस्य एकनागस्य एकाकिनः गजस्य कपोलभित्त्योः जलावगाहेन क्षणमात्रं शान्ता निवृत्ता

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम्।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः॥ ४८

स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्य्यस्तरथं क्षणेन।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार॥ ४९

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान् कुमारः।
निवर्त्तयिष्यन् विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः॥ ५०

अन्वयः। सप्तच्छदक्षीरकटुप्रवाहम् असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्राः विलङ्घिताधोरणतीव्रयत्ना विमुखा बभूवुः॥ ४८

अन्वयः। सः छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्य्यस्तरथं रामापरित्राणविहस्तयोधं सेनानिवेशं क्षणेन तुमुलं चकार॥ ४९

अन्वयः। वन्यः करी नृपतेः अवध्य इति श्रुतवान् कुमारः आपतन्तं तं निवर्त्तयिष्यन् अतएव नात्यायतकृष्टशार्ङ्गः सन् विशिखेन कुम्भे जघान॥ ५०

मददुर्दिनश्रीः मदवर्षलक्ष्मीः, वन्येतरेषां ग्राम्याणाम् अनेकपानां द्विपानां दर्शनेन प्र... द्विदीपे ददृशे॥ ४७

सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत् कटुः सुरभिः प्रवाहः प्रसारः यस्य तम्। "कटुस्ति... कषायास्तु सौरभ्येऽपि प्रकीर्त्तिताः" इति यादवः। असह्यं तदीयं मदम् आघ्राय, सेनागजेन्द्राः, विलङ्घितः तिरस्कृतः आधोरणानां हस्तिपकानां तीव्रः महान् यत्नः यैः ते तथोक्ताः सन्तः। "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः। विमुखाः पराङ्मुखाः बभूवुः॥ ४८

सः गजः, छिन्नाः बन्धाः यैः ते छिन्नबन्धाः द्रुताः पलायिताः युगं वहन्तीति युग्याः या... यस्मिन् सः चासौ शून्यश्च तं, भग्नाः अक्षाः रथावयवाः दारुविशेषाः। "अक्षो रथस्याव... पाशकेऽप्यक्षमिन्द्रियम्" इति शाश्वतः। येषां ते भग्नाक्षाः अतएव पर्य्यस्ताः पतिताः र... यस्मिन् तं रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ताः व्याकुलाः। 'विहस्तव्याकुलौ स...' इत्यमरः। योधाः यस्मिन् तं सेनानिवेशं शिविरं क्षणेन तुमुलं सङ्कुलं चकार॥ ४९

नृपतेः राज्ञः वन्यः करी अवध्यः इति श्रुतवान् शास्त्रात् ज्ञातवान् कुमारः, आपतन्तम् अधिधावन्तं तं गजं निवर्त्तयिष्यन् न तु प्रहरिष्यन्, अतएव नात्यायतम् अनतिदीर्घं य... स्यात्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। कृष्टशार्ङ्गः: ईषदाकृष्टचापः स... विशिखेन बाणेन कुम्भे जघान। अत्र चाहुः—"लक्ष्मीकामो युद्धादन्यत्र करिवधं... कुर्य्यात्, इयं हि श्रीयै करिणः" इति। अतएव युद्धादन्यत्रेति जीवनार्थमेव वधस्य... क्षतम्॥ ५०

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्त्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१
अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्द्धितोरःस्थलतारहारः ॥ ५२
मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३
स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगात् शैत्यं हि यत् सा प्रकृतिर्जलस्य ॥ ५४

अन्वयः। स विद्धमात्रः किल नागरूपम् उत्सृज्य तद्विस्मितसैन्यदृष्टः सन् स्फुरत्प्रभामण्डलमध्यवर्त्ति कान्तं व्योमचरं वपुः प्रपेदे ॥ ५१

अन्वयः। अथ प्रभावोपनतैः कल्पद्रुमोत्थैः पुष्पैः कुमारम् अवकीर्य्य दशनप्रभाभिः संवर्द्धितोरःस्थलतारहारः वाग्मी (सः) उवाच ॥ ५२

अन्वयः। अस्मि (अहं) अवलेपमूलात् मतङ्गशापात् मतङ्गजत्वम् अवाप्तवान्, मां प्रियदर्शनस्य गन्धर्वपतेस्तनुजं प्रियंवदं (नाम) अवेहि ॥ ५३

अन्वयः। सः महर्षिः, प्रणतेन मया अनुनीतः सन् पश्चात् मृदुताम् अगच्छत् तथाहि जलस्य उष्णत्वम् अग्न्यातपसंप्रयोगात्, यत् शैत्यं, सा प्रकृतिः ॥ ५४

सः गजः, विद्धमात्रः ताड़ितमात्रः किल न तु प्रहृतः तथापि नागरूपं गजशरीरम् उत्सृज्य, तेन वृत्तान्तेन विस्मितैः तद्विस्मितैः सैन्यैः दृष्टः सन्, स्फुरतः प्रभामण्डलस्य मध्यवर्त्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१

अथ प्रभावेन उपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारम् अजम् अवकीर्य्य अभिहत्य दशनप्रभाभिः संवर्द्धिताः उरःस्थले ये तारहाराः स्थूलमुक्ताहाराः ते येन सः तथोक्तः। वाचोऽस्य सन्तीति वाग्मी वक्ता। 'वाचो ग्मिनिः' इति ग्मिनिः। सः पुरुषः उवाच ॥ ५२

अवलेपमूलात् गर्व्वहेतुकात्। "अवलेपस्तु गर्वे स्यालेपने दूषणेऽपि च" इति विश्वः। मतङ्गस्य मुनेः शापात् मतङ्गजत्वम् अवाप्तवान् अस्मि, मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेः गन्धर्वराजस्य तनूजं पुत्रम्। 'स्त्रियां मूर्त्तिस्तनूस्तनूः' इत्यमरः। "तन्वादेर्व्वा ऊङ्" इति केचित्। प्रियंवदं प्रियंवदाख्यम् अवेहि जानीहि। प्रियं वदतीति प्रियंवदः। "प्रियवशे वदः खच्" इति खच्प्रत्ययः ॥ ५३

सः महर्षिः च प्रणतेन मया अनुनीतः सन् पश्चात् मृदुतां शान्तिम् अगच्छत्। तथाहि— जलस्य उष्णत्वम् अग्नेः आतपस्य वा सम्प्रयोगात् सम्पर्कात् न तु प्रकृत्या उष्णत्वं, यत् शैत्यं

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत् स तपोनिधिर्माम् ॥ ५५

संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात् स्वपदोपलब्धिः॥ ५६

सम्मोहनं नाम सखे ! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्नचारिहिंसा विजयश्च हस्ते ॥ ५७

अलं ह्रिया मां प्रति यन्मुहूर्त्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८

अन्वयः । इक्ष्वाकुवंशप्रभवः अजः यदा ते कुम्भम् अयोमुखेन भेत्स्यति, तदा (त्वं) स्वेन वपुर्महिम्ना संयोक्ष्यसे इति सः तपोनिधिः माम् अवोचत् ॥ ५५

अन्वयः । चिरप्रार्थितदर्शनेन सत्त्ववता त्वया अहं शापात् संमोचितः, (अहं) भवतः प्रतिप्रियं न कुर्यां चेत् तदा मे स्वपदोपलब्धिः, वृथा स्यात् हि ॥ ५६

अन्वयः । हे सखे ! प्रयोगसंहारविभक्तमन्त्रम् सम्मोहनं नाम गान्धर्वम् मम अस्त्रम् आदत्स्व यतः प्रयोक्तुः अरिहिंसा न, विजयश्च हस्ते ( भवति ) ॥ ५७

अन्वयः । मां प्रति ह्रिया अलम्, यत् त्वं प्रहरन्नपि मुहूर्त्तं दयापरः अभूः, तस्मात् उपच्छन्दयति मयि त्वया प्रतिषेधरौक्ष्यं न प्रयोज्यम् ॥ ५८

सा प्रकृतिः स्वभावः । विधेयप्राधान्यात् सेति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्ति स्वभावो न क्रोधः इत्यर्थः ॥ ५४

इक्ष्वाकुवंशः प्रभवो यस्य सः अजः, यदा ते कुम्भम् अयोमुखेन लोहाग्रेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषः महिम्ना पुनः संयोक्ष्यसे सङ्गंस्यसे इति सः तपोनिधिः माम् अवोचत् ॥ ५५

चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वया, अहं शापात् संमोचितः प्रापितः, भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेत्, मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः "पदव्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । वृथा स्यात् हि । तदुक्तम्—"प्रत्युपकारं कर्त्तुमशक्तस्य जीवितान्मरणं वरम्" इति ॥ ५६

हे सखे ! सखिशब्देन समप्राणतोक्ता । यथोक्तम्—"अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ।" इति । प्रयोगसंहारयोः विभक्तमन्त्रम् गान्धर्वं गन्धर्वदेवताकं संमोह्यते अनेन इति संमोहनं नाम मम अस्त्रम् आदत्स्व गृहाण यतः अस्त्रात् प्रयोक्तुः अस्त्रप्रयोगिणः अरिहिंसा न च, विजयश्च हस्ते हस्तगतो भवतीत्यर्थः ॥ ५७

वधलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत् तत्राह—अलमिति । किञ्च, मां प्रति ह्रिया प्रहारनिमित्तया अलम् । कुतः ? यत् यतः हेतोः त्वं मां प्रहरन् अपि

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ ५९

एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान् ॥ ६०

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रम्प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१

प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२

अन्वयः। नृसोमः अस्त्रवित् सः तथेति सोमोद्भवायाः सरितः पवित्रं पयः उपस्पृश्य उदङ्मुखः सन् निगृहीतशापात् तस्मात् अस्त्रमन्त्रं जग्राह ॥ ५९

अन्वयः। एवम् अध्वनि दैवयोगात् अचिन्त्यहेतु सख्यम् आसेदुषोः तयोः एकः चैत्ररथप्रदेशान्, अपरः सौराज्यरम्यान् विदर्भान् ययौ ॥ ६०

अन्वयः। नगरोपकण्ठे तस्थिवांसं तं तदागमारूढगुरुप्रहर्षः क्रथकैशिकेन्द्रः प्रवृद्धोर्मिः ऊर्मिमाली चन्द्रमिव प्रत्युज्जगाम ॥ ६१

अन्वयः। एनम् अग्रयायी नीचैः सन् पुरं प्रवेश्य अर्पितश्रीः ( वैदर्भः ) तथा उपाचरत् यथा तत्र समवेतो जनः वैदर्भम् आगन्तुम्, अजं गृहेशं मेने ॥ ६२

दयापरः कृपालुः अभूः, तस्मात् उपच्छन्दयति प्रार्थयमाने मयि त्वया प्रतिषेधः परिहारः सः एव रौक्ष्यं पारुष्यं तत् न प्रयोज्यं न कर्त्तव्यम् ॥ ५८

ना सोमः चन्द्रः इव नृसोमः उपमितसमासः। 'सोम ओषधि चन्द्रयोः' इति शाश्वतः। पुरुषश्रेष्ठ इत्यर्थः। अस्त्रवित् अस्त्रज्ञः सः अजः, तथेति, सोमः उद्भवः यस्याः सा तस्याः सोमोद्भवायाः सरितः नर्मदायाः। "रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः। पवित्रं पयः उपस्पृश्य पीत्वा आचम्य इत्यर्थः। उदङ्मुखः सन्, निगृहीतशापात् निवर्त्तितशापात् उपकृतादित्यर्थः। तस्मात् प्रियंवदात् अस्त्रमन्त्रं जग्राह ॥ ५९

एवम् अध्वनि मार्गे दैवयोगात् दैववशात् अचिन्त्यहेतु अनिवार्य्यहेतुकं सख्यं सखित्वम्। "सख्युर्यः" इति यप्रत्ययः। आसेदुषोः प्राप्तवतोः तयोः मध्ये एकः गन्धर्वः, चैत्ररथस्य कुवेरोद्यानस्य प्रदेशान्। "अस्योद्यानं चैत्ररथम्" इत्यमरः। अपरः अजः, सौराज्येन राजन्वत्तया रम्यान् विदर्भान् विदर्भदेशान् ययौ ॥ ६०

नगरस्य उपकण्ठे समीपे तस्थिवांसं स्थितं तम् अजं तस्य अजस्य आगमेन आगमनेन आरूढः उत्पन्नः गुरुः प्रहर्षः यस्य सः क्रथकैशिकेन्द्रः विदर्भराजः, प्रवृद्धोर्मिः ऊर्मिमाली समुद्रः चन्द्रम् इव, प्रत्युज्जगाम ॥ ६१

एनम् अजम् अग्रयायी सेवाधर्मेण पुरो गच्छन्नित्यर्थः। नीचैः नम्रः सन् पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्या अर्पितश्रीः तथा तेन प्रकारेण उपाचरत् उपचरितवान् यथा येन प्रका-

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम्॥
रम्यां रघुप्रतिनिधिः स नवोपकार्य्यां
बाल्यात्परामिव दशां मदनोऽध्युवास॥ ६३

तत्र स्वयम्वरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव॥ ६४

अन्वयः। रघुप्रतिनिधिः सः प्रणतैः तस्य अधिकारपुरुषैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां रम्यां नवोपकार्य्याम् मदनः बाल्यात् परां दशामिव अध्युवास॥ ६३

अन्वयः। तत्र स्वयम्वरसमाहृतराजलोकं कमनीयं कन्याललाम लिप्सोः। भावावबोधकलुषा दयितेव, निद्रा चिरेण नयनाभिमुखी बभूव॥ ६४

रेण तत्र पुरे समेतः मिलितः जनः वैदर्भं भोजम् आगन्तुं प्राघुनिकं मेने, अजं गृहपतिं मेने॥ ६२

रघुप्रतिनिधिः रघुकल्पः रघुतुल्य इत्यर्थः। उक्तञ्च दण्डिना सादृश्यवाचकानां "कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि" इति। सः अजः, प्रणतैः नमस्कर्त्तारः कर्त्तरि क्तः। तस्य भोजस्य अधिकारः नियोगः, तस्य पुरुषैः अधिकृतैरित्यर्थः। निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः प्रतिष्ठापितः पूर्णकुम्भः यस्याः तां, स्थापितकलशामित्यर्थः। रम्यां रमणीयां, नवोपकार्य्यां नूतनं राजभवनम्। "उपकार्य्या सद्मन्युपचारचितेऽन्यवत्" इति विश्वः। मदनः बाल्यात् परां शैशवात् अनन्तरामिव, यौवनमिव इत्यर्थः। अध्युवास अधिष्ठितवान् तत्रोषितवानित्यर्थः। "उपान्वध्याङ्वसः" इति कर्म्मत्वम्॥ ६३

तत्र उपकार्य्यायां, स्वयंवरनिमित्तं समाहृतः संमेलितः राजलोकः येन तत्, स्पृहणीयं, कन्याललाम कन्यासु श्रेष्ठम्। "ललामोऽस्त्री ललामापि प्रभावे पुच्छे श्रेष्ठभूषाश्वपुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु"। इति यादवः। लिप्सोःलब्धुमिच्छोः। लभेः सन्प्रत्ययः। अजस्य भावावबोधे पुरुषस्य अभिप्रायपरिज्ञाने कलुषा असमर्था दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। "राजानं कामिनं चौरं प्रविशन्ति प्रजागराः" इति भावः। अभिमुखीशब्दो ङीषन्तः ऊन्तो वा॥ ६४

तं कर्णभूषणनिपीड़ितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम्।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५

रात्रिर्गता मतिमतां वर! मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।
तामेकतस्तव विभर्त्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्य्यपदावलम्बी ॥ ६६

निद्रावशेन भवताप्यनपेक्षमाणा
पर्य्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७

अन्वयः। कर्णभूषणनिपीड़ितपीवरांसं शय्योत्तरच्छदविमर्दकृशाङ्गरागं प्रथितप्रबोधं [त]म् सवयसः उदारवाचः सूतात्मजाः वाग्भिः उषसि प्राबोधयन् ॥ ६५

अन्वयः। हे मतिमतां वर! रात्रिः गता, शय्यां मुञ्च, धात्रा जगतो धूः द्विधैव [वि]भक्ता, तव गुरुः विनिद्रः सन् ताम् एकतो विभर्त्ति, भवान् तस्याः [अ]परधुर्य्यपदावलम्बी ॥ ६६

अन्वयः। निद्रावशेन भवता पर्य्युत्सुकत्वमपि निशि खण्डिता अबलेव अनपेक्षमाणा [लक्ष्]मीः येन विनोदयति स चन्द्रोऽपि दिगन्तलम्बी त्वदाननरुचिं विजहाति ॥ ६७

कर्णभूषणाभ्यां निपीड़ितौ पीवरौ पीनौ अंसौ यस्य तं, शय्यायां उत्तरच्छदस्य उपर्य्या-[स्त]रणवस्त्रस्य विमर्देन घर्षणेन कृशः विमलः अङ्गरागः यस्य तं, न त्वङ्गनासङ्गादिति भावः। [प्र]थितप्रबोधं प्रकृष्टज्ञानं तम् एनम् अजः, सवयसः समानवयस्काः, उदारवाचः प्रगल्भगिरः, [सू]तात्मजाः वन्दिपुत्राः, "वैतालिकाः" इति वा पाठः। "वैतालिका बोधकराः" इत्यमरः। [वा]ग्भिः स्तुतिपाठैः उषसि प्राबोधयन् प्रबोधयामासः ॥ ६५

हे मतिमतां वर! निर्द्धारणे षष्ठी। रात्रिर्गता, शय्यां मुञ्च विनिद्रो भव इत्यर्थः। [वि]निद्रत्वे फलमाह—धात्रेति। धात्रा ब्रह्मणा जगतो धूः भारः। "धूः स्याद्यानमुखे [भा]रे" इति यादवः। द्विधा एव द्वयोरेव इत्यर्थः। एवकारः तृतीयनिषेधार्थः। विभक्ता [न]नु विभज्य स्थापिता खलु। ततः किमत आह—तां धुरम् एकतः एककोटौ तव गुरुः [विभ]क्ता, विनिद्रः सन्, विभर्त्ति। तस्याः धुरः भवान्, धुरं वहतीति धुर्य्यः भारवाही तस्य [प]दं वहनस्थानम् अपरं यत् धुर्य्यपदं तदवलम्बी ततो विनिद्रो भव इत्यर्थः। न ह्युभय-[भा]रम् एको वहतीति भावः ॥ ६६

चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते। निद्रा-

तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे।
प्रस्यन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम्॥ ६८

अन्वयः। तत् वल्गुना युगपत् तावत् उन्मिषितेन द्वे (अपि) सद्यः परस्परतुलाम् अधिरोहताम् (के द्वे?) अन्तःप्रस्यन्दमानपरुषेतरतारं तव चक्षुः अन्तःप्रचलित... पद्मञ्च (इति द्वे)॥ ६८

वशेन निद्राधीनेन स्वान्तरासङ्गोऽच ध्वन्यते। भवत पर्य्युत्सुकत्वम् अपि लक्ष्म... इत्यर्थः। "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। अपिशब्दः... रागस्यानुपेक्ष्यत्वद्योतनार्थः। निशि खण्डिता भर्त्तुरन्यासङ्गज्ञानकलुषिता ... नायिका इव। "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके। ... माणा अविचारयन्ती सती, उपेक्षमाणा इत्यर्थः। लक्ष्मीः, येन चन्द्रेण सह... सदृशत्वादिति भावः। विनोदयति विनोदं करोति। विनोदशब्दात् ... तदाचष्टे' इति णिच् प्रत्ययः। सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानि... स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन्, अस्तं गच्छन्नित्यर्थः। अतएव ता... विजहाति त्वन्मुखसादृश्यं त्यजतीत्यर्थः। अतो निद्रां विहाय तां लक्ष्मीमनन्य... गृहाण इति भावः। अथवा ('ह्यनवेक्षमाणा' इति पाठे) निद्रावशेन भवता ... माणा अनिरीक्ष्यमाणा। कर्मणि शानच्। लक्ष्मीः प्रयोजककर्त्री येन चन्द्रेण... पर्य्युत्सुकत्वं त्वद्विरहवेदनाम्। "कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत्" इति... विनोदयति निरासयतीति योजना। शेषं पूर्ववत्। नाथस्तु अर्थोपपत्ति... पक्षमुपेक्षिष्ट॥ ६७

ननु सूत्रे उत्सुकशब्दस्य योगेन तृतीया स्यात् नतु पर्य्युत्सुकः ... औत्सुक्यवर्द्धनाय परीत्युपसर्गः व्यवह्रियते अतः उपसर्गयोगेन अर्थान्तराभावः।

तत् तस्मात् लक्ष्मीपरिग्रहणात् वल्गुना मनोज्ञेन "वल्गुस्थाने मनोज्ञे च वल्ग... मन्यवत्" इति विश्वः। युगपत् तावत् उन्मिषितेन युगपदेव उन्मीलितेन ... परस्परतुलाम् अन्योऽन्यसादृश्यम् अधिरोहतां प्राप्नुताम्। प्रार्थनायां लोट्। ... प्रस्यन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत् तथोक्तम्। "... कनीनिका' इत्यमरः। तव चक्षुः, अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च। ... न्मेषे सति सम्पूर्णसादृश्यलाभ इति भावः॥ ६८

वृन्तात् श्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७०

यावत् प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर ! याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१

अन्वयः । विभातवायुः स्वाभाविकं ते मुखमारुतस्य सौरभ्यं परगुणेन ईप्सुरिव अनोकहानाम् श्लथं पुष्प वृन्तात् हरति अरुणांशुभिन्नैः सरसिजैः संसृज्यते ॥ ६९

अन्वयः । ताम्रोदरेषु तरुपल्लवेषु पतित निर्धौतहारगुलिकाविशदं हिमाम्भः लब्धपरभागतया अधरोष्ठे सदशनार्चिः त्वदीयं लीलास्मितमिव आभाति ॥ ७०

अन्वयः । प्रतापनिधिः भानुः यावत् न आक्रमते, अह्नाय अरुणेन तावत् तमो निरस्तम्, हे वीर ! त्वयि आयोधनाग्रसरतां याते सति तव गुरुः स्वयं रिपून् उच्छिनत्ति किं वा ॥ ७१

विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यं तादृक् सौगन्ध्यमित्यर्थः । परगुणेन अन्यदीयगुणेन सांक्रामिकगन्धेन इत्यर्थः । ईप्सुः आप्तुमिच्छुः इव । "आपज्ञप्यृधामीत्" इति ईकारादेशः । अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात् पुष्पबन्धनात् । "वृन्तं प्रसवबन्धनम्" इत्यमरः । हरति आदत्ते । अरुणांशुभिन्नैः अरुणकिरणोद्बोधितैः सरसि जातैः सरसिजैः कमलैः सह । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । संसृज्यते सङ्गच्छते । सृजेर्दैवादिकात् कर्त्तरि लट् ॥ ६९

ताम्रोदरेषु अरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयः तद्वत् विशदं हिमाम्भः लब्धपरभागतया लब्धोत्कर्षतया । "परभागो गुणोत्कर्षे" इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिः दन्तकान्तिसहितं लीलास्मितम् इव आभाति शोभते ॥ ७०

प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति । "आङ उद्गमने" इत्यात्मनेपदम् । भानावनुदित एवेत्यर्थः । अह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः ।

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगाद्-
भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३

अन्वयः । उभयपक्षविनीतनिद्रास्ते स्तम्बेरमाः मुखरशृङ्खलकर्षिणः ( सन्तः ) जहति, येषां दन्तकोशाः तरुणारुणरागयोगात् भिन्नाद्रिगैरिकतटा इव विभान्ति ॥

अन्वयः । हे वनजाक्ष ! दीर्घेषु पटमण्डपेषु नियमिताः वनायुदेश्याः अमी निद्रां विहाय पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वक्त्रोष्मणा मलिनयन्ति ॥
अरुणेनानूरुणा "सूर्यसूतोऽरुणोऽनूरुः" इत्यमरः । तमो निरस्तम् । तथाहि । त्वयि आयोधनेषु युद्धेषु । "युद्धमायोधनं जन्यम्" इत्यमरः । अग्रसरतां पुरःसरति, तव गुरुः पिता रिपून् स्वयमुच्छिनत्ति किं वा नोच्छिनत्त्येवेत्यर्थः । न खलु एवन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः ॥ ७१

उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीता अपगता निद्रा येषां ते उभयपक्षविनीत... अत्र समासविषये उभशब्दस्थाने उभयशब्दप्रयोग एव साधुरित्यनुसन्धेयम् । यथाह ... 'उभादुदात्तो नित्यमिति नित्यग्रहणस्येद प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो मा ... उभयशब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति" इति । मुखराः ... च्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्ते तव स्तम्बे रमन्ते इति ... रमा हस्तिनः । "स्तम्बकर्णयो रमिजपोः" इत्यच्प्रत्ययः "हस्तिसूचकयोः" । इति ... "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । इभः स्तम्बेरमः पद्मी" इत्यमरः । ... जहति त्यजन्ति । येषां स्तम्बेरमाणां दन्ताः कोशाः इव दन्तकोशाः दन्तकुट्मलाः ... रुणरागयोगात् बालार्कारुणसम्पर्कात् हेतोः भिन्नाद्रिगैरिकतटाः इव विभान्ति, ... इव भान्ति इत्यर्थः ॥ ७२

हे वनजाक्ष ! नीरजाक्ष ! "वनं नीरं वनं सत्त्वम्" इति शाश्वतः । दीर्घेषु पट... नियमिताः बद्धाः वनायुदेश्याः वनायुदेशे भवाः । "पारसीका वनायुजाः" इति ... अमी वाहाः अश्वा निद्रां विहाय पुरोगतानि लेह्यानि आस्वाद्यानि सैन्धवशिलाश... "सैन्धवोऽस्त्री सितशिवं माणिमन्थश्च सिन्धुजे" इत्यमरः । वक्त्रोष्मणा मलिनयन्ति ... कुर्वन्ति । उक्तञ्च सिद्धयोगसंग्रहे—"पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । मोहविबन्धघ्नं लवणं सैन्धवं वरम्" इत्यादि ॥ ७३

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः ॥ ७४

इति विरचितवाग्भिर्बन्दिपुत्त्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५

अन्वयः। म्लानपुष्पोपहारः विरलभक्तिः भवति, प्रदीपाः स्वकिरणपरिवेषोद्भेदशून्याः भवन्ति, अयं मञ्जुवाक् पञ्जरस्थः ते शुकः त्वत्प्रबोधप्रयुक्तां नः गिरम् अनुवदति च ॥ ७४

अन्वयः। इति विरचितवाग्भिः वन्दिपुत्त्रैः विगतनिद्रः कुमारः सपदि तल्पम् उज्झाञ्चकार कथमिव मदपटु निनदद्भिः बोधितः राजहंसैः बोधितः सुप्रतीकः सुरगजः गाङ्गं सैकतमिव ॥ ७५।

म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिः विरलरचनः भवति। प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्य उद्भेदेन स्फुरणेन शून्याः भवन्ति निस्तेजस्का भवन्तीत्यर्थः। अपि च अयं मञ्जुवाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधनिमित्तं प्रयुक्ताम् उच्चारितां न अस्माकं गिरं वाणीम् अनुवदति अनुकृत्य वदतीत्यर्थः। इत्थं प्रभातलिङ्गानि वर्त्तन्ते अतः प्रबोद्धव्यमिति ॥ ७४

विरलभक्तिरित्यत्र बहुव्रीहिसमासेन पुम्वद्भावो विधीयते, दृढ़भक्तिरिति ज्येष्ठे दृढ़-भक्तिर्भवान्याः इत्यादौ श्लिष्टप्रियादिष्वित सूचन पूर्व्वपदस्य पुम्वद्भावो न दुर्घटः भक्तिशब्दस्य यत्र कर्म्मसाधनत्वं सूच्यते तत्रैव पुम्वद्भावो दुर्घटः, यत्र भक्तिशब्दस्य भावसाधनत्वं तत्रैव सुकरः स्यादिति भावः।

इति इत्थं विरचितवाग्भिः वन्दिपुत्त्रैः वैतालिकैः। पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम्। सपदि विगतनिद्रः कुमारः तल्पं शय्यां "तल्पं शय्याट्टदारेषु" इत्यमरः। उज्झाञ्चकार विससर्ज। "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः। कथमिव ? मदेन पटु मधुरं निनदद्भिः राजहंसैः बोधितः सुप्रतीकाख्यः सुरगजः ईशानदिग्गजः, गङ्गायाः इदं गाङ्गं सैकतं पुलिनम् इव। 'तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्' इत्यमरः। "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः। सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भ-वादित्यनुसन्धेयम् ॥७५

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा।
कुशलविरचितानुकूलवेशः
क्षितिपसमाजमगात् स्वयंवरस्थम्॥ ७६

अन्वयः। अथ अञ्चिताक्षिपक्ष्मा (सः कुमारः) शास्त्रदृष्टं दिवसमुखोचितं
अवसाय्य कुशलविरचितानुकूलवेशः स्वयंवरस्थं क्षितिपसमाजम् अगात्॥ ७६

अथ उत्थानानन्तरम् अञ्चितानि चारूणि अक्षिपक्ष्माणि यस्य सः अजः शास्त्रे
अवगतं दिवसमुखोचितं प्रातःकालोचितं विधिम् अनुष्ठानम् अवसाय्य समाप्य।
न्तात् ल्यप्। कुशलैः प्रसाधनदक्षैः विरचितः अनुकूलः स्वयंवरोचितः वेशः नेपथ्यं
तथोक्तः सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहम् अगात् अगमत्। “इणो गा
इति गादेशः॥ पुष्पिताग्रावृत्तमेतत्। तल्लक्षणं—“अयुजि नयुगरेफतो यकारो
नजौ जरगाश्च पुष्पिताग्रा” इति॥ ७६

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि—
कालिदासकृतौ रघुवंशे महाकाव्ये
अजस्वयंवराभिगमनो नाम
पञ्चमः सर्गः।

---

# षष्ठः सर्गः।

—:०*०:—

स तत्र मञ्चेषु मनोज्ञवेशान् सिंहासनस्थानुपचारवत्सु।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान् नरलोकपालान्॥ १
रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम्॥ २
वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम्।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह॥ ३

अन्वयः। सः तत्र, उपचारवत्सु मञ्चेषु सिंहासनस्थान् मनोज्ञवेशान् वैमानिकानां मरुताम् आकृष्टलीलान् नरलोकपालान् अपश्यत्॥ १

अन्वयः। रतेः गृहीतानुनयेन ईश्वरेण प्रत्यर्पितस्वाङ्गं कामम् इव काकुत्स्थम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं बभूव॥ २

अन्वयः। असौ कुमारः वैदर्भनिर्दिष्टं मञ्चम्, क्लृप्तेन सोपानपथेन, मृगराजशावः शिलाविभङ्गैः तुङ्गं नगोत्सङ्गम् इव आरुरोह॥ ३

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे॥

सः अजः, तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु, पर्यङ्केषु सिंहासनस्थान् मनोज्ञवेशान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम्। "चरति" इति ठक्प्रत्ययः। मरुताम् अमराणाम्। "मरुतौ पवनामरौ" इत्यमरः। आकृष्टलीलान् गृहीतसौभाग्यान् आकृष्टमरुल्लीलानित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। नरलोकं पालयन्तीति नरलोकपालाः। कर्मण्यण् इत्यण्प्रत्ययः। तान् भूपालान् अपश्यत्। सर्गेऽस्मिन्नुपजातिः छन्दः॥ १

"रतिः स्मरप्रियायाञ्च रागे च सुरते स्मृता" इति विश्वः। रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। ईश्वरेण हरेण, प्रत्यर्पितस्वाङ्गं कामम् इव, स्थितं काकुत्स्थम् अजम्, आलोकयतां नृपाणां मनः, इन्दुमतीनिराशं वैदर्भीनिस्पृहम् बभूव। इन्दुमती सत्पतिमेनम् विहाय नास्मान् वरिष्यतीति निश्चिक्युरित्यर्थः। सर्वातिशयसौन्दर्यमस्य इति भावः॥ २

असौ कुमारः, वैदर्भेण भोजेन, निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं, क्लृप्तेन सुविहितेन सोपानपथेन, मृगराजशावः सिंहपोतः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। शिलानां विभङ्गैः भङ्गीभिः तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव, आरुरोह॥ ३

परार्द्ध्यवर्णास्तरणोपपन्नमासेदिवान् रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५

तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६

अन्वयः । परार्द्ध्यवर्णास्तरणोपपन्नं रत्नवत् आसनम् आसेदिवान् सः मयूरपृष्ठाश्रयिणा गुहेन भूयिष्ठाम् उपमेयकान्तिः आसीत् ॥ ४

अन्वयः । तासु राजपरम्परासु श्रिया पयोमुचां पङ्क्तिषु विद्युता सहस्रधा, विभक्तः प्रभाविशेषोदयदुर्निरीक्ष्यः आत्मा व्यरुचत् ॥ ५

अन्वयः । महार्हासनसंस्थितानाम् उदारनेपथ्यभृतां तेषां मध्ये, कल्पद्रुमाणां पारिजात इव सः रघुसूनुः एव धाम्ना रराज ॥ ६

परार्द्ध्याः श्रेष्ठाः वर्णाः नीलपीतादयः यस्य तेन आस्तरणेन कम्बलादिना उपपन्नं रत्नवत् रत्नखचितम् आसनं सिंहासनम् आसेदिवान् अधिष्ठितवान् स अजः, मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । "सेनानीरग्निभूर्गुहः" इत्यमरः । भूयिष्ठम् अत्यर्थम् उपमेयकान्तिः आसीत् । मयूरस्य विचित्ररूपत्वात् तत्साम्यं रत्नासनस्य तद्द्वारा च तदारूढस्याजस्य गुहेनोपमा प्रतीयतेति भावः ॥ ४

तासु राजपरम्परासु, श्रिया लक्ष्म्या कर्त्र्या, पयोमुचां मेघानां पङ्क्तिषु विद्युता इव सहस्रधा विभक्तः, तरङ्गेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः । प्रभाविशेषस्य उदयेन आविर्भावेन, दुर्निरीक्ष्यः दुर्दर्शनः आत्मा श्रियः स्वरूपं व्यरुचत् व्यराजत । "द्युतादिभ्यो लुङि" इति परस्मैपदं, द्युतादित्वादङ्प्रत्ययः । तस्मिन् समये प्रत्येकं सर्वे लक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः ॥ ५

महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेपथ्यभृताम् उज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये, कल्पद्रुमाणां मध्ये पारिजातः इव सुरद्रुमविशेषः इव । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः । रघुसूनुः एव धाम्ना तेजसा रराज । भूम्नेति पाठे अतिशयेनेत्यर्थः । अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचनः, उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षणे प्रयुक्त इत्यनुसन्धेयम् । कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः ॥ ६

नेत्रव्रजाः पौरजनस्य तस्मिन् विहाय सर्व्वान् नृपतीन् निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७
अथ स्तुते वन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
सञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८
पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्य्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९
मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं पतिंवरा कॢप्तविवाहवेशा ॥ १०

अन्वयः । पौरजनस्य नेत्रव्रजाः सर्व्वान् नृपतीन् विहाय, रेचितपुष्पवृक्षाः द्विरेफाः मदोत्कटे वन्ये गन्धद्विपे इव तस्मिन् निपेतुः ॥ ७

अन्वयः । अथ अन्वयज्ञैः वन्दिभिः सोमार्कवंश्ये नरदेवलोके स्तुते ( सति ) सञ्चारिते अगुरुसारयोनौ धूपे वैजयन्तीः समुत्सर्पति (सति) पुरोपकण्ठोपवनाश्रयाणां कलापिनाम् उद्धतनृत्यहेतौ प्रध्मातशङ्खे मङ्गलार्थे तूर्य्यस्वने परितः दिगन्तान् मूर्च्छति ( सति ) कॢप्तविवाहवेशा पतिंवरा कन्या मनुष्यवाह्यं परिवारशोभि चतुरस्रयानम् अध्यास्य मञ्चान्तरराजमार्गं विवेश ॥ ८ ॥ ९ ॥ १०

पौरजनस्य नेत्रव्रजाः सर्वान् नृपतीन् विहाय, तस्मिन् अजे निपेतुः, स एव सर्वोत्कर्षेण ददृशे इत्यर्थः । कथमिव ? मदोत्कटे मदेन उद्भिन्नगण्डे निर्भरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे,रेचिताः रिक्तीकृताः पुष्पाणां वृक्षाः यैः ते त्यक्तपुष्पवृक्षा इत्यर्थः । द्विरेफाः भृङ्गाः इव । द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसम्भावनार्थं कृतम् ॥ ७

अथेति, पुरेति, मनुष्येति च त्रिभिर्विशेषकम् । अथ अन्वयज्ञैः राजवंशाभिज्ञैः वन्दिभिः स्तुतिपाठकैः । 'वन्दिनः स्तुतिपाठकाः' इत्यमरः । सोमार्कवंश्ये सोमसूर्य्यप्रभवे नरदेवलोके राजसमूहे स्तुते सति, विवेशेत्युत्तरेण सम्बन्धः, एवमुत्तरत्रापि योज्यम् । सञ्चारिते समन्तात् प्रचारिते अगुरुसारः योनिः कारणं यस्य तस्मिन् धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति ॥ ८

किञ्च, पुरस्य उपकण्ठे समीपे उपवनानि आश्रयो येषां तेषां कलापिनां बर्हिणाम् उद्धतनृत्यहेतौ मेघध्वनिसादृश्यात् ताण्डवकारणे प्रध्माताः पूरिताः शङ्खाः यत्र तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्य्यस्वने वाद्यघोषे परितः सर्वतः दिगन्तान् मूर्च्छति व्याप्नुवति सति ॥९

पतिं वृणोतीति पतिंवरा स्वयंवरा । "अथ स्वयंवरा पतिंवरा च वर्य्या च, इत्यमरः । संज्ञायां भृतॄवृजि" इत्यादिना खच्प्रत्ययः । कॢप्तविवाहवेशा कन्या इन्दुमती, मनुष्यैः वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं चतुरस्रवाहनं शिविकाम् अध्यास्य आरुह्य मञ्चान्तरे मञ्चमध्ये यः राजमार्गः तं विवेश ॥ १०

तस्मिन् विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु॥ ११

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः॥ १२

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार॥ १३

अन्वयः। नेत्रशतैकलक्ष्ये कन्यामये तस्मिन् विधातुः विधानातिशये नरेन्द्राः अन्तः[करणैः] निपेतुः, आसनेषु केवलं देहैः स्थिता॥ ११

अन्वयः। तां प्रति अभिव्यक्तमनोरथानाम् महीपतीनां प्रणयाग्रदूत्यः [विविधाः] शृङ्गारचेष्टाः, पादपानां प्रवालशोभाः इव बभूवुः॥ १२

अन्वयः। कश्चित् कराभ्याम् उपगूढनालम् आलोलपत्राभिहतद्विरेफम् [रजोभिः] अन्तः परिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार॥ १३

नेत्रशतानाम् एकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन् विधातुः विधा[नातिशये] सृष्टिविशेषे नरेन्द्राः अन्तःकरणैः निपेतुः, आसनेषु देहैः केवलं देहैरेव स्थिताः [...] विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः। अन्तःकरणकर्तृके निपतने नरेन्द्राणां क[र्तृत्व]व्यपदेशः आदरातिशयार्थः॥ ११

ताम् इन्दुमतीं प्रति अभिव्यक्तमनोरथानां प्ररूढाभिलाषाणां महीपतीनां प्रणयाग्रदूत्यः। प्रणयः प्रार्थना प्रेम वा। "प्रणयास्त्वमी। विस्रम्भयाच्ञाप्रेमाणः" [इति...] प्रणयेषु अग्रदूत्यः प्रथमदूतिकाः। प्रणयप्रकाशकत्वसाम्यात् दूतीत्वव्यपदेशः। [विविधाः] शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां प्रवालशोभाः पल्लवसम्पदः इव बभूवुः [...] अत्र शृङ्गारलक्षणं रससुधाकरे—'विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः। नीता [...] रसत्वं रतिः शृङ्गार उच्यते। रतिः इच्छाविशेषः। तच्चोक्तं तत्रैव—"यूनोरन्यो[न्य...] स्थायिनीच्छा रतिः स्मृता" इति। चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते। तत्रैवोक्ताः "भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये। तेऽनुभावा इति ख्याताः [...] क्षेपस्मितादयः। ते चतुर्द्धा चित्तगात्रवागबुद्ध्यारम्भसम्भवाः॥" इति। तत्र [...] सम्भवान् चेष्टाशब्दोक्तानतुभावान् कश्चिदित्यादिभिः श्लोकैर्वक्ष्यति। शृङ्गाराभास[...] वैव प्रतिपादनात्। तदुक्तम् 'एकत्रैवानुरागश्चेत्तिर्यक्शब्दगतोऽपि वा। योषि[...] शक्तिश्चेद्रसाभासस्त्रिधा मतः॥ इति॥ १२

"शृङ्गारचेष्टा विविधा बभूवुः" इत्युक्तं, ता एव दर्शयति, कश्चिदिति। कश्चि[त्...] कराभ्यां पाणिभ्याम् उपगूढनालं गृहीतनालम् आलोलैः चञ्चलैः पत्रैः अभिहताः द्वि[...] द्विरेफाः भ्रमराः येन तत् तथोक्तं रजोभिः परागैः अन्तः परिवेषं मण्डलं बध्नाति [...]

विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः ॥ १४

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किञ्चित्समावर्जितनेत्रशोभः ।
तिर्य्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ १५

निवेश्य वामं भुजमासनार्द्धे तत्सन्निवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥ १६

अन्वयः । अपर विलासी अंसात् विस्रस्तं रत्नानुविद्धाङ्गदकोटिलग्नं प्रालम्बम् उत्कृष्य साचीकृतचारुवक्त्रः ( सन् ) यथावकाशं निनाय ॥ १४

अन्वयः । ततः अन्यः किञ्चित्समावर्ज्जितनेत्रशोभः ( सन् ) आकुञ्चिताग्राङ्गुलिना तिर्य्यग्विसंसर्पिनखप्रभेण पादेन हैमं पीठम् विलिलेख ॥ १५

अन्वयः । कश्चित् आसनार्द्धे वामं भुजं निवेश्य तत्सन्निवेशात् अधिकोन्नतांसः विवृत्तत्रिकभिन्नहारः ( सन् ) सुहृत्समाभाषणतत्परः अभूत ॥ १६

...शेषवन्ति लीलारविन्दं भ्रमयाञ्चकार । करस्थलीलारविन्दवत त्वयाहं भ्रमयितव्य इति ...भिप्रायः । हस्तघूर्णकोऽयमपलक्षणक इति इन्दुमत्यभिप्रायः ॥ १३

...विलसनशीलः विलासी । 'वौ कषलसकत्थस्रम्भः' इति घिणुन्प्रत्ययः । अपरः राजा, ...ात् विस्रस्तं रत्नानुविद्धम् रत्नखचितं यत् अङ्गदं केयूरं तस्य कोटिलग्नं प्रालम्बम् ऋजु-...नीं स्रजम् । प्रालम्बमृजुलम्बिस्यात् कण्ठात्" इत्यमरः । "प्रावारम्" इति पाठे ...त्तरीयवस्त्रम् । उत्कृष्य उद्धृत्य साचीकृतं तिर्य्यक्कृतं चारुवक्त्रं येन सः तथोक्तः सन्, ...वकाशं स्वस्थानं निनाय प्रावारोत्क्षेपणच्छलेनाहं त्वामेवं परिरप्स्ये इति नृपाभिप्रायः । ...ीयं किञ्चिदङ्गऽस्ति ततोऽयं प्रावृणुत इति इन्दुमत्यभिप्रायः ॥ १४

ततः पूर्वोक्तात् अन्यः अपरः राजा किञ्चित् समावर्जितनेत्रशोभः ईषदवाक्पातित-...शोभः सन् आकुञ्चिताः आभुग्नाः अग्राङ्गुलयो यस्य तेन तिर्य्यग्विसंसर्पिण्यः नखप्रभाः ...तेन च पादेन, हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गुली-...कुञ्चनेन त्वं मत्समीपमागच्छ इति नृपाभिप्रायः । भूमिविलेखकोऽयमपलक्षणक इति ...त्याशयः । भूमिविलेखनन्तु लक्ष्मीविनाशहेतुः ॥ १५

कश्चित् राजा वामं भुजम् आसनार्द्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्सन्निवेशात् तस्य ...भुजस्य सन्निवेशात् संस्थापनात् अधिकोन्नतः अंसः वामांसः एव यस्य सः तथोक्तः सन्, ...ते परावृत्ते त्रिके चिकप्रदेशे भिन्नहारः लुण्ठितहारः सन् । "पृष्ठवंशाधरे त्रिकम्" ...रः । सुहृत् समाभाषणतत्परः अभूत, वामपार्श्ववर्त्तिनेव मित्रेण सम्भाषितुं प्रवृत्त ...। अतएव त्रिकवलितत्वं घटते । त्वया वामाङ्गे निवेशितया सह एवं वार्त्ता ...मि इति नृपाभिप्रायः । परं दृष्ट्वा पराङ्मुखोऽयं तन् कार्य्यकर्त्ता इति इन्दुमत्यभि-...॥ १६

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः।
प्रियानितम्बोचितसन्निवेशै र्विपाटयामास युवा नखाग्रैः ॥१७॥
कुशेशयाताम्रतलेन कश्चित् करेण रेखाध्वजलाञ्छनेन।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥१८॥
कश्चिद्यथाभागमवस्थितेऽपि स्वसन्निवेशाद् व्यतिलङ्घिनीव।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥१९॥
ततो नृपाणां श्रुतवृत्तवंशा पुंवत्-प्रगल्भा प्रतिहाररक्षी।
प्राक् सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत् सुनन्दा ॥२०॥

अन्वयः। अन्यः युवा, प्रियानितम्बोचितसन्निवेशैः नखाग्रैः, विलासिनी... पत्रम् आपाण्डुरं केतकबर्हं विपाटयामास ॥ १७

अन्वयः। कश्चित् कुशेशयाताम्रतलेन रेखाध्वजलाञ्छनेन करेण, रत्ना... अनुविद्धान् अक्षान् सलीलम् उदीरयामास ॥ १८

अन्वयः। कश्चित् यथाभागम् अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनि किरीटे... वज्रांशुगर्भाङ्गुलिरन्ध्रम् एकं करं व्यापारयामास ॥ १९

अन्वयः। ततः नृपाणां श्रुतवृत्तवंशा पुंवत् प्रगल्भा प्रतिहाररक्षी सुनन्दा... मगधेश्वरस्य सन्निकर्षं, नीत्वा कुमारीमवदत् ॥ २०

अन्यः युवा, विलासिन्याः प्रियायाः विभ्रमार्थं दन्तपत्रं दन्तपत्रमूलम् आपाण्डुरं... बर्हं केतकदलम्। "दलेऽपि बर्हम्" इत्यमरः। प्रियानितम्बे उचितसन्निवेशैः... निक्षेपणैः नखाग्रैः विपाटयामास विदारयामास। अहं तव नितम्बे एवं... दास्यामि इति नृपाशयः। तृणच्छेदकवत् पत्रपाटकोऽयमपलक्षणक इति इन्दुमत्यभिप्रायः...
कश्चित् राजा, कुशेशयं शतपत्रम् इव आताम्रं तलं यस्य तेन "शतपत्रं... इत्यमरः। रेखारूपः ध्वजः लाञ्छनं यस्य तेन करेण अङ्गुलिषु भवानि... ऊर्मिकाः। "अङ्गुलीयकमूर्मिका" इत्यमरः। "जिह्वामूलाङ्गुलेश्छः" इति... रत्नानाम् अङ्गुलीयानि तेषां प्रभया अनुविद्धान् व्याप्तान् अक्षान् पाशान्। "... पाशकाश्च ते" इत्यमरः। सलीलम् उदीरयामास उत्क्षिपेव। अहं तव... इति नृपाभिप्रायः। अक्षधातुर्य्यं कापुरुषोऽयम् इति इन्दुमत्यभिप्रायः। "... इति श्रुतिनिषेधात् ॥ १८

कश्चित् यथाभागं यथास्थानम्। अवस्थिते चलिते इव किरीटे वज्राणां... नाम् अंशवः गर्भे येषां तानि अङ्गुलिरन्ध्राणि यस्य तम् एकं करं व्यापारयामास... बन्धम शिरसि स्थितामपि त्वां भारं न मन्ये इति नृपाभिप्रायः। शिरसि... ब्रणक इति इन्दुमत्यभिप्रायः ॥ १९

ततः अनन्तरं नृपाणां श्रुतवृत्तवंशा श्रुतनृपवृत्तवंशेत्यर्थः। सापेक्षत्वे...

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ॥ २१
कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२
क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान् मन्दारशून्यानलकांश्चकार ॥ २२

अन्वयः । असौ शरणोन्मुखानां शरण्यः, अगाधसत्त्वः, मगधप्रतिष्ठः, प्रजारञ्जनलब्ध-
र्णः, यथार्थनामा परन्तपः नाम राजा ॥ २१

अन्वयः । अन्ये सहस्रशः नृपाः कामं सन्तु, भूमिम् अनेन राजन्वतीम् आहुः,
क्षत्रताराग्रहसङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिष्मती ( भवति ) ॥ २२

अन्वयः । अध्वराणां क्रियाप्रबन्धात् अजस्रम् आहूतसहस्रनेत्रः अयं शच्याः अलकान्
चिरं पाण्डुकपोललम्बान् मन्दारशून्यान् चकार ॥ २२

लासः । प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या । प्रतिहारं रक्षतीति प्रतिहाररक्षी
रपालिका, कर्मण्यण्प्रत्ययः । "टिड्ढाणञ्" इत्यादिना ङीप् । प्राक् प्रथमं कुमारीम्
दुमतीं मगधेश्वरस्य सन्निकर्षम् समीपं नीत्वा, पुंवत् पुंसा तुल्यम् । "तेन तुल्यं क्रिया
द्वतिः" इति वतिप्रत्ययः । अवदत् ॥ २०

असौ राजा. असाविति पुरोवर्त्तिनो निर्देशः, एवमुत्तरत्रापि द्रष्टव्यम् । शरणोन्मुखानां
रक्षार्थिनां शरण्यः शरणे रक्षणे साधुः । "तत्र साधुः" इति यत्प्रत्ययः । शरणं भवितु-
र्हः शरण्य इति नाथनिरुक्तिर्निर्मूलैव । अगाधसत्त्वः गम्भीरस्वभावः "सत्त्वं गुणे पिशाचादौ
बले द्रव्यस्वभावयोः" इति विश्वः । मगधाः जनपदाः, तेषु प्रतिष्ठा आस्पदम् यस्य सः
मगधप्रतिष्ठः । "प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः । प्रजारञ्जने लब्धवर्णः विचक्षणः । यद्वा
प्रजारञ्जनेन लब्धोत्कर्षः. परान् शत्रून् तापयतीति परन्तपः परन्तपाख्यः । "द्विषत्परयो-
स्तापेः" इति खच्प्रत्ययः । "खचि ह्रस्वः" इति ह्रस्वः, "अरुर्द्विषदजन्तस्य मुम्" इति
मुमागमः । नामेति प्रसिद्धौ, यथार्थनामा शत्रुसन्तापनादिति भावः ॥ २५
अन्ये नृपाः, काम सहस्रशः सन्तु, भूमिम् अनेन राजन्वतीं शोभनराजवतीम् आहुः,
एतादृक् कश्चिदस्तीत्यर्थः । "सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्" इत्यमरः ।
"राजन्वान् सौराज्ये" इति निपातनात् साधुः । तथाहि, नक्षत्रैः अश्विन्यादिभिः ताराभिः
साधारणैः ज्योतिभिः ग्रहैः भौमादिभिश्च सङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिरस्या
अस्तीति ज्योतिष्मती, नान्येन ज्योतिषेत्यर्थः ॥ २२
अयं परन्तपः अध्वराणां क्रतूनां क्रियाप्रबन्धात् अनुष्ठानसातत्यात् अविच्छिन्नादनुष्ठाना-
दित्यर्थः । अजस्रं नित्यम् आहूतसहस्रनेत्रः सन्, चिरं शच्याः अलकान् पाण्डुकपोलयोः

अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४

एवं तयोक्ते तमवेक्ष्य किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला ।
ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥ २५

तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम् ॥ २६

जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ।

अन्वय। वरेण्येन अनेन गृह्यमाणं पाणिं चेत् इच्छसि, प्रवेशे प्रासाद[illegible] संश्रितानां पुष्पपुराङ्गनानां नेत्रोत्सवं कुरु ॥ २४

अन्वयः। तया (सुनन्दया) एवम् उक्ते (सति), तन्वी (इन्दु[illegible]) (राजानम्) अवेक्ष्य, किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला अभाषमाणा (सती) [illegible] प्रणामक्रियया एव एनं प्रत्यादिदेश ॥ २५

अन्वयः। वेत्रग्रहणे नियुक्ता सा (सुनन्दा) एव, समीरणोत्था [illegible] मानसराजहंसीं पद्मान्तरम् इव, तां राजसुतां राजान्तरं निनाय ॥ २६

अन्वयः। (सुनन्दा) एनाम् (इन्दुमतीम्) जगाद च, सुराङ्गनाप्रार्थि[illegible] सूत्रकारैः विनीतनागः किल अयम् अङ्गनाथः भूमिगतः (सन्) अपि ऐन्द्रं पदं भु[illegible]

[illegible]लान् सखान। पचायच्। मन्दारैः कल्पद्रुमकुसुमैः शून्यान् चकार। प्रोषि[illegible] हि केशसंस्कारं न कुर्व्वन्ति "प्रोषिते मलिना कृशा" इति, क्रीड़ां शरीरसंस्कारं स[illegible] -दर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥' इति च स्मरणात् ॥ २[illegible]

वरेण्येन वरणीयेन। वृणोतेरौणादिक एण्यप्रत्ययः। अनेन राज्ञा गृह्यमा[illegible] इच्छसि चेत् पाणिग्रहणमिच्छसि चेदित्यर्थः। प्रवेशे प्रवेशकाले प्रासादवाताय[illegible] -राजभवनगवाचस्थितानां पुष्पपुराङ्गनानां पाटलीपुराङ्गनानां नेत्रोत्सवं कुरु। [illegible] तासामपि दर्शनीया भविष्यसीति भावः ॥ २४

एवं तया सुनन्दया उक्ते सति तं परन्तपम् अवेक्ष्य, किञ्चित् विस्रंसि[illegible] दूर्वाचिह्ना मधूकमाला गुड़पुष्पमाला यस्याः सा। "मधूकस्तु गुड़पुष्पमधुद्रुमौ" [illegible] वरणे शिथिलप्रयत्ना इति भावः। तन्वी इन्दुमती, एनं नृपम् अभाषमाणा [illegible] -रूपया प्रणामक्रियया एव प्रत्यादिदेश परिजहार ॥ २५

सा एव न अन्या चित्तज्ञत्वादिति भावः। वेत्रग्रहणे नियुक्ता दौवारिकी [illegible] राजसुतां राजान्तरम् अन्यराजानं निनाय। नयतिर्द्विकर्मकः। कथमिव? [illegible] वातोत्पन्ना तरङ्गलेखा ऊर्म्मिपङ्क्तिः मानसे सरसि या राजहंसी तां पद्मान्तरमि[illegible]

एनाम् इन्दुमतीं जगाद। किमिति? अयम् अङ्गनाथः अङ्गदेशाधीश्वरः, सुरा[illegible]

अनेन पर्य्यासयताश्रुविन्दून् मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनेव हाराः॥ २८

निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि! तयोस्तृतीया॥ २९

अथाङ्गराजादवतार्य्य चक्षुर्याहीति जन्यामवदत् कुमारी।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः॥ ३०

अन्वयः। अनेन, शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमान् अश्रुविन्दून् पर्य्यासयता (सता), उन्मुच्य, सूत्रेण विना हाराः प्रत्यर्पिताः इव॥ २८

अन्वयः। श्रीः च सरस्वती च (एतत्) द्वयम् निसर्गभिन्नास्पदम् (अपि) अस्मिन् (नृपे) एकसंस्थं (भवति) कल्याणि! कान्त्या सूनृतया गिरा च योग्या त्वम् एव तयोः तृतीया (भव)॥ २९

अन्वयः। अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य, याहि इति जन्याम् अवदत्। असौ (अङ्गराजः) काम्यः न, (इति) न, सा (इन्दुमती) च सम्यक्द्रष्टुं न वेद, (इति) न, (किन्तु) लोकः हि भिन्नरुचिः॥ ३०

...र्थिता कामिता यौवनश्रीर्यस्य सः तथोक्तः। पुरा किलैनमिन्द्रसाहाय्यार्थमिन्द्रपुरगामिनम् ...कामयन्त अप्सरस इति प्रसिद्धिः। किञ्च सूत्रकारैः गजशास्त्रकृद्भिः पालकादिभिर्महर्षिभिः ...नीतनागः शिक्षितगजः। किलेत्यैतिह्ये। अतएव भूमिगतः अपि ऐन्द्रं पदम् ऐश्वर्य्यं ...भुङ्क्ते भूलोक एव स्वर्गसुखमनुभवतीत्यर्थः। गजाप्सरोदेवर्षिसेव्यत्वम् ऐन्द्रपदशब्दार्थः। ...पुरा किल कुतश्चिच्छापकारणात् भुवमवतीर्णं दिग्गजवर्गमालोक्य स्वयमशक्तैरिन्द्राभ्यनुज्ञया ...आनीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान् वशीकृत्यभुवि सम्प्रदायं प्रावर्त्तयदिति कथा ...श्रूयते॥ २७

...शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमान् अश्रुविन्दून्। 'अस्रमश्रुणि शोणिते' इति ...वैश्वः। पर्य्यासयता प्रस्तारयता भर्तृवधादिति भावः। अनेन अङ्गनाथेन उन्मुच्य आक्षिप्य ...सूत्रेण विना हारा एव प्रत्यर्पिताः। अविच्छिन्नाश्रुविन्दुप्रवर्त्तनादुत्सूत्रहारार्पणमेव कृत-...मिवेत्युत्प्रेक्षा गम्यते॥ २८

निसर्गेति। निसर्गतः भिन्नास्पदं भिन्नाश्रयं सहावस्थानविरोधीत्यर्थः। श्रीश्च सरस्वती ...इति द्वयम् अस्मिन् अङ्गनाथे एकत्र संस्था स्थितिर्यस्य तत् एकसंस्थम् उभयमिह सङ्गत-...मित्यर्थः। हे कल्याणि! "बह्वादिभ्यश्च" इति ङीष्। कान्त्या सूनृतया सत्यप्रियया गिरा च ...योग्या संसर्गार्हा त्वम् एव तयोः श्रीसरस्वत्योः तृतीया। समानगुणयोर्युवयोर्दाम्पत्यं युज्यत ...एव इति भावः। दक्षिणनायकत्वञ्चास्य ध्वन्यते। तदुक्तम्—"तुल्योऽनेकत्र दक्षिणः" ...इति॥ २९

अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य अपनीय इत्यर्थः। जन्यां मातृसखीं

ततः परं दुष्प्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ।
निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै॥ ३१
अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति॥
अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि।
कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि॥

अन्वयः। ततः प्रतिहारभूमौ नियुक्ता (सुनन्दा), द्विषद्भिः दुष्प्रसहं विशेष नृपं, नवोत्थानम् इन्दुम् इव, इन्दुमत्यै निदर्शयामास॥ ३१

अन्वयः। उदग्रबाहुः विशालवक्षाः तनुवृत्तमध्यः अयम् अवन्तिनाथः, त्वष्ट्रा चक्र आरोप्य यत्नोल्लिखितः उष्णतेजा इव विभाति॥ ३२

अन्वयः। समग्रशक्तेः अस्य प्रयाणेषु, अग्रेसरैः वाजिभिः उत्थितानि रजांसि, सा शिखामणीनां प्रभाप्ररोहास्तमयं कुर्वन्ति॥ ३३

सुनन्दां याहि गच्छ इति अवदत्। "यातेति जन्यामवदत्" इति पाठे वहन्तीति जन्याः वधूबन्धवः तान् यात गच्छत इति अवदत्। "जन्या मातृसखी जन्यौ वरवधूज्ञातिप्रियतुल्यहितेऽपि च" इति पद्यद्वये विश्वः। अथवा वधूभृत्याः। "भृत्यस्यापि नवोढायाः" इति केशवः। संज्ञायां जन्या इति यत् निपातः। यदवाह वृत्तिकारः—"जनीं वधूं वहन्तीति जन्याः जामातुः इति। यच्चामरः—"जन्याः स्निग्धाः वरस्यैव इति, तत्सर्वमुपलक्षणार्थमिति। न चायमङ्गराजनिषेधी दृश्यदोषान्नापि द्रष्टृदोषादित्याह नेत्यादिना। असौ काम्यः कमनीयः न इति न, किन्तु काम्य एवेत्यर्थः। सा कुमारी द्रष्टुं न वेद इति न, वेद इत्यर्थः। किन्तु लोकः जनः भिन्नरुचिः हि, रुचिरं कस्मैचिन्न रोचते किं कुर्मो न रुच्यां नियन्तुं शक्यत इति भावः॥ ३०

ततः अनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी। "स्त्री द्वार्द्वारं इत्यमरः। द्विषद्भिः शत्रुभिः दुष्प्रसहं दुःसहं शूरमित्यर्थः, विशेषेण दृश्यं दर्शनीय मित्यर्थः। परम् अन्यम् नृपं नवोत्थानं नवोदयम् इन्दुम् इव इन्दुमत्यै निदर्शयामास

उदग्रबाहुः दीर्घबाहुः विशालवक्षाः तनुवृत्तमध्यः कृशवर्तुलमध्यः अयं राजा अवन्तिदेशाधीश्वरः, त्वष्ट्रा विश्वकर्मणा। भर्तुस्ते जोवेगमसहमानया दुहित्रा प्रार्थितेन इति शेषः। चक्रभ्रमं चक्राकारम् शस्त्रोत्तेजनयन्त्रम्। "भ्रमः भ्रान्तौ कुन्दाख्ये शिल्पियन्त्रके" इति विश्वः। आरोप्य यत्नेन उल्लिखितः उष्णतेजा इव विभाति। अत्र मार्कण्डेयः, विश्वकर्मा तदनुज्ञातः शाकद्वीपे विवस्वता। तस्य तेजः शातनायोपचक्रमे" ॥ इति ॥ ३२

समग्रशक्तेः शक्तित्रयसम्पन्नस्य अस्य अवन्तिनाथस्य प्रयाणेषु जैत्रयात्रासु

असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४
अनेन यूना सह पार्थिवेन रम्भोरु ! कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु विहर्त्तुमुद्यानपरम्परासु ॥ ३५
तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्य्या कुमुद्वती भानुमतीव भावम् ॥ ३६

अन्वयः । असौ महाकालनिकेतनस्य चन्द्रमौलेः अदूरे वसन् ( सन् ), तमिस्रपक्षे अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान् निर्विशति ॥ ३४

अन्वयः । ( हे ) रम्भोरु ! अनेन यूना पार्थिवेन सह सिप्रातरङ्गानिलकम्पितासु उद्यानपरम्परासु विहर्त्तुं ते मनसः रुचिः कच्चित् ? ॥ ३५

अन्वयः । उत्तमसौकुमार्य्या सा, कुमुद्वती भानुमतिं इव, अभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के तस्मिन् भावं न बबन्ध ॥ ३६

वाजिभिः अश्वैः उत्थितानि रजांसि, सामन्तानां समन्तात् भवानां राज्ञां ये शिखामणयः चूडामणयः तेषां प्रभाप्ररोहास्तमयं तेजोऽङ्कुरनाशं कुर्वन्ति । मासीरैरेवास्य प्रणवः परालीयन्त इति भावः ॥ ३३

असौ अवन्तिनाथः, महाकालं नाम स्थानविशेषः तदेव निकेतनं स्थानं यस्य यस्य चन्द्रमौलेः ईश्वरस्य अदूरे समीपे वसन्, अत एव हेतोः तमिस्रपक्षे कृष्णपक्षे अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान् रात्रीः निर्विशति अनुभवति किल, नित्यज्योत्स्नाविहारलभ्यमेतस्यैव नान्यस्येति भावः ॥ ३४

रम्भे कदलीस्तम्भौ इव ऊरू यस्याः सा रम्भोरूः तस्याः सम्बोधनं हे रम्भोरु ? । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः नदीत्वाद्ध्रस्वः । यूना अनेन पार्थिवेन सह सिप्रा नाम तत्रत्या नदी तस्याः तरङ्गाणाम् अनिलेन कम्पितासु उद्यानानां परम्परासु पङ्क्तिषु, विहर्त्तुं ते तव मनसः रुचिः कच्चित् ? स्पृहास्ति किमित्यर्थः । "अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्" इत्यमरः ॥ ३५

उत्तमसौकुमार्य्या उत्कृष्टाङ्गमार्दवा सा इन्दुमती, अभिद्योतितानि उल्लसितानि बन्धव एव पद्मानि येन तस्मिन्, प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन् अवन्तिनाथे । कुमुद्वती । "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्प्रत्ययः । भानुमति इव भावं चित्तं न बबन्ध, न तत्रानुरागमकरोदित्यर्थः बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च रूपणं राज्ञः सूर्य्यसाम्यार्थम् ॥ ३६

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम्।
विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा॥

संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्त्तवीर्यः॥

अकार्य्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात्।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता॥

अन्वयः। सुनन्दा, तामरसान्तराभां गुणैः अनूनां विधातुः ललितां सृष्टिं तां अनूपराजस्य अग्रतः विधाय भूयः जगाद॥ ३७

अन्वयः। संग्रामनिर्विष्टसहस्रबाहुः अष्टादशद्वीपनिखातयूपः अनन्यसाधारण[राजशब्दः] योगी कार्त्तवीर्य्यः बभूव किल॥ ३८

अन्वयः। विनेता यः, अकार्य्यचिन्तासमकालम् एव चापधरः (सन्) [पुरस्तात्] प्रादुर्भवन् प्रजानाम् अन्तःशरीरेषु अपि अविनयं प्रत्यादिदेश॥ ३९

सुनन्दा, तामरसान्तराभां पद्मोदरतुल्यकान्तिं कनकगौरीमित्यर्थः। गुणैः [अनूनाम्] अधिकामित्यर्थः। शोभनाः दन्ताः यस्याः सा सुदती। 'वयसि दन्तस्य दतृ' इति [आ]देशः, 'उगितश्च' इति ङीप्। तां प्रकृतां प्रसिद्धां वा विधातुः ललितां सृष्टिं निर्माणं स्त्रियमित्यर्थः। अनुगता आपो येषु ते अनूपाः नाम देशाः। "ऋक्पू[रब्धूः]पथामानक्षे" इत्यप्रत्ययः समासान्तः "ऊदनोर्देशे" इत्यूदादेशः। तेषां राज्ञः अ[नूपराजस्य] अग्रतः विधाय व्यवस्थाप्य भूयः पुनः जगाद॥ ३७

संग्रामेषु युद्धेषु निर्विष्टाः अनुभूताः सहस्रं बाहवः यस्य सः तथोक्तः युद्धादन्य[त्र द्विबाहुरेव] एव दृश्यते इत्यर्थः। अष्टादशसु द्वीपेषु निखाताः स्थापिताः यूपा येन सः तथो[क्तः] क्रतुयाजी सार्वभौमश्चेति भावः। नरायुजादिसर्व्वभूतरञ्जनात् अनन्यसाधारणो [राजशब्दो] यस्य सः तथोक्तः, योगी ब्रह्मविद्वानित्यर्थः। स किल भगवतो दत्तात्रेयाल्लब्ध[योग इति] प्रसिद्धिः। कृतवीर्य्यस्य अपत्यं पुमान् कार्त्तवीर्य्यः नाम राजा बभूव किल इति। [कार्त्तवीर्य्यस्य] महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते दृश्यते॥ ३८

विनेता शिक्षकः यः कार्त्तवीर्य्यः अकार्य्यस्य असत्कार्य्यस्य चिन्तायाः अहं [चौर्य्यादि] करिष्यामीति बुद्ध्याः समकालम् एककालम् एव यथा तथा पुरस्तात् अग्रे चापध[रः प्रादुर्]भवन् सन्, प्रजानाम्। "प्रजा स्यात् सन्ततौ जने" इत्यमरः। अन्तःकरणेषु। [अन्तःशरीर]शब्देन इन्द्रियं लक्ष्यते। अविनयमपि प्रत्यादिदेश मानसापराधमपि निवारयामास। अन्ये तु वाक्कायापराधमात्रप्रतिकर्त्तार इति भावः॥ ३९

ज्यावन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥ ४०

तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१

आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।
धारां शितां रामपरश्वधस्य सम्भावयत्युत्पलपत्रसाराम् ॥ ४२

अन्वयः । ज्यावन्धनिष्पन्दभुजे विनिःश्वसद्वक्त्रपरम्परेण निर्ज्जितवासवेन लङ्केश्वरेण आ प्रसादात् यस्य कारागृहे उषितम् ॥ ४०

अन्वयः । आगमवृद्धसेवी प्रतीप इति एषः भूपतिः तस्य अन्वये जातः । येन श्रियः, संश्रयदोषरूढं स्वभावलोला इति अयशः प्रमृष्टम् ॥ ४१

अन्वयः । यः आयोधने कृष्णगतिं सहायम् अवाप्य क्षत्रियकालरात्रिं रामपरश्वधस्य शितां धाराम् उत्पलपत्रसारां सम्भावयति ॥ ४२

ज्यायाः मौर्व्याः बन्धेन बन्धनेन निष्पन्दाः निश्चेष्टाः भुजाः यस्य तेन विनिःश्वसती अपबन्धापराधात् दीर्घं निःश्वसती वक्त्रपरम्परा दशमुखी यस्य तेन निर्जितवासवेन इन्द्रविजयिना। अतेन्द्रादयोऽप्यनेन जितप्राया एवेति भावः। लङ्केश्वरेण दशास्येन यस्य कार्त्तवीर्य्यस्य कारागृहे बन्धनागारे। "कारा स्याद्बन्धनालये" इत्यमरः। आ प्रसादात् अनुग्रहपर्य्यन्तम् उषितं स्थितम्। नपुंसके भावे क्तः। एतत्प्रसाद एव तस्य मोचोपायो न तु यत्नमिति भावः॥ ४०

आगमवृद्धसेवी श्रुतवृद्धसेवी प्रतीप इति ख्यात इति शेषः। एषः भूपतिः, तस्य कार्त्तवीर्य्यस्य अन्वये वंशे जातः। येन प्रतीपेन संश्रयस्य आश्रयस्य पुंसः दोषैः व्यसनादिभिः रूढम् उत्पन्नं श्रियः सम्बन्धि स्वभावलोला प्रकृतिचञ्चला इत्येवं रूपम् अयशः दुष्कीर्त्तिः प्रमृष्टं निरस्तम्। दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापलप्रवादो मूढजनपरिकल्पित इत्यर्थः। अयन्तु दोषराहित्यान्न कदाचिदपि त्यज्येत इति भावः॥ ४१

यः प्रतीपः, आयोधने युद्धे कृष्णगतिं कृष्णवर्त्मानम् अग्निं सहायम् अवाप्य क्षत्रियाणां कालरात्रिं संहाररात्रिमित्यर्थः। रामपरश्वधस्य जामदग्न्यपरशोः "द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः" इत्यमरः। शितां तीक्ष्णां धारां मुखम्। "खड्गादीनाञ्च निशितमुखे धारां प्रकीर्त्तिता" इति विश्वः। उत्पलपत्रस्य सार इव सारो यस्याः तां तथाभूतां सम्भावयति मन्यते। एतन्नगरजिगीषयागतान् रिपून् स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा. दहन्ति च तथागताः अतएव इति भारते कथानुसन्धेया॥ ४२

अस्याङ्कलक्ष्मीर्भव दीर्घबाहोः माहिष्मतीवप्रनितम्बकाञ्चीम्।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः॥
तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितिशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्य्याप्तकलो नलिन्याः॥ ४४
सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्त्तिम्।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी॥ ४५
नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण।
सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः॥

अन्वयः। माहिष्मतीवप्रनितम्बकाञ्चीं जलवेणिरम्यां रेवां प्रासादजालैः प्रेक्षि(तुं)
(ते) कामः अस्ति दीर्घबाहोः अस्य अङ्कलक्ष्मीः भव॥ ४३

अन्वयः। शरत्प्रमृष्टाम्बुधरोपरोधः पर्य्याप्तकलः शशी नलिन्याः इव सः
प्रकामं प्रियदर्शनः अपि तस्याः रुचये न बभूव॥ ४४

अन्वयः। लोकान्तरगीतकीर्त्तिम् आचारशुद्धोभयवंशदीपं शूरसेनाधिपतिं
उद्दिश्य, शुद्धान्तरक्ष्या सा कुमारी जगदे॥ ४५

अन्वयः। यज्वा एषः पार्थिवः नीपान्वयः शान्तं सिद्धाश्रमम् एत्य सत्त्वैरि(व)
आश्रित्य परस्परेण नैसर्गिकः अपि विरोधः उत्ससृजे॥ ४६

दीर्घबाहोः अस्य प्रतीपस्य अङ्कलक्ष्मीः भव; एनं वृणीष्वेत्यर्थः, अनेनायं विप(ुल)
ध्वन्यते। माहिष्मती नाम अस्य नगरी तस्याः वप्रः प्राकारः एव नितम्बः तत्र
रसनाभूतां जलानां वेण्यः प्रवाहेण रम्याम्। "ओघः प्रवाहो वेणी च" इति ह
रेवां नर्मदां प्रासादजालैः गवाक्षैः। "जालं समूह आनायो गवाक्षजारकावपि" इ
प्रेक्षितुं कामः इच्छा अस्ति यदि॥ ४३

प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सः अपि दर्शनीयोऽपीत्यर्थः। सः क्षिती(शः)
प्रमृष्टाम्बुधरोपरोधः निरस्तमेघावरणः पर्य्याप्तकलः पूर्णकलः शशी नलिन्या इ(व)
इन्दुमत्याः रुचये न बभूव, रुचिं नाजीजनदित्यर्थः। लोके भिन्नरुचिरिति भाव(ः)

लोकान्तरे स्वर्गादौ अपि गीतकीर्त्तिम्, आचारेण शुद्धयोः उभयोः वंशयो(ः)
पितृकुलयोः दीपं प्रकाशकम्। उभयवंशेत्यत्रोभयपदस्य वृत्तिनिर्वाहः! शूरसेनानां दे(शानाम्)
अधिपतिं सुषेणं नाम नृपतिम् उद्दिश्य अभिसन्धाय शुद्धान्तरक्ष्या अन्तःपुरपा(लिका)
कर्म्मण्यण् "टिड्ढाणञ्" इति ङीप्। सा कुमारी जगदे॥ ४५

यज्वा विधिवदिष्टवान्। "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः। एषः पार्थिव(ः)
नाम अन्वयोऽस्येति नीपान्वयः नीपवंशजः। यं सुषेणम् आश्रित्य गुणैः ज्ञानमौ(न)

यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव सन्निविष्टा ।
हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७
यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।
कलिन्दकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति ॥ ४८
त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥ ४९

अन्वयः । हिमांशोः इव नयनाभिरामा कान्तिः तस्य आत्मगेहे सन्निविष्टा, अविषह्यं तेजः ( तु ) हर्म्याग्रसंरूढतृणाङ्कुरेषु रिपुमन्दिरेषु ॥ ४७

अन्वयः । यस्य वारिविहारकाले अवरोधस्तनचन्दनानां प्रक्षालनात्, मथुरां गता अपि कलिन्दकन्या, गङ्गोर्मिसंसक्तजला इव भाति ॥ ४८

अन्वयः । यः तार्क्ष्यात् त्रस्तेन यमुनौकसा कालियेन विसृष्टं वक्षःस्थलव्यापिरुचं मणिं दधानः ( सन् ) सकौस्तुभं कृष्णं ह्रेपयति इव ॥ ४९

शान्तं प्रसन्नं सिद्धाश्रमम् ऋष्याश्रमम् एत्य प्राप्य, सत्त्वैः गजसिंहादिभिः प्राणिभिरिव, नैसर्गिकः स्वाभाविकः अपि परस्परेण विरोधः उत्ससृजे त्यक्तः ॥ ४६

हिमांशोः कान्तिः चन्द्रकिरणः इव नयनयोः अभिरामा यस्य सुषेणस्य कान्तिः शोभा आत्मगेहे स्वभवने सन्निविष्टा संक्रान्ता । अविषह्यं विसोढुमशक्यं तेजः प्रतापस्तु हर्म्याग्रेषु धनिकमन्दिरप्रान्तेषु । "हर्म्यादि धनिनां वासः" इत्यमरः । संरूढाः तृणाङ्कुराः येषां तेषु शून्येषु इत्यर्थः । रिपुमन्दिरेषु शत्रुनगरेषु । 'मन्दिरं नगरे गृहे' इति विश्वः । सन्निविष्टम् । स्वजनाह्लादको द्विषन्तपश्च इति भावः ॥ ४७

यस्य सुषेणस्य वारिविहारकाले जलक्रीडासमये अवरोधानाम् अन्तःपुराङ्गनानां स्तनेषु चन्दनानां मलयजानां प्रक्षालनात् हेतोः, कलिन्दः नाम शैलः तत्कन्या यमुना । 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः । मथुरा नाम अस्य राज्ञः नगरी तां गता अपि, गङ्गाया विप्रकृष्टापीत्यर्थः । मथुरायां गङ्गाऽभावं सूचयत्यपिशब्दः । कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यत इति वक्ष्यति तत्कथमधुना मथुरासम्भव, इति चिन्त्यम् । मथुरापुरीति शब्दभेदः । ( 'यत्रासाम्येति' इति शुभ्वयोर्मुद्रितपुस्तकेऽधिकं दृश्यते )। गङ्गायाः भागीरथ्याः ऊर्मिभिः संसक्तजला इव भाति धवलचन्दनसंसर्गात् प्रयागादन्यत्राप्येव गङ्गासक्तेव भातीत्यर्थः । "सितासिते हि गङ्गायमुने" इति वस्त्राएषः ॥ ४८

तार्क्ष्यात् गरुडात् त्रस्तेन, यमुना ओकः स्थानं यस्य तेन कालियेन नाम नागेन विसृष्टं किल अभयदाननिष्कयलेन दत्तं, किलेति ऐतिह्ये, वक्षःस्थलः व्यापिरुचं मणिं दधानः यः सुषेणः सकौस्तुभं कृष्णं विष्णुं ह्रेपयति इव व्रीडयति इव "अतिंह्री" इत्यादिना पुगागमः । कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिरिति भावः ॥ ४९

सम्भाव्य भर्त्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि! यौवनश्रीः॥ ५०
अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि।
कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्द्धनकन्दरासु॥ ५१
नृपं तमावर्त्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव॥ ५२
अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम्।
आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे॥ ५३

अन्वयः। सुन्दरि! अमुं युवानं भर्त्तारं सम्भाव्य मृदुप्रवालोत्तरपुष्पशय्ये चैत्ररथात् अनूने वृन्दावने यौवनश्रीः निर्विश्यताम्॥ ५०

अन्वयः। कान्तासु गोवर्द्धनकन्दरासु अम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि अध्यास्य, प्रावृषि कलापिनां नृत्यं पश्य। ५१

अन्वयः। आवर्त्तमनोज्ञनाभिः अन्यवधूः भवित्री सा सागरगामिनी स्रोतोवहा मार्गवशात् उपेतं महीधरम् इव, तं नृपं व्यत्यगात्॥ ५२

अन्वयः। अथ भुजिष्या अङ्गदाश्लिष्टभुजं सादितशत्रुपक्षं हेमाङ्गदं नाम कलिङ्गनाथम् आसेदुषीम् अबालेन्दुमुखीं बालां बभाषे॥ ५३

युवानम् अमुं सुषेणं भर्त्तारं सम्भाव्य मत्वा पतित्वेनाङ्गीकृत्य इत्यर्थः। मृदुप्रवाल उपरिप्रस्तारितकोमलपल्लवा पुष्पशय्या तस्मिन् तत् तस्मिन्, चैत्ररथात् कुबेरोद्यानात् वृन्दावने वृन्दावननामके उद्याने, हे सुन्दरि! यौवनश्रीः यौवनफलं निर्विश्यताम्॥ ५०

किञ्च, प्रावृषि वर्षासु कान्तासु गोवर्द्धनस्य अद्रेः कन्दरासु दरीषु। "दरी तु कन्दरो वा स्त्री" इत्यमरः। अम्भसः पृषतैः विन्दुभिः उक्षितानि सिक्तानि शिलायां भवं शैलेयम्। "शिलाजतु च शैलेयम्" इति यादवः। यद्वा, शिलापुष्पाख्य ओषधिविशेषः। "कालेयक... सार्थहद्वाश्मपुष्पशीतशिवानि तु शैलेयम्" इत्यमरः। "शिलाया ढः" इत्यत्र शिलाया इत्ययोगविभागादिवार्थे ढप्रत्ययः। तद्गन्धवन्ति शैलेयगन्धीनि शिलातलानि अध्यास्य ... कलापिनां बर्हिणां नृत्यं पश्य॥ ५१

"स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। आवर्त्तमनोज्ञा नाभिर्यस्याः सा, इदं ... साम्यार्थमुक्तम्। अन्यवधूः अन्यपत्नी भविष्यन्ती भाविनी सा कुमारी, तं नृपं, सागरगामिनी सागरं गन्त्री स्रोतोवहा नदी मार्गवशात् उपेतं प्राप्तं महीधरं पर्वतम् इव, अतीत्य गता॥ ५२

अथ भुजिष्या किङ्करी सुनन्दा। "भुजिष्या किङ्करी मता" इति ...

असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥५४
ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्त्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनवाष्पसेके वन्दीकृतानामिव पद्धती द्वे ॥५५
यमात्मनः सद्मनि सन्निकृष्टो मन्द्रध्वनित्याजितयामतूर्य्यः ।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥५६
अनेन सार्द्धं विहराम्बुराशेस्तीरेषु तालीवनमर्म्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥५७

अन्वयः । महेन्द्राद्रिसमानसारः असौ महेन्द्रस्य महोदधेश्च पतिः यस्य यात्रासु [क्षरत्]सैन्यगजच्छलेन महेन्द्रः पुरः याति इव ॥ ५४

अन्वयः । सुभुजः चापभृतां पुरोगः यः भुजाभ्यां वन्दीकृतानां रिपुश्रियां साञ्जन[वा]ष्पसेके पद्धती इव द्वे ज्याघातरेखे बिभर्त्ति ॥ ५५

अन्वयः । आत्मनः सद्मनि सुप्तं यं सन्निकृष्टः प्रासादवातायनदृश्यवीचिः मन्द्रध्वनि[त्या]जितयामतूर्य्यः अर्णवः एव प्रबोधयति ॥ ५६

अन्वयः । तालीवनमर्म्मरेषु अम्बुराशेः तीरेषु द्वीपान्तरानीतलवङ्गपुष्पैः अपाकृतस्वेद[लवा] ( सती ) अनेन सार्द्धं विहर ॥ ५७

[अ]ङ्गदाश्लिष्टभुजं केयूरनद्धबाहुं सादितशत्रुपक्षं विनाशितशत्रुवर्गं हेमाङ्गदं नाम कलिङ्ग[नाथ]म् आसेदुषीम् आसन्नाम् अबालेन्दुमुखीं पूर्णेन्दुमुखीं बालाम् इन्दुमतीं बभाषे ॥५३

महेन्द्राद्रेः समानसारः तुल्यसत्त्वः असौ हेमाङ्गदः, महेन्द्रस्य नाम कुलपर्वतस्य महो[द]धेश्च पतिः स्वामी । "महेन्द्रमहोदधी एवास्य गिरिजलदुर्गौ इति भावः । यस्य यात्रासु [क्ष]रतां मदस्राविणां सैन्यगजानां छलेन महेन्द्रः महेन्द्राद्रिः पुरः अग्रे याति इव, अद्रिकल्पा [अ]स्य गजा इत्यर्थः ॥ ५४

सुभुजः चापभृतां पुरोगः धनुर्द्धराग्रेसरः यः वन्दीकृतानां प्रग्रहीतानाम् । 'प्रग्रहो[प]ग्रहौ वन्द्याम्' इत्यमरः । रिपुश्रियां साञ्जनौ वाष्पसेकौ ययोस्ते कज्जलमिश्राश्रुसिक्ते [इ]त्यर्थः । पद्धती इव द्वे ज्याघातानां मौर्वीकिणानां रेखे राजी भुजाभ्यां बिभर्त्ति । [द्वि]वचनात् सव्यसाचित्वं गम्यते । रिपुश्रियो भुजाभ्यामेवाहरणात् । तद्गतरेखयोस्तत्[पद्ध]तित्वेनोत्प्रेक्षा तयोः श्यामत्वात् साञ्जनाश्रुसेकोक्तिः ॥ ५५

आत्मनः सद्मनि सुप्तं यं हेमाङ्गदं सन्निकृष्टः समीपस्थः अतएव प्रासादवातायने[दृ]श्यवीचिः मन्द्रेण गम्भीरेण । "मन्द्रस्तु गम्भीरे" इत्यमरः । ध्वनिना त्याजितं विवर्जितं [या]मस्य तूर्य्यं प्रहरावसानसूचकं वाद्यं येन सः तथोक्तः । 'द्वौ यामप्रहरौ समौ' इत्यमरः । [अ]र्णवः एव प्रबोधयति । अर्णवस्यैव तूर्य्यकार्य्यकारित्वात् तद्वैयर्थ्यमित्यर्थः । समुद्रस्यापि [से]व्यः किमन्ये षामिति भावः ॥ ५६

अनेन राज्ञा सार्द्धं तालीवनैः मर्म्मरेषु मर्म्मरेति ध्वनत्सु । "अथ मर्म्मरः । स्वनिते

प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम्।
तस्मादपावर्त्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात्॥
अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम्॥
पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥

अन्वयः। आकृतिलोभनीया विदर्भराजावरजा तया (सुनन्दया) एवं प्रलोभिता अपि, नीत्या दूरकृष्टा लक्ष्मीः प्रतिकूलदैवात् (पुंसः) इव तस्मात् अपावर्त्तत॥ ५८

अन्वयः। अथ दौवारिकी (सुनन्दा) देवसरूपम् उरगाख्यस्य पुरस्य नाथम् एत्य, चकोराक्षि, इतः विलोकय इति पूर्वानुशिष्टां भोज्यां निजगाद॥ ५९

अन्वयः। अंसार्पितलम्बहारः हरिचन्दनेन क्लृप्ताङ्गरागः अयं पाण्ड्यः बालातपरक्तसानुः सनिर्झरोद्गारः अद्रिराज इव आभाति॥ ६०

वस्त्रपर्णानाम्" इत्यमरवचनात् गुणपरस्यापि मर्मरशब्दस्य गुणिपरत्वं प्रयोगात् ... अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरेभ्यः आनीतानि लवङ्गपुष्पाणि देवकुसुमानि ... "लवङ्गं देवकुसुमम्" इत्यमरः। मरुद्भिः वातैः अपाकृताः प्रशमिताः स्वेदस्य लवाः ... यस्याः सा तथाभूता सती, विहर क्रीड॥ ५७

आकृत्या रूपेण लोभनीया आकर्षणीया न तु वर्णनमात्रेणेत्यर्थः। विदर्भराजस्य भोजस्यानुजा इन्दुमती, तया सुनन्दया एवं प्रलोभिता अपि प्रचोदिता अपि नीत्या ... कारेण दूरकृष्टा दूरमानीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात् पुंस इव, तस्मात् ... दात् अपावर्त्तत प्रतिनिवृत्ता॥ ५८

अथ द्वारे नियुक्ता दौवारिकी सुनन्दा। "तत्र नियुक्तः" इति टक्प्रत्ययः। "द्वारादीनाञ्च" इत्यौ आगमः। आकारेण देवसरूपं देवतुल्यम् उरगाख्यस्य पुरस्य ... कान्यकुब्जतीरवर्त्ति नागपुरस्य नाथम् एत्य प्राप्य, हे चकोराक्षि! इतो विलोकय ... पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञः गोत्रापत्यं स्त्रियं भोज्याम् इन्दुमतीम्। "क्रौड्या... इत्यत्र भोजात् क्षत्रियादित्युपसंख्यानात् ष्यङ् प्रत्ययः, "यङश्चाप्" इति चाप्। ... इतो विलोकयेति पूर्वमुक्ता पश्चाद्वक्तव्यं निजगादेत्यर्थः॥ ५९

अंसयोः अर्पिताः, लम्बन्ते इति लम्बाः हाराः यस्य सः हरिचन्दनेन गो... चन्दनेन। "तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्" इत्यमरः। क्लृप्ताङ्गरागः ... लेपनः अयं पाण्डूनां जनपदानां राजा पाण्ड्यः। "पाण्डोर्जनपदशब्दात् ... ड्यण्वक्तव्यः" इति ड्यण्प्रत्ययः। तस्य राजन्यपत्यवदिति वचनात्। बालातपेन ... अरुणाः सानवः यस्य सः सनिर्झरोद्गारः प्रवाहस्यन्दनसहितः। "वारिप्रवाहो निर्झरो झरः" इत्यमरः। अद्रिराज इव आभाति॥ ६०

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः।
प्रीत्याश्वमेधावभृथार्द्रमूर्त्तेः सौस्नातिको यस्य भवत्यगस्त्यः॥६१

अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः।
पुरा जनस्थानविमर्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे॥६२

अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी।
रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः॥६३

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु॥६४

अन्वयः। महाद्रेः विन्ध्यस्य संस्तम्भयिता निःशेषपीतोज्झितसिन्धुराजः अगस्त्यः प्रीत्या अश्वमेधावभृथार्द्रमूर्त्तेः यस्य सौस्नातिकः भवति॥६१

अन्वयः। पुरा दृप्तः लङ्काधिपतिः जनस्थानविमर्दशङ्की (सन्), हरात् दुरापम् अस्त्रम् आप्तवता येन सन्धाय, इन्द्रलोकावजयाय प्रतस्थे॥६२

अन्वयः। महाकुलीनेन अनेन पाणौ विधिवत् गृहीते (सति) त्वम्, गुर्वी मही इव, रत्नानुविद्धार्णवमेखलायाः दक्षिणस्याः दिशः सपत्नी भव॥६३

अन्वयः। ताम्बूलवल्लीपरिणद्धपूगासु एलालतालिङ्गितचन्दनासु तमालपत्रास्तरणासु मलयस्थलीषु शश्वत् रन्तुं प्रसीद॥६४

विन्ध्यस्य नाम्नः महाद्रेः तपनमार्गनिरोधाय वर्द्धमानस्य इति शेषः संस्तम्भयिता निवारयिता निःशेषं पीतः उज्झितः पुनस्त्यक्तः सिन्धुराजः समुद्रः येन सः अगस्त्यः, अश्वमेधस्य अवभृथे दीक्षान्ते कर्म्मणि। "दीक्षान्तोऽवभृथो यज्ञः" इत्यमरः। आर्द्रमूर्त्तेः स्नातस्य इत्यर्थः। यस्य पाण्ड्यस्य प्रीत्या स्नेहेन न तु दाक्षिण्येन, सुस्नातं पृच्छतीति सौस्नातिकः भवति। "पृच्छतौ सुस्नातादिभ्यः" इत्युपसंख्यानात् ठक्॥६१

पुरा पूर्व्वम् जनस्थानस्य खरालयस्य विमर्द्दशङ्की दृप्तः उद्धतः लङ्काधिपतिः रावणः, दुरापं दुर्लभम् अस्त्रं ब्रह्मशिरोनामकं हरात् आप्तवता येन पाण्ड्येन सन्धाय इन्द्रलोकविजयाय इन्द्रलोकं जेतु प्रतस्थे। इन्द्रविजयिनो रावणस्यापि विजेता इत्यर्थः॥६२

महाकुलीनेन महाकुले जातेन। "महाकुलादञ्खञौ" इति खञ्प्रत्ययः। अनेन पाण्ड्येन, पाणौ त्वदीये विधिवत् यथाशास्त्रं गृहीते सति गुर्वी गुरुः। "वोतो गुणवचनात्" इति ङीप्। मही इव रत्नैः अनुविद्धः व्याप्तः अर्णवः एव मेखला यस्याः तस्याः। इदं विशेषणं मह्यामिन्दुमत्याञ्च योज्यम्। दक्षिणस्याः दिशः सपत्नी भव। अनेन पत्न्यन्तराभावो ध्वन्यते॥६३

ताम्बूलवल्लीभिः नागवल्लीभिः परिणद्धाः परिवद्धा पूगाः क्रमुकाः यासु तासु। "ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि" इति, "घोण्टा तु पूगः क्रमुकः" इति च अमरः। एलालताभिः आलिङ्गिताः चन्दनाः मलयजाः यासु तासु। गन्धसारो मलयजो 'भद्रश्रीश्चन्दनोऽस्त्रियाम्'

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्यान्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥६५
स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥६६
सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥६७
तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥६८

अन्वयः। असौ नृपः इन्दीवरश्यामतनुः, त्वं रोचनागौरशरीरयष्टिः, तडित्तो[yद्योः] इव वां योगः अन्योन्यशोभापरिवृद्धये अस्तु ॥ ६५

अन्वयः। दिवाकरादर्शनबद्धकोशे अरविन्दे नक्षत्रनाथांशुः इव, तदीयः [उपदेशः] विदर्भाधिपतेः स्वसुः चेतसि अन्तरं न लेभे ॥ ६६

अन्वयः। पतिंवरा सा, रात्रौ सञ्चारिणी दीपशिखा इव, यं यं व्यतीयाय, [स स] भूमिपालः, नरेन्द्रमार्गाट्ट इव, विवर्णभावं प्रपेदे ॥ ६७

अन्वयः। तस्याम् उपस्थितायां रघोः सूनुः 'मां वृणीत' न इति समाकुल[ः अभूत्] वामेतरः बाहुः केयूरबन्धोच्छ्वसितैः अस्य संशयं नुनोद ॥ ६८

इत्यमरः। तमालस्य तापिञ्छस्य पत्राणि एव आभरणानि यासु तासु। कालस्कन्धस्तु स्यात् तापिञ्छोऽपि' इत्यमरः। मलयस्थलीषु शश्वत् मुहुः सदा वा रन्तुं प्रसीद ए[वं] भव ॥ ६४

असौ नृपः इन्दीवरश्यामतनुः त्वं रोचना गोरोचना इव गौरी शरीरयष्टिः यस्या[ः] ततः तडित्तोयदयोः विद्युन्मेघयोः इव वां युवयोः योगः समागमः अन्योन्यशोभायाः वृद्धये अस्तु ॥ ६५

विदर्भाधिपतेः भोजस्य स्वसुः इन्दुमत्याः चेतसि तदीयः सुनन्दासम्बन्धी उपदेशः दिवाकरस्य अदर्शनेन बद्धकोशे मुकुलिते अरविन्दे नक्षत्रनाथांशुः चन्द्रकिरणः इव अवकाशं न लेभे ॥ ६६

पतिंवरा सा इन्दुमती, रात्रौ सञ्चारिणी दीपशिखा इव, यं यं भूपालं अतीत्य गता, सः सः भूमिपालः स सर्व्व इत्यर्थः। "नित्यवीप्सयोः" इति द्विर्वचनम्। नरेन्द्रमार्गे राजपथे अट्टालः अट्टभेदः इव। "स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः। विवर्णभावं विच्छायत्वम् अट्टस्तु तमोवृतत्वं प्रपेदे ॥ ६७

तस्याम् इन्दुमत्याम् उपस्थितायाम् आसन्नायां सत्यां रघोः सूनुः अजः, 'मां वृणीत [न] वा' इति समाकुलः संशयितः अभूत्। अथ अस्य अजस्य वामेतरः वामात् इतरः द[क्षिणः]

तं प्राप्य सर्वावयवानवद्यं व्यावर्त्ततान्योपगमात् कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६९

तस्मिन् समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।
प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥ ७०

इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोशलेन्द्राः ॥ ७१

अन्वयः । कुमारी, सर्व्वावयवानवद्यं तं प्राप्य, अन्योपगमात् व्यावर्त्तत, हि षट्पदाली, प्रफुल्लं सहकारम् एत्य, वृक्षान्तरं न काङ्क्षति ॥ ६९

अन्वयः । अनुक्रमज्ञा सुनन्दा, इन्दुप्रभाम् इन्दुमतीं तस्मिन् समावेशितचित्तवृत्तिम् अवेक्ष्य, सविस्तरं इदं वाक्य वक्तुं प्रचक्रमे ॥ ७०

अन्वयः । इक्ष्वाकुवंश्यः नृपाणां ककुदम् आहितलक्षणः ककुत्स्थः इति अभूत्, उन्नतेच्छाः उत्तरकोशलेन्द्राः यतः श्लाघ्यं काकुत्स्थशब्दं दधति ॥ ७१

बाहुः केयूरं बध्यते अत्र इति केयूरबन्धः अङ्गदस्थानं तस्य उच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥ ६८

कुमारी, सर्वेषु अवयवेषु अनवद्यम् अदोषम् तम् अजं प्राप्य अन्योपगमात्, राजान्तरोपगमात् व्यावर्त्तत निवृत्ता । तथाहि, षट्पदाली भृङ्गावलिः प्रफुल्लतीति प्रफुल्लं विकसितं पुष्पितमित्यर्थः । प्रपूर्वात् फुल्लतेः पचाद्यच् फलतेस्तु प्रफुल्लमिति पठितव्यम्, 'अनुपसर्गात्' इति निषेधादित्युभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक् । सहकारं चूतविशेषम् एत्य । "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः । वृक्षान्तरं न काङ्क्षति । न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः ॥ ६९

तस्मिन् अजे समावेशिता संक्रामिता चित्तवृत्तिः यया ताम्, इन्दोः प्रभा इव प्रभा यस्याः ताम्, आह्लादकत्वादिन्दुसाम्यम् । इन्दुमतीम् अवेक्ष्य अनुक्रमज्ञा वाक्यपौर्वापर्याभिज्ञा सुनन्दा, इदं वक्ष्यमाणं सविस्तरं सप्रपञ्चम् । "प्रथने वावशब्दे" इति घञो निषेधात् "ऋदोरप्" इत्यप्प्रत्ययः । "विस्तरो विग्रहो व्यासः स च शब्दस्य विस्तरः" इत्यमरः । वाक्यं वक्तुं प्रचक्रमे ॥ ७०

इक्ष्वाकोः मनुपुत्रस्य वंश्यः वंशे भवः नृपाणां ककुदं श्रेष्ठः । "ककुच्च ककुदं श्रेष्ठे वृषांसे राजलक्ष्मणि" इति विश्वः । आहितलक्षणः प्रख्यातगुणः । "गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ" इत्यमरः । ककुदि वृषांसे तिष्ठतीति ककुत्स्थः इति प्रसिद्धः कश्चित् राजा अभूत्, यतः ककुत्स्थात् आरभ्य उन्नतेच्छाः महाशयाः । "महेच्छस्तु महाशयः" इत्यमरः । उत्तरकोशलेन्द्राः राजानः दिलीपादयः, श्लाघ्यं प्रशस्तं ककुत्स्थस्य अपत्यं पुमान् काकुत्स्थः इति शब्दं संज्ञां दधति बिभ्रति । तन्नामसंस्पर्शोऽपि वंशस्य कीर्त्तिकर इति भावः । पुरा किल पुरञ्जयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया

महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ७२

ऐरावतास्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्त्तिमग्र्यामर्द्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७३

जातः कुले तस्य किलोरुकीर्त्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४

तस्मिन् महीं शासति वाणिनीनां निद्रां विहारार्द्धपथेगतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५

अन्वयः । यः संयति महोक्षरूपं महेन्द्रम् आस्थाय प्राप्तपिनाकिलीलः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः चकार ॥ ७२

अन्वयः । यः ऐरावतास्फालनविश्लथम् अङ्गदम् अङ्गदेन संघट्टयन् (सन्) अग्र्यां मूर्त्तिम् उपेयुषः अपिः गोत्रभिदः अर्द्धासनम् अधितष्ठौ ॥ ७३

अन्वयः । उरुकीर्त्तिः कुलप्रदीपः दिलीपः नृपतिः तस्य कुले जातः शक्राभ्यसूयाविनिवृत्तये एकोनशतक्रतुत्वे अतिष्ठत् ॥ ७४

अन्वयः । यस्मिन् महीं शासति (सति), विहारार्द्धपथे निद्रां गतानां वाणिनीनाम् अंशुकानि वातः अपि न अस्रंसयत्, आहरणाय कः हस्तं लम्बयेत् ॥ ७५

निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञां लेभे इति पौराणिकी कथानुसन्धेया, अयमेवार्थं उत्तरश्लोके ॥ ७१

यः ककुत्स्थः संयति युद्धे महान् उक्षा महोक्षः । 'अचतुर' इत्यादिना निपातः। महोक्षरूपम् इव रूपं यस्य तं महेन्द्रम् आस्थाय आरुह्य अतएव प्राप्ता पिनाकिनः ईश्वरस्य लीला येन सः तथोक्तः सन्, बाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः निवृत्तपत्ररचनाः चकार तद्भर्त्तॄनसुरानवधीदित्यर्थः । न हि विधवाः प्रसाध्यन्ते इति भावः ॥ ७२

यः ककुत्स्थः, ऐरावतस्य स्वर्गजस्य आस्फालनेन ताड़नेन विश्लथं शिथिलम् ऐन्द्रम् अङ्गदेन स्वकीयेन सङ्घट्टयन् सङ्घर्षयन्, स्वाम् अग्र्यां श्रेष्ठां मूर्त्तिम् उपेयुषः प्राप्तस्य अपि गोत्रभिदः इन्द्रस्य, अर्द्धम् आसनस्य अर्द्धासनम् । अर्द्धं नपुंसकमिति समासः। अधितष्ठौ अधिष्ठितवान् । 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति अभ्यासेन व्यवायेऽपि षत्वम्। न केवलं महोक्षरूपधारिण एव तस्य ककुदमरुक्षत् किन्तु निजरूपधारिणोऽपि इन्द्रस्यासनम् इत्यपिशब्दार्थः । अथवा, अर्द्धासनमपीत्यपेरन्वयः ॥ ७३

उरुकीर्त्तिः महायशाः कुलप्रदीपकः वंशप्रदीपः दिलीपः नृपतिः, तस्य ककुत्स्थस्य कुले जातः किल । यः दिलीपः शक्राभ्यसूयाविनिवृत्तये, न त्वशक्त्या इति भावः। ऊनाः शतं क्रतवो यस्य सः एकोनशतक्रतुः तस्य भावे तत्त्वे अतिष्ठत्, इन्द्रप्रीतये शततमं क्रतुमवशेषितवानित्यर्थः ॥ ७४

तस्मिन् दिलीपे महीं शासति सति, विहरत्यत्रेति विहारः क्रीड़ास्थानं तस्य

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६

आरूढमद्रीनुदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्द्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥ ७७

असौ कुमारस्तमजोऽनुजातः त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्व्वीं धुरं यो भुवनस्य पित्रा धुर्य्येण दम्यः सदृशं बिभर्त्ति ॥ ७८

अन्वयः । तस्य दिलीपस्य पुत्रः, विश्वजितः महाक्रतोः प्रयोक्ता रघुः पदं प्रशास्ति
यः चतुर्द्दिगावर्ज्जितसम्भृतां विभूतिं मृत्पात्रशेषाम् अकरोत् ॥ ७६

अन्वयः । अद्रीन् आरूढम्, उदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम्, ऊर्द्ध्वं
गतम्, अनुबन्धि च यस्य यशः इयत्तया परिच्छेत्तुं न अलम् ॥ ७७

अन्वयः । असौ कुमारः अजः, जयन्तः त्रिविष्टपस्य पतिम् इव, तम् अनुजातः
यः दम्यः अपि भुवनस्य गुर्व्वीं धुरं धुर्य्येण पित्रा सदृशं बिभर्त्ति ॥ ७८

निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम् । "वाणिनी नर्त्तकी मत्ता विदग्धवनितासु च"
इति विश्वः । "वाणिन्यौ नर्त्तकीमत्ते" इत्यमरश्च । अंशुकानि वस्त्राणि वातः अपि न
अस्रंसयत् न अकम्पयत्, आहरणाय अपहर्त्तुं कः हस्तं लम्बयेत् । तस्य आज्ञासिद्धत्वा-
दकुतोभयसञ्चाराः प्रजा इत्यर्थः । अर्द्धञ्चासौ पन्थाश्चेति विग्रहः, समप्रविभागे प्रमाणाभावा-
देकदेशिसमासः ॥ ७५

विश्वजितः नाम महाक्रतोः प्रयोक्ता अनुष्ठाता तस्य दिलीपस्य पुत्रः रघुः पदं पैतृम्
स्थानं प्रशास्ति पालयति । यः रघुः चतसृभ्यः, दिग्भ्यः आवर्जिता, आहृता सम्भृता सम्यग्-
र्जिता च या तां चतुर्दिगावर्जितसम्भृतां विभूतिं सम्पदं, मृत्पात्रम् एव शेषः यस्याः ताम्
अकरोत् विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः ॥ ७६

किञ्च, अद्रीन् आरूढम् उदधीन् वितीर्णम् अवगाढं सकलभूगोलव्यापकमित्यर्थः ।
भुजङ्गमानां वसतिं पातालं प्रविष्टम् ऊर्द्ध्वं स्वर्गादिकं गतं व्याप्तम् इत्थं सर्वदिग्व्यापीत्यर्थः ।
अनुबध्नाति इति अनुबन्धि च अविच्छेदिकालत्रयव्यापकञ्च इत्यर्थः । अतएव एवम्भूतं
यस्य यशः इयत्तया देशतः कालतो वा केनचित् मानेन परिच्छेत्तुं परिमातुं न अलं न
शक्यम् ॥ ७७

असौ अजाख्यः कुमारः, त्रिविष्टपस्य स्वर्गस्य पतिम् इन्द्रं जयन्तः इव । "जयन्तः पाक-
शासनिः" इत्यमरः । तं रघुम् अनुजातः तस्माज्जात इत्यर्थः । तज्जातोऽपि तदनुजातो
भवति जन्यजनकयोरानन्तर्य्यात् । "गत्यर्थाकर्म्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च"
इति क्तः । सोपसृष्टत्वात् सकर्म्मकत्वम् । आह चात्रैव सूत्रे वृत्तिकारः—"श्लिषादयः
सोपसृष्टाः सकर्म्मका भवन्ति" इति । दम्यः शिक्षणीयावस्थः यः अजः, गुर्वीं भुवनस्य धुरं

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥
ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् संवरणस्रजेव ॥ ८० ॥
सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम्।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥
तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदावभाषे।
आर्ये! व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥

अन्वयः। कुलेन, कान्त्या, नवेन वयसा, विनयप्रधानैः तैः तैः गुणैः च, आत्मनः तुल्यम् अमुं त्वं वृणीष्व, काञ्चनेन (सह) समागच्छतु ॥ ७९

अन्वयः। ततः सुनन्दावचनावसाने नरेन्द्रकन्या लज्जां तनूकृत्य प्रसादामलया दृष्ट्या संवरणस्रजा इव कुमारं प्रत्यग्रहीत् ॥ ८०

अन्वयः। सा तस्मिन् यूनि अभिलाषबन्धं शालीनतया वक्तुं न शशाक, रोमाञ्चलक्ष्येण अरालकेश्याः गात्रयष्टिं भित्त्वा निराक्रामत् ॥ ८१

अन्वयः। तस्यां सख्यां तथागतायां (सत्याम्), सखी वेत्रभृत् (सुनन्दा) परिहासपूर्वम् आवभाषे, आर्ये! अन्यतः व्रजामः इति, वधूः असूयाकुटिलम् एनां ददर्श ॥ ८२

धुर्य्येण धुरन्धरेण चिरनिरूढेन पित्रा सदृशं तुल्यं यथा तथा बिभर्त्ति। यथा ... तरोऽपि धुर्य्येण महोक्षेण समं वहतीत्युपमालङ्कारो ध्वन्यते। "दम्यवत्सतरौ ..." ... मरः ॥ ७८

कुलेन कान्त्या लावण्येन नवेन वयसा यौवनेन विनयः प्रधानं येषां तैस्तैः गुणैः शीलादिभिश्च आत्मनः तुल्यं स्वानुरूपम् अमुम् अजं त्वं वृणीष्व। किं बहुना, रत्नं ... समागच्छतु सङ्गच्छताम्। प्रार्थनायां लोट्। रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वात् समागमः प्रार्थ्यते इत्यर्थः ॥ ७९

ततः सुनन्दावचनस्य अवसाने अन्ते नरेन्द्रकन्या इन्दुमती लज्जां तनूकृत्य प्रसादेन मनःप्रसादेन अमलया प्रसन्नया दृष्ट्या सम्बरणस्य स्रजा स्वयम्वरार्थं ... कुमारम् अजम् प्रत्यग्रहीत् स्वीचकार। सम्यक् सानुरागमपश्यदित्यर्थः ॥ ८०

सा कुमारी यूनि तस्मिन् अजे अभिलाषबन्धम् अनुरागग्रन्थिं शालीनतया ... "स्यादधृष्टस्तु शालीनः" इत्यमरः। "शालीनकौपिने अधृष्टाकार्य्ययोः" इति ... न शशाक, तथापि अरालकेश्याः सः अभिलाषबन्धः रोमाञ्चलक्ष्येण पुलक... 'व्याजोऽपदेशो लक्ष्यञ्च' इत्यमरः। गात्रयष्टिं भित्त्वा निराक्रमत्। सात्त्विकाविर्भावेन प्रकाशित इत्यर्थः ॥ ८१

तस्याम् इन्दुमत्यां तथागतायां तथाभूतायां दृष्टानुरागायां सत्यामित्यर्थः।

सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरुः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्त्तमिवानुरागम् ॥ ८३

तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ ८४

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५

अन्वयः । सा करभोपमोरुः धात्रीकराभ्यां, रघुनन्दनस्य कण्ठे यथाप्रदेशं चूर्णगौरं गुणं, मूर्त्तम् अनुरागम् इव, आसञ्जयामास ॥ ८३

अन्वयः । वरेण्यः सः विशालवक्षःस्थललम्बया मङ्गलपुष्पमय्या तया स्रजा, विदर्भराजावरजां कण्ठार्पितबाहुपाशाम् अमंस्त ॥ ८४

अन्वयः । तत्र समगुणयोगप्रीतयः पौराः, "इयं मेघमुक्तं शशिनम् उपगता कौमुदी, अनुरूपं जलनिधिम् अवतीर्णा जह्नुकन्या" इति नृपाणां श्रवणकटु एकवाक्यं विवव्रुः ॥ ८५

---

...चरी । "सख्यशिश्वीति भाषायां" इति निपातनात् ङीप् । वेत्रभृत् सुनन्दा, हे ...र्ये ! पूज्ये ! अन्यतः अन्यं प्रति व्रजामः इति परिहासपूर्व्वम् आबभाषे । अथ वधूः ...मती, एनां सुनन्दाम् असूयया रोषेण कुटिलं ददर्श, अन्यगमनस्यासह्यत्वादित्यर्थः ॥ ८२

...करभः करप्रदेशविशेषः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । ...भः उपमा ययोः तौ ऊरू यस्याः सा करभोपमोरुः । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । ...कुमारी, चूर्णेन मङ्गलचूर्णेन गौरं लोहितं गुणं स्रजं मूर्त्तं मूर्त्तिमन्तम् अनुरागम् इव, ...याः उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्य अजस्य कण्ठे यथास्थानम् आसञ्जया...ु, आसक्तं कारयामास, न तु स्वयमाससञ्ज, अनौचित्यात् ॥ ८३

...वरेण्यः वरणीयः उत्कृष्टः इत्यर्थः । सः अजः मङ्गलपुष्पमय्या मधूकादिकुसुममय्या ...ालवक्षःस्थले लम्बया लम्बमानया तया प्रकृतया स्रजा विदर्भराजावरजाम् इन्दुमतीं ...ार्पितौ बाहू एव पाशौ यया ताम् अमंस्त मन्यतेर्लुङ् । बाहुपाशकल्पसुखमन्व-...इत्यर्थः ॥ ८४

...तत्र स्वयंवरे समगुणयोः तुल्यगुणयोः इन्दुमतीरघुनन्दनयोः योगेन प्रीतिः येषां ते ...गुणयोगप्रीतयः पौराः पुरि भवा जनाः, इयम् अजसङ्गता इन्दुमती मेघैः मुक्तं शशिनं ...न्द्रम् उपगता कौमुदी, अनुरूपं सदृशं जलनिधिम् अवतीर्णा प्रविष्टा जह्नुकन्या ...रथी, तत्सदृशी इत्यर्थः, इत्येवं नृपाणां श्रवणयोः कटु परुषम् एकम् अविसंवादि एकवाक्यं विवव्रुः । मालिनीवृत्तमेतत् ( लक्षणन्तूक्तं प्राक् । ५, ७५ ) ॥ ८५

प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतो वितानम् ।
उषसि सर इव प्रफुल्लपद्मं
कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६

अन्वयः । एकतः प्रमुदितवरपक्षम्, अन्यतः वितानं तत् क्षितिपतिमण्डलम्, प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रं सर इव आसीत् ॥ ८६

एकतः एकत्र प्रमुदितः हृष्टः वरस्य जामातुः पक्षः वर्गः यस्य तत् । अन्यतोऽन्यत्र वितानं शून्यं, अप्राप्तत्वादपहृष्टमित्यर्थः, तत् क्षितिपतिमण्डलम् प्रभाते प्रफुल्लपद्मं कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सरः इव सरस्तुल्यं । पुष्पिताग्रावृत्तमेतत् ( लक्षणमुक्तं प्राक् । ५ । ७६ ) ॥ ८६

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्या व्याख्यया समेतो महाकवि—श्रीकालीदासकृतौ रघुवंशे महाकाव्ये स्वयंवरवर्णनो नाम षष्ठः सर्गः ।

---

# सप्तमः सर्गः ।

—:०*०:—

अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम् ।
स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १
सेनानिवेशान् पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।
भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेषेषु च साभ्यसूयाः ॥ २
सान्निध्ययोगात्किल तत्र शच्याः स्वयम्बरक्षोभकृतामभावः ।
काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३

अन्वयः । अथ, सदृशेन उपयन्त्रा युक्तां, स्कन्देन साक्षात् देवसेनाम् इव, स्वसारम् आदाय, विदर्भनाथः पुरप्रवेशाभिमुखः बभूव ॥ १

अन्वयः । पृथिवीक्षितः अपि, भोज्यां प्रति व्यर्थमनोरथत्वात् विभातग्रहमन्दभासः रूपेषु वेषेषु च साभ्यसूयाः ( सन्तः ) सेनानिवेशान् जग्मुः ॥ २

अन्वयः । तत्र शच्याः सान्निध्ययोगात् स्वयम्बरक्षोभकृताम् अभावः किल, तेन काकुत्स्थम् उद्दिश्य समत्सरः अपि क्षितिपाललोकः शशाम ॥ ३

भवेनमद्धि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गेन्तं बलिमालीक्याश्वासयन्तौ हि दम्पती ॥

अथ विदर्भनाथो भोजः सदृशेनोपयन्त्रा वरेण युक्ताम् । "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः । अतएव साक्षात् प्रत्यक्षम् । स्कन्देन युक्तां देवसेनामिव । देवसेना नाम देवपुत्री स्कन्दपत्नी तामिव स्थितां स्वसारं भगिनीमिन्दुमतीमादाय गृहीत्वा पुरप्रवेशाभिमुखो बभूव । उपजातिवृत्तं सर्गेऽस्मिन् ॥ १

भोजस्य राज्ञो गोत्रापत्यं स्त्री भोज्या । तामिन्दुमतीं प्रति व्यर्थमनोरथत्वात् रूपेषु आकृतिषु वेषेषु नेपथ्येषु च साभ्यसूया वृथेति निन्दन्तः । किञ्च विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितो नृपा अपि सेनानिवेशान् शिबिराणि जग्मुः ॥ २

ननु कुद्धास्ते क्षुभ्यन्तां तत्राह—तत्र स्वयम्बरक्षेत्रे शच्या इन्द्राण्याः । सन्निधिरेव सान्निध्यम् । तस्य योगात्सद्भावाद्धेतोः स्वयम्बरस्य क्षोभकृतां विघ्नकारिणामभावः किल । किलेति स्वयम्बरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम् । तेन हेतुना काकुत्स्थमजमुद्दिश्य समत्सरोऽपि स वैरोऽपि क्षितिपाललोकः शशाम नाक्षुभ्यत ॥ ३

तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम्।
वरः स बध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम्॥
ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्य्याणि विचेष्टितानि॥
आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः।
बन्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि च केशपाशः॥
प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान॥७

अन्वयः। सः वरः बध्वा सह तावत्प्रकीर्णाभिनवोपचारम्, इन्द्रायुधद्योतिततोरणाङ्कम् ध्वजच्छायनिवारितोष्णम् राजमार्गं प्राप॥४

अन्वयः। चामीकरजालवत्सु सौधेषु तदालोकनतत्पराणां पुरसुन्दरीणाम् इत्थं त्यक्तान्यकार्य्याणि विचेष्टितानि बभूवुः॥५

अन्वयः। सहसा आलोकमार्गं व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः करेण रुद्धः अपि तावत् बन्धु न सम्भावितः एव॥६

अन्वयः। काचित् प्रसाधिकालम्बितं द्रवरागम् एवं अग्रपादम् आक्षिप्य उत्सृष्टलीलागतिः (सती) आ गवाक्षात् अलक्तकाङ्कां पदवीं ततान॥७

"यावत्तावच्च साकल्ये" इत्यमरः। तावत्प्रकीर्णाः साकल्येन प्रसारिता नूतना उपचाराः पुष्पप्रकरणादयो यस्य तं तथोक्तम्। इन्द्रायुधानीव द्योतितानि प्र[द्योतितानि] तोरणान्यङ्काश्चिह्नानि यस्य तम्। ध्वजानां छाया ध्वजच्छायम्॥ "छाया बाहु[ल्ये]" नपुंसकत्वम्। तेन निवारित उष्ण आतपो यत्र तं तथा राजमार्गं स वरो [वध्वा] सह प्राप विवेश॥४

ततः तदनन्तरं, चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्य अजस्य [आलोकन]तत्पराणाम् आसक्तानां पुरसुन्दरीणाम् इत्थं वक्ष्यमाणप्रकाराणि त्यक्तानि अन्य[कार्य्याणि] केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः बभूवुः॥५

तान्येवाह पञ्चभिः श्लोकैः, आलोकेति। सहसा आलोकमार्गं गवाक्षं [व्रजन्त्या] कयाचित् कामिन्या उद्वेष्टनवान्तमाल्यः उद्वेष्टनः द्रुतगतिवशात् [उन्मुक्तः] अतएव वान्तमाल्यः बन्धविश्लेषेण उद्गीर्णमाल्यः करेण रुद्धः गृहीतः अपि [तावत्] केशकलापः। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः। आलोकमार्गप्राप्तिपर्य्यन्तं बन्धुं बन्धनार्थं न सम्भावितः न चिन्तित एव॥६

काचित् प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं. द्रवरागम् एव [आर्द्रालक्तकम्] एव. अग्रश्चासौ पादश्च इति अग्रपादः इति कर्म्मधारयसमासः। "हस्ताग्राग्र[हस्तादयो] गुणगुणिनोर्भेदाभेदाभ्याम्, इति वामनः। तम् च, आक्षिप्य आकृष्य उत्सृष्ट[...]

विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती ॥ ८

जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ९

अर्द्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १०

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ११

अन्वयः । अपरा दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य, तद्वञ्चितवामनेत्रा ( सती ) तथा एव शलाकां वहन्ती ( सती ), वातायनसन्निकर्षं ययौ ॥ ८

अन्वयः । अन्या जालान्तरप्रेषितदृष्टिः ( सती ), प्रस्थानभिन्नां नीवीं न बबन्ध, नाभिप्रविष्टाभरणप्रभेण, हस्तेन वासः अवलम्ब्य तस्थौ ॥ ९

अन्वयः । सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाचिता दुर्निमिते पदे पदे गलन्ती ( सती ) रशना, तदानीम् अङ्गुष्ठमूलार्पितसूत्रशेषा आसीत् ॥ १०

अन्वयः । सान्द्रकुतूहलानां तासां आसवगन्धगर्भैः विलोलनेत्रभ्रमरैः मुखैः व्याप्तान्तराः गवाक्षाः सहस्रपत्राभरणाः इव आसन् ॥ ११

मन्दगमना सती सा गवाक्षात् गवाक्षपर्य्यन्तं पदवीं पन्थानम् अलक्तकाङ्कां लाक्षारागाङ्कां ततान विस्तारयामास ॥ ७

अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य, संभ्रमादिति भावः । तद्वञ्चितं तेन अञ्जनेन वर्जितं वामनेत्रं यस्याः सा सती, तथैव शलाकाम् अञ्जनतूलिकां वहन्ती सती, वातायनसन्निकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमकरणद्योतनार्थम्, 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥ ८

अन्या स्त्री, जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रेरितदृष्टिः सती, प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम् । "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः । न बबन्ध, किन्तु नाभिप्रविष्टा आभरणानां कङ्कणादीनां प्रभा यस्य तेन । प्रभैव नाभेराभरणमभूदिति भावः । हस्तेन वासः अवलम्ब्य गृहीत्वा तस्थौ ॥ ९

सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाञ्चिता मणिभिः अर्द्धगुम्फिता दुर्निमिते संभ्रमात् कृतक्षिप्ते । "डुमिञ् प्रक्षेपणे" इति धातोः कर्म्मणि क्तः । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रशना मेखला तदानीम् गमनसमये अङ्गुष्ठमूले अर्पितं सूत्रम् एव शेषः यस्याः सा आसीत् ॥ १०

तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धः गर्भे येषां तैः विलोलानि नेत्राणि

ता राघवं दृष्टिभिरापिबन्त्यो नार्य्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥
स्थाने वृता भूपतिभिः परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।
पद्मेव नारायणमन्यथासौ लभेत कान्तं कथमात्मतुल्यम् ॥
परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥

अन्वयः । ताः नार्य्यः राघवं दृष्टिभिः आपिबन्त्यः (सत्यः), विषयान्तराणि न जग्मुः तथाहि आसां शेषेन्द्रियवृत्तिः सर्व्वात्मना चक्षुः प्रविष्टा, इव ॥ १२

अन्वयः । भोज्या, परोक्षैः भूपतिभिः वृता अपि, स्वयंवरं साधुम् अमंस्त, अन्यथा असौ पद्मा नारायणम् इव, आत्मतुल्यं कान्तं कथं लभेत ॥ १३

अन्वयः । स्पृहणीयशोभम् इदं द्वन्द्वं चेत् परस्परेण न अयोजयिष्यत्, अस्मिन् द्वये प्रजानां पत्युः रूपविधानयत्नः वितथः अभविष्यत् ॥ १४

एव भ्रमराः येषां तैः, मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्रैः कमलालङ्कृताः इव । "सहस्रपत्रं कमलम्" इत्यमरः । आसन् ॥ ११

ताः नार्य्यः रघोरपत्यं राघवम् अजम् । तस्यापत्यमित्यण्प्रत्ययः । दृष्टिभिः अतितृष्णया पश्यन्त्यः विषयान्तराणि अन्यान् विषयान् न जग्मुः न विविदुरित्यर्थः । आसां नारीणां शेषेन्द्रियवृत्तिः चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्वात्मना स्व... चक्षुःप्रविष्टा इव । श्रोत्रादीनि इन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेः चक्षुरेव प्रवि... कात् स्वयमप्येनम् उपलभन्ते किमु, अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति ।

"प्रवृत्तन् कथाः" (७ । १६) इति वक्ष्यति ताः कथयति, स्थाने इत्यादि... भोज्या इन्दुमती, परोक्षैः अदृष्टैः भूपतिभिः वृता: ममैवेयमिति प्रार्थिता अपि स्व... साधुं हितम् अमंस्त मेने, न तु परोक्षमेव कञ्चित् प्रार्थकं वव्रे, स्थाने युक्तमेतत् ... "... साम्प्रतं स्थाने" इत्यमरः । कुतः ? अन्यथा स्वयंवराभावे असौ इन्दुमती ... अस्तीति पद्मा लक्ष्मीः । "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः । नारायणम् इव ... स्वानुरूपं कान्तं पतिं कथं लभेत न लभेत एव सदसद्विवेकासौकर्य्यादिति भावः ।

स्पृहणीयशोभं सर्वाशास्यसौन्दर्य्यम् इदं द्वन्द्वं मिथुनम् । "द्वन्द्वं रहस्य—" ... निपातः । परस्परेण न योजयिष्यत् चेत् न योजयेत् यदि, तर्हि प्रजानां पत्युः अस्मिन् द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्य्यनिर्म्माणप्रयासः वितथः विफलः ... एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः । लिङ्निमित्ते लृङ् क्रियाति... लृङ् । "कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः" ... कारः ॥ १४

रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसङ्गतिज्ञम् ॥ १५

इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन् कथाः श्रोत्रसुखाः कुमारः ।
उद्भासितं मङ्गलसंविधाभिः सम्बन्धिनः सद्म समाससाद ॥ १६

ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ १७

महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।
भोजोपनीतञ्च दुकूलयुग्मं जग्राह सार्द्धं वनिताकटाक्षैः ॥ १८

अन्वयः । इमौ नूनं रतिस्मरौ अभूताम्, तथाहि, इयं बाला राज्ञां सहस्रेषु आत्मप्रतिरूपम् एव गता, मनः हि जन्मान्तरसङ्गतिज्ञम् ॥ १५

अन्वयः । कुमारः, पौरवधूमुखेभ्यः उद्गताः श्रोत्रसुखाः इति कथाः शृण्वन् ( सन् ) मङ्गलसंविधाभिः उद्भासितं सम्बन्धिनः सद्म समाससाद ॥ १६

अन्वयः । ततः सः कामरूपेश्वरदत्तहस्तः ( सन् ) आशु करेणुकायाः अवतीर्य अथो वैदर्भनिर्दिष्टम् अन्तः चतुष्कं नारीमनांसि इव विवेश ॥ १७

अन्वयः । महार्हसिंहासनसंस्थितः असौ भोजोपनीतं सरत्नं मधुपर्कमिश्रम् अर्घ्यं दुकूलयुग्मं च वनिताकटाक्षैः सार्द्धं जग्राह ॥ १८

रतिस्मरौ यौ नित्यसहचरौ इत्यभिप्रायः नूनं तौ एव इयञ्च अयञ्च इमौ दम्पती अभूताम् एतद्रूपेण उत्पन्नौ । कुतः ? तथाहि, इयं बाला राज्ञां सहस्रेषु राजसहस्रमध्ये अपि अव्यासकारणे इति भावः । आत्मप्रतिरूपं स्वतुल्यम् एव । "तुल्यसङ्काशनीकाशप्रतिरूपकाः" इति दण्डी । गता प्राप्ता । तदपि कथं जातमत आह—हि यस्मात् मनः जन्मान्तरसङ्गतिज्ञं भवति । तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुरूपेषु मनःप्रवृत्तिरसौत्सुक्यं जन्मान्तरसाहचर्यमेवात्र प्रवर्त्तकमिति भावः ॥ १५

इति "स्थाने वृता" ( ७।१३ ) इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः उद्गता उत्पन्नाः श्रोत्रयोः सुखाः मधुराः । सुखशब्दो विशेष्यनिघ्नः । "पापपुण्यसुखादि च" इत्यमरः । कथाः गिरः शृण्वन् कुमारः अजः मङ्गलसंविधाभिः मङ्गलरचनाभिः उद्भासितं शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥ १६

ततः अनन्तरं करेणुकायाः हस्तिन्याः सकाशात् आशु शीघ्रम् अवतीर्य कामरूपेश्वरे दत्तः हस्तः येन सः अजः, अथो अनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितम् अन्तश्चतुष्कं चत्वरं नारीणां मनांसि इव विवेश ॥ १७

महार्हसिंहासने संस्थितः असौ अजः, भोजेन उपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रम् अर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोः युग्मञ्च वनिताकटाक्षैः अन्यस्त्रीणाम् अपाङ्गदर्शनैः सार्द्धं जग्राह गृहीतवान् ॥ १८

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिनवैरुदन्वानिव चन्द्रपादैः ॥ १९

तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवादसाक्ष्ये वधूवरौ सङ्गमयाञ्चकार ॥ २०

हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकाशे ।
अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१

आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ २२

अन्वयः । दुकूलवासाः सः विनीतैः अवरोधरक्षैः वधूसमीपं, स्फुटफेनराजि-नवैः चन्द्रपादैः वेलासकाशम् इव, निन्ये ॥ १९

अन्वयः । तत्र अर्चितः अग्निकल्पः भोजपतेः पुरोधाः आज्यादिभिः अग्निं हुत्वा तम् एव विवाहसाक्ष्ये आधाय च, वधूवरौ सङ्गमयाञ्चकार ॥ २०

अन्वयः । सः राजसूनुः हस्तेन वध्वाः हस्तं परिगृह्य, अनन्तराशोकलताप्रवालं प्रतिपल्लवेन प्राप्य चूतः इवः सुतरां चकाशे ॥ २१

अन्वयः । वरः कण्टकितप्रकोष्ठः आसीत्, कुमारी स्विन्नाङ्गुलिः संववृते, पाणिसमागमेन मनोभवस्य वृत्तिः तयोः समं विभक्ता इव ॥ २२

दुकूलवासाः सः अजः विनीतैः नम्रैः अवरोधरक्षैः अन्तःपुराधिकृतैः ... निन्ये । तत्र दृष्टान्तः—स्फुटफेनराजिः उदन्वान् समुद्रः नवैः नूतनैः चन्द्रपादैः ... वेलायाः सकाशं समीपम् इव । पूर्णदृष्टान्तोऽयम् ॥ १९

तत्र सद्मनि । अर्चितः पूजितः अग्निकल्पः अग्नितुल्यः भोजपतेः भोजदेश... पुरोधाः पुरोहितः । "पुरोधास्तु पुरोहितः" इत्यमरः । आज्यादिभिः द्रव्यैः ... तम् एव च अग्निं विवाहसाक्ष्ये आधाय साक्षिणं कृत्वा इत्यर्थः । वधूवरौ ... योजयामास ॥ २०

सः राजसूनुः हस्तेन स्वकीयेन वध्वाः हस्तं परिगृह्य, अनन्तरायाः ... अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूतः आम्रः ... चकाशे ॥ २२

वरः कण्टकितः पुलकितः प्रकोष्ठः यस्य सः आसीत् । "सूच्यग्रे क्षुद्रशत्रौ च कण्टकः" इत्यमरः । कुमारी स्विन्नाङ्गुलिः संववृते बभूव । अतीतप्रेत्यर्थे... गमेन पाण्योः संस्पर्शेन कर्त्रा तयोः वधूवरयोः मनोभवस्य वृत्तिः स्थितिः ... इव समीकृतेव इत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्...

तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्त्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योऽन्यलोलानि विलोचनानि ॥२३

प्रदक्षिणप्रक्रमणात् कृशानोरुदर्चिषस्तन्मिथुनं चकाशे ।
मेरोरुपान्तेष्विव वर्त्तमानमन्यान्यसंसक्तमहस्त्रियामम् ॥ २४

नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ २५

अन्वयः। अपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्त्तितानि अन्योऽन्यलोलानि तयोः विलोचनानि मनोज्ञां ह्रीयन्त्रणाम् आनशिरे ॥ २३

अन्वयः। उदर्चिषः कृशानोः प्रदक्षिणप्रक्रमणात् तत् मिथुनम् सुमेरोः उपान्तेषु वर्त्तमानम् अन्योन्यसंसक्तम् अहस्त्रियामम् इव चकाशे ॥ २४

अन्वयः। नितम्बगुर्वी मत्तचकोरनेत्रा लज्जावती सा विधातृप्रतिमेन तेन गुरुणा प्रयुक्ता (सती) अग्नौ लाजविसर्गं चकार ॥ २५

...लमुत्प्रेक्ष्यते। अत्र वात्स्यायनः—कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी भवति पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत" इति। स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकभावोपलक्षणं न तु प्रतिनियमो विवक्षितः एभिरिति ...वचनसामर्थ्यात्। एवं सति कुमारसम्भवे, 'रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति! "तस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन" इति अपरार्द्धस्य पाठान्तरे व्याख्यानान्तरम्। तस्मिन् द्वये मिथुने तत्क्षणम् आत्मवृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं विभक्ता इव ...कृता इव ॥ २२

अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्त्तितानि क्रिययोः निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्त्तितानि प्रत्याकृष्टानि अन्योन्यस्मिन् लोलानि सतृष्णानि। "लोलश्चलसतृष्णयोः" इत्यमरः। तयो दम्पत्योः विलोचनानि दृष्टयः मनोज्ञां रम्यां ...ह्रिया निमित्तेन यन्त्रणां सङ्कोचम् आनशिरे प्रापुः ॥ २३

तत् मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानोः वह्नेः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात् मेरोः उपान्तेषु समीपेषु वर्त्तमानं आवर्त्तमानं मेरुं प्रदक्षिणीकुर्वदित्यर्थः। अन्योन्यसंसक्तं परस्परसङ्गतं मिथुनसाम्ये तद्विशेषणम्, अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् इव। समाहारे द्वन्द्वे कवद्भावः। चकाशे दिदीपे ॥ २४

नितम्बेन गुर्वी अलघ्वी। "दुर्वहालघुनोर्गुर्वी" इति शाश्वतः। विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन, प्रयुक्ता जुहुधीति नियुक्ता मत्तचकोरस्य इव नेत्रे यस्याः ...लज्जावती सा वधूः अग्नौ लाजविसर्गं चकार ॥ २५

हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे॥ २६

तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम्।
वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव॥ २७

तौ स्नातकैर्बन्धुमता च राज्ञा पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्।
कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम्॥ २८

इति स्वसुर्भोजकुलप्रदीपः सम्पाद्य पाणिग्रहणं स राजा।
महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः॥ २९

अन्वयः। हविःशमीपल्लवलाजगन्धी पुण्यः धूमः कृशानोः उदियाय, सः तस्याः [कपोल]संसर्पिशिखः (सन्) मुहूर्तं कर्णोत्पलतां प्रपेदे॥ २६

अन्वयः। आचारधूमग्रहणात् तत् वधूमुखम् अञ्जनक्लेदसमाकुलाक्षं प्रम्ला[नबीजाङ्कुर]कर्णपूरं पाटलगण्डलेखं बभूव॥ २७

अन्वयः। कनकासनस्थौ तौ कन्याकुमारौ, स्नातकैः बन्धुमता राज्ञा पुर[न्ध्रिभिश्च] क्रमशः प्रयुक्तम् आर्द्राक्षतारोपणम् अन्वभूताम्॥ २८

अन्वयः। अधिश्रीः भोजकुलप्रदीपः सः राजा, इति स्वसुः पाणिग्रहणं सम्[पाद्य मही]पतीनां पृथक् अर्हणार्थम् अधिकृतान् समादिदेश॥ २९

हविषः आज्यादेः शमीपल्लवानां लाजानां च गन्धः अस्यास्तीति हवि[ःशमीपल्लव]लाजगन्धी। "शमीपल्लवमिश्रान् लाजान् अञ्जलिना वपति" इति कात्यायनः। पु[ण्यः] धूमः कृशानोः पावकात् उदियाय उद्भूतः। कपोलयोः संसर्पिणी प्रसरणशी[ला शिखा] यस्य सः तथोक्तः स धूमः तस्याः वध्वाः मुहूर्तं कर्णोत्पलतां प्रपेदे॥ २६

तत् वधूमुखम् आचारेण प्राप्तात् धूमग्रहणात् अञ्जनस्य क्लेदः अञ्जनक्लेदः [...]मिश्रबाष्पोदकमित्यर्थः। तेन समाकुलाक्षं प्रम्लानः बीजाङ्कुरः यवाङ्कुरः [...] अवतंसः यस्य तत् पाटलगण्डलेखम् अरुणगण्डस्थलम् बभूव॥ २७

कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः गृहस्थविशेषैः। "स्नातकस्त्वाप्लु[तो व्रती]" इत्यमरः। बन्धुमता बन्धुपुरःसरेण इत्यर्थः। राज्ञा च पुरन्ध्रिभिः पतिपुत्रवतीभि[ः] क्रमशः प्रयुक्तं स्नातकादीनां पूर्वपूर्वश्रैष्ठ्यात् क्रमेण कृतम् आर्द्राक्षतानाम् [...] अन्वभूताम् अनुभूतवन्तौ॥ २८

अधिश्रीः अधिकसम्पन्नः भोजकुलप्रदीपः सः राजा, इति स्वसुः इन्दुमत्याः [...] विवाहं सम्पाद्य कारयित्वा महीपतीनां राज्ञां पृथक् एकैकशः अर्हणार्थं [...] अधिकृतान् अधिकारिणः समादिदेश आज्ञापयामास॥ २९

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३०

स राजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ ३१

भर्त्तापि तावत् क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।
भर्त्तापि तावत् क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२

तिस्रस्त्रिलोकीप्रथितेन सार्द्धमजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्त्तत कुण्डिनेशः पर्व्वात्यये सोम इवोष्णरश्मेः ॥ ३३

अन्वयः। मुदः लिङ्गैः संवृतक्रियाः गूढनक्राः प्रसन्नाः ह्रदाः इव (स्थिताः) ते वैदर्भम् आमन्त्र्य उपदाच्छलेन तदीयां पूजां प्रत्यर्प्य ययुः ॥ ३०

अन्वयः। आरम्भसिद्धौ कृतपूर्व्वसंवित् सः राजलोकः, समयोपलभ्यं तत् प्रमदामिषम् आदास्यमानः (सन्) अजस्य पन्थानम् आवृत्य तस्थौ ॥ ३१

अन्वयः। तावत् अनुष्ठितानन्तरजाविवाहः क्रथकैशिकानां भर्त्ता अपि, सत्त्वानुरूपाहरणीकृतश्रीः (सन्) राघवं प्रास्थापयत् अन्वगात् च ॥ ३२

अन्वयः। कुण्डिनेशः मार्गे त्रिलोकीप्रथितेन अजेन सार्द्धं तिस्रः वसतीः उषित्वा, पर्व्वात्यये सोमः उष्णरश्मेः इव तस्मात् अपावर्त्तत ॥ ३३

मुदः सन्तोषस्य लिङ्गैः चिह्नैः कपटहासादिभिः संवृतविक्रिया निगूहितमत्सराः अतएव प्रसन्नाः वहिर्निर्म्मलाः गूढनक्राः अन्तर्लीनग्राहाः इव स्थिताः ते नृपाः, वैदर्भं भोजम् आमन्त्र्य आपृच्छ्य तदीयां वैदर्भीयां पूजाम् उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ॥ ३०

आरम्भसिद्धौ कार्य्यसिद्धौ विषये पूर्व्वं कृता कृतपूर्व्वा सुप्सुपेति समासः कृतपूर्व्वा संवित् सङ्केतः मार्गावरोधरूपः उपायः येन सः तथोक्तः। "संवित् युद्धे प्रतिज्ञायां सङ्केताचारनामसु" इति केशवः। सः राजलोकः समयोपलभ्यम् अजप्रस्थानकाले लभ्यं तदा तस्यैकाकित्वादिति भावः। "समरोपलभ्यम्" इति पाठे युद्धसाध्यमित्यर्थः। तत् प्रमदा एव आमिषं भोग्यवस्तु। "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" इति केशवः। आदास्यमानः ग्रहीष्यमाणः सन् अजस्य पन्थानम् आवृत्य अवरुध्य तस्थौ ॥ ३१

अनुष्ठितः सम्पादितः अनन्तरजायाः अनुजायाः विवाहः येन तथोक्तः क्रथकैशिकानां देशानां भर्त्ता स्वामी भोजः, अपि तावत् तदा सत्त्वानुरूपम् उत्साहानुरूपं यथा तथा आहरणीकृता श्रीः येन तथोक्तः सन्, राघवम् अजं प्रास्थापयत् प्रस्थापितवान् स्वयम् अन्वगात् अनुजगाम च ॥ ३२ ... समन्तात्। अनेनानियतवस्तुदानमित्यर्थः। हरणं कन्यायै देयं धनम्। "यौतुकादि तु यद्देयं सदायो हरणञ्च तत्" इत्यमरः। आहरणं हरणीकृता श्रीः

कुण्डिनं विदर्भनगरं तस्य ईशः भोजः, त्रिषु लोकेषु प्रथितेन अजेन सार्द्धं मार्गे पथि

प्रमन्यवः प्रागपि कोशलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४

तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।
बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५

तस्याः स रक्षार्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमारः ।
प्रत्यग्रहीत् पार्थिववाहिनीं तां भागीरथीं शोण इवोत्तरङ्गः ॥ ३६

पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७

अन्वयः । नृपाः, प्रत्येकम् आत्तस्वतया प्राक् अपि कोशलेन्द्रे प्रमन्यवः बभूवुः, अ[illegible] समेताः ( सन्तः ) तदात्मजस्य स्त्रीरत्नलाभं न चक्षमिरे ॥ ३४

अन्वयः । दृप्तः सः राजन्यगणः भोजकन्याम् उद्वहन्तम् तम् बलिप्रदिष्टां श्रियम् आददानं त्रैविक्रमं पादम् इन्द्रशत्रुः इव, पथि रुरोध ॥ ३५

अन्वयः । सः कुमारः तस्याः रक्षार्थम् अनल्पयोधं, पित्र्यं सचिवम् आदिश्य [illegible] शोणः भागीरथीम् इव, तां पार्थिववाहिनीं प्रत्यग्रहीत् ॥ ३६

अन्वयः । पत्तिः पदातिम्, रथेशः रथिनम् तुरङ्गसादी तुरगाधिरूढम्, यन्ता गजस्थम् अभ्यपतत्, तुल्यप्रतिद्वन्द्वि युद्धं बभूव ॥ ॥ ३७

तिस्रः वसतीः रात्रीः उषित्वा । 'वसतीरात्रिवेश्मनोः' इत्यमरः । कालाध्वनोरत्य[illegible] इति द्वितीया । पर्वात्यये दर्शान्ते उषारम्भे : सूर्यात् सोमः चन्द्रः इव, तस्मात् अपावर्त्तत, तं विसृज्य निवृत्त इत्यर्थः ॥ ३३

नृपाः राजानः, प्राक् अपि प्रत्येकम् आत्तस्वतया दिग्विजये गृहीतधनत्वेन [illegible] रघौ प्रमन्यवः रूढवैरा बभूवुः, अतः हेतोः समेताः सङ्गताः सन्तः तदात्मजस्य स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे ॥ ३४

दृप्तः उद्धतः सः राजन्यगणः राजसङ्घातः भोजकन्याम् उद्वहन्तं तम् अजं, वैरोचनिना प्रदिष्टां दत्तां श्रियम् आददानं स्वीकुर्व्वाणं त्रिविक्रमस्य इमं त्रैविक्रमं [illegible] इन्द्रशत्रुः प्रह्लादः इव, पथि रुरोध । तथा च ब्रह्माण्डपुराणे, "विरोचनविरोधे[illegible] प्राक्तन स्मरन् । विष्णोस्तु क्रममाणस्य पादाम्भोजं रुरोध ह ।" इति ॥ ३५

सः कुमारः अजः, तस्याः इन्दुमत्याः रक्षार्थम् अनल्पयोधं बहुभटं पितुरागतं [illegible] आप्तमित्यर्थः । सचिवम् आदिश्य आज्ञाप्य, तां पार्थिववाहिनीं राजसेनाम् । "[illegible] वाहिनी सेना" इत्यमरः । भागीरथीम् उत्तरङ्गः शोणः शोणाख्यः नदः इव, [illegible] अभियुक्तवान् ॥ ३६

पत्तिः पादचारः योद्धा, पदातिं पादचारम् अभ्यपतत् । पादाभ्याम् अततीति [illegible]

नदत्सु तूर्य्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान्।
बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ ३८

उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः।
विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्य्यम् ॥ ३९

मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि।
बभुः पिबन्तः परमार्थमत्स्याः पर्य्याविलानीव नवोदकानि ॥ ४०

अन्वयः। चापभृतः तूर्य्येषु नदत्सु (सत्सु) अविभाव्यवाचः (सन्तः) कुलोपदेशान् न उदीरयन्ति स्म, परस्परस्य ऊर्ज्जितं नाम बाणाक्षरैः एव शशंसुः ॥ ३८

अन्वयः। संयति अश्वैः उत्थापितः, स्यन्दनवंशचक्रैः सान्द्रीकृतः, कुञ्जरकर्णतालैः विस्तारितः रेणुः नेत्रक्रमेण सूर्य्यम् उपरुरोध ॥ ३९

अन्वयः। मत्स्यध्वजाः वायुवशात् विदीर्णैः मुखैः प्रवृद्धध्वजिनीरजांसि पिबन्तः (सन्तः) पर्य्याविलानि नवोदकानि पिबन्तः, परमार्थमत्स्याः इव बभुः ॥ ४०

"पादस्य पद" इत्यादिना पदादेशः। "पदातिपत्तिपदगपादातिकपदातयः" इत्यमरः। रथेशः रथिकः, रथिनं रथारोहम् अभ्यपतत् तुरङ्गसादी अश्वारोहम् अभ्यपतत्। "रथिनः स्यन्दनारोहाः अश्वारोहास्तु सादिनः" इत्यमरः। गजस्य यन्ता हस्त्यारोहः गजस्थं पुरुषम् अभ्यपतत्, इत्थम् अनेन प्रकारेण तुल्यप्रतिद्वन्द्वि एकजातीयप्रतिभटं युद्धं बभूव। अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनः योधाः। "द्वन्द्वं कलहयुग्मयोः" इत्यमरः ॥ ३७

तूर्य्येषु नदत्सु सत्सु अविभाव्यवाचः अनवधार्य्यगिरः चापभृतः धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैः ते कुलोपदेशाः तान् कुलनामानि न उदीरयन्ति स्म न उच्चारयामासुः श्रोतुमशक्यत्वाद्वाचो नाब्रुवन् इत्यर्थः। किन्तु बाणाक्षरैः बाणेषु लिखिताक्षरैः एव परस्परस्य अन्योऽन्यस्य ऊर्जितं प्रख्यातं नाम शशंसुः ॥ ३८

संयति संग्रामे अश्वैरुत्थापितः, स्यन्दनवंशानां रथसमूहानां चक्रैः रथाङ्गैः सान्द्रीकृतः घनीकृतः। "वंशः पृष्ठास्थ्नि गेहोर्द्धकाष्ठे वेणौ गणे कुले" इति केशवः। कुञ्जरकर्णानां तालैः ताड़नैः विस्तारितः प्रसारितः रेणुः नेत्रक्रमेण अंशुकपरिपाट्या अंशुकमिव इत्यर्थः। "स्यान्जटांशुकयोर्नेत्रम्" इति, "क्रमोऽङ्घ्रौ परिपाट्यां च" इति केशवः। सूर्य्यम् उपरुरोध आच्छादयामास ॥ ३९

वायुवशात् विदीर्णैः विवृतैः मुखैः प्रवृद्धानि ध्वजिनीरजांसि सैन्यरेणून् पिबन्तः मत्स्यध्वजाः मत्स्याकाराः ध्वजाः, पर्य्याविलानि परितः कलुषाणि नवोदकानि पिबन्तः परमार्थमत्स्याः इव बभुः भान्ति स्म ॥ ४०

रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः।
स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः॥ ४१
आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः॥ ४२
स छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात् पवनावधूतः।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे॥ ४३
प्रहारमूर्च्छापगमे रथस्था यन्तॄनुपालभ्य निवर्त्तिताश्वान्।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः॥ ४४

अन्वयः। सान्द्रे रजसि, रथाङ्गध्वनिना रथः विजज्ञे, विलोलघण्टाक्वणितेन (विजज्ञे) स्वभर्तृनामग्रहणात् आत्मपरावबोधः बभूव॥ ४१

अन्वयः। शस्त्रक्षताश्वद्विपवीरजन्मा रुधिरप्रवाहः, आजौ लोचनमार्गम् आवृण्वतः विजृम्भितस्य रजोऽन्धकारस्य बालारुणः अभूत्॥ ४२

अन्वयः क्षतजेन छिन्नमूलः सः रेणुः, तस्य उपरिष्टात् पवनावधूतः (सन्) अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितः धूमः इव आबभासे॥ ४३

अन्वयः। रथस्थाः प्रहारमूर्च्छापगमे, निवर्त्तिताश्वान् यन्तॄन् उपालभ्य, यैः सादिताः लक्षितपूर्वकेतून् तान् एव सामर्षतया निजघ्नुः॥ ४४

सान्द्रे प्रवृद्धे रजसि रथः रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः। नागः विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे। आत्मपरावबोधः स्वपरविवेकः योधानां शेषः। स्वभर्तॄणां स्वस्वामिनां नामग्रहणात् नामोच्चारणात् बभूव, रजोऽन्धत्वात् स्वं परञ्च शब्दादेवानुमाय प्रजह्रुरित्यर्थः॥ ४१

लोचनमार्गम् आवृण्वतः दृष्टिपथम् उपरुन्धतः आजौ युद्धे विजृम्भितस्य आततस्य रज एव अन्धकारं तस्य, शस्त्रक्षतेभ्यः अश्वद्विपवीरेभ्यः जन्म यस्य सः तथोक्तः रुधिरप्रवाहः बालारुणः, बालार्कः अभूत्। "अरुणो भास्करेऽपि स्यात्" इत्यमरः। बालार्कः रुधिरसावर्ण्यार्थम्॥ ४२

क्षतजेन रुधिरेण छिन्नमूलः त्याजितभूतलसम्बन्ध इत्यर्थः। तस्य क्षतजस्य उपरिष्टात् पवनावधूतः वाताहतः सः रेणुः अङ्गारशेषस्य अग्नेः पूर्वोत्थितः धूमः इव, दिदीपे॥ ४३

रथस्थाः रथिनः, प्रहारेण या मूर्च्छा तस्या अपगमे सति। 'मूर्च्छितानामन्यत्र नयनं संरक्षणं सारथिधर्मः' इति कृत्वा निवर्त्तिताश्वान् यन्तॄन् सारथीन् उपालभ्य इत्यधिक्षिप्य, पूर्वं यैः स्वयं सादिताः हताः लक्षितपूर्वकेतून् पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञेयान् इत्यर्थः, तानेव सामर्षतया सक्रोधत्वेन हेतुना निजघ्नुः प्रजह्रुः॥ ४४

अप्यर्द्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः।
संप्रापुरेवात्मजवानुवृत्त्या पूर्व्वार्द्धभागैः फलिभिः शरव्यम् ॥ ४५

आधोरणानां गजसन्निपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः।
हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६

पूर्वं प्रहर्त्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७

तनुत्यजां वर्म्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः।
उद्यन्तमग्निं शमयाम्बभूवुर्गजा विविग्नाः करशीकरेण ॥ ४८

अन्वयः। हस्तवतां धनुर्भृतां पृषत्काः अर्द्धमार्गे परबाणलूना अपि, आत्मजवानुवृत्त्या फलिभिः पूर्व्वार्द्धभागैः शरव्यम् एव संप्रापुः ॥ ४५

अन्वयः। गजसन्निपाते, निशितैः क्षुराग्रैः चक्रैः हृतानि अपि आधोरणानां शिरांसि श्येननखाग्रकोटिव्यासक्तकेशानि ( सन्ति ) चिरेण पेतुः ॥ ४६

अन्वयः। पूर्व्वम् प्रहर्त्ता अश्वसादी, तुरङ्गमस्कन्धनिषण्णदेहं प्रतिप्रहाराक्षमं रिपुं भूयः न जघान प्रत्याश्वसन्तम् आचकाङ्क्ष ॥ ४७

अन्वयः। तनुत्यजां वर्म्मभृतां ( सम्बन्धिभिः ) बृहत्सु दन्तेषु पतद्भिः विकोशैः असिभिः उद्यन्तम् अग्निम्, विविग्नाः गजाः, करशीकरेण शमयाम्बभूवुः ॥ ४८

अर्द्धश्चासौ मार्गश्च तस्मिन् अर्द्धमार्गे परेषां बाणैः लूनाः छिन्नाः अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शराः आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिः लोहाग्रवद्भिः। "शस्त्रबाणाग्रयोः फलम्" इति विश्वः। पूर्वार्द्धभागैः, शृणातीति शरुः तस्मै हितं शरव्यं लक्ष्यम्। "उगवादिभ्यो यत्" इति यत्प्रत्ययः। "लक्ष्यं लक्ष्म शरव्यञ्च" इत्यमरः। संप्रापुरेव न तु मध्ये पतिता इत्यर्थः ॥ ४५

गजसन्निपाते गजयुद्धे निशितैः अत एव क्षुराग्रैः क्षुरस्य अग्रमिव अग्रं येषां तैः चक्रैः आयुधविशेषैः हृतानि छिन्नानि अपि श्येनानां पक्षिविशेषाणां। "पक्षी श्येन" इत्यमरः। नखाग्रकोटिषु व्यासक्ताः केशाः येषां तानि आधोरणानां हस्त्यारोहाणाम्। "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः। शिरांसि चिरेण पेतुः पतितानि। शिरःपातात् [illegible]गेवारस्य पश्चादुत्पततां नखेषु केशसङ्गश्चिरपातहेतुरिति भावः ॥ ४६

पूर्वं प्रथमं प्रहर्त्ता अश्वसादी तौरङ्गिकः प्रतिप्रहारे अक्षमम् अशक्तं तुरङ्गमस्कन्धे निषण्णदेहं मूर्च्छितमित्यर्थः। रिपुं भूयः न जघान पुनः न प्रजहार किन्तु प्रत्याश्वसन्तं पुनः उज्जीवन्तम् आचकाङ्क्ष। "नायुधव्यसनं प्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधादिति भावः ॥४७॥

तनुत्यजां तनुषु निस्पृहाणामित्यर्थः। वर्म्मभृतां कवचिनां सम्बन्धिभिः बृहत्सु दन्तेषु पतद्भिः। अतएव विकोशैः पिधानात् उद्धृतैः। "कोशोऽस्त्री कुड्मले खड्गपिधाने" इत्यमरः। असिभिः खड्गैः उद्यन्तम् अग्निं विविग्नाः भीताः गजाः करशीकरेण शुण्डादण्डजल[कण]ेन शमयाम्बभूवुः शान्तं चक्रुः ॥ ४८

शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव।
रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः॥
उपान्तयोर्निष्कुषितं विहङ्गैराक्षिप्य तेभ्यः पिशितप्रियापि।
केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार॥ ५०
कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत् कबन्धं समरे ददर्श॥
अन्योऽन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित्।
व्यश्वौ गदाव्यायतसंप्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ।

अन्वयः। शिलीमुखोत्कृत्तशिरः फलाढ्या, च्युतैः शिरस्त्रैः चषको[illegible] शोणितमद्यकुल्या रणक्षितिः, मृत्योः पानभूमिः इव रराज॥ ४९

अन्वयः। विहङ्गैः उपान्तयोः निष्कुषितं भुजच्छेदम् तेभ्यः आक्षिप्य, [illegible] अपि शिवा, केयूरकोटिक्षततालुदेशा (सती) अपाचकार॥ ५०

अन्वयः। द्विषत्खड्गहृतोत्तमाङ्गः कश्चित् सद्यः विमानप्रभुताम् उपेत्य वा[illegible] सुराङ्गनः (सन्), समरे नृत्यत् स्वं कबन्धं ददर्श॥ ५१

अन्वयः। कौचित् अन्योऽन्यसूतोन्मथनात् तौ एव सूतौ रथिनौ च अभूताम्[illegible] गदाव्यायतसंप्रहारौ भग्नायुधौ (सन्तौ) बाहुविमर्दनिष्ठौ॥ ५२

शिलीमुखैः वाणैः उत्कृत्तानि शिरांसि एव फलानि तैः आढ्याः सम्पन्नाः। शिरांसि त्रायन्ते इति शिरस्त्राणि शीर्षण्यानि। "शीर्षण्यञ्च शिरस्त्रे च" इत्य[illegible] चषकोत्तरा चषकः पानपात्रम् उत्तरं यस्यां सा इव। "चषकोऽस्त्री पानपात्रम्[illegible] मरः। शोणितानि एव मद्यं तस्य कुल्याः प्रवाहाः यस्यां सा। "कुल्या[illegible] सरित्" इत्यमरः। रणक्षितिः युद्धभूमिः मृत्योः पानभूमिः इव, रराज॥ ४९

उपान्तयोः प्रान्तयोः विहङ्गैः पक्षिभिः निष्कुषितं खण्डितम्। "इणनिष्ठाया[illegible] गमः। भुजच्छेदं भुजखण्डं तेभ्यः विहङ्गेभ्यः आक्षिप्य आच्छिद्य पिशितप्रिया[illegible] अपि शिवा क्रोष्ट्री। "शिवः कीलः शिवा क्रोष्ट्री" इति विश्वः। केयूरकोट्या क्षततालुदेशो यस्याः सा सती अपाचकार अपसारयामास। किरतेः करोतेर्वा[illegible]

द्विषतः खड्गेन हृतोत्तमाङ्गः छिन्नशिराः कश्चित् वीरः सद्यः विमानप्रभुतां [illegible] मर्त्यं देवत्वमित्यर्थः। उपेत्य प्राप्य वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना [illegible] तथोक्तः, सन्, समरे नृत्यत् स्वं निजं कबन्धम् विशिरस्कं ददर्श। "कबन्धोऽ[illegible] युक्तमपमूर्द्धकलेवरम्" इत्यमरः॥ ५१

कौचित् वीरौ अन्योऽन्यस्य सूतयोः सारथ्योः उन्मथनात् निधनात् तौ एव [illegible] योद्धारौ च अभूतां तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः संप्र[illegible] ययोः तौ अभूतां ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्द्देन निष्ठा नाशः ययोः [illegible] ताम्। "निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः॥ ५२

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ५३

व्यूहावुभौ तावितरेतरस्मादृभङ्गं जयञ्चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्य्यायवृत्त्येव महार्णवोर्म्मी ॥ ५४

परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५

रथी निषङ्गी कवची धनुष्मान् दृप्तः स राजन्यकमेकवीरः ।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६

अन्वयः । परस्परेण क्षतयोः, समकालम् एव उत्क्रान्तवाय्वोः कयोश्चित् प्रहर्त्रोः …ाप्सरःप्रार्थितयोः ( सतोः ) अमर्त्त्यभावे अपि विवादः आसीत् ॥ ५३

अन्वयः । पश्चात्-पुरो मारुतयोः पर्य्यायवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव, तौ उभौ …हौ इतरेतरस्मात् अव्यवस्थं भङ्गं जयं च आपतुः ॥ ५४

अन्वयः । बले परेण भग्ने अपि, महौजाः अजः प्रत्यरिसैन्यम् एव ययौ, समीरणेन …ः निवर्त्येत, वह्निः तु यतः कक्षः, ततः एव ॥ ५५

अन्वयः । रथी निषङ्गी कवची धनुष्मान् दृप्तः एकवीरः सः महावराहः कल्पक्षयोद्- …म् अर्णवाम्भः इव राजन्यकं निवारयामास ॥ ५६

परस्परेण अन्योऽन्यं क्षतयोः क्षततन्वोः समकालम् एककालं यथा तथा उत्क्रान्तवाय्वोः …गदुद्गतप्राणयोः एका एव अप्सराः प्रार्थिताः याभ्यां तयोः एकाप्सरःप्रार्थितयोः प्रार्थिते- …प्सरसोरित्यर्थः । "वाहिताग्न्यादिषु" इति परनिपातः । अथवा, एकस्याम् अप्सरसि …र्थितं प्रार्थना ययोः इति विग्रहः । "स्त्रियां बहुष्वप्सरसः" इति बहुत्वाभिधानं प्रायि- …म् । कयोश्चित् प्रहर्त्रोः योधयोः अमर्त्त्यभावे अपि देवत्वे अपि विवादः कलहः आसीत् । …कामिषाभिलाषो हि महद्वैरबीजमिति भावः ॥ ५३

तौ उभौ व्यूहौ सेनासङ्घातौ । "व्यूहस्तु बलविन्यासः" इत्यमरः । पश्चात् पुरश्च यौ …रुतौ तयोः पर्य्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव इतरेतरस्मात् अन्योऽन्यस्मात् …व्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गम् पराजयं च आपतुः प्राप्तवन्तौ ॥ ४४

बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजाः महाबलः अजः, अरिसैन्यं प्रति एव …यौ । तथाहि, समीरणेन वायुना धूमः निवर्त्येत कक्षादपसार्य्येत । वर्त्तेरर्हार्थे …ऽपि सम्भावनायां लिङ् । वह्निस्तु यतः यत्र कक्षः तृणम् 'कक्षो तु तृणवीरुधौ' इत्य- …ः । तत एव तत्रैव प्रवर्त्तते इति शेषः । सार्वविभक्तिकस्तसिः ॥ ५५

रथी रथारूढो, निषङ्गी तूणीरवान् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः ।

स दक्षिणं तूणमुखेन वामं व्यापारयन् हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान् सुषुवे रिपुघ्नान् ॥
स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्द्ध्वरेखा भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः ॥
सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपालास्तस्मिन् प्रजह्रुर्युधि सर्व एव ॥

अन्वयः । स दक्षिणं हस्तं तूणमुखेन वामं व्यापारयन् (सन्) अलक्ष्यत । योद्धुः सकृत् आकर्णकृष्टा मौर्वी रिपुघ्नान् बाणान् सुषुवे इव ॥ ५७

अन्वयः । सः रोषदष्टाधिकलोहितोष्ठैः व्यक्तोर्द्ध्वरेखाः भ्रुकुटीः वहद्भिः भल्लनि- हुंकारगर्भैः द्विषतां शिरोभिः गां तस्तार ॥ ५८

अन्वयः । युधि सर्व्वे एव भूमिपालाः द्विरदप्रधानैः सर्व्वैः बलाङ्गैः, क- सर्वायुधैः, सर्व्वप्रयत्नेन च, तस्मिन् प्रजह्रुः ॥ ५९

कवची वर्मधरः, धनुष्मान् धनुर्धरः इत्यः रणदृप्तः एकवीरः असहायशूरः सः अ- राजसमूहम् । 'गोत्रोक्ष'—इत्यादिना वुञ्प्रत्ययः । महावराहः वराहावतारः कल्पक्षये कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास ॥ ५६

सः अजः, आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वामम् 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । व्यापारयन् अलक्ष्यत दयस्तु दुर्लक्ष्या इत्यर्थः । सकृत् आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्वी ज्या, रि- रिपुघ्नाः ताम् । "अमनुष्यकर्तृके च" इति ठक्प्रत्ययः । बाणान् - इत्युत्प्रेक्षा ॥ ५७

सः अजः, रोषेण दष्टाः अतएव अधिकलोहिताः ओष्ठाः येषां तानि ऊर्द्ध्वा रेखा यासां ताः भ्रुकुटीः भ्रुभङ्गान् वहद्भिः भल्लनिकृत्ताः बाणविशेषै- कण्ठाः येषां तैः हुङ्कारगर्भैः सहुङ्कारैः हुङ्कुर्व्वद्भिरित्यर्थः । द्विषतां शिरोभिः तस्तार छादयामास ॥ ५८

द्विरदप्रधानैः गजमुख्यैः सर्वैः बलाङ्गैः सेनाङ्गैः । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । 'उरश्छदः कङ्कटकोऽजगरः ... ऽस्त्रियाम्' इत्यमरः । सर्वायुधैश्च । बाह्यबलमुक्त्वा आन्तरमाह—सर्वप्रयत्नेन भूमिपालाः युधि तस्मिन् अजे प्रजह्रुः तं प्रजह्रुरित्यर्थः । सर्वत्र सर्वकारक- कर्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्—'अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते ।' इति ॥ ५९

सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः किञ्चित्प्रकाशेन विवस्वतेव ॥ ६०
प्रियंवदात् प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।
गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१
ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ ६२
ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः ।
तेन स्वहस्तार्जितमेकवीरः पिबन् यशो मूर्त्तमिवावभासे ॥ ६३

अन्वयः। परेषाम् अस्त्रव्रजैः छन्नरथः सः अजः, नीहारमग्नः दिनपूर्वभागः [किञ्चि]त्प्रकाशेन विवस्वता इव ध्वजाग्रमात्रेण लक्ष्यः बभूव ॥ ६०

अन्वयः। स्वप्ननिवृत्तलौल्यः कुसुमास्त्रकान्तः अधिराजसूनुः असौ कुमारः, प्रियंवदात् [प्रा]प्तं प्रस्वापनं गान्धर्वम् अस्त्रं प्रायुङ्क्त ॥ ६१

अन्वयः। ततः धनुष्कर्षणमूढहस्तम् एकांसपर्यस्तशिरस्त्रजालं ध्वजस्तम्भनिषण्णदेहं [न]रदेवसैन्यं निद्राविधेयं ( सत् ) तस्थौ ॥ ६२

अन्वयः। ततः कुमारः प्रियोपात्तरसे अधरोष्ठे जलजं निवेश्य दध्मौ, येन एकवीरः [(]सः कुमारः ) स्वहस्तार्जितं मूर्त्तं यशः पिबन् इव आबभासे ॥ ६३

परेषां द्विषाम् अस्त्रव्रजैः छन्नरथः सः अजः, नीहारैः हिमैः मग्नः दिनपूर्वभागः [प्रा]तःकालः किञ्चित्प्रकाशेन ईषल्लक्ष्येण विवस्वता इव, ध्वजाग्रमात्रेण लक्ष्यः बभूव, [ध्व]जाग्रादन्यत्र किञ्चिल्लक्ष्यतं स्म इत्यर्थः ॥ ६०

अधिराजसूनुः महाराजपुत्रः कुसुमास्त्रकान्तः मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नविरक्तः [जा]गरूक इत्यर्थः असौ कुमारः अजः, प्रियंवदात् पूर्वोक्तात् गन्धर्वात् प्राप्तं गान्धर्वं [ग]न्धर्वदेवताकम्। "सास्य देवता" इत्यण्। प्रस्वापयतीति प्रस्वापनं निद्राजनकम् अस्त्रं [रा]जसु प्रायुङ्क्त प्रयुक्तवान् ॥ ६१

ततः धनुष्कर्षणे चापकर्षणे मूढहस्तम् अव्यापृतहस्तम् एकस्मिन् अंसे पर्यस्तं स्रस्तं [शि]रस्त्राणां शीर्षण्यानां जालं समूहः यस्य तत् ध्वजस्तम्भेषु निषण्णाः अवष्टब्धाः देहाः [य]स्य तत् नरदेवानां राज्ञां सेना एव सैन्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। [नि]द्राविधेयं निद्रापरतन्त्रं तस्थौ ॥ ६२

ततः कुमारः अजः, प्रियया इन्दुमत्या उपात्तरसे आस्वादितमाधुर्ये अतिश्लाघ्ये [इ]ति भावः। अधरोष्ठे जलजं शङ्खं निवेश्य। "जलजं शङ्खपद्मयोः" इति विश्वः। [ध]ध्मौ मुखमारुतेन पूरयामास, तेनौष्ठनिविष्टेन शङ्खेन एकवीरः सः स्वहस्तार्जितं [शुभ्र]त्वं मूर्त्तिमत् यशः पिबन् इव आबभासे, यशसः शुभ्रत्वादिति भावः ॥ ६३

शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः।
निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम्॥
सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम्।
यशो हृतं सम्प्रति राघवेण न जीवितं वः कृपयेति वर्णाः॥
स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे॥
इतः परानर्भकहार्यशस्त्रान् वैदर्भि ! पश्यानुमता मयासि।
एवम्विधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः॥

अन्वयः। स्वयोधाः शङ्खस्वनाभिज्ञतया निवृत्ताः (सन्तः) निमीलितानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् इव, सन्नशत्रुं तं ददृशुः॥ ६४

अन्वयः। "सम्प्रति राघवेण वः यशः हृतम् कृपया जीवितं न हृतम्" वर्णाः, तेन सशोणितैः शिलीमुखाग्रैः पार्थिवानां केतुषु निक्षेपिताः॥ ६५

अन्वयः। चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ललाटबद्धश्रमवारिबिन्दुः सः भीतां प्रियाम् एत्य वचः बभाषे॥ ६६

अन्वयः। वैदर्भि ! इतः अर्भकहार्यशस्त्रान् परान् पश्य, मया अनुमता असि, एभिः एवंविधेन आहवचेष्टितेन, मम हस्तगता त्वं प्रार्थ्यसे॥ ६७

शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभिज्ञातत्वात् निवृत्ताः प्राक् पलायमानाः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तम् अजं, निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रम् इव ददृशुः॥

संप्रति राघवेण रघुपुत्रेण पूर्वं रघुणा इति भावः। हे राजानः ! वः युष्माकं यशः हृतं, जीवितं तु कृपया न हृतं, न त्वशक्त्या इति भावः। इत्येवं कृपा ... प्रतिपादकं वाक्यमित्यर्थः। सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैः बाणाग्रैः ... अजेन प्रयोजककर्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः निवेशिताः लेखिता इत्यर्थः। क्षिपतेर्ण्यन्तात् कर्मणि क्तः॥ ६५

चापकोट्यां निहितः एकः बाहुर्येन सः शिरस्त्रस्य निष्कर्षणेन अपनयनेन भिन्नः ... कृष्टकेशबन्धः। "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। ... श्रमवारिबिन्दवः यस्य सः अजः, भीतां प्रियाम् इन्दुमतीम् एत्य आसाद्य वचः ...

हे वैदर्भि ! इन्दुमति ! इतः इदानीम् अर्भकहार्यशस्त्रान् बालकापहार्य... परान् शत्रून् पश्य मया अनुमता असि. द्रष्टुमिति शेषः। एभिः ... निद्रारूपेण आहवचेष्टितेन रणकर्मणा मम हस्तगता हस्तगतवत् दुर्धर्षा ...

तस्याः प्रतिद्वन्द्विभवाद्विषादात् सद्यो विमुक्तं मुखमाबभासे।
निःश्वासबाष्पापगमात् प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः॥ ६८

दृष्टापि सा ह्रीविजिता न साक्षाद्-
वाग्भिः सखीनां प्रियमभ्यनन्दत्।
स्थली नवाम्भःपृषताभिवृष्टा
मयूरकेकाभिरिवाभ्रवृन्दम्॥ ६९

इति शिरसि स वामं पादमाधाय राज्ञा-
मुदवहदनवद्यां तामवद्यादपेतः।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा
समरविजयलक्ष्मीः सैव मूर्त्ता बभूव॥ ७०

अन्वयः। प्रतिद्वन्द्विभवात् विषादात् सद्यः विमुक्तं तस्याः मुखम्, निःश्वासबाष्पापगमात् ...मीयं प्रसादं प्रपन्नः आत्मदर्शः इव, आबभासे॥ ६८

अन्वयः। सा इन्दुमती दृष्टा अपि ह्रीविजिता (सती) साक्षात् न, नवाम्भः...ताभिवृष्टा स्थली मयूर-केकाभिः अभ्रवृन्दम् इव, सखीनां वाग्भिः प्रियम् अभ्यनन्दत्॥ ६९

अन्वयः। अवद्यात् अपेतः सः इति राज्ञां शिरसि वामं पादम् आधाय, अनवद्यां ...[ उदवहत् रथतुरगरजोभिः रूक्षालकाग्रा सा एव तस्य मूर्त्ता समरविजयलक्ष्मीः ...व]॥ ७०

...षी अपजिहीर्षुरसी इत्यर्थः। एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति ...त्यम्॥ ६७

प्रतिद्वन्द्विभवात् रिपूत्थात् विषादात् दैन्यात् सद्यः विमुक्तं तस्याः मुखं, निःश्वासस्य ...बाष्पः उष्मा। "बाष्पो नेत्रजलोष्मणोः" इति विश्वः। तस्य अपगमात् हेतोः आत्मीयं ...सादं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति आत्मदर्शः दर्पणः इव, ...आबभासे॥ ६८

सा इन्दुमती दृष्टा अपि पत्युः पौरुषेण प्रमुदिता अपि ह्रिया विजिता सती अतः ...प्रियम् अजम् साक्षात् स्वयं न अभ्यनन्दत् न प्रशशंस, किन्तु नवैः अम्भःपृषतैः पयोबिन्दुभिः ...वृष्टा, अभिषिक्ता स्थली अकृत्रिमा भूमिः। "जनपदकुण्डगोणस्थल" इत्यादिना ...त्रिमार्थे ङीष्। अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव, सखीनां वाग्भिः अभ्यनन्दत्॥ ६९

...न उद्यते न उच्यते इति अवद्यः गर्ह्यम्। "अवद्यपण्य"—इत्यादिना निपातः। ...कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः। तस्मात् अपेतः निर्दोष इत्यर्थः। ...अजः, इति राज्ञां शिरसि वामं पादम् आधाय, अनवद्याम् अदोषाम् ताम् इन्दुमतीम्

प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-
न्न हि सति कुलधुर्य्ये सूर्य्यवंश्या गृहाय ॥ ७१

अन्वयः । प्रथमपरिगतार्थः रघुः, संनिवृत्तं विजयिनं श्लाघ्यजायासमेतं तम्
तदुपहितकुटुम्बः ( सन् ) शान्तिमार्गोत्सुकः अभूत्, हि कुलधुर्य्ये सति
गृहाय न ॥ ७१

उदवहत् उपानयत् आत्मसाच्चकार इत्यर्थः । अयमर्थः "तमुद्वहन्तं पथि
( ७ । ३५ ) इत्यत्र न श्लिष्टः । तस्य अजस्य रथतुरगाणां रजोभिः रूक्षा
अलकाग्राणि यस्याः सा, इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजयलक्ष्मी
एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः ॥ ७०

प्रथमम् अजगमनात् प्राक् एव परिगतः ज्ञातः अर्थं विवाहविजयरूपः येन
परिगतार्थः रघुः, विजयिनं विजययुक्तं श्लाघ्यजायासमेतं सन्निवृत्तं प्रत्यागतं
अभिनन्द्य तस्मिन् अजे उपहितकुटुम्बः सन्, "सुतविन्यस्तपत्नीकः" इति याज्ञ
दिति भावः । शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत् । तथाहि—कुलधुर्ये
सति सूर्य्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ सूरिविरचितया सञ्जीवनी
व्याख्यया समेतो महाकवि—कालिदासकृतौ रघुवंशे महाकाव्ये अजपा
ग्रहणो नाम सप्तमः सर्गः ।

---

# अष्टमः सर्गः ।

—:०*०:—

अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।
वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १
दुरितैरपि कर्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २
अनुभूय वशिष्ठसम्भृतैः सलिलैस्तेन सहाभिषेचनम् ।
विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३

अन्वयः । अथ पार्थिवः ललितं विवाहकौतुकं बिभ्रतः एव तस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् ॥ १

अन्वयः । नृपसूनवः यत् दुरितैः अपि आत्मसात् कर्तुं प्रयतन्ते हि, अजः उपस्थितं तत् "पितुराज्ञा इति अग्रहीत् भोगतृष्णया (तु) न" ॥ २

अन्वयः । मेदिनी वशिष्ठसम्भृतैः सलिलैः तेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन कृतार्थताम् कथयामास इव ॥ ३

हेरम्बमवलम्बेऽहं यस्मिन् पातालकेलिषु ।
दन्तेनोदस्यति चोर्वीं विश्राम्यन्ति फणीश्वराः ॥

अथ पार्थिवः रघुः, ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रत एव । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् । अस्मिन् सर्गे वियोगिनी वृत्तम् ॥ १

नृपसूनवः राजपुत्राः, यत् राज्यं दुरितैः अपि विषप्रयोगादिनिषिद्धोपायैः अपि आत्मसात् स्वाधीनम् । "तदधीनवचने" इति सातिप्रत्ययः । कर्तुं प्रयतन्ते हि प्रवर्तन्ते एव इत्यर्थः । हिशब्दोऽवधारणे । "हि हेतावधारणे" इत्यमरः । उपस्थितं प्राप्तं तत् राज्यम्, अजः, पितुराज्ञेति हेतोः अग्रहीत् स्वीचकार, भोगतृष्णया तु न अग्रहीत् ॥ २

मेदिनी भूमिः महिषी च ध्वन्यते । वशिष्ठेन सम्भृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन स्फुटमुदहं हर्षेण आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते, कृतार्थतां गुणवद्भर्तृलाभे कृतं साफल्यं कथयामास इव । न चैतावता पूर्वेषामपकर्षः, प्रशंसापरत्वात्, "सर्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इत्यङ्गीकृतत्वाच्च ॥ ३

स बभूव दुरासदः परैर्गुरुणाथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४
रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान् गुणानपि ॥ ५
अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतम् ।
पदमृद्धमजेन पैतृकं विनयेनास्य नवञ्च यौवनम् ॥ ६
सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७

अन्वयः । सः अथर्ववविदा गुरुणा कृतक्रियः ( सन् ) परैः दुरासदः बभूव, हि अस्त्रतेजसा सहितं यत् ब्रह्म अयम् पवनाग्निसमागमः हि ॥ ४

अन्वयः । प्रजाः नवेश्वरं तम् निवृत्तयौवनम् रघुमेव अमन्यन्त, हि सः तस्य केवलाम् श्रियम् न प्रतिपेदे ( किन्तु ) सकलान् गुणान् अपि ॥ ५

अन्वयः । द्वयम् एव शुभंयुना द्वितयेन सङ्गतम् ( सत् ) अधिकं शुशुभे, ऋद्धं अजेन, अस्य नवं यौवनम् विनयेन च ॥ ६

अन्वयः । महाभुजः सः अचिरोपनताम् मेदिनीम् नवपाणिग्रहणाम् वधूमिव, सहसा इयम् उद्वेगम् व्रजेत् सदयम् बुभुजे ॥ ७

अथर्वविदा अथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः अथर्वोक्तविधिना कृतसंस्कार इत्यर्थः । सः अजः, परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव । तथाहि, अस्त्रतेजसा सहितं युक्तं यत् ब्रह्म ब्रह्मतेजः अयं पवनाग्निसमागमः हि, तत्तुल्य इत्यर्थः । पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् "द्वन्द्वे घि" इति नाग्निशब्दस्य पूर्वनिपातः । तथाच काशिकायां—"अयमेकस्तु लक्षणहेत्वोरिति निर्द्देशः पूर्वनिपातव्यभिचारलिङ्गम्" इति । वायुनेवायं दुर्द्धर्षः, किमयं पुनर्वशिष्ठमन्त्रप्रभावे सति इत्यर्थः । अत्र मनुः—'नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते । ब्रह्म क्षत्रं च संपृक्तमिह चामुत्र वर्द्धते' इति ॥ ४

प्रजाः, नवेश्वरं तम् अजम्, निवृत्तयौवनं प्रत्यावृत्तयौवनं रघुम् एव अमन्यन्त, पुनरप्युपस्थितरघुरिव स इति अविच्छेदकमस्तीत्यर्थः । कुतः ? हि यस्मात् सः अजः तस्य रघोः केवलाम् एकाकिनीम् श्रियम् न प्रतिपेदे किन्तु सकलान् गुणान् शौर्य्यदाक्षिण्यादीन् अपि प्रतिपेदे अतस्तद्गुणसमन्वितस्य तद्बुद्धिर्युक्तेत्यर्थः ॥ ५

द्वयम् एव शुभंयुना शुभवता । "शुभंयुस्तु शुभान्वितः" इत्यमरः । "अहंशुभमोर्युस्" इति युस्प्रत्ययः । द्वितयेन सङ्गतं युतं सत् अधिकं शुशुभे । किं केनेत्याह—पैतृकं पितुरागतम् । "ऋतष्ठञ्" इति ठञ्प्रत्ययः । ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन इन्द्रियजयेन च ॥ ६

महाभुजः सः अजः अचिरोपनतां नवोपनतां मेदिनीं भुवं नवं पाणिग्रहं

अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्॥ ८

न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहामिव।
स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन्॥ ९

अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निस्पृहोऽभवत्॥ १०

अन्वयः। प्रकृतिषु सर्वः "अहम् एव महीपतेः मतः" इति अचिन्तयत् उदधेः निम्नगाशतेषु इव अस्य क्वचित् अपि विमानना न अभवत्॥ ८

अन्वयः। सः भूयसा खरः नः (भूयसा) मृदुः च न, पुरस्कृतमध्यमक्रमः (सन्) पवमानः पृथिवीरुहानिव नृपान् अनुद्धरन् नमयामास॥ ९

अन्वयः। अथ रघुः आत्मजं आत्मवत्तया प्रकृतिषु प्रतिष्ठितम् वीक्ष्य विनाशधर्मसु त्रिदिवस्थेषु अपि विषयेषु निस्पृहः अभवत्॥ १०

...स्त्राः ताम् नवोढ़ां वधूम् इव, सहसा बलात्कारेण चेत्। "सही बलं सहामार्यः" इत्य-...रः। इयं मेदिनी वधूः वा उद्वेगं भयम् व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान्। ...भुजोऽनवने" इत्यात्मनेपदम्॥ ७

प्रकृतिषु प्रजासु मध्ये सर्वः। अथवा प्रकृतिष्वित्यस्याहमित्यनेनान्वयः, व्यवधानन्तु ...स्यम्। सर्वोऽपि जनः प्रकृतिषु अहमेव महीपतेः मतः महीपतिना मन्यमानः। "मति-...बुद्धिपूजार्थेभ्यश्च" इति वर्त्तमाने क्तः "क्तस्य च वर्त्तमाने" इति षष्ठी। इति अचिन्तयत् ...पूर्वममन्यत। उदधेः निम्नगाशतेषु इव, अस्य नृपस्य कर्त्तुः "कर्त्तृकर्म्मणोः कृति" इति कर्त्तरि ...षष्ठी। क्वचित् अपि जनविषये विमानना अवमानना तिरस्कारः न अभवत् यतो न ...कश्चिदवमन्यते अतः सर्वोऽप्यहमेवास्य मत इत्यमन्यत इत्यर्थः॥ ८

सः नृपः, भूयसा बाहुल्येन खरः तीक्ष्णः न, भूयसा मृदुः अतिमृदुः अपि नः, किन्तु ...पुरस्कृतमध्यमक्रमः सन्, मध्यमपरिपाटीमवलम्ब्य इत्यर्थः। पवमानः वायुः पृथिवीरुहान् ...तरून् इव नृपान् अनुद्धरन् अनुत्पाटयन् एव नमयामास। अत्र कामन्दकः—"मृदुश्चे-...द्वमन्येत तीक्ष्णादुद्विजते जनः। तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः" इति॥ ९

अथ रघुः आत्मज पुत्रम् आत्मवत्तया निर्विकारमनस्कतया इत्यर्थः। "उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। "आत्मवान् सत्त्ववानुक्तः" इत्युत्पलमालायाम्। प्रकृतिषु ...अमात्यादिषु प्रतिष्ठितं रूढ़मूलं वीक्ष्य ज्ञात्वा विनाशो धर्म्मो येषां तेषु विनाशधर्मसु अनि-...त्येष्वित्यर्थः। "धर्म्मादनिच् केवलात्" इत्यनिच्प्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्ग-...स्थेषु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत्॥ १०

गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११

तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२

रघुरश्रुमुखस्य तस्य तत् कृतवानीप्सितमात्मजप्रियः ।
न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १

स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४

अन्वयः । दिलीपवंशजाः परिणामे गुणवत्सुतरोपितश्रियः प्रयताः (च) तरुवल्कवाससां संयमिनाम् पदवीम् प्रपेदिरे हि ॥ ११

अन्वयः । अरण्यसमाश्रयोन्मुख पितरं तं सुतः वेष्टनशोभिना शिरसा प्रणिपत्य आत्मनः अपरित्यागम् अयाचत ॥ १२

अन्वयः । आत्मजप्रियः रघुः अश्रुमुखस्य अजस्य तत् ईप्सितं कृतवा त्वचमिव, व्यपवर्जिताम् श्रियम् पुनः न प्रतिपेदे ॥ १३

अन्वयः । सः अन्त्यम् आश्रमम् आश्रितः पुराद्बहिः आवसथे निवस कृतेन्द्रियः ( सन् स्नुषया इव पुत्रभोग्यया श्रिया समुपास्यत किल ॥ १४

कुलधर्म्मश्चायमेवेत्याह—गुणवदिति । दिलीपवंशजाः परिणामे वार्द्धके गु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः, तरुवल्कानि एव वासांसि संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मादस्यापीदमुचितमित्यर्थः ॥ ११

अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं, सुतः अजः, वे उष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत, म न गन्तव्यमिति प्रार्थितवानित्यर्थः ॥ १२

आत्मजप्रियः पुत्रवत्सलः रघुः, अश्रुणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य त्यागरूपम् ईप्सितम अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्जितां पुन. न प्रतिपेदे न प्राप ॥ १३

सः रघुः, किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् बहि स्थाने निवसन्, अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः । अतएव स्नुषया इव पुत्रभोग्यया नतु स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः । जितेन्द्रियस्य त श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किञ्चिदपेक्षितमासीदित्य यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्र

प्रथमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥ १५
यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्म्मयोर्गतौ ॥ १६
अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः ।
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः ॥ १७

अन्वयः । प्रथमस्थितपूर्व्वपार्थिवं अभ्युद्यतनूतनेश्वरम् तत् कुलं निभृतेन्दुना दितार्केण नभसा तुलाम् समारुरोह ॥ १५

अन्वयः । यति-पार्थिव-लिङ्गधारिणौ रघुराघवौ अपवर्गमहोदयार्थयोः धर्म्मयोः वं गतौ अंशौ इव जनैः ददृशाते ॥ १६

अन्वयः । अजः अजिताधिगमाय नीतिविशारदैः मन्त्रिभिः युयुजे रघुः अपि नपायिपदोपलब्धये आप्तैः योगिभिः समियाय ॥ १७

ति मनुस्मरणात् "मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजानामयं र्म्मो न विद्यते ॥" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः, तथापि दहरेव विरजेत्' 'तदहरेव प्रव्रजेत्' इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् "त्रयाणां वर्णानां दमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा व्रजेद्गृहात्' इति स्मरणात् 'मुखजानामयं धर्म्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च क्वचिद्ब्राह्मणस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रतिपेदिरे । तथा सति 'स किलाश्रमन्यमाश्रितः' इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानस्थाश्रमतया व्याख्याते 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्" ( ८।२५) ति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात्-त्यलं प्रासङ्गिकेन ॥ १४

प्रथमे स्थितः पूर्वपार्थिवः रघुर्यस्य तत्, अभ्युद्यतः अभ्युदितः नूतनेश्वरः अजः यस्य त् प्रसिद्धं कुलम्, निभृतेन्दुना अस्तमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्य्येण नभसा स्य साहश्यम् आरुरोह प्राप । "न च नभसा तुलामित्यत्र तुल्यार्थैः" इत्यादिना प्रतिषेधस्तृतीयायाः, तस्य सहशवाचितुलाशब्दविषयत्वात् "कृष्णस्य तुला नास्ति" इति प्रयोगात् स्य च साहश्यवाचित्वात् ॥ १५

यतिः भिक्षुः, पार्थिवः राजा तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः धर्म्मयोः निवर्त्तकप्रवर्त्तकरूपयोरित्यर्थः । भुवं गतौ भूलोकम् वतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥ १६

अजः अजिताधिगमाय अजितपदलाभाय नीतिविशारदैः नीतिज्ञैः मन्त्रिभिः युयुजे

नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्॥ १८
अनयत् प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्॥ १९
अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्।
इतरो दहने स्वकर्म्मणां ववृते ज्ञानमयेन वह्निना॥ २०

अन्वयः। युवा नृपतिः प्रकृतीः अवेक्षितुम् व्यवहारासनम् आददे प्रवया-
तु धारणाम् परिचेतुम् उपांशु कुशपूतम् विष्टरम् ( आददे )॥ १८

अन्वयः। एकः अनन्तरान् नृपतीन् प्रभुशक्तिसम्पदा वशम् अप-
प्रणिधानयोग्यया शरीरगोचरान् पञ्च मरुतः वशम् अनयत्॥ १९

अन्वयः। अचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् अकरोत्, इतर-
वह्निना स्वकर्म्मणां दहनु ववृते॥ २०

सङ्गतः, रघुरपि अनपायिपदस्य उपलब्धये मोक्षपदस्य प्राप्तये यथार्थदर्शिनः या-
आप्ताः तैः योगिभिः समियाय सङ्गतः। उभयमप्युपायचिन्तार्थमिति शेषः॥ १७

युवा नृपतिः अजः, प्रकृतीः प्रजाः कार्य्यार्थिनीः अवेक्षितुं दुष्टादुष्ट-
मित्यर्थः। व्यवहारासनं धर्म्मासनम् आददे स्वीचकार। प्रवयाः स्थविरः नृपति-
"प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्यैकाग्रतां परिचेतुम् अभ्यसि-
विजने। "उपांशु विजने प्रोक्तम्" इति हलायुधः। कुशैः पूतं विष्टरम् आसनमपि
"यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्र-
इति वशिष्ठः॥१८

एकः अन्यतरः, अज इत्यर्थः। अनन्तरान् स्वभूम्यनन्तरान् नृपतीन् श-
त्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं स्वायत्तताम् अनयत्। "को-
मसम्भव प्रभुशक्तिः प्रकीर्त्तिता।" इति मिताक्षरायाम्। अपरः रघुः प्रणि-
समाध्यभ्यासेन। शरीरगोचरान देहाश्रयान् पञ्च मरुतः प्राणादीन् वश-
"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः। शरीरस्थाः" इत्यमरः॥ १९

अचिरेश्वरः अजः, क्षितौ द्विषताम् आरम्भाः कर्म्माणि तेषां फलानि भस्मसा-
त्कार्त्स्न्येन भस्मीकृतवान्। "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः।
ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना पावकेन करणेन स्वकर्म्मणां भवबीजभू-
भस्मीकरणे ववृते स्वकर्म्माणि दग्धुं प्रवृत्त इत्यर्थः। "ज्ञानाग्निः सर्वकर्म्माणि
कुरुतेऽर्जुन!" इति गीतावचनात्॥ २०

पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥ २१

न नवः प्रभुरा फलोदयात् स्थिरकर्म्मा विरराम कर्म्मणः।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्॥ २२

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः॥ २३

अन्वयः। अजः पणबन्धमुखान् षड्गुणान् यत्फलं समीक्ष्य उपायुङ्क्त समलोष्ट- ञ्चनः रघुः अपि गुणत्रयम् प्रकृतिस्थम् अजयत्॥ २१

अन्वयः। स्थिरकर्म्मा नवः प्रभुः आ फलोदयात् कर्म्मणः न विरराम, स्थिरधी तरः आ परमात्मदर्शनात् योगविधेः न विरराम॥ २२

अन्वयः। इति प्रतिषिद्धप्रसरेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ उदयापवर्गयोः सितौ उभौ उभयीं सिद्धिं अवापतुः॥ २३

"पणबन्धः सन्धिः" इति कौटिल्यः। अजः पणबन्धमुखान् सन्ध्यादीन् षड्गुणान् न्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः" इत्यमरः। तत्फलं तेषां गुणानां लं समीक्ष्य आलोच्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः। "प्रोपाभ्यां युजे ज्ञपात्रेषु" इत्यात्मनेपदम्। समः तुल्यतया भावितः लोष्टः मृतपिण्डः काञ्चनं सुवर्णञ्च स सः समलोष्टकाञ्चनः निस्पृहः इत्यर्थः। 'लोष्टानि लेष्टवः पुंसि' इत्यमरः। रघुः पि गुणत्रयं सत्त्वादिकम्। "गुणाः सत्त्वं रजस्तमः" इत्यमरः। प्रकृतौ साम्यावस्थाया- तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत॥ २१

स्थिरकर्म्मा आफलोदयकर्म्मकारी नवः प्रभुः अजः, आफलोदयात फलसिद्धिपर्य्यन्तं र्म्मणः आरम्भात् न विरराम न निवृत्तः। 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' त्यपादानात् पञ्चमी। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। स्थिरधीः निश्चलचित्तः वेतरः रघुश्च आ परमात्मदर्शनात् परमात्मसाक्षात्कारपर्य्यन्तं योगविधेः ऐक्यानुसन्धानान्न रराम॥ २२

इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्र- तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्रसितौ आसक्तौ। 'तत्परे प्रसितासक्तौ' इत्यमरः। मौ अजरघू उभयीं द्विविधाम् अभ्युदयमोक्षरूपाम्। 'उभादुदात्तो नित्यम्' इति तयप् व्यवसायजादेशः, 'टिड्ढा' इति ङीप्। सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथा स्यम् अवापतुरित्यर्थः॥ २३

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः॥ २४
श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्।
अकरोत् स तदौर्द्धदेहिकं पितृभक्त्या पितृकार्य्यकल्पवित्।
न हि तेन पथा तनुत्यज स्तनयावर्जितपिण्डकाङ्क्षिणः॥

अन्वयः। अथ रघुः समदर्शनः (सन्) अजव्यपेक्षया काश्चित् समाः। योगसमाधिना अव्ययम् तमसः परम् पुरुषम् आपत्॥ २४

अन्वयः। अग्निचित् राघवः पितुः श्रुतदेहविसर्ज्जनः (सन्) चिरं अश्रूणि ... अस्य अनग्निं नैष्ठिकम् विधिम् यतिभिः सार्द्धं विदधे॥ २५

अन्वयः। पितृकार्य्यकल्पवित् सः पितृभक्त्या तदौर्ध्वदेहिकं अकरोत् ... तनुत्यजः तनयावर्ज्जितपिण्डकाङ्क्षिणः न हि॥ २६

अथ रघुः समदर्शनः सर्वभूतेषु समदृष्टिः सन्, अजव्यपेक्षया अजापेक्षया काश्चित् समाः कतिचित् वर्षाणि। "समा वर्षे समं तुल्यम्" इति विश्वः। ... नीत्वा. योगसमाधिना ऐक्यानुसन्धाने। "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" ... वशिष्ठः। अव्ययम् अविनाशिनं तमसः परम् अविद्यायाः परं मायातीतमित्यर्थः परमात्मानम् आपत् प्राप सायुज्यं प्राप्त इत्यर्थः॥ २४

अग्निचित् अग्निं चितवान् आहितवान्। "अग्नौ चेः" इति क्विप्प्रत्ययः। अजः पितुः श्रुतदेहविसर्ज्जनः आकर्णितपितृतनुत्यागः सन्, चिरम् अश्रूणि बाष्पं ... विसृज्य अस्य पितुः अनग्निम् अग्निसंस्काररहितमित्यर्थः नैष्ठिकं निष्ठायाम् ... विधिम् आचारम् अन्त्येष्टिं यतिभिः सन्न्यासिभिः सार्द्धं सह विदधे चक्रे। अत्र ... मिन्यत्र शौनकः—"सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं ... पिण्डोदकक्रिया। निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम्। प्रोक्षणं ... सर्वं तेनैव कारयेत्॥" २५

पितृकार्य्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञः सः अजः, पितृभक्त्या पित... करणेन न पितुः परलोकसुखापेक्षया, मुक्तत्वादिति भावः। तस्य रघोः ... देहादूर्द्धं भवतीति। "ऊर्द्ध्वं देहाच्च" इति वक्तव्यात् ठक्प्रत्ययः, अनुशतिकादि... पदवृद्धिः। तत् तिलोदकपिण्डदानादिकम् अकरोत्। ननु कथं भक्तिरेव श्रा... प्रेत्यापि कस्मान्नाभूदित्याशङ्क्याह- न हीति। तेन पथा योगरूपेण मार्गेण तनुत्यागिनः पुरुषाः तनयेन आवर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ताः न हि भवन्ति।

स पराद्‌र्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २७
क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम् ॥ २८
दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९
ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान् बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३०

अन्वयः । पराद्‌र्ध्यगतेः पितुः अशोच्यतां उद्दिश्य सदर्थवेदिभिः शमिताधिः सः अधिज्यकार्मुकः (सन्) जगत् अप्रतिशासनं कृतवान् ॥२७

अन्वयः । क्षितिः भामिनी इन्दुमती च अग्र्यपौरुषं तम् पतिम् आसाद्य प्रथमा बहुरत्नसूः अभूत्, अपरा वीरं सुतमजीजनत् ॥ २८

अन्वयः । दशरश्मिशतोपमद्युतिम् यशसा दशसु अपि दिक्षु श्रुतम् दशकण्ठारिगुरुं आख्यया दशपूर्वरथं बुधाः विदुः ॥ २९

अन्वयः । श्रुतयागप्रसवैः ऋषिदेवगणस्वधाभुजाम् अनृणत्वम् उपेयिवान् सः पार्थिवः परिधेः मुक्तः उष्णदीधितिः इव बभौ ॥ ३०

पराद्‌र्ध्यगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुः अशोच्यताम् अशोचनीयत्वम् उद्दिश्य अभिसन्धाय, शोका न कर्त्तव्य इत्युपदिश्य इत्यर्थः । सदर्थवेदिभिः परमार्थज्ञैः विद्वद्भिः शमिताधिः निवारितमनोव्यथः । "पुंस्याधिर्मानसी व्यथा" इत्यमरः । सः अजः, अधिज्यकार्मुकः अधिज्यम् आरोपितमौर्वीकं कार्मुकं यस्य सः तथोक्तः सन्, जगत् कर्मभूतम् अप्रतिशासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयमित्यर्थः । कृतवान् चकार ॥ २७

क्षितिः मही, भामिनी कामिनी इन्दुमती च "भामिनी कामिनी च" इति हलायुधः । अग्र्यपौरुषं महापराक्रमम् उत्कृष्टभोगशक्तिञ्च तम् अजं पतिम् आसाद्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत् । 'रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । अपरा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म । जायतेर्णौ लुङि रूपम् । सहोक्त्या सादृश्यमुच्यते ॥ २८

किं नामकोऽसावत आह—दशरश्मिशतानि यस्य सः दशरश्मिशतः सूर्यः सः उपमा यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तं यशसा करणेन दशसु अपि दिक्षु आशासु श्रुतं प्रसिद्धं दशकण्ठारेः रावणारेः रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्वः दशशब्दपूर्वः रथः रथशब्दः तं दशरथमित्यर्थः । बुधा विद्वांसः विदुः विदन्ति । "विदो लटो वा" इति झेर्जुसादेशः ॥ २९

श्रुतयागप्रसवैः अध्ययनयज्ञसन्तानैः करणैः यथासंख्यमृषीणां देवगणानामिन्द्रादीनां

बलमार्त्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१

स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२

अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः ॥ ३३

अन्वयः । तस्य विभोः बलम् आर्त्तभयोपशान्तये, बहुश्रुतम् विदुषाम्
(अतः) केवलं वसु न, गुणवत्तापि परप्रयोजना (अभूत्) ॥ ३१

अन्वयः । अवेक्षितप्रजः सुप्रजाः सः कदाचित् देव्या सह नगरोप
शचीसखः मरुतां पालयिता इव विजहार ॥ ३२

अन्वयः । अथ दक्षिणोदधेः रोधसि श्रितगोकर्णनिकेतम् ईश्वरम् उप
नारदः रवेः उदयावृत्तिपथेन ययौ ॥ ३३

स्वधाभुजां पितॄणाम् अनृणत्वम् ऋणविमुक्तत्वम् उपेयिवान् प्राप्तवान् । "एष वा
यः पुत्री यज्वा ब्रह्मचारी वा" इति श्रुतेः । स पार्थिवः अजः, परिधेः परिवे
वेषस्तु परिधिः" इत्यमरः । मुक्तः निर्गतः (कर्मकर्त्ता) उष्णदीधितिः सूर्य
दिदीपे इत्युपमा ॥ ३०

तस्य विभोः अजस्य केवलं वसु धनम् एव परप्रयोजनं परोपकारकं न
गुणवत्तापि गुणवत्त्वमपि परप्रयोजना परेषाम् अन्येषां प्रयोजनं यस्याः सा
प्राधान्याद्गुणवत्तायाः विशेषणम्, वसु इत्यत्र तूहनीयम् । तथाहि बलं पौरुषम्
आपन्नानां भयस्य उपशान्तये निवारणाय, न तु स्वार्थं परपीडनाय वा ।
विद्या विदुषां सत्कृतये सत्काराय, न तूत्सेकाय बभूव, तस्य धनं परोप
वक्तव्यम् बलश्रुतादयोऽपि गुणाः परोपयोगिनः इत्यर्थः ॥ ३१

अवेक्षितप्रजः अकुतोभयत्वेनानुसंहितप्रजः । "नित्यमसिच् प्रजामेधयोः
असिच्प्रत्ययः । न केवलं स्त्रैण इति भावः । शोभना प्रजा यस्य असौ सुप्रजाः
पुत्रन्यस्तभार इति भावः । सः अजः, कदाचित् देव्या महिष्या इन्दुमत्या सह
नन्दने नन्दनाख्ये अमरावत्युपकण्ठवने शचीसखः शच्याः सह इत्यर्थः । मरुतां
पालयिता इन्द्रः इव, विजहार चिक्रीड ॥ ३२

अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतमधिष्ठित
स्थानम् ईश्वरं शिवम् उपवीणयितुं वीणया उप समीपे गातुम् "सत्यापपाश
वीणाशब्दादुपगानार्थे णिच्प्रत्ययः, ततस्तुमुन् । नारद देवर्षिः रवेः सूर्यस्य
उदयावृत्तिपथेन आकाशमार्गेण ययौ जगाम । सूर्य्योपमानेन अस्य अतितेजस्वि

कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत् किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४
भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं सृजती वाष्पमिवाञ्जनाविलम् ॥ ३५
अभिभूय विभूतिमार्त्तवीं मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६
क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ३७

अन्वयः । अपार्थिवैः कुसुमैः ग्रथिताम् तस्य आतोऽद्यशिरोनिवेशिताम् स्रजम् वेगवान् मारुत अधिवास स्पृहया इव अहरत् किल ॥ ३४

अन्वयः । कुसुमानुसारिभिः भ्रमरैः परिकीर्णा मुनेः परिवादिनी पवनावलेपजम् अञ्जनाविलम् वाष्पम् सृजती इव ददृशे ॥ ३५

अन्वयः । सा अमरस्रक् मधुगन्धातिशयेन वीरुधाम् आर्त्तवीं विभूतिम् अभिभूय, नृपतेः दयितोरुस्तनकोटिसुस्थितिम् आप ॥ ३६

अन्वयः । सुजातयोः स्तनयोः क्षणमात्रसखीम् तां स्रजं अवलोक्य विह्वला नरोत्तमप्रिया तमसा हृतचन्द्रा कौमुदी इव निमिमील ॥ ३७

अपार्थिवैः अभौमैः दिव्यैरित्यर्थः । कुसुमैः ग्रथितां रचितां तस्य नारदस्य आतोद्यस्य वीणायाः शिरसि अग्रे निवेशिताम् । "चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्" अमरः । स्रजं मालां वेगवान् मारुतः, अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्गमित्यर्थः । "संस्कारं गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्" इत्यमरः । अहरत् किलेत्यैतिह्ये ॥ ३४

कुसुमानुसारिभिः पुष्पानुयायिभिः भ्रमरैः अलिभिः परिकीर्णा व्याप्ता मुनेर्नारदस्य परिवादिनी वीणा । "वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी" अमरः । पवनस्य वायोः अवलेपः अधिक्षेपः तज्जम् अञ्जनेन कज्जलेन आविलं कलुषं वाष्पम् अश्रु सृजती मुञ्चती इव ददृशे दृष्टा । भ्रमराणां साञ्जनवाष्पविन्दुसादृश्यं उचितम् परिभूताः स्त्रियोऽपि हि रुदन्ति इति भावः । "वा नपुंसकस्य" इति वर्त्तमाने आच्छीनद्योर्नुम्" इति नुम्विकल्पः ॥ ३५

सा अमरस्रक् दिव्यमाला मधुगन्धयोः मकरन्दसौरभयोः अतिशयेन आधिक्येन वीरुधां लतानाम् । "लता प्रतानिनी वीरुत्" इत्यमरः । ऋतोः प्राप्ताम् आर्त्तवीम् ऋतुसम्बन्धिनीं विभूतिं सम्पत्तिम् अभिभूय तिरस्कृत्य नृपतेः अजस्य दयितायाः इन्दुमत्याः ऊर्वोः विशालयोः स्तनयोः ये कोटी चूचुकौ तयोः सुस्थितिं गोप्यस्थाने पतितत्वात् प्रशस्तस्थानम् आप प्राप्ता ॥ ३६

सुजातयोः सुजन्मनोः सुन्दरयोरित्यर्थः । स्तनयोः क्षणमात्रसखीं सखीमिव स्थिताम्

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत्।
ननु तैलनिषेकविन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८

उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः।
विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥ ३९

नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता।
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४०

अन्वयः। करणैरुज्झितेन वपुषा निपतन्ती सा पतिम् अपि अपातयत्, तैलनिषेक-विन्दुना सह दीपार्चिः मेदिनीम् उपैति ननु ॥ ३८

अन्वयः। उभयो पार्श्ववर्त्तिनाम् तुमुलेन आर्त्तरवेण वेजिताः कमलाकरालयाः विहगा अपि तत्र समदुःखा इव चुक्रुशुः ॥ ३९

अन्वयः। नृपतेः तमः व्यजनादिभिः नुनुदे सा तु तथा एव संस्थिता, प्रतिकारविधानम् आयुषः शेषे सति फलाय कल्पते ॥४०

सुजातत्वसाधर्म्यात् स्रजः स्त्रगसखीत्वमिति भावः। तां स्रजम् अवलोक्य ईषत्परवशा नरोत्तमप्रिया इन्दुमती, तमसा राहुणा। 'तमस्तु राहुः स्वर्भानुः' इतचन्द्रा कौमुदी चन्द्रिका इव, निमिमील मुमोह ममार इत्यर्थः। "निमीलं च' इति हलायुधः। कौमुद्या निमीलनं प्रतिसंहार ॥ ३७

करणैः इन्द्रियैः उज्झितेन मुक्तेन। "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातितवती। तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः क्षरत्तैलमित्यर्थः। तस्य बिन्दुना सह दीपार्च्चिः दीपज्वाला मेदिनीं भुवम् उपैति ननु उपैत्येव। "नन्वनावधारणे। धारणानुज्ञाननयामन्त्रणे ननु" इत्यमरः। इन्दुमत्यादीपार्च्चिरुपमानम् अजस्य तैल एव तस्या जीवितसमाप्तिसस्य जीवितशेषस्य सूच्यते ॥ ३८

उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि, तत्र समदुःखाः इव तत्पार्श्ववर्त्तिनां समानशोका इव चुक्रुशुः क्रोशन्ति स्म ॥ ३९

नृपते अजस्य तमः अज्ञानं, व्यजनादिभिः साधनैः नुनुदे अपसारितम्, जलसेककर्पूरचोदादयो गृह्यन्ते। सा तु इन्दुमती तथैव संस्थिता मृता। "प्रतिकारविधानं चिकित्सा आयुषः जीवितकालस्य शेषे सति विद्यमाने। "कालो मा" इत्यमरः। फलाय सिद्धये कल्पते, आरोग्याय भवति मानवानां शेषसद्भावात् प्रतीकारस्य साफल्यं तथाऽस्तु तदभावाद्वैफल्यमित्यर्थः ॥ ४०

प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात्।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम्॥ ४१

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमा॥ ४२

विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥ ४३

कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः॥ ४४

अन्वयः। अथ सत्त्वस्य विप्लवात् प्रतियोजयितव्यवल्लकीसमवस्थाम् अङ्गनाम् नितान्तवत्सलः सः परिगृह्य उचितम् अङ्कम् निनाय॥ ४१

अन्वयः। पतिः करणापायविभिन्नवर्णया अङ्कनिषण्णया तया उषसि आविलाम् मृगलेखाम् बिभ्रत्‌चन्द्रमा इव समलक्ष्यत॥ ४२

अन्वयः। सः सहजाम् अपि धीरताम् अपहाय वाष्पगद्गदम् विललाप, अयः अपि अभितप्तं (सत्) मार्दवं भजते शरीरिषु का एव कथा॥ ४३

अन्वयः। कुसुमानि अपि गात्रसङ्गमात् आयुः अपोहितुम् प्रभवन्ति यदि हन्त प्रहरिष्यतः विधेः अन्यत् किम् इव साधनम् न भविष्यति॥ ४४

अथ सत्त्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतोः। "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः। प्रतियोजयितव्या तन्त्रिभिः योजनीया न तु योजिततन्त्रीत्यर्थः। या वल्लकी वीणा तस्याः समा अवस्था दशा यस्याः ताम् अङ्गनां वनितां, नितान्तवत्सलः अतिप्रेमवान् सः अजः, परिगृह्य हस्ताभ्यां गृहीत्वा, उचितं परिचितम् अङ्कमुत्सङ्गं निनाय नीतवान्। वल्लकीपक्षे तु सत्त्वस तन्त्रीणामवष्टम्भकः शलाका विशेषः॥ ४१

पतिः अजः, अङ्कनिषण्णया तत्सङ्गस्थितया अतएव करणानाम् इन्द्रियाणामपायेन अपगमेन हेतुना विभिन्नवर्णयाविच्छायया तया, उषसि प्रातःकाले आविलां मलिनाम् मृगलेखां लाञ्छनं मृगरेखारूपम्। बिभ्रत् धारयन् चन्द्रमाः इव, समलक्ष्यत अदृश्यत इत्युपमा॥ ४२

सः अजः, सहजां स्वाभाविकीम् अपि धीरतां धैर्यम् अपहाय वाष्पेण कण्ठगतेन गद्गदं वर्णोच्चरं यथा तथा ध्वनिमात्रानुकारिगद्गदशब्दैर्विललाप परिदेवितवान् "विलापः परिदेवनम्" इत्यमरः। अभितप्तम् अग्निना सन्तप्तम् अयः लौहम् अचेतनमपि मार्दवं मृदुत्वं भजते प्राप्नोति शरीरिषु देहिषु अभिसन्तप्तेषु इति शेषः, विषये का एव कथा वार्त्ता अनुक्तसिद्धमित्यर्थः॥ ४३

कुसुमानि पुष्पाणि अपि। अपिशब्दा नितान्तमार्दवद्योतनार्थः। गात्रसङ्गमात् देहसंसर्गात् आयुः अपोहितुम् अपहर्त्तुं प्रभवन्ति यदि। हन्त विषादे। "हन्त हर्षेऽनुकम्पायां

अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५
स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६
अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ४७
कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ४८

अन्वयः । अथवा प्रजान्तकः मृदु वस्तु मृदुना एव हिंसितुम् आर...
हिमसेकविपत्तिः नलिनी मे पूर्व्वनिदर्शनम् मता ॥ ४५

अन्वयः । इयम् स्रक् यदि जीवितापहा, हृदये निहिता ( सती ) माम्...
हन्ति, ईश्वरेच्छया क्वचित् विषम् अपि अमृतम्भवेत् ( क्वचित् ) अमृतम्...
भवेत् ॥ ४६

अन्वयः । अथवा मम भाग्यविप्लवात् एषः वेधसा अशनिः कल्पितः...
तरुः न पातितः तद्विटपाश्रिता लता क्षपिता ॥ ४७

अन्वयः । मयि चिरम् अपराद्धेऽपि यदा अवधीरणाम् न कृतवती परि...
कथम् एकपदे निरागसम् इमम् जनम् आभाष्यम् न मन्यसे ॥ ४८

वाक्यारम्भविषादयो" रित्यमरः । प्रहरिष्यतः हन्तुमिच्छतो विधेर्दैवस्य अयत्...
रितं किम् इव वस्तु । इवशब्दो वाक्यालङ्कारे. कीदृशमित्यर्थः । साधनं ...
भविष्यति सर्वमपि साधनं भविष्यत्येव इत्यर्थः ॥४४

अथवा पक्षान्तरे । प्रजान्तकः कालः, मृदु कोमलं वस्तु मृदुना एव वस्तुना...
हन्तुम आरभते उपक्रमते । अत्रार्थे: हिमसेकेन तुषारनिस्यन्देन विपत्तिः मृत्युः ...
नलिनी, मे पूर्वं प्रथमं निदर्शनम् उदाहरणं मता । द्वितीयं निदर्शनं पुष्पस्रगि...
भावः ॥ ४५

इयं स्रक् जीवितम् अपहन्तीति जीवितापहा यदि, हृदये वक्षसि "हृदयं वक्षसि...
इत्यमरः । निहिता सती. मां किं न हन्ति । ईश्वरेच्छया क्वचित् प्रदेशे विषम...
भवेत् क्वचित् अमृतं वा विषं भवेत् । दैवमेवात्र कारणमित्यर्थः ॥ ४६

अथवा मम भाग्यस्य विप्लवात् विपर्य्ययात् एषः स्रक् इत्यर्थः । विधेयप्राधान्यात्...
निर्देशः । वेधसा विधात्रा अशनिः वैद्युतोऽग्निः कल्पितः । 'दम्भोलिरशनिर्द्वयोः'...
यत् यस्मात् अनेन अपि अशनिना प्रसिद्धाशनिना इव तरुः तत्स्थानीयः ...
पातितः किन्तु तस्य तरो विटपाश्रिता लता क्षपिता नाशिता ॥ ४७

मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवत्यपि । रावे: कर्मणि ...

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ४९

दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥ ५०

सुरतश्रमसंभृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।
अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥ ५१

अन्वयः । हे शुचिस्मिते शठः कैतववत्सलः तव ध्रुवं विदितः अस्मि, यत् माम् अनापृच्छ्य असन्निवृत्तये इतः परलोकम् गता असि ॥ ४९

अन्वयः । इदम् मम हतजीवितम् तावत् दयिताम् अन्वगात् यदि, तया विना किम् निवृत्तम् ( सत् ) आत्मकृतेन प्रबलाम् वेदनाम् सहताम् ॥ ५०

अन्वयः । सुरतश्रमसम्भृतः स्वेदलवोद्गमः अपि ते मुखे ध्रियते अथ च त्वम् आत्मना अस्तम् इता ( अतः ) देहभृताम् असारताम् इमाम् असारताम् धिक् ॥ ५१

मात् हेतोः, यदेति हेत्वर्थः । 'स्वरादौ पठ्यते यदेति हेतौ' इति गणव्याख्यानात् अव-ज्ञाम् अवज्ञां न कृतवती असि न अकार्षीः । तत् कथम् एकपदे तत्क्षणे । "स्यात् क्षणे एकपदम्" इति विश्वः । निरागसं नितरामनपराधम् इमं जनम् इममिति त्मनिर्देशः । मामित्यर्थः । आभाष्यं सम्भाष्यं न मन्यसे न चिन्तयसि ॥ ४८

हे शुचिस्मिते ! शठः गूढविप्रकारी कैतवेन कपटेन वत्सलः कैतवस्निग्ध इति ध्रुवं तव विदितः त्वया विज्ञातः अस्मि । "मतिबुद्धि" इत्यादिना कर्त्तरि क्तः, "क्तस्य च वर्त्तमाने" इति कर्त्तरि षष्ठी । कुतः ? यत् यस्मात् माम् अनापृच्छ्य अनामन्त्र्य अस्मात् लोकात् परलोकम् असन्निवृत्तये गता असि ॥ ४९

इदं मम हतजीवितं कुत्सितं जीवितं तावदादौ दयितामिन्दुमतीमन्वगात् अन्वगच्छत् यदि अन्वगादेव । यद्यत्रावधारणे । पूर्वं मूर्च्छितत्वादिति भावः । तर्हि तया दयितया विना किं किमर्थं विनिवृत्तं प्रत्यागतम् । प्रत्यागमनं न युक्तमित्यर्थः । अतएवात्मकृतेन दुश्चेष्टितेन निवृत्तिरूपेण प्रबलामधिकां वेदनां दुःखं सहतां क्षमताम् । स्वयं कृतापराधेषु क्षमतेव शरणमिति भावः ॥ ५०

सुरतश्रमेण संभृतः जनितः स्वेदलवोद्गमोऽपि ते तव मुखे ध्रियते वर्त्तते । अथ च आत्मना स्वरूपेणास्तं नाशमिता प्राप्ता । अतः कारणाद्देहभृतां प्राणिनामिमां प्रत्यक्षा-सारतामस्थिरतां धिक् ॥ ५१

मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम्।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः॥
कुसुमोत्खचितान् वलीभृतश्चलयन् भृङ्गरुचस्तवालकान्।
करभोरु करोति मारुत! त्वदुपावर्त्तनशङ्कि मे मनः॥
तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः॥ ५४
इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम्।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम्॥ ५५

अन्वयः। मया मनसा अपि तव विप्रियम् न कृतपूर्व्वम् माम् किम् जहासि? अहम् क्षितेः शब्दपतिः भावनिबन्धना मे रतिः (तु) त्वयि (अस्ति)॥ ५२

अन्वयः। हे करभोरु! कुसुमोत्खचितान् वलीभृतः भृङ्गरुचः तव अलकान् चलयन् (सन्) मारुतः मे मनः त्वदुपावर्त्तनशङ्कि करोति॥ ५३

अन्वयः। हे प्रिये! तत् आशु मे विषादम्, नक्तम् ओषधिः ज्वलितेन तुहिनाद्रेः गुहागतम् तमः इव प्रतिबोधेन अपोहितुम् अर्हसि॥ ५४

अन्वयः। इदम् उच्छ्वसितालकम् विश्रान्तकथम् तव मुखम् निशि सुप्तम् विरताभ्यन्तरषट्पदस्वनम् एकपङ्कजम् इव माम् दुनोति॥ ५५

मया मनसापि तव विप्रियं न कृतपूर्वम्। पूर्वं न कृतमित्यर्थः। तत्पुनः किं केन निमित्तेन मां जहासि त्यजसि। नन्वहं क्षितेः शब्दपतिः शब्दत एव पतिः त्वर्थत इत्यर्थः। भावनिबन्धना अभिप्रायनिबन्धना स्वभावहेतुका मे रतिस्त्वयि अस्तीति शेषः॥ ५२

कुसुमैरुत्खचितानुत्कर्षेण रचितान् वलीभृतो भङ्गीयुक्तान्, कुटिलानित्यर्थः। भृङ्गरुचो नीलान् तवालकान् च चलयन् कम्पयन् मारुतः। हे करभोरु! करभसदृशोरु! "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः। मे मनस्त्वदुपावर्त्तनशङ्कि तव उत्थानशङ्कावत्करोति। त्वदुज्जीवने शङ्कां कारयतीत्यर्थः॥ ५३

हे प्रिये! तत्तस्मात्कारणादाशु मे विषादं दुःखम्। नक्तं रात्रावोषधिः रात्र्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमाचलस्य गुहागतं तमोऽन्धकारमिव प्रतिबोधेन ज्ञानेनापोहितुं निरसितुमर्हसि॥ ५४

इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखं निशि रात्रौ सुप्तं निमीलितं विरतः अभ्यन्तराणामन्तर्वर्त्तिनां षट्पदानां स्वनो यत्र तत् अङ्गमित्यर्थः। एकपङ्कजमद्वितीयं पद्ममिव, मां दुनोति परितापयति॥ ५५

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ५६

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु ! चिताधिरोहणम् ॥ ५७

इयमप्रतिबोधशायिनीं रशनां त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ५८

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९

त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ ६०

अन्वयः । शर्व्वरी शशिनम्, दयिता द्वन्द्वचरम् पतत्रिणम् पुनः एति इति तौ
[वि]रहान्तरक्षमौ. अत्यन्तगता ( त्वन्तु ) माम् कथम् न दहेः ॥ ५६

अन्वयः । हे वामोरु ! नवपल्लवसंस्तरे अपि अर्पितम् मृदु ते तव यत् अङ्गम्
त इदम् चिताधिरोहणम् कथम् विषहिष्यते वद ॥ ५७

अन्वयः । इयम् प्रथमा रहःसखी गतिविभ्रमसादनीरवा रशना अप्रतिबोधशायिनीम्
[त्वा]म् शुचा अनुमृता इव न लक्ष्यते न ॥ ५८

[अ]न्वयः । अन्यभृतासु कलम् भाषितम्, कलहंसीषु मदालसम् पृषतीषु विलोलम् ईक्षितम्,
[पव]नाधूतलतासु विभ्रमाः, अमी गुणाः त्रिदिवोत्सुकया अपि त्वया माम् अवेक्ष्य सत्यं
[नि]हिताः ( किन्तु ) तव विरहे गुरुव्यथम् मे हृदयम् अवलम्बितुम् न क्षमाः ॥ ५९—६०

[श]र्व्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति । द्वन्द्वीभूय चरतीति द्वन्द्वचरः । तं पतत्रिणं
[चक्र]वाकं दयिता चक्रवाकी पुनरेति । इति हेतोस्तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ ।
[विर]हावधि सहौ "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । अत्यन्तगता
[अपुन]रावृत्तिरहिता त्वं तु कथं न मां दहेर्न संतापयेः । अपि तु दहेरेवेत्यर्थः ॥ ५६

नवपल्लवसंस्तरे नूतनप्रवालास्तरणेऽप्यर्पितं स्थापितं मृदु ते तव यदङ्गं शरीरं दूयेत
[परि]तप्तं भवेत् । वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु । 'वामं स्यात्सुन्दरे सव्य'
[इति] केशवः । "संहितशफलक्षण—" इत्यादिनोङ्प्रत्ययः । तदिदमङ्गम् चितायाः
[का]ष्ठसञ्चयस्याधिरोहणं कथं विषहिष्यते वद ॥ ५७

इयं प्रथमा आद्या रहःसखी सुरतसमयेऽप्यनुयानादिति भावः । गतिविभ्रमसादेन नीरवा
[मौनं गता] सीपरमेव निःशब्दा रशना मेखला प्रतिबोधमपुनरुद्बोधं यथा तथा शायिनीम्, मृता-
[मित्य]र्थः । त्वामनु त्वया सह । तृतीयार्थ इत्यनुशब्दस्य कर्मप्रवचनीययुक्ते द्वितीया । शुचा
[अनुमृ]तेन मृतेन न लक्ष्यते इति न । लक्षत एवेत्यर्थः । संभाव्यनिषेधनिवर्तनाय द्वौ प्रतिषेधौ ॥ ५८

युग्मम् । उभयोरेकान्वयः । अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम् ।

मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम्॥
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम्॥
स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम्।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे॥

अन्वयः। ननु सहकारः फलिनी च इमौ त्वया, मिथुनम् परिकल्पितम् [illegible] सत्क्रियाम् अविधाय गम्यते इति असाम्प्रतम्॥ ६१

अन्वयः। त्वया कृतदोहदः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति, [illegible] भरणम् तत् कथम् निवापमाल्यताम् नेष्यामि॥ ६२

अन्वयः। हे सुगात्रि! अन्यदुर्लभम् सशब्द नूपुरम् चरणानुग्रहम् स्मरता [illegible] अशोकेन कुसुमाश्रुवर्षिणा त्वम् शोच्यसे॥ ६३

कलहंसीषु विशिष्टहंसीषु सदालसं मन्थरं गतं गमनम्। पृषतीषु हरिणीषु [illegible] चपला दृष्टिः। पवनेन वायुना धूतलतासु ईषत्कम्पितलतासु विभ्रमा विलास[illegible] पूर्वोक्ताः कलभाषणादयो गुणाः। एषु कोकिलादिस्थानेष्विति शेषः। [illegible] सुकरायापीह जीवन्त्येव स्वर्गं प्रति प्रस्थितयापि त्वया मामवेक्ष्य विरहासह[illegible] निहिताः मत्प्राणधारणोपायतया स्थापिता इत्यर्थः। तव विरहे गुरुव्यथ[illegible] हृदयं मनः अवलम्बितुं स्थापयितुं न क्षमा न शक्ताः। ते तु त्वत्संगम एव [illegible] मान्यथा। प्रत्युत प्राणानपहरन्तीति भावः॥ ५९—६०

ननु हे प्रिये! सहकारश्चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया [illegible] कल्पितं मिथुनत्वेनाध्यमानि। अनयोः फलिनीसहकारयोर्विवाहसत्क्रियां वि[illegible] विधाय अकृत्वा गम्यते इत्यसांप्रतमयुक्तम्। मातृहीनानां न किंचित् सुखमस्ति[illegible]

वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताडनरूपं यस्य सोऽयम[illegible] अयमुदीरयिष्यति प्रसविष्यति। तवालकानामाभरणमाभरणभूतं तत्कुसुमं क[illegible] प्रकारेण निवापमाल्यतां दाहाञ्जलिरर्घ्यं तां नेष्यामि। "निवापः पितृ[illegible] इत्यमरः॥ ६२

अन्यदुर्लभम्, किन्तु स्वार्त्तं व्यमेवेत्यर्थः। सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं [illegible] नानुग्रहं पादेन ताडनरूपं स्मरतेव चिन्तयतेव कुसुमान्येवाश्रूणि तद्वर्षिणा [illegible] वर्षिणा अशोकेन। हे सुगात्रि! "अङ्गगात्रकण्ठेभ्यश्च" इति वक्तव्यात् [illegible] शोच्यते॥ ६३

तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि! सुप्यते॥ ६४

समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः॥ ६५

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे॥ ६६

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्॥ ६७

अन्वयः। हे किन्नरकण्ठि! तव निःश्वसितानुकारिभिः बकुलैः मया समम् अर्ध-चिताम् विलासमेखलाम् असमाप्य (त्वया) किमिदम् सुप्यते॥ ६४

अन्वयः। सखीजनः समदुःखसुखः, अयम् आत्मजः प्रतिपच्चन्द्रनिभः, अहम् एकरसः, तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः॥ ६५

अन्वयः। अद्य मे धृतिः अस्तम् इता, रतिश्च्युता, गेयम् विरतम्, ऋतुः निरुत्सवः, आभरणप्रयोजनं गतम्, शयनीयम् परिशून्यम्॥ ६६

अन्वयः। (त्वमेव) गृहिणी, सचिवः, मिथः सखी, ललिते कलाविधौ प्रियशिष्या, त्वां हरता (अतएव) करुणाविमुखेन मृत्युना मे किं न हृतम् वद॥ ६७

तव निःश्वसितानुकारिभिर्बकुलैर्बकुलकुसुमैर्मया समं सार्द्धम् अर्धचिताम् अर्द्धं यथा तथा चितां रचितां विलासमेखलामसमाप्य अपूरयित्वा। किन्नरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्संबुद्धिर्हे किन्नरकण्ठि। "अङ्गगात्रकण्ठेभ्यश्च" इति ङीप्। किमिदं सुप्यते निद्रा क्रियते। "वचिस्वपि—" इत्यादिना संप्रसारणम्। अनुचितमिदं स्वपनमित्यर्थः॥ ६४

सखीजनः समदुःखसुखः त्वद्दुःखेन दुःखी त्वत् सुखेन सुखीत्यर्थः। अयमात्मजो बालः प्रतिपच्चन्द्रनिभः दर्शनीयो वर्धिष्णुश्चेत्यर्थः। प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात्। अहमेकरसोऽभिन्नरागः। "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः। तथापि जीवितमामवीसत्वेऽपीत्यर्थः। ते तव व्यवसायोऽस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः क्रूरः। "प्रतिपत्तिः पदप्राप्तौ प्रक्रतौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च" इति विश्वः। स्मर्तुं न शक्यः किमुताधिकर्त्तुमिति भावः॥ ६५

अद्य मे धृतिर्धैर्य्यं प्रतीतिर्वास्तं नाशमिता। रतिः क्रीड़ा च्युता गता। गेयं गानं विरतम्। ऋतुर्वसन्तादिर्निरुत्सवः। आभरणानां प्रयोजनं गतमपगतम्। शेतेऽस्मिन्निति शयनीय तल्पम्। 'कृत्यल्युटो बहुलम्' इत्यधिकरणार्थेऽनीयप्रत्ययः। परिशून्यम्। त्वां विना सर्वमपि निष्फलमिति भावः॥ ६६

त्वमेव गृहिणी दारा। अनेन सर्वं कुटुम्बं त्वदाश्रयमिति भावः। सचिवो बुद्धिसहायी

मदिराक्षि ! मदाननार्पितं मधु पीत्वा रसवत् कथं नु मे ।
अनुपास्यसि वाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६८ ॥
विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥
विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत् पृथिवीरुहानपि स्रुतशाखारसवाष्पदूषितान् ॥ ७० ॥

अन्वयः । मदिराक्षि ! मदाननार्पितं रसवत् मधु पीत्वा परलोकोपनतं मे जलाञ्जलिम् कथं नु अनुपास्यसि ॥ ६८

अन्वयः । विभवे सति अपि त्वया विना अजस्य एतावत् (एव) सुखं ... विलोभनान्तरैः अहृतस्य मम सर्व्वे विषयाः त्वदाश्रयाः ॥ ६९

अन्वयः । कोसलाधिपः प्रियाम्प्रति इति करुणार्थग्रथितम् विलपन् पृथि... स्रुतशाखारसवाष्पदूषितान् अकरोत् ॥ ७०

मन्त्री । सर्वो हितोपदेशस्त्वदायत्त इत्यनेनोच्यते । मिथो रहसि सखी ... सर्व्वोपभोगस्त्वदाश्रय इत्यमुना प्रकटितम् । ललिते मनोहरे कलाविधौ ... मष्टिकलाप्रयोगे प्रियशिष्या । प्रियत्वं प्राज्ञत्वादित्यभिसन्धिः । सर्व्वानन्दोऽनेन ... इत्युद्घाटितम् । अतस्त्वां समष्टिरूपां हरता अतएव करुणाविमुखेन कृपायं... मे मत्सम्बन्धि किं वस्तु न हृतं वद । सर्व्वमपि हृतमित्यर्थः ॥ ६७

माद्यत्यनयेति मदिरा लोकप्रसिद्धा, तथापि "नर्य्यो मदिरलोचनाः" ... दर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्यास्तत्संबुद्धिः हे मदिराक्षि ! ... रसवत् स्वादुतरं मधु पीत्वा वाष्पदूषितमश्रुतप्तं परलोकोपनतं परलोकप्राप्तं ... तिलोदकाञ्जलिं कथं नु अनु अनन्तरं पास्यसि । तदनन्तरमिदमनर्हमित्यर्थः । ... मल्लः—"अनुपानं हिमजलं यवगोधूमनिर्म्मिते । दध्नि मद्ये विषे द्राक्षे पिष्टे ... च" इति । तच्चेहैव युज्यते । इदं तूष्णं लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात् ... पास्यसीति भावः ॥ ६८

विभवे ऐश्वर्य्ये सत्यपि त्वया विना अजस्य एतावदेव सुखं गण्यताम् । यावत् ... भुक्तं ततोऽन्यन्न किञ्चिन्नविष्यतीत्यर्थः । कुतः ? विलोभनान्तरैरहृतस्यानाकृष्टस्य ... विषया भोगादयस्त्वदाश्रयास्त्वदधीनाः । त्वां विना मे न किञ्चिद्रोचत इत्यर्थः । ६९

कोसलाधिपोऽज इति करुणः शोकरसः स एवार्थस्तेन ग्रथितं संवद्धं यथा तथा ... प्रति इन्दुमतीमुद्दिश्य विलपन् पृथिवीरुहान् वृक्षानपि स्रुताः शाखारसा मदश्रु... वाष्पास्तै र्दूषितान् अकरोत् । अचेतनानप्यरोदयदित्यर्थः ॥ ७०

अथ तस्य कथञ्चिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।
विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे ॥ ७१

प्रमदामनुसंस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।
न चकार शरीरमग्निसात् सह देव्या न तु जीविताशया ॥ ७२

अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम् ।
विदुषा विधयो महर्द्धयः पुर एवोपवने समापिताः ॥ ७३

स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४

अन्वयः । अथ स्वजनः तस्य अङ्कतः कथञ्चित् अपनीय तदन्त्यमण्डनाम् ताम् सुन्दरीम् अगुरुचन्दनैधसे अनलाय विससर्ज ॥ ७१

अन्वयः । नृपतिः "सन् ( अपि ) शुचा प्रमदाम् अनु संस्थितः" इति वाच्यदर्शनात् देव्या सह शरीरम् अग्निसात् न अकरोत् तु जीविताशया न ॥ ७२

अन्वयः । अथ विदुषा तेन गुणशेषां भामिनीम् उपदिश्य दशाहतः परे महर्द्धयः विधयः पुरः उपवने एव समापिताः ॥ ७३

अन्वयः । तया विना क्षणदापायशशाङ्कदर्शनः सः पौरवधूमुखाश्रुषु स्वशुचः परिवाहम् अवलोकयन् पुरीम् विवेश ॥ ७४

अथ स्वजनो बन्धुवर्गस्तस्याजस्याङ्कत उत्सङ्गात् कथञ्चिदपनीय, तद्दिव्यकुसुममेवान्त्यं मण्डनमलङ्कारो यस्यास्ताम् सुन्दरीम् अगुरूणि चन्दनानि चैधांसीन्धनानि यस्य तस्मै अनलायाग्नये विससर्ज विसृष्टवान् । "क्रियाग्रहणमपि कर्त्तव्यम्" इति क्रियामात्रप्रयोगे सम्प्रदानत्वाच्चतुर्थी ॥ ७१

नृपतिरजः, "सन्नपि विद्वानपि शुचा शोकेन प्रमदामनु प्रमदया सह संस्थितो मृतः" इति वाच्यदर्शनान्निन्दादर्शनात् देव्या इन्दुमत्या सह शरीरमग्निसात् अग्न्यधीनं न चकार । "तदधीनवचने" इति सातिप्रत्ययः । जीविताशया प्राणेच्छया तु नेति ॥ ७२

अथ विदुषा शास्त्रज्ञान तेनाजेन । गुणा रूपादय एव शेषा यस्यास्तां गुणशेषां भामिनीमुद्दिश्य उद्दिश्य । दशानामह्नां समाहारो दशाहः । 'तद्धितार्थ—' इत्यादिना समासः । समाहारस्यैकत्वादेकवचनम् । 'राजाहःसखिभ्यष्टच्' इति टच् । 'रात्राह्नाहाः पुंसि' इति पुंवत । ततस्तसिल् । तस्माद्दशाहतः परे ऊर्ध्वं कर्त्तव्या महर्द्धयो महासमृद्धयो विधयः क्रिया, पुरः पुर्या उपवने उद्याने एव समापिताः सम्पूर्णमनुष्ठिताः । 'दशाहतः' इति 'विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः ।" इति मनुवचनविरोधो नाशङ्कनीयः । तस्य निर्गुणक्षत्रियविषयत्वात् । गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः—'क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः' इति । सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन ॥ ७३

तया इन्दुमत्या विना । क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्र स इव दृश्यत इति

अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोधयत् ॥ ७५

असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६

मयि तस्य सुवृत्त वर्त्तते लघुसन्देशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥ ७७

पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥ ७८

अन्वयः । अथ सवनाय दीक्षितः गुरुः आश्रमस्थितः ( सन् ) तम् [illegible] प्रणिधानात् विजज्ञिवान् इति शिष्येण अन्वबोधयत किल ॥ ७५

अन्वयः । यतः मुनिः असमाप्तविधिः ( ततः ) तव तापकारणं विद्वान् [illegible] भवन्तं प्रकृतौ स्थापयितुम् स्वयम् न उपस्थितः ॥ ७६

अन्वयः । हे सुवृत्त ! लघुसन्देशपदा तस्य सरस्वती मयि वर्त्तते । हे विश्रुत[illegible] ताम् शृणु एनां हृदि उपधातुं च अर्हसि ॥ ७७

अन्वयः । अजन्मनः पुरुषस्य पदेषु समतीतञ्च भवत् च भावि च (इति) [illegible] निष्प्रतिघेन ज्ञानमयेन चक्षुषा पश्यति हि ॥ ७८

चपदापायशशाङ्कदर्शनः । प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः । दृश्यत[illegible] ल्युट् । सोऽजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासमिवा[illegible] "जलोच्छ्वासाः परीवाहाः" इत्यमरः । स्वदुःखापूरातिशयमिव पश्यन् पुरीं [illegible] यद्गुणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचकपरिवाहांस्त्रिर्निर्वहति ।

अथ सवनाय यागाय दीक्षितो गुरुर्वशिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन्[illegible] भिषङ्गजडं दुःखमोहितं प्रणिधानाच्चित्तैकाग्र्यात् विजज्ञिवान् ज्ञातवान् । [illegible] क्वसुप्रत्ययः । इति वक्ष्यमाणप्रकारेण शिष्येण अन्वबोधयत् किल । बुधे[illegible] लङ् ॥ ७५

वशिष्ठशिष्य आह—यतो हेतोर्मुनिरसमाप्तविधिरसमाप्तक्रतुस्ततस्तव ताप[illegible] हेतुं कलत्रनाशरूपं विद्वान् जानन्नपि । "विदेः शतुर्वसुः" इति वस्वादेशः । [illegible] इत्यादिना षष्ठीप्रतिषेधः । पथश्च्युतं स्वभावाद्भ्रष्टं भवन्तं प्रकृतौ स्वभावे [illegible] समाश्वासयितुमित्यर्थः । स्वयं नोपस्थितो नागतः ॥ ७६

हे सुवृत्त ! सदाचार संदिश्यत इति सन्देशः सन्देष्टव्यार्थः तस्य पदानि लघूनि संक्षिप्तानि सन्देशपदानि यस्यां सा लघुसन्देशपदा तस्य मुनेः [illegible] मयि वर्त्तते । हे विश्रुतसत्त्वसार ! प्रख्यातधैर्यातिशय ! तां सरस्वतीं [illegible] वाचं हृदि उपधातुं धर्त्तुं चार्हसि ॥ ७७

वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—पुरुषस्येति । अजन्मनः पुरु[illegible]

[च]रतः किल दुश्चरं तपस्तृणविन्दोः परिशङ्कितः पुरा ।
[प्र]जिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९

[स] तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
[अ]शपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ८०

[भ]गवन् परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
[इ]ति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥ ८१

[क्र]थकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा ।
[उ]पलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२

अन्वयः । पुरा दुश्चरं तपश्चरतः तृणविन्दोः परिशङ्कितः हरिः समाधिभेदिनीम् हरि[णीम्] सुराङ्गनाम् अस्मै प्रजिघाय ॥ ७९

अन्वयः । सः शमवेलाप्रलयोर्म्मिणा तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्र[मा]म् ताम् भुवि मानुषी भव इति अशपत ॥ ८०

अन्वयः । भगवन् ! अयं जनः परवान्, मे प्रतिकूलाचरितम् क्षमस्व इति उप[नता]म् च आसुरपुष्पदर्शनात् क्षितिस्पृशं कृतवान् ॥ ८१

अन्वयः । क्रथकैशिकवंशसम्भवा सा तव महिषी भूत्वा चिराय दिवः च्युतम् शाप[निवृ]त्तिकारणम् उपलब्धवती विवशा ( अभूत् ) ॥ ८२

[त]स्य भगवतस्त्रिविक्रमस्य पदेषु विक्रमेषु । त्रिभुवनेष्वपीत्यर्थः । समतीतं भूतञ्च भव[त्]मानञ्च भावि भविष्यच्चेति वितथ म सुनिर्मिषप्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा []दृष्ट्या पश्यति हि । अतस्तदुक्तिषु न संशयितव्यमित्यर्थः ॥ ७८

[]पुरा किल दुश्चरं तीव्रं तपश्चरतस्तृणविन्दोस्तृणविन्दुनामकात् कस्मात् ऋषेः परिशङ्कितो [भी]तः । कर्त्तरि क्तः । "भीत्रार्थानां भयहेतुः" इत्यपादानात्पञ्चमी हरिरिन्द्रः समाधि[भेदि]नीं तपोविघातिनीं हरिणीं नाम सुराङ्गनामस्मै तृणविन्दवे प्रजिघाय प्रेरितवान् ॥ ७९

[]स मुनिः । शमः शान्तिरेव वेला मर्य्यादा तस्याः प्रलयोर्म्मिणा प्रलयकालतरङ्गेण । [शम]विघातकेनेत्यर्थः । "अब्ध्यम्बुविकृती वेला कालमर्य्यादयोरपि" इत्यमरः । तपसः [प्रति]बन्धेन विघ्नेन यो मन्युः क्रोधः तेन हेतुना । प्रमुखे अग्रे आविष्कृतचारुविभ्रमां [प्रका]शितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इत्यशपत् [अश]प ॥ ८०

हे भगवन् ! महर्षे ! अयं जनः, परोऽस्त्यस्तीति स्वामित्वेन परवान् पराधीनः । अय[मि]त्यात्मनिर्देशः । अहं पराधीन इत्यर्थः । मे मम प्रतिकूलाचरितमपराधं क्षमस्वेत्यनेन [प्रका]रेणोपनतां शरणागतां च हरिणीम् आसुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्य्यन्तम् । क्षितिं [स्पृ]शतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवानकरोत् । दिव्यपुष्पदर्शनं शापावधि[म]नुगृहीतवानित्यर्थः ॥ ८१

क्रथकैशिकानां राज्ञां वंशे सम्भवो यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री ।

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः॥८३

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया।
मनसस्तदुपस्थिते ज्वरे पुनरक्लीवतया प्रकाश्यताम्॥८४

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्।८५

अन्वयः। तत् तदपायचिन्तया अलम्, उत्पत्तिमताम् विपत् उपस्थिता, इयम् वसुधा अवेक्ष्यताम् हि नृपाः वसुमत्या कलत्रिणः॥८३

अन्वयः। उदये मदवाच्यम् उज्झता त्वया यत् आत्मवत् श्रुतम् आविष्कृतम् तत् मनसः ज्वरे उपस्थिते अक्लीवतया पुनः प्रकाश्यताम्॥८४

अन्वयः। भवता रुदता (सता) सा कुत एव लभ्यते, अनुमृता अपि न लभ्यते, परलोकजुषां देहिनाम् गतयः स्वकर्मभिः भिन्नपथाः हि॥८५

"कृताभिषेका महिषी" इत्यमरः। भूत्वा चिराय दिवः स्वर्गाच्च्युतं पतितं माल्यं सुरपुष्परूपं उपलभ्य वती विवशा अभूदिति शेषः मृतेत्यर्थः॥८२

तत्तस्मात्तस्या अपायचिन्तया अलम्। तस्या मरणं न चिन्त्यमित्यर्थः। प्रति करणत्वाच्चिन्तयेति तृतीया। कुतो न चिन्त्यमत आह—उत्पत्तिमतां जन्मवतां विपत्तिरुपस्थिता सिद्धा। जातस्य हि ध्रुवो मृत्युरित्यर्थः। तथापि कलत्रं विना कथं जीवितेन। तत्राह—त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम्। हि यस्मात् पृथिव्या कलत्रिणः कलत्रवन्तः। अतो न शोचितव्यमित्यर्थः॥८३

उदयेऽभ्युदये सति मदेन यद्वाच्यं निद्रादुःखम् तदुज्झता परिहरता सर्वोपरि वर्तमानेन त्वया यदात्मवदध्यात्मप्रचुरं श्रुतं शास्त्रम्। तज्जनितं ज्ञानमिति यावत्। आविष्कृतं प्रकाशितम्। तच्छ्रुतं मनसो ज्वरे सन्तापे उपस्थिते प्राप्तेऽक्लीवतया धैर्येण पुनः प्रकाश्यताम्। विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः॥८४

इतोऽपि न रोदितव्यमित्याह - रुदता भवता सा कुत एव लभ्यते, न कुतोऽपि। अनुम्रियत इत्यनुमृत्। क्विप्। तेनानुमृतानुमृतवतापि भवता पुनः न लभ्यते। लभ्यते इत्याह—परलोकजुषां लोकान्तरभाजां देहिनाम्। गम्यन्त इति गतयः स्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि। देहिनां कर्मानुरूपफलभोगाय भिन्नदेशगमनात्र मृतेनापि लभ्यत इत्यर्थः॥८५

अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसन्ततं दहति प्रेतमिति प्रचक्षते ॥ ८६

मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ ॥ ८७

अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ८८

स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ८९

अन्वयः । अपशोकमनाः ( सन् ) निवापदत्तिभिः कुटुम्बिनीम् अनुगृह्णीष्व, अतिसन्ततम् स्वजनाश्रु प्रेतम् दहति इति प्रचक्षते किल ॥ ८६

अन्वयः । शरीरिणाम् मरणम् प्रकृतिः जीवितम् विकृतिः ( इति ) बुधैः उच्यते जन्तुः क्षणम् अपि श्वसन् अवतिष्ठते यदि असौ लाभवान् ननु ॥ ८७

अन्वयः । मूढचेतनः प्रियनाशम् हृदि अर्पितम् शल्यम् अवगच्छति स्थिरधीः तत् एव कुशलद्वारतया समुद्धृतम् मन्यते ॥ ८८

अन्वयः । यदा स्वशरीरशरीरिणौ अपि श्रुतसंयोगविपर्ययौ, तदा बाह्यैः विषयैः विरहः विपश्चितम् किम् इव अनुतापयेत् वद ॥ ८९

किन्त्वपशोकमना निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिभिरनुगृह्णीष्व । तर्पयेत्यर्थः । अन्यथा दोषमाह—अतिसन्ततमविच्छिन्नं स्वजनानां बन्धूनाम् । "बन्धुस्वस्वजनाः समाः" इत्यमरः । अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः किल । अत्र याज्ञवल्क्यः—"श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः" इति ॥ ८६

शरीरिणां मरणं प्रकृतिः स्वभावः । ध्रुवमित्यर्थः । जीवितं विकृतिर्यादृच्छिकं बुधैरुच्यते । एवं स्थिते जन्तुः प्राणी क्षणमपि । अत्यन्तसंयोगे द्वितीया । श्वसन् जीवन्नवतिष्ठते यद्यसौ क्षणजीवी लाभवान्ननु । जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात् । मरणे तु न शोचितव्यम् । अस्य स्वाभाव्यादिति भावः ॥ ८७

मूढचेतनो भ्रान्तबुद्धिः प्रियनाशमिष्टनाशं हृद्यर्पितं निखातं शल्यं शङ्कुमवगच्छति मन्यते । स्थिरधीर्विद्वांस्तु तदेव शल्यं समुद्धृतमुत्खातं मन्यते । प्रियनाशे सतीति शेषः । कुतः ? कुशलद्वारतया । प्रियनाशस्य मोक्षोपायतयेत्यर्थः । विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम् । विपरीतन्तु विपश्चितामिति भावः ॥ ८८

स्वस्य शरीरशरीरिणौ देहात्मानावपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्ययौ

न पृथग्जनवच्छुचो वशं वशिनामुत्तम ! गन्तुमर्हसि।
द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः॥९०

स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम्।
तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः॥९१

तेनाष्टौ परिगमिताः समाः कथञ्चिद्-
बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ९२

अन्वयः। वशिनामुत्तम! पृथग्जनवत् शुचः वशं गन्तुं न अर्हसि, द्रुम... किम् अन्तरम्? यदि वायौ (सति) द्वितये अपि ते चलाः॥ ९०

अन्वयः। सः उदारमतेः विनेतुः (गुरोः) वचः तथा इति प्रतिगृह्य मुनिं... (किन्तु) तत् शोकघने अस्य हृदि अलब्धपदम् (सत्) गुरोः अन्तिकं... इव॥ ९१

अन्वयः। अवितथसूनृतेन तेन सूनोः बालत्वात् प्रियायाः सादृश्यप्रतिकृतिदर्शनैः... क्षणिकसमागमोत्सवैः च कथञ्चित् अष्टौ समाः परिगमिताः॥ ९२

संयोगवियोगौ ययोस्तौ तथोक्तौ। तदा बाह्यैर्विषयैः पुत्रमित्रकलत्रादिभिर्वितां... श्चितं विद्वांसं किमिवानुतापयेत्त्वं वद। न किञ्चिदित्यर्थः। अथवा स्वस्वदेश... सम्बन्धः॥ ८९

हे वशिनामुत्तम! जितेन्द्रियवर्य! पृथग्जनवत्पामरजनवच्छुचः शोकस्य... नार्हसि। तथाहि—द्रुमसानुमतां तरुशिखरिणां किमन्तरं को विशेषः? ... द्वितयेऽपि द्विप्रकारा अपि। "प्रथमचरम—" इत्यादिना जसि विभाषया सर्व... ते द्रुमसानुमन्तश्चलाश्चञ्चला यदि। सानुमतामपि चलने द्रुमवत्तेषामप्यचलसंज्ञा... त्यर्थः॥ ९०

सोऽजः उदारमतेर्विनेतुर्गुरोर्वशिष्ठस्य वचस्तच्छिष्यमुखेरितं तथेति प्रतिगृह्य मुनिं वशिष्ठशिष्यम् विससर्ज प्रेषयामास। किन्तु तद्वचः शोकघने दुःखवाद... हृदि अलब्धपदमप्राप्तावकाशम् सत् गुरोर्वशिष्ठस्यान्तिकम् प्रतियातमिव प्रतिनि... इत्युत्प्रेक्षा। तोटकवृत्तमेतत्—"इह तोटकमम्बुधिसैः प्रथितम्" इति तल्लक्षणम्।

अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन। सूनोः पुत्रस्य बालत्वात् अप्रमत्वादित्यर्थः। प्रियाया इन्दुमत्याः सादृश्यं वस्त्वन्तरगतमाकारसाम्यम्, प्रतिकृतिः... तयोर्दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैश्च। कथञ्चित्कृ...

अष्टमः सर्गः ।



तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तम्भिषजामसाध्यं
लाभं प्रियानुगमने त्वरया स मेने ॥ ९३

सम्यग्विनीतमथ वर्म्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४

अन्वयः । शोकशङ्कुः तस्य हृदयम् प्लक्षप्ररोहः सौधतलम् इव प्रसह्य बिभेद, सः प्राणान्तहेतुम् अपि भिषजाम् असाध्यम् तं प्रियानुगमने त्वरया लाभम् मेने ॥ ९३

अन्वयः । अथ नृपतिः सम्यग्विनीतम् वर्म्महरम् कुमारम् प्रजानां रक्षणविधौ विधिवत् आदिश्य रोगोपसृष्टतनुदुर्व्वसतिम् मुमुक्षुः प्रायोपवेशनमतिः बभूव ॥ ९४

रा वत्सराः । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः । परिगमिता तिवाहिताः । उक्तञ्च—"वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म्म स्वपन-ष्ये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां ऽपि कथितं" इति । प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्ष-र्वितम् । प्रहर्षिणीवृत्तमेतत् ॥ ९२

क एव शङ्कुः कीलः । "शङ्कुः कीले शिवेऽस्त्रे च" इति विश्वः । तस्याजस्य हृदयम् । प्रप्ररोहः सौधतलमिव । प्रसह्य बलात्किल बिभेद । सोऽजः प्राणान्तहेतुम् मरणकारण-पि भिषजामसाध्यमप्रतिसमाधेयं तं शोकशङ्कुं रोगपर्य्यवसितं प्रियाया अनुगमने त्वरयो-पाढ्या लाभं मेने । तद्विरहस्यातिदुःसहत्वात्तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यतेत्यर्थः ॥९३

अथ नृपतिरजः सम्यग्विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म्म हरतीति वर्म्महरः वचधारणार्हवयस्कः । "वयसि च" इत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षण-धौ राज्ये विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । आदिश्य युज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुर्जिहासुः न् । प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य स बभूव । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययो-पि" इति विश्वः । अत्र पुराणवचनम्—"समासक्तो भवेद्यस्तु पातकैर्महदादिभिः दुश्चि-त्स्यैर्महारोगैः पीड़ितो वा भवेत्तु यः ॥ स्वयं देहविनाशस्य काले प्राप्ते महामतिः । ब्रह्माण वा स्वर्गादिमहाफलजिगीषया ॥ प्रविशेज्ज्वलनं दीप्तं कुर्य्यादनशनं तथा । एतेषा-धिकारोऽस्ति नान्येषां सर्वजन्तुषु ॥ नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥" इति । नयोर्वसन्ततिलकाच्छन्दः । तल्लक्षणम्—"वक्ता वसन्ततिलका तभजा जगौ गः" इति ॥९४.

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ९५

अन्वयः। असौ जह्नुकन्यासरय्वोः तोयव्यतिकरभवे तीर्थे देहत्यागात् अ
गणनालेख्यमासाद्य पूर्वाकाराधिकतररुचा कान्तया सङ्गतः नन्दनाभ्यन्तरे
पुनः अरमत ॥ ९५

असौ अजः जह्नुकन्यासरय्वोस्तोयानां जलानां व्यतिकरेण संभेदेन भवे तीर्थे
सङ्गमे देहत्यागात्सद्य एव अमरगणनायां लेख्यं लेखनम्। 'तयोरेव कृत्यक्त
भावार्थे ण्यत्प्रत्ययः। आसाद्य प्राप्य। पूर्वस्मादाकारादधिकतरा रुग्यस्यास्तया
रमण्या सङ्गतः सन्, नन्दनस्येन्द्रोद्यानस्याभ्यन्तरेष्वन्तर्वर्त्तिषु लीलागारेषु क्रीडागृहेष्व-
रमत। 'यथाकथञ्चित्तीर्थेऽस्मिन् देहत्यागं करोति यः। तस्यात्मघातदोषो
दीप्सिताप्यपि॥" इति स्कान्दे। मन्दाक्रान्ताछन्दः। तल्लक्षणम्—'मन्दाक्रान्ता म्
गैम्भौ नतौ तद्गुरू चेत्" इति ॥ ९५

इति महामहोपाध्याय-कोलाचल-मल्लिनाथ सूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि कालिदासकृतौ
रघुवंशे महाकाव्ये अजविलापो नाम
अष्टमः सर्गः।

---

# नवमः सर्गः ।

—:०*०:—

पितुरनन्तरमुत्तरकोसलान् समधिगम्य समाधिजितेन्द्रियः ।
दशरथः प्रशशास महारथो यमवतामवतां धुरि स्थितः ॥ १
अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।
अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २
उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम् ।
बलनिषूदनमर्थपतिञ्च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३

अन्वयः। समाधिजितेन्द्रियः अवताम् यमवताञ्च धुरि स्थितः महारथः दशरथः, पितुः अनन्तरम् उत्तरकोसलान् समधिगम्य प्रशशास ॥ १

अन्वयः। अधिगतम् आत्मकुलोचितम् सनगरम् प्रकृतिमण्डलम् यत् विधिवत् अपालयत्, ततः नगरन्ध्रकरौजसः अस्य गुणवत्तरम् अभवत् ॥ २

अन्वयः। मनीषिणः बलनिसूदनम् मनुदण्डधरान्वयम् अर्थपतिम् च (इति) उभयम् एव समयवर्षितया कृतकर्मणाम् श्रमनुदम् वदन्ति ॥ ३

एकलोचनमेकार्द्धे सार्द्धलोचनमन्यतः ।
नीलार्द्धं नीलकण्ठार्द्धं महः किमपि मन्महे ॥

समाधिना संयमेन जितेन्द्रियः। "समाधिर्नियमे ध्याने" इति कोषः। यमवताम् संयमिनामवतां रक्षतां राज्ञां च धुर्य्यये स्थितो महारथः। "एको दश सहस्राणि योधयेद् यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥" इति। दशरथः पितुरनन्तर उत्तरकोसलाञ्जनपदान् समधिगम्य प्रशशास। अत्र मनुः—"क्षत्रियस्य परो धर्मः प्रजानां पालनम्" इति। द्रुतविलम्बितमेतद्वृत्तम्। तल्लक्षणम्—'द्रुतविलम्बितमाह नभौ भरौ' इति ॥ १

अधिगतं प्राप्तमात्मकुलोचितं स्वकुलागतं सनगरं नगरजनसहितं प्रकृतिमण्डलं जानपदमण्डलम्। अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते। यद्यस्माद्विधिवद्यथाशास्त्रमपालयत्। ततो हेतोः। रन्ध्रं करोतीति रन्ध्रकरः। रन्ध्रहेतुरित्यर्थः। "कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्ययः। नगरस्य रन्ध्रकरो नगरन्धकारः कुमारः। "कुमारः क्रौञ्चदारणः" इत्यमरः। तदोजसस्तद्बलस्यास्य दशरथस्य गुणवत्तरमभवत्। तद्योर्जनपदमण्डलं तस्मिन्नतीवासक्तमित्यर्थः ॥ २

मनस ईषिणो मनीषिणो विद्वांसः। पृषोदरादित्वात् साधुः। बलनिसूदनमिन्द्रम्। दण्डस्य धरो राजा मनुरिति यो दण्डधरः स एवान्वयः कूटस्थो यस्य तमर्थपतिं दशरथं

जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः।
क्षितिरभूत् फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे॥
दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम्।
तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम्॥
समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः।
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा॥

अन्वयः। शमरते अमरतेजसि अजनन्दने पार्थिवे (सति) जनपदे [illegible] आदधौ, सपत्नजः अभिभवः कुतः एव, क्षितिः फलवती अभूत्॥ ४

अन्वयः। मही दशदिगन्तजिता रघुणा ततः परम् अजेन (च) यथा [illegible] तथैव अहीनपराक्रमम् तम् इनम् अधिगम्य पुनः न बभौ (इति) न॥ ५

अन्वयः। नराधिपः समतया वसुवृष्टिविसर्जनैः असताम् नियमनात् [illegible] यमपुण्यजनेश्वरौ अनुययौ, रुचा अरुणाग्रसरम् अनुययौ॥ ६

चेत्युभयमेव। समयेऽवसरे जलं धनं च वर्षतीति समयवर्षी, तस्य भावः [illegible] तथा हेतुना, कृतकर्मणां स्वकर्मकारिणाम्। नुदतीति नुदम्। "इगुपध[illegible] कः" इति कप्रत्ययः। श्रमस्य नुदं श्रमनुदम्। क्विबन्तत्वे नपुंसकलिङ्गतया [illegible] सामानाधिकरण्यं न स्यात्। इति वदन्ति॥ ३

शमरते शान्तिपरेऽमरतेजस्यजनन्दने दशरथे पार्थिवे पृथिव्या ईश्वरे स[illegible] इत्यण्प्रत्ययः। जनपदे देशे गदो व्याधिः। "उपतापरोगव्याधिगदाम[illegible] पदं नादधौ नाचक्रामेत्यर्थः। सपत्नजः शत्रुजन्योऽभिभवः कुत एव असम्भा[illegible] क्षितिः फलवत्यभूच्च॥ ४

मही। दशदिगन्ताञ्जितवानिति दशदिगन्तजित्। तेन रघुणा यथा [illegible] ष्यत्। ततः परं रघोरनन्तरमजेन न यथा श्रियमपुष्यत् तथैवाहीनपराक्रमं [illegible] क्रमो यस्य तमन्यूनपराक्रमं तं दशरथम् इनं स्वामिनमधिगम्य पुनर्न बभावि[illegible] वेत्यर्थः। द्वौ नञौ प्रकृतमर्थं गमयतः॥ ५

नराधिपो दशरथः समतया समवर्त्तित्वेन। मध्यस्थत्वेनेत्यर्थः। वसूनां [illegible] र्जनैः। असतां दुष्टानां नियमनान्निग्रहाच्च। सवरुणौ वरुणसहितौ यमपु[illegible] कुबेरौ यमकुबेरवरुणान् यथासंख्यमनुययौ अनुचकार। रुचा तेजसा अ[illegible] सारथिं सूर्यमनुययौ॥ ६

न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु ।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥ ७
न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वा गपरुषा परुषाक्षरमीरिता ॥ ८
उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाधिपाः ।
स हि निदेशमलङ्घयतामभूत् सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९

अन्वयः । उदयाय यतमानम् तम् मृगयाभिरतिः न, दुरोदरम् न, शशिप्रतिमाभरणम् मधु च न, नवयौवना प्रियतमा वा न अपाहरत् ॥ ७

अन्वयः । तेन प्रभवति ( सति ) वासवे अपि कृपणा वाक् न ईरिता, परिहासकथासु अपि वितथा वाक् न ईरिता, अपरुषा ( तेन ) सपत्नजनेषु अपि परुषाक्षरम् वाक् ईरिता ॥ ८

अन्वयः । वसुधाधिपाः रघूद्वहात् उदयम् अस्तमयम् च आनशिरे, हि सः निदेशम् अलङ्घयताम् सुहृत्, प्रतिगर्जताम् अयोहृदयः अभूत् ॥ ९

तस्य व्यसनासक्तिर्नासीदित्याह—नेति । उदयाय यतमानमभ्युदयार्थं व्याप्रियमाणं तं दशरथम्, मृगयाभिरतिराखेटव्यसनं नापाहरन्नाचकर्ष । "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इत्यमरः । दुष्टमासमन्तादुदरमस्येति दुरोदरं द्यूतं च नापाहरत । "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः । शशिनः प्रतिमा प्रतिबिम्बमाभरणं यस्य मधु नापाहरत् । नेति पदच्छेदः. वाशब्दः समुच्चये नवयौवना नवं नूतनं यौवनं तारुण्यं तादृशी प्रियतमा स्त्री वा नापाहरत् । जातावेकवचनम् । अत्र मनुः—"पानमक्षाः स्त्रियश्चेति मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे" इति ॥ ७

तेन राज्ञा प्रभवति प्रभौ सति वासवेऽपि कृपणादीना वाक् न ईरिता नोक्ता । हासकथास्वपि वितथा अनृता वाक् न ईरिता । किञ्च अपरुषा रोगशून्येन तेन सपत्नेष्वपि शत्रुजनेष्वपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाक् न ईरिता । अपिशब्दार्थः । किन्त्वदीना सत्या मधुरैव वागुक्तेति फलितार्थः ॥ ८

वसुधाधिपा राजानः, उद्वहतीत्युद्वहो नायकः । पचाद्यच् । रघूणामुद्वहो रघुनायकः । तस्माद्रघुनायकादुदयं वृद्धिम् अस्तमयं नाशं च इत्युभयमानशिरे लेभिरे । कुतः, हि यस्मात् दशरथः, निदेशमाज्ञामलङ्घयताम् । शोभनं हृदयमस्येति सुहृन्मित्रमभूत् । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः । प्रतिगर्जतां प्रतिस्पर्द्धिनाम्. अय इव हृदयं यस्येत्ययोहृदयः कठिनचित्तोऽभूत् । आज्ञाकारिणो रक्षति, अन्यान्मारयतीत्यर्थः ॥ ९.

१८

अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः॥
अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः।
विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसम्पदः॥
शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरन्दरः।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः।
चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन्।
नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम्

अन्वयः। अधिज्यशरासनः सः एकरथेन उदधिनेमिम् मेदिनीम् अजयत्
जवतीव्रहया चमूः अस्य केवलम् जयम् अघोषयत् ॥ १०

अन्वयः। घनरवाः अर्णवाः वरूथिना एकरथेन अवनिम् जितवतः
नरवाहनसम्पदः तस्य विजयदुन्दुभिताम् ययुः किल ॥ ११

अन्वयः। पुरन्दरः शतकोटिना कुलिशेन शिखरिणाम् शमितपक्षबलः, यथा
सः शरवृष्टिमुचा स्वनवता धनुषा द्विषां शमितपक्षबलः ॥ १२

अन्वयः। शतशः नृपतयः अखण्डितपौरुषम् तम् मरुतः शतमखं यथा
समृद्धिभिः मुकुटरत्नमरीचिभिः चरणयोः अस्पृशन् ॥ १३

अधिज्यशरासनः स दशरथः उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाऽ
रथेनाजैषीदित्यर्थः। गजवती गजयुक्ता जवेन तीव्रा अधिका हया यस्यां सा
नृपस्य केवलम् जयमघोषयदप्रथयत्। स्वयमेकवीरस्य चमूरुपकरणमात्रमिति
वरूथिना गुप्तिमता। "वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्"
एकरथेनाद्वितीयरथेनावनिं, जितवतो धनुर्भृतो नरवाहनसम्पदः कुबेरतु
दशरथस्य घनरवा मेघसमघोषा अर्णवाः, विजयदुन्दुभितां ययुः किल।
त्यर्थः ॥ ११

पुरन्दर इन्द्रः शतकोटिना शतास्रिणा कुलिशेन वज्रेण शिखरिणां पर्व
पक्षबलो विनाशितपक्षसारः। नवतामरसाननो नवपङ्कजाननः। "पङ्केरुहं
इत्यमरः। स दशरथः शरवृष्टिमुचा स्वनवता धनुषा द्विषां शमितौ नाशितौ
बलं च येन स तथोक्तः। "पक्षः सहायेऽपि" इत्यमरः ॥ १२

शतशो नृपतयः, अखण्डितपौरुषं तं दशरथम्। मरुतो देवाः, शतमख
क्रतुमिव। नखरागेण चरणनखकान्त्या समृद्धिभिः सम्पादितवृद्धिभिर्मुकुट
चरणयोरस्पृशन्। तं प्रणेमुरित्यर्थः ॥ १३

निवहते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम् ॥ १४

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनल सोमसमद्युतिः ॥ १५

तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता ।
नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६

अन्वयः । सः सचिवकारितबालसुताञ्जलीन् अनलकान् सपत्नपरिग्रहान् समनुकम्प्य अलकानवमाम् पुरीम् ( प्रति ) महार्णवरोधसः निवहते ॥ १४

अन्वयः । अनुदितान्यसितातपवारणः अनलसोमसमद्युतिः सः मण्डलनाभितां च उपगतोऽपि श्रियम् अवेक्ष्य अनलसः अभूत् ॥ १५

अन्वयः । पतिव्रता सकमला देवता अर्थिषु अलाघवम् ककुत्स्थकुलोद्भवम् तम् आत्मभवं पुरुषम् अपहाय अन्यं कम् नृपतिम् असेवत ॥ १६

स दशरथः सचिवैः संप्रयोजितैः कारिता बालसुतानामञ्जलयो येषाम् । स्वयमसमागतानित्यर्थः । अनलकान् हतभर्तृकतया अलकसंस्कारशून्यान् सपत्नपरिग्रहान् पत्नीः । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः । समनुकम्प्य अनुगृह्य अलकानवमाम् अलकानगरादन्यूनां पुरिमयोध्यां प्रति महार्णवानां रोधसः पर्यन्तान्निवहते । शरणागतवत्सल इति भावः ॥ १४

अनुदितमनुत्क्षिप्तमन्यत् स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य सः । अनलसोमयोरग्निचन्द्रयोः समे द्युती कान्ती तेजः यस्य स तथोक्तः । श्रियं लक्ष्मीं रन्ध्रे ऽन्यायादिरूपे छले चलां चपलामवेक्ष्यावलोक्य । श्रीर्हि केनचिन्मिषेण पुमांसं परिहरति । दशरथो मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगतोऽपि । चक्रवर्तित्वमपीत्यर्थः । "अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका । रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ आद्यक्षत्रियभेदे तु मतो मुख्यमहीपतौ" इति केशवः । अनलसोऽप्रमत्तोऽभूत् । "अजितमस्ति नृपास्पदम्" इति पाठान्तरेऽजितं नृपास्पदमस्तीनि बुद्ध्याप्रमत्तोऽभूत् । विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव जागरूक एवावर्तिष्ठते इत्यर्थः । द्वादशराजमण्डलं तु कामन्दकीयोक्तम्—'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरम् । तथारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो द्वयनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलादवहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः" इति । 'अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः ॥' इति पृष्ठतश्चत्वारः । मध्यमोदासीनौ द्वौ विजिगीषुरेक इत्येवं द्वादशराजमण्डलम् । तत्रोदासीनमध्यमोत्तरश्चक्रवर्ती । मण्डलस्यैतादृगिति तात्पर्यार्थः ॥ १५

पत्यौ व्रतं नियमो यस्याः सा पतिव्रता सकमला कमलहस्ता देवता लक्ष्मीः अर्थिषु

तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।
मगधकोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥
प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥
स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्य्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९

अन्वयः । पतिदेवताः मगधकोशलकेकयशासिनाम् दुहितरः अहितारोपितमार्गणम् तम् शिखरिणाम् दुहितरः आपगाः सागरमिव पतिम् अलभन्त ॥ १७

अन्वयः । अरिहयोगविचक्षणः असौ दशरथः तिसृभिः प्रियतमाभिः सह प्रजाः विनिनीषुः तिसृभिः शक्तिभिः भुवम् उपगतः हरिहयः इन्द्र इव बभौ ॥ १८

अन्वयः । महारथः सः संयुगमूर्ध्नि मघवतः सहायताम् प्रतिपद्य शरैः अवधूतभयाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत् किल ॥ १९

विषयेऽलाघवं लघुत्वरहितम्, अपराङ्मुखमित्यर्थः । ककुत्स्थकुलोद्भवं तं दश... पुरुषं विष्णुं च अपहाय त्यक्त्वा । अन्यं कं नृपतिमसेवत, कमपि नासेव... विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूदित्यर्थः ॥ १६

पतिरेव देवता यासां ताः पतिदेवताः पतिव्रताः । मगधाश्च कोशलाश्च के... जनपदान् शासतीति तच्छासिनः तेषां राज्ञां दुहितरः पुत्र्यः सुमित्राद्याः । इत्यर्थः । अत्र क्रमो न विवक्षितः । अहितारोपितमार्गणं शत्रुनिखातशरम् 'पत्रिनः... शराः' इत्यमरः । तं 'दशरथम्' शिखरिणां स्माभृतां दुहितरः । आ समन्तात्... अथवा 'आपेन अप्सम्बन्धिना वेगेन गच्छन्तीत्यापगाः' इति क्षीरस्वामी । नदी... पतिं भर्त्तारमलभन्त प्रापुः ॥ १७

अरीन् घ्नन्तीत्यरिहणो रिपुघ्नाः । हन्तेः क्विप् । "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति... प्रायिकत्वात् । तथाह न्यासकारः—"प्रायिकश्चायं नियमः । क्वचिदन्यस्मिन्नप्युपपदे... मधुहा । प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते" ... योगेषूपायेषु विचक्षणो दक्षः 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । ...योन्यमेतत् । असौ दशरथस्तिसृभिः प्रियतमाभिः सह । प्रजा विनिनीषुः... तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिरेव सह भुवमुपगतो हरिहय इन्द्र इव...

महारथः स दशरथः । संयुगमूर्ध्नि रणाङ्गणे मघवत इन्द्रस्य सहायतां प्रति... शरैरवधूतभया निवर्त्तितत्रासाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत् ... गायतेः शब्दकर्मत्वात् "गतिबुद्धि—" इत्यादिना सुरवधूनामपि कर्मत्वम् ॥ १९

क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः ।
कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥ २०
अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् ।
अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २१
अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः ।
नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२

अन्वयः । क्रतुषु विसर्जितमौलिना भुजसमाहृतदिग्वसुना वितमसा तेन तमसासरयूः कनकयूपसमुच्छ्रयशोभितः कृता ॥ २०

अन्वयः । ईश्वरः अजिनदण्डभृतम् कुशमेखलां यतगिरम् मृगशृङ्गपरिग्रहाम् अध्वरदीक्षिताम् तनुम् ( दाशरथीम् ) अधिवसन् असमभासम् अभासयत् ॥ २१

अन्वयः । अवभृथप्रयतः नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः सः उन्नतम् शिरः वनमुचे नमुचेः अरये केवलम् नमयति स्म ॥ २२

क्रतुष्वश्वमेधेषु विसर्जितमौलिना अवरोपितकिरीटेन । "यावद्यज्ञमध्वर्युरेव राजा" इति राजचिह्नत्यागविधानादित्यभिप्रायः । "मौलिः किरीटे धम्मिल्ले" इति । भुजसमाहृतदिग्वसुना भुजार्जितदिगन्तसम्पदा । अनेन क्षत्रियस्य विजितत्वमुक्तम् । ...र्जितधनत्वं सद्विनियोगकारित्वं च सूच्यते । वितमसा तमोगुणरहितेन तेन दश... । तमसा च सरयूश्च नद्यौ । तयोस्तटाः कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः कृताः । कनकमयत्वं च यूपानां शोभार्थं विध्यभावात् । "हेमयूपस्तु शोभिकः" यादवः ॥ २०

ईश्वरो भगवानष्टमूर्त्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं बिभर्त्तीति तामजिनदण्डभृतम् । ...जिनं दीक्षयति । औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति" इति वचनात् । ...मयी मेखला यस्यास्तां कुशमेखलाम । शरमयी मौञ्जी वा मेखला । तया यजमानं ...यतीति विधानात् । प्रकृते कुशग्रहणं क्वचित्प्रतिनिधिदर्शनात् कृतम् । यतगिरं ...यमाम् । "वाचं यच्छति" इति श्रुतेः । मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम् । ...विषाणया कण्डूयते" इति श्रुतेः । अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं दाशरथी... ...मधितिष्ठन् सन् । असमा भासो दीप्तयो यस्मिन् कर्मणि तद्यथा तथा । अभास... ...सयति स्म ॥ २१

...अवभृत्येन प्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितो देवसभाधिष्ठानार्हः स दश... उन्नतं शिरो वनमुचे जलवर्षिणे । 'जलं नीरं वनं सत्त्वम्' इति शाश्वतः । नमुचेररये ...इन्द्रायैव नमयति स्म । न कस्मैचिदन्यस्मै मानुषायेत्यर्थः ॥ २२

असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता।
दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम्॥
अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम्।
यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम्॥
जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्त्तितवाहनः।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन् मलयन्नगमत्यजत्॥
कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम्।
इति यथाक्रममाविरभून्मधुः द्रुमवतीमवतीर्य्य वनस्थलीम्॥

अन्वयः। एकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता दिनकराभिमुखाः रणरेणवः सुरद्विषाम् रुधिरेण असकृत् रुरुधिरे॥ २३

अन्वयः। अथ मधुः यमकुबेरजलेश्वरवज्रिणाम् समधुरम् अञ्चितविक्रमम् एकनराधिपम् तम् सेवितुम इव नवैः कुसुमैः ( उपलक्षितः सन् ) समाववृते॥ २४

अन्वयः। धनदाध्युषिताम् दिशम् जिगमिषुः रथयुजा परिवर्त्तितवाहनः रविः हिमनिग्रहैः दिनमुखानि विमलयन् ( सन् ) मलयम् नगम् अत्यजत्॥ २५

अन्वयः। ( आदौ ) कुसुमजन्म ततः नवपल्लवाः तदनु षट्पदकोकिलकूजितम् इति यथाक्रमम् द्रुमवतीम् वनस्थलीम् अवतीर्य्य मधुः आविरभूत॥ २६

एकरथेनाद्वितीयरथेन तरस्विना बलवता हरिहयस्येन्द्रस्याग्रसरेण धनुर्भृता असकृद्बहुशो दिनकरस्याभिमुखाः अभिमुखस्थिता इत्यर्थः। रणरेणवः सुरद्विषां रुधिरेण रुरुधिरे निवारिताः॥ २३

अथ यमकुबेरजलेश्वरवज्रिणां धर्मराजधनदवरुणामरेन्द्राणां समा धुरा यस्य स समधुरः। माध्यस्थ्यवितरणसंनियमनैश्वर्य्यैस्तुल्यकक्ष इत्यर्थः। "ऋक्पूर—" समासान्तोऽच्प्रत्ययः। तं समधुरम्। अञ्चितविक्रमं पूजितपराक्रममेकनराधिपं सेवितुमिव, मधुर्वसन्तः। "अथ पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च मधुः" नवैः कुसुमैरुपलक्षितः सन् समाववृते समागतः। 'रिक्तहस्तेन नोपेयाद्राजानं' इति वचनात् पुष्पसमितो राजानं सेवितुमागत इत्यर्थः॥ २४

धनदाध्युषितां कुबेराधिष्ठितां दिशं जिगमिषुर्गन्तुमिच्छुः। रथयुजा सारथिना परिवर्त्तितवाहनो निवर्त्तिताश्वो रविः। हिमस्य निग्रहैर्निराकरणैर्दिनमुखानि विमलयन् विशदयन्। मलयं नगं मलयाचलम् अत्यजत्। दक्षिणां दिशमत्याक्षीत्।

आदौ कुसुमजन्म। ततो नवपल्लवाः। तदनु। "अनुर्लक्षणे" इति कर्मप्रवचनीयत्वाद् द्वितीया। यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानां च कूजितम्। इति यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य्य मधुर्वसन्त आविरभूत्। केषाञ्चिद्द्रुमाणां पल्लवप्राथम्यात्केषाञ्चित्कुसुमप्राथम्याज्ज्ञो माक्रमस्य इति विरोधः।

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः।
अभिययुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्त्रिणः॥ २७

कुसुममेव न केवलमार्त्तवं नवमशोकतरोः स्मरदीपनम्।
किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः॥२८

विरचिता मधुनोपवनश्रियामभिनवा इव पत्त्रविशेषकाः।
मधुलिहां मधुदानविशारदाः कुरवका रवकारणतां ययुः॥ २९

सुवदनावदनासवसम्भृतस्तदनुवादिगुणः कुसुमोद्गमः।
मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः॥ ३०

अन्वयः। नयगुणोपचिताम् सदुपकारफलाम् भूपतेः श्रियम् अर्थिनः इव मधुसम्भृताम् सरसः कमलिनीम् अलिनीरपतत्त्रिणः अभिययुः॥ २७

अन्वयः। आर्त्तवम् नवम् अशोकतरोः केवलम् कुसुमम् एव स्मरदीपनं न, विलासिनाम् मदयिता दयिताश्रवणार्पितः किसलयप्रसवः अपि (स्मरदीपनः) (अभूत्)॥२८

अन्वयः। मधुना विरचिताः उपवनश्रियाम् अभिनवाः पत्त्रविशेषकाः इव (स्थिताः) मधुदानविशारदाः कुरवकाः मधुलिहाम् रवकारणताम् ययुः॥ २९

अन्वयः। सुवदनावदनासवसम्भृतः तदनुवादिगुणः कुसुमोद्गमः मधुलोलुपैः आयतपङ्क्तिभिः मधुकरैः बकुलम् आकुलम् अकरोत्॥३०

नयो नीतिरेव गुणः। तेन। अथवा नयेन गुणैः शौर्यादिभिश्चोपचिताम्। सतामुपकारः फलं यस्यास्तां सदुपकारफलाम् भूपतेर्दशरथस्य श्रियमर्थिन इव। मधुना वसन्तेन सम्भृतां सम्यक् पुष्टां सरसः सम्बन्धिनीं कमलिनीं पद्मिनीम् अलिनीरपतत्त्रिणः। अलयो भृङ्गाः। नीरपतत्त्रिणो जलपतत्त्रिणो हंसादयश्च। अभिययुः॥२७

ऋतुरस्य प्राप्त आर्त्तवम्। 'ऋतोरण्' इत्यण्। नवं प्रत्यग्रमशोकतरोः केवलं कुसुममेव स्मरदीपनमुद्दीपनं न। किन्तु विलासिनां मदयिता मदजनको दयिताश्रवणार्पितः किसलयप्रसवोऽपि पल्लवसन्तानोऽपि स्मरदीपनोऽभवत्॥ २८

मधुना वसन्तेन विरचिता उपवनश्रियामभिनवाः। पत्त्रविशेषकाः पत्त्ररचना इव स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः कुरवकास्तरवो मधुलिहां मधुपानां रवकारणतां ययुः। भृङ्गाः कुरवकाणां मधूनि पीत्वा जगुरित्यर्थः। दानशौण्डानर्थिनः स्तुवन्तीति भावः॥ २९

सुवदनावदनासवेन कान्तामुखमद्येन सम्भृतो जनितः। तत्तस्य दोहदमिति प्रसिद्धिः। तस्यासवस्यानुवादी सदृशो गुणो यस्य तदनुवादिगुणः कुसुमोद्गमः कर्त्ता। मधुलोलुपैरायतपङ्क्तिभिर्दीर्घपङ्क्तिभिर्मधुकरैर्मधुपैः करणैः। बकुलं बकुलवृक्षमाकुलमकरोत्॥३०

उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके।
प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया॥ ३
व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम्।
न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान् हिम
अभिनयान् परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः सकलिका कलिकामजिताम
प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः।
सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु

अन्वयः। शिशिरापगमश्रिया किंशुके उपहितम् मुकुलजालम् मदयापितल-
ज्जया प्रमदया प्रणयिनि (उपहितम्) नखक्षतमण्डनम् इव अशोभत ॥ ३१

अन्वयः। रविः व्रणगुरुप्रमदाधरदुःसहम् जघननिर्विषयीकृतमेखलम् हि
अशेषम् अपोहितुम् न अलम् (किन्तु) विरलम् कृतवान् ॥ ३२

अन्वयः। अभिनयान् परिचेतुम् उद्यता इव (स्थिता) मलयमारुतक
सकलिका सहकारलता कलिकामजिताम् अपि मनः अमदयत ॥ ३३

अन्वयः। सुरभिगन्धिषु कुसुमितासु वनराजिषु अन्यभृताभिः प्रथमम् उदीरि
गिरः प्रविरला मुग्धवधूकथा इव शुश्रुविरे ॥३४

शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे। 'पलाशः किंशुकः
मरः। उपहितं दत्तं मुकुलजालं कुड्मलसंहतिः। मदेन यापितलज्जया अप
प्रमदया प्रणयिनि प्रियतमे उपहितं नखक्षतमेव मण्डनं तदिव। अशोभत।
व्रणैर्दन्तक्षतैर्दुर्धरैः प्रमदानामधरैरधोष्ठैर्दुःसहं हिमस्य व्यथाकरत्वादसह्यम्।
निर्विषयीकृता निरवकाशीकृता मेखला येन तत्। शैत्यात्त्याजितमेखलमित्य
हिमं रविस्तावत् आ वसन्तादशेषं निःशेषं यथा तथा अपोहितुं निरसितुं ना
शक्तो हि। किन्तु विरलं कृतवांस्तनूचकार ॥ ३२

अत्र चूतलतायां नर्तकीसमाधिरभिधीयते। अभिनयानर्थव्यञ्जकान्
'व्यञ्जकाभिनयौ समौ' इत्यमरः। परिचेतुमभ्यसितुमुद्यतेव स्थिता। कुत
रुतेन कम्पितपल्लवा। पल्लवशब्देन हस्तौ गम्यते। सकलिका सकोरका।
कोरकः पुमान्' इत्यमरः। सहकारलता। कलिः कलहो द्वेष उच्यते।
स्यात्कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्वः। कामो रागः, तज्जितामपि जि
ष्णामपीत्यर्थः। मनः अमदयत् ॥३३

सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु। "गन्धस्य—"इत्यादिनेकारः।
सञ्जातानि कुसुमिताः। तासु वनराजिषु वनपङ्क्तिषु। अन्यभृताभिः
प्रथमं प्रारम्भेषु उदीरिता उक्ता अतएव मिताः परिमिता गिर आलापाः। प
लोकोक्ता मुग्धवधूनां कथा वाच इव। शुश्रुविरे श्रुता इति भावः॥ ३४

श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ३५

ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ३६

शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।
विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहङ्गमाः ॥ ३७

उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥ ३८

अन्वय. । श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचः उपवनान्तलताः पवनाहतैः सलयैः सलयैः पाणिभिः इव बभुः ॥ ३५

अन्वयः । अङ्गनाः ललितविभ्रमबन्धविचक्षणम् सुरभिगन्धपराजितकेसरम् स्मरसखं म् पतिषु रसखण्डनवर्जितम् निर्विविशुः ॥ ३६

अन्वयः । विकचतामरसाः मदकलोदकलोलविहङ्गमाः गृहदीर्घिकाः स्मितचारु-ननाः श्लथशिञ्जितमेखलाः स्त्रियः इव शुशुभिरे ॥ ३७

अन्वयः । मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः रजनीवधूः इति समागमनिर्वृ-[तिम्] अनितया वनितया सदृशं तनुताम् उपययौ ॥ ३८

श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयो यासां ताः । कुसुमान्येव कोमला रुचो दन्तकान्तयो यासां ताः । अनेन सस्मितत्वं विवक्षितम् उपवनान्तलता पवने-[रि]तैः कम्पितैः किसलयैः सलयैः साभिनयैः । लयशब्देन लयानुगतोभिनयो लक्ष्य ते [ल]तान्ते पवनाहतैरिति सक्रियत्वाभिधानात् । पाणिभिरिव बभुः । अनेन लतानां नर्तकी-[त्व]ं गम्यते ॥ ३५

अङ्गना ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनापटुतरम्, सुरभिणा मनोहरेण [गन्धे]न पराजितकेसरं निर्जितबकुलपुष्पम् । "अथ केसरे बकुलः" इत्यमरः । स्मरस्य सखायं [स्मरस]खम् । स्मरोद्दीपकमित्यर्थः । मधु मद्यम् । "अर्धर्चाः पुंसि च" इति पुंलिङ्गता । च—"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसक-[योः]षु ॥" इति पतिषु विषये रसखण्डनवर्जितमनुरागभङ्गरहितं यथा निर्विविशुः । [प]रानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥ ३६

विकचतामरसा विकसितकमलाः । मदेन कला अव्यक्तमधुरं ध्वनन्त उदकलोलविहंगमा [जल]प्रचारिणो हंसादयो यासु ता मदकलोदकलोलविहङ्गमा गृहेषु दीर्घिका वाप्यः । [स्मि]तेन चारुतराण्याननानि यासां ताः । श्लथाः शिञ्जिता मेखला यासां ताः । [शिञ्जि]तेति कर्तरि क्तः । स्त्रिय इव । शुशुभिरे ॥ ३७

मधुना मधुसमयेन खण्डिता ह्रासं गमिता । चीयन्ते खलूत्तरायणे रात्रयः ।

अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९
हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितन्तदलके दलकेशरपेशलम् ॥ ४०
अलिभिरञ्जनविन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥ ४१

अन्वयः । हिमकरः अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः मकरोर्ज्जितकेतनम् कुसुमचापम् अतेजयत् ॥ ३९

अन्वयः । हुतहुताशनदीप्तिः यत् कुसुमम् वनश्रियः कनकाभरणस्य प्रति... दलेषु केशरेषु च पेशलं आहितम् यत् युवतयः अलके दधुः ॥ ४०

अन्वयः । अञ्जनविन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिः अलिभिः अङ्कि... वनस्थलीं तिलकः प्रमदाम् इव न शोभयति (इति) न ॥ ४१

खण्डिताख्या नायिका च ध्वन्यते । हिमकरोदयेन चन्द्रोदयेन पाण्डु... वक्त्रस्य च छविर्यस्याः सा रजन्येव वधूः, इष्टसमागमनिर्वृतिं प्रियसमा... अप्राप्तया । 'इण् गतौ' इति धातोः कर्त्तरि क्तः । वनितया सदृशं तुल्यं ... कार्श्यं चोपययौ ॥ ३८

हिमकरश्चन्द्रः । अपतुषारतया अपगतनीहारतया विशदप्रभैर्निर्मलकान्ति... सङ्गपरिश्रमनोदिभिः सुरतसङ्गखेदहारिभिरंशुभिः करणैः । मकरोर्जितकेतनं ... योर्जितं केतनं ध्वजो यस्य तम् । लब्धावकाशत्वादुच्छ्रितध्वजमित्यर्थः । कुसुम... अतेजयत् अशातयत् । "तिज निशाने" इति धातोर्ण्यन्ताल्लङ् । सहकारि... तीक्ष्णोऽभूदित्यर्थः ॥ ३९

हुतहुताशनदीप्ति आज्यादिप्रज्वलिताग्निप्रभं यत्कुसुमम् कर्णिकारमित्यर्थः... उपवनलक्ष्म्याः कनकाभरणस्य प्रतिनिधिः अभूदिति शेषः । दलेषु केशरेषु ... कुसुमारपत्रकिञ्जल्कमित्यर्थः । आहितम्, प्रियैरिति शेषः । तत्कुसुमम् ... कुन्तले दधुः ॥ ४०

अञ्जनविन्दुमनोहरैः कज्जलकणसुन्दरैः । कुसुमपङ्क्तिषु निपतन्ति ये ... ङ्कितश्चिह्नितस्तिलकः श्रीमान्नामद्रुमः । "तिलकः क्षुरकः श्रीमान्" इत्यमरः ... तिलको विशेषकः । "तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं ... स्त्रियाम्" इत्यमरः । प्रमदामिव न शोभयति स्मेति न खलु अपि तु शोभयत्... के इति अशब्दयोगाद्भूतार्थे लट् ॥ ४१

अमदयन्मधुगन्धसनाथया किसलयाधरसङ्गतया मनः ।
कुसुमसम्भृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ४२
अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।
परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३
उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ४४
ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेशररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५

अन्वयः। तरुचारुविलासिनी नवमल्लिका मधुगन्धसनाथया किसलयाधरसङ्गतया कुसुमसम्भृतया स्मितरुचा मनः अमदयत् ॥ ४२

अन्वयः। विलासिनः अरुणरागनिषेधिभिः अंशुकैः श्रवणलब्धपदैः यवाङ्कुरैश्च परभृताविरुतैः च स्मरबलैः अबलैकरसाः कृताः ॥ ४३

अन्वयः। शुचिभिः कणैः उपचितावयवा अलिकदम्बयोगम् उपेयुषी तिलकजा मञ्जरी अलकजालकसदृशमौक्तिकैः सदृशकान्तिः अलक्ष्यत ॥ ४४

अन्वयः। अलिव्रजाः धनुर्भृतः मदनस्य ध्वजपटम् ऋतुश्रियः छविकरम् मुखचूर्णम् सपवनं पवनोत्थितम् रेणुम् अन्वयुः ॥ ४५

तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्यालता। "सप्तला नवमल्लिका" इत्यमरः। मधुनो मकरन्दस्य मद्यस्य च गन्धेन सनाथया गन्धप्रधानयेत्यर्थः। किसलयमेवाधरस्तेन संगतया प्रवृत्तरागयेत्यर्थः। कुसुमैः सम्भृतया सम्पादितया कुसुमरूपयेत्यर्थः। स्मितरुचा हासकान्त्या मनः, पश्यतामिति शेषः। अमदयत् ॥ ४२

विलासिनः विलसनशीलाः पुरुषाः। "वौ कषलस—" इत्यादिना घिनुण् प्रत्ययः। अरुणसान्द्रीः रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुणरागनिषेधिनः तैः कुसुमादिजनैः तत्सदृशैरित्यर्थः। "तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्यैवानुकरोतीति शब्दाः सादृश्यवाचकाः ॥" इति दण्डी। अंशुकैरम्बरैः, श्रवणेषु कर्णेषु लब्धपदैः, निवेशितैरित्यर्थः। यवाङ्कुरैश्च परभृताविरुतैः कोकिलाकूजितैश्च इत्येतैः स्मरबलैः कामसैन्यैः। अबलास्वेक एव रसो रागो येषां अबलैकरसाः स्त्रीपरतन्त्राः कृताः ॥ ४३

शुचिभिः शुभ्रैः कणैः रजोभिः उपचितावयवा पुष्टावयवा। अलिकदम्बकयोगमुपेयुषी गता तिलकजा तिलकवृक्षोत्था मञ्जरी अलकेषु यज्जालकमाभरणविशेषस्तद्भिन्नमौक्तिकैः सदृशकान्तिः अलक्ष्यत। भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालमिवालक्ष्यतेति वाक्यार्थः ॥ ४४

अलिव्रजाः षटपदनिवहाः, धनुर्भृतो धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताका-

अनुभवन् नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जडतामबलाजनः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥

अथ यथासुखमार्त्तवमुत्सवं समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसन्निभः ॥ ४८ ॥

अन्वयः । नवदोलम् ऋतूत्सवम् अनुभवन् अबलाजनः पटुः अपि प्रियकण्ठजिघृक्षया आसनरज्जुपरिग्रहे भुजलतां अनयत् ॥ ४६

अन्वयः । बत ! मानम् त्यजत विग्रहैः अलम्, गतम् चतुरम् वयः पुनः न एति स्मरमते परभृताभिः निवेदिते ( सति ) इव वधूजनः रमते स्म ॥ ४७

अन्वयः । अथ मधुमन्मथसन्निभः नरपतिः विलासवतीसखः ( सन् ) आर्त्तवम् उत्सवम् यथासुखम् समनुभूय मृगयारतिम् चकमे ॥ ४८

भूतम् ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालङ्कारचूर्णं ... पवनोत्थितं सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितम् । कुसुमानां केसरे यो रेणुस्तम् । अन्वयुरन्वगच्छन् । यातेर्लङ् ॥ ४५

नवा दोला प्रेङ्खा यस्मिन् तम् नवदोलमृतूत्सवं वसन्तोत्सवम् अनुभवन् पटुरपि निपुणोऽपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छया आसनरज्जु ... पीठरज्जुग्रहणे भुजलतां बाहुलतां जडतां शैथिल्यम् । उभयोरपि ... दोलाक्रीडासु पतनभयनाटितकेन प्रियकण्ठसान्निध्यादित्यर्थः ॥ ४६

बतेत्यामन्त्रणे । "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत" इत्यमरः । मानं कोपं त्यजत । तदुक्तम्—"स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि ... विग्रहैर्विरोधैरलम् । विग्रहो न कार्य्य इत्यर्थः । गतमतीतं चतुरमुपभोगक्षम ... पुनर्नैति नागच्छति इत्येवंरूपे स्मरमते स्मराभिप्राये । नपुंसके भावे क्तः ... कोकिलाभिर्निवेदिते सतीव वधूजनो रमते स्म रेमे । कोकिलाकूजितैः ... स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलदित्यर्थः ॥ ४७

अथानन्तरम् । मधुं मथ्नातीति मधुमद्विष्णुः । सम्पदादित्वात् क्विप् । ... मथ्नातीति मथः । पचाद्यच् । मनसो मथो मन्मथः कामः । तेषां ... मधुमन्मधुमन्मथसन्निभः स नरपतिर्दशरथो विलासवतीसखस्त्रीसहचरः ... प्राप्तोऽस्यार्त्तवः । तमुत्सवं वसन्तोत्सवं यथासुखं समनुभूय मृगयारतिं मृगयारतिम् ... चाकाङ्क्ष ॥ ४८

यं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।
जयात् प्रगुणाञ्च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥४९

नोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।
मश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥ ५०

तमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।
वल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१

प्र। असौ चललक्ष्यनिपातने परिचयम् भयरुषोः तदिङ्गितबोधनम् च श्रमजयात्
गुणाम् च करोति अतः सचिवैः अनुमतः ( सन् ) ययौ ॥ ४९

यः । मृगवनोपगमक्षमवेषभृत् विपुलकण्ठनिषक्तशरासनः नृसविता सः अश्वखुरो-
गगनम् वितानम् इव अकरोत् ॥ ५०

यः। वनमालया ग्रथितमौलिः तरुपलाशसवर्णतनुच्छदः तुरगवल्गनचञ्चल-
असौ रुरुचेष्टितभूमिषु विरुरुचे ॥ ५१

ासङ्गदोषं परिहरन्नाह—असौ मृगया, चललक्ष्याणि मृगगवयादीनि तेषां
परिचयमभ्यासं करोति। भयरुषोर्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्या-
चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति। तनुं शरीरं श्रमस्य
सात्प्रगुणां प्रकृष्टलाघवादिगुणवतीं च करोति। अतो हेतोः सचिवैरनुमतोऽनु-
सन् ययौ। सर्व्वत्र तद्गुणोपयोगोत्पत्तस्तदपेक्षया मृगयाप्रवृत्तिः। न तु व्यसनि-
त्वः ॥ ४९

ं वनं तस्योपगमः प्राप्तिः। तस्य क्षममर्हं वेषं बिभर्त्तीति स तथोक्तः। मृगया-
गुणवेषधारीत्यर्थः। विपुलकण्ठे निषक्तशरासनो लग्नधन्वा। ना सवितेव
पुरुषश्रेष्ठः। उपमितसमासः। स राजा, अश्वखुरोद्धतरेणुभिर्गगनं वितानं
अकरोत्। गगनं नालक्ष्यतेत्यर्थः। 'वितानं तुच्छमन्दयोः' इति विश्वः। अथवा
त्येकं पदम्। दवितानमुल्लोचसहितमिवाकरोत्। "अस्त्री वितानमुल्लोचः"
॥ ५०

ालया वनपुष्पस्रजा ग्रथितमौलिर्बद्धधम्मिल्लः। तरूणां पलाशैः पर्वैः सवर्णः
च्छदो वर्म यस्य स तथोक्तः। इदं च वर्मणः पलाशसावर्ण्याभिधानं मृगादीनां
म्। तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथो रुरुभिः ग-
ताचरितः या भूमयस्तासु विरुरुचे दिदियुते ॥ ५१

तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोशलम् ॥
श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः ।
स्थिरतुरङ्गमभूमि निपानवन् मृगवयोगवयोपचितं वनम् ॥
अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतडिद्गुणसंयुतम् ।
धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेशरी ॥

अन्वयः । तनुलताविनिवेशितविग्रहाः भ्रमरसंक्रमितेक्षणवृत्तयः वनदेवताः सुनयनं नयनन्दितकोशलम् तम् अध्वनि ददृशुः ॥ ५२

अन्वयः । सः श्वगणिवागुरिकैः प्रथमास्थितम् व्यपगतानलदस्यु स्थिरतुरङ्गमभूमि निपानवत् मृगवयोगवयोपचितम् वनम् विवेश ॥ ५३

अन्वयः । अथ अनाधिः रवरोषितकेशरी नरवरः कनकपिङ्गतडिद्गुणसंयुतम् त्रिदशायुधम् नभस्यः इव अधिज्यम् धनुः उपाददे ॥ ५४

तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदृष्टयः भ्रमरेषु संक्रमिता ईक्षणवृत्तयो व्यापारा यासां ता वनदेवताः, सुनयनं सुलोचनं, नयेन नीत्या नन्दिताः कोशला येन तं दशरथम् अध्वनि ददृशुः । प्रसन्नपावनतया तं देवता ददृशुरित्यर्थः ॥ ५२

स दशरथः, शुनां गणा स एषामस्तीति श्वगणिनः श्वयाहिनः ते, वागुरा मृगबन्धनी" इत्यमरः । तया चरन्तीति वागुरिका जालिकाः । "वागुरा मृगबन्धनी" इत्यमरः । तया चरन्तीति वागुरिका जालिकाः । ठक्प्रत्ययः । 'द्वौ वागुरिकजालिकौ' इत्यमरः । तैश्च प्रथममास्थितमधिष्ठितम् । अनला दावाग्नयो दस्यवस्तस्कराश्च यस्मात्तथोक्तम् । 'दस्युतस्करमोषकाः' । इनविशोधनमादौ' । मातुरन्तिकमपि प्रविविक्षुः आप्तशस्त्रानुगतः प्रविशेत् च न तिष्ठेत्' इति कामन्दकः । स्थिरा दृढा पङ्कादिरहिता तुरङ्गमभूमिः निपानवदाहावयुक्तम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । भिन्नैर्योभिः पचिभिर्गवयैर्गोसदृशैररण्यपशुविशेषैश्चोपचितं समृद्धं प्रविष्टवान् ॥ ५३

अथानाधिर्मनोव्यथारहितो नरवरो नरश्रेष्ठः । रवेण धनुष्टङ्कारेण रोषिताः सिंहा येन स राजा । कनकमिव पिङ्गः पिशङ्गो यस्तडिदेव गुणो मौर्वी तेन संयुतं धमिन्द्रचापं नभस्यो भाद्रपदमास इव । "स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः" अधिज्यमधिगतमौर्वीकं धनुः उपाददे जग्राह ॥ ५४

तस्य स्तनप्रणयिभिर्मुहुरेणशावै-
र्व्याहन्यमानहरिणीगमनं पुरस्तात् ।
आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५

तत् प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥ ५७

न्वयः । स्तनप्रणयिभिः एणशावैः मुहुः व्याहन्यमानहरिणीगमनम् कुशगर्भमुखम् रगर्वितकृष्णसारम् मृगाणाम् यूथम् तस्य पुरस्तात् आविर्बभूव ॥ ५५

न्वयः । जवनवाजिगतेन तूणीमुखोद्धृतशरेण राज्ञा प्रार्थितम् विशीर्णपङ्क्ति तत् म आर्द्रैः आकुलदृष्टिपातैः वातेरितोत्पलदलप्रकरैः इव वनम् श्यामीचकार ॥ ५६

न्वयः । हरिप्रभावः धन्वी सः लक्ष्यीकृतस्य हरिणस्य देहम् व्यवधाय स्थिताम् रीम् प्रेक्ष्य कामितया कृपामृदुमनाः (सन्) आकर्णकृष्टम् अपि बाणम् जहार ॥ ५७

तनप्रणयिभिः स्तनपायिभिः एणशावैर्हरिणशिशुभिः । "पृथुकः शावकः शिशुः" र । व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानं हरिणीनां गतिर्यस्य तत् । कुशा गर्भे येषां तानि मुखानि यस्य तत्कुशगर्भमुखम् । तस्य ग्रसरः पुरःसरो गर्वितो दृप्तश्च कृष्णसारो यस्य तत् मृगाणां यूथं कुलम् । 'सजातीयैः यूथं तिरश्चां पुन्नपुंसकम्' इत्यमरः । तस्य दशरथस्य पुरस्तादग्रे आविर्बभूव । वसन्त- कं वृत्तम् ॥ ५५

नवनो जवशीलः । 'जुचंक्रम्य—' इत्यादिना युच्प्रत्ययः । 'तरस्वी त्वरितो वेगी प्रजवी रजः' इत्यमरः । तं वाजिनमश्वं गतेनारूढेन । तूणीषुधिः । "बह्वादिभ्यश्च" इति ङीप् । तस्या मुखाद्विवरादुद्धृतशरेण राज्ञा प्रार्थितमभियातम् । "याञ्चायामभियाने र्थना कथ्यते बुधैः" इति केशवः । अतएव विशीर्णा पङ्क्तिः सन्धीभावो यस्य तत् । कटं । आर्द्रैर्भयादश्रुभिराकुला भयचकिता ये दृष्टिपातास्तैः । वातेरितोत्पल- करैः पवनकम्पितेन्दीवरदलवृन्दैरिव । वनं श्यामीचकार ॥ ५६

हरिरिन्द्रो विष्णुर्वा, तस्येव प्रभावः सामर्थ्यं यस्य स तथोक्तः । धन्वी धनुष्मान् स

तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निविडोऽपि मुष्टिः।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि॥ ५८

उत्तस्थुषः सपदि पल्वलपङ्कमध्या
न्मुस्ताप्ररोहकवलावयवानुकीर्णम्।
जग्राह स द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः॥ ५९

तं वाहनादवनतोत्तरकायमीष-
द्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः।

अन्वयः। त्रासातिमात्रचटुलैः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि। अपि मृगेषु शरान् मुमुक्षोः तस्य निविडः अपि मुष्टिः कर्णान्तम् एत्य बिभिदे

अन्वयः। सः मुस्ताप्ररोहकवलावयवानुकीर्णम् आयताभिः आ सुव्यक्तम् सपदि पल्वलपङ्कमध्यात् उत्तस्थुषः द्रुतवराहकुलस्य मार्गम् जग्रा

अन्वयः। वराहाः वाहनात् ईषत् अवनतोत्तरकायम् विध्यन्तम् (सन्तः) प्रतिहन्तुम् ईषुः। अस्य इषुभिः सहसा जघनाश्रयेषु हृदेषु वि न विविदुः॥ ६०

नृपः। लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेयसो देहं व्यवधाय स्थिताम्। सह चरतीति सहचरी; पचादिषु चरतेष्टित्करणात् ङीप्। "अनुचरोति चरेष्टित्वात्" इति। तां सहचरीं हरिणीं प्रेक्ष्य कामितया त्वात्। कृपामृदुमनाः करुणार्द्रचित्तः सन्, आकर्णकृष्टमपि दुष्पतिसंहरमि प्रतिसंजहार, नैपुण्यादित्यर्थः। नैपुण्यन्तु धन्वीत्यनेन गम्यते॥ ५७

त्रासाद्भयादतिमात्रचटुलैरत्यन्तचञ्चलैः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टिता कान्ताविलोचनविलासव्यापारान् सादृश्यात् स्मरतः। अपरेष्वपि मृगे मोक्तुमिच्छोः तस्य नृपस्य निविडो दृढोऽपि मुष्टिः कर्णान्तमेत्य प्राप्य वि भिद्यते स्म। भिदेः कर्मकर्त्तरि लिट्। कामिनस्तस्य प्रियाविभ्रमस्मृते रेकान्मुष्टिभेदः, न त्वनैपुण्यादिति तात्पर्य्यार्थः॥ ५८

स नृपः। मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवला ग्रासाः, तेषामवयवै रंशैभिः शकलैरनुकीर्णं व्याप्तम्। आयताभिर्दीर्घाभिरार्द्रपदपङ्क्तिभिः सु पल्वलपङ्कमध्यादुत्तस्थुष उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस अनुससार॥ ५९

वराहाः, वाहनादश्वादीषदवनतोत्तरकायं किञ्चिदानतपूर्व्वकायं वि

नात्मानमस्य विविदुः सहसा वराहा
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६०

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयांप्रथममास पपात पश्चात् ॥ ६१

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्
खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषा-
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२

अन्वयः। तेन अभिघातरभसस्य वन्यस्य महिषस्य नेत्रविवरे विकृष्य मुक्तः पत्री
विग्रहम् निर्भिद्य अशोणितलिप्तपुङ्खः ( सन् ) तम् प्रथमम् पातयामास स्वयम् पश्चात्
पपात ॥ ६१

अन्वयः। नृपतिः निशितैः क्षुरप्रैः खड्गान् प्रायः विषाणपरिमोक्षलघूत्तमाङ्गान्
चकार। दृप्तविनयाधिकृतः स परेषाम् अत्युच्छ्रितम् शृङ्गम् न ममृषे, तु ( किन्तु )
दीर्घम् आयुः न ममृषे इति न ॥ ६२

...पम्। उद्धृतसटा ऊर्ध्वकेसराः सन्तः। "सटा जटाकेसरयोः" इति केशवः। प्रतिहन्तु-
...षुः प्रतिहन्तुमिच्छन्। अस्य नृपस्येषुभिः सहसा जघनानामाश्रयेषु अवष्टम्भेषु वृक्षेषु विद्ध-
...त्मानं न विविदुः। एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६०
...अभिघाते रभस औत्सुक्यं यस्य तस्य अभिहन्तुमुद्यतस्येत्यर्थः। वन्यस्य वने भवस्य महिषस्य
...त्रविवरे नेत्रमध्ये तेन नृपेण विकृष्य आकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य
...दार्य। शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन्, तं महिषं प्रथमं
...पातयामास। स्वयं पश्चात्पपात। "कृञ्चानुप्रयुज्यते लिटि" इत्यत्रानुशब्दस्य व्यवहित-
...विपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् "पातयां प्रथममास" इत्युपप्रयोग इति पाणिनीयाः। यथाह
...वार्तिककारः—"विपर्यासनिवृत्त्यर्थं च" इति ॥ ६१

... नृपतिः, निशितैः क्षुरप्रैः शरविशेषैः खड्गान् खड्गाख्यान् मृगान्। "गण्डके खड्ग-
...खड्गिनौ" इत्यमरः। प्रायो बाहुल्येन विषाणपरिमोक्षेण शृङ्गभङ्गेन लघूनि अगुरूणि उत्त
...माङ्गानि शिरांसि येषां तांश्चकार न त्ववधीदित्यर्थः। कुतः दृप्तविनयाधिकृतो दुष्टनिग्रह-
...नियुक्तः स राजा, परेषां प्रतिकूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यं च। "शृङ्गं
...प्राधान्यसान्वोश्च" इत्यमरः। न ममृषे न सेहे। दीर्घत्वायुर्जीवितकालम्। "आयुर्जीवितकालो
...ना" इत्यमरः। न ममृषे इति न किन्तु ममृष एवेत्यर्थः ॥ ६२

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वायुरुग्णान्।
शिक्षाविशेषलघुहस्ततया निमेषा-
त्तूणीचकार शरपूरितवक्त्ररन्ध्रान्॥ ६३

निर्घातोग्रैः कुञ्जलीनाञ्जिघांसु-
र्ज्यानिर्घोषैः क्षोभयामास सिंहान्।
नूनं तेषामभ्यसूयापरोऽभूद्-
वीर्य्योदग्रे राजशब्दे मृगेषु॥ ६४

तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान्।
आत्मानं रणकृतकर्मणां गजाना-
मानृण्यं गतमिव मार्गणैरमंस्त॥ ६५

अन्वयः। अभीः धन्वी सः गुहाभ्यः अभिमुखोत्पतितान् वायुरुग्णान् फु- टपान् इव (स्थितान्) शरपूरितरन्ध्रवक्त्रान् व्याघ्रान् शिक्षाविशेषलघुहस्त- तूणीचकार॥ ६३

अन्वयः। कुञ्जलीनान् सिंहान् जिघांसुः निर्घातोग्रैः ज्यानिर्घोषैः तेषाम् वीर्य्योदग्रे मृगेषु राजशब्दे अभ्यसूयापरः अभूत् नूनम्॥ ६४

अन्वयः। काकुत्स्थः गजकुलबद्धतीव्रवैरान् कुटिलनखाग्रलग्नमुक्तान् आत्मानम् रणकृतकर्म्मणाम् गजानाम् आनृण्यम् मार्गणैः गतम् इव अमंस्त॥

अभीर्निर्भीकः स धन्वी गुहाभ्योऽभिमुखमुत्पतितान्। वायुना रुग्- फुल्ला विकसिताः। "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" इति निष्ठावकारस्य ये असनस्य सर्जद्रुमस्य 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः। पातानिव स्थितान् इषुधिभूतानित्यर्थः। व्याघ्राणां चित्रकपलादुपमाने पु- शरैः पूरितानि वक्त्ररन्ध्राणि येषां तान् व्याघ्रान्। शिक्षाविशेषेणाभ्यासातिशये- क्षिप्रहस्ततया निमेषात्तूणीचकार तूणं शरैः पूरितवानित्यर्थः॥ ६३

कुञ्जेषु लीनान्। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। जिघां- हन्तुमिच्छुः। निर्घातो व्योमोत्थित औत्पातिकः शब्दविशेषः तद्वदुग्रैः मौर्वीशब्दैः क्षोभयामास। अत्रोत्प्रेक्षते—तेषां सिंहानां संबन्धिनि वीर्येण मृगेषु विषये यो राजशब्दः तस्मिन् अभ्यसूयापरः अभूत् नूनम्। अन्यथा इन्यादित्यर्थः। "मृगाणाम्" इति पाठे समासे गुणभूतत्वाद्राजशब्देन शालिनी वृत्तम्—"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणम्॥ ६४

काकुत्स्थो दशरथः। गजकुलेषु बद्धं तीव्रं वैरं येषां तान्, कुटिलेषु नखाग्रे-

चमरान् परितः प्रवर्तिताश्वः
क्वचिदाकर्णविकृष्टभल्लवर्षी ।
नृपतीनिव तान् वियोज्य सद्यः
सितवालव्यजनैर्जगाम शान्तिम् ॥ ६६

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७

तस्य कर्कशविहारसम्भवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८

अन्वयः । क्वचित् चमरान् परितः प्रवर्तिताश्वः आकर्णविकृष्टभल्लवर्षी सः नृपतीन् इव तान् सितवालव्यजनैः वियोज्य सद्यः शान्तिम् जगाम ॥ ६६

अन्वयः । सः तुरगसमीपात् उत्पतन्तम् अपि रुचिरकलापम् मयूरम् चित्रमाल्यानुकीर्णे रतिविगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः न बाणलक्ष्यीचकार ॥६७

अन्वयः । सतुषारशीकरः भिन्नपल्लवपुटः वनानिलः कर्कशविहारसम्भवम् आननविलग्नजालकम् तस्य स्वेदम् आचचाम ॥६८

कुम्भमौक्तिकानि येषां तान् सिंहान् हत्वा । आत्मानं रणेषु कृतकर्मणां कृतोपकाराणां गजानामानृण्यमनृणत्वं मार्गणैः शरैः । "मार्गणो याचके शरे" इति विश्वः । गतं प्राप्तवन्तमिव अमंस्त मेने ॥ ६५

क्वचिच्चमरान् परितः । 'अभितः परितः समया—' इत्यादिना द्वितीया । प्रवर्तिताश्वः प्रधाविताश्वः, आकर्णविकृष्टभल्लान् इषुविशेषान् वर्षतीति तथोक्तः स नृपः, नृपतीनिव चमरान् सितवालव्यजनैः शुभ्रचामरैर्वियोज्य विरहय्य सद्यः शान्तिं जगाम । शूराणां कोपमैश्वर्यसेवासह्यम् न तु जीवितमीति भावः । औपच्छन्दसिकं वृत्तम् ॥ ६६

स नृपस्तुरगसमीपादुत्पतन्तमपि । सुप्रहारमपीत्यर्थः । रुचिरकलापं भासुरबर्हम् । मामतिशयेन रौतीति मयूरो बर्हीं । पृषोदरादित्वात् साधुः । तं चित्रेण माल्येन कीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः । "उरःप्रभृतिभ्यः कप्" इति कप्प्रत्ययः । न बाणलक्ष्यीचकार न प्रजहारेत्यर्थः ॥६७

कर्कशविहारादतिव्यायामात् सम्भवो यस्य तम् । आनने विलग्नजालकं बद्धकदम्बकं नृपस्य स्वेदम् । सतुषारशीकरः शिशिराम्बुकणसहितः । भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः वनानिलः आचचाम जहारेत्यर्थः । रथोद्धता वृत्तमेतत् ॥६८

इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी ॥ ६९

स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयाम्बभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन् विहगविकूजितवन्दिमङ्गलानि ॥

अन्वयः। इति आत्मनः विस्मृतान्यकरणीयम् सचिवावलम्बितधुरम् परिवृद्धरागम् धराधिपम् मृगया चतुरा कामिनी इव जहार ॥ ६९

अन्वयः। सः ललितकुसुमप्रवालशय्याम् ज्वलितमहौषधीदीपिकासनाथाम् क्वचित् असमेतपरिच्छदः (सन्) अतिवाहयाम्बभूव ॥ ७०

अन्वयः। उषसि पटुपटहध्वनिभिः गजयूथकर्णतालैः विनीतनिद्रः स विहगकूजितवन्दिमङ्गलानि शृण्वन् अरमत ॥ ७१

इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत् करणीयं कार्य्यं येन तम् कार्य्यान्तरमित्यर्थः "ऋक्पूरब्धूःपथामानक्षे" इति समासान्तोऽच् प्रत्ययः। सन्ततसेवया परिवृद्धो रागी यस्य तं धराधिपम्। मृग्यन्ते यस्यां सा "परिचर्य्यापरिसर्य्यामृगयाटाट्यादीनामुपसंख्यानम्" इति शप्रत्ययान्तो निपातः विदग्धा कामिनीव, जहार आचकर्ष। 'न जातु कामः कामानामुपभोगेन हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।" इति भावः॥ ६९

स नरपतिः। ललितानि कुसुमानि पल्लवानि शय्यां यस्यां ताम्। महौषधिभिरेव दीपिकाभिः सनाथाम् तत्प्रधानामित्यर्थः। त्रियामां रात्रिं परिच्छदः परिहृतपरिजनः सन्नित्यर्थः। अतिवाहयाम्बभूव गमयामास हृतम् ॥ ७०

उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैः गजयूथानां कर्णैरेव तालैः विनीतनिद्रः सः नृपस्तत्र वने मधुराणि विहगानां विहङ्गानां विकूजितानि मङ्गलानि मङ्गलगीतानि शृण्वन् अरमत ॥ ७१

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरंगमेण ॥ ७२
कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३
नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमिलिताः ॥ ७४
हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥ ७५

अन्वयः। अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैः अलक्ष्यमाणः श्रमफेनमुचा तुरङ्गमेण तपस्विगाढाम् तमसाम् नदीम् प्राप ॥ ७२

अन्वयः। तस्याः अम्भसि कुम्भपूरणभवः पटुः उच्चैः निनदः उच्चचार। तत्र सः द्विरदबृंहितशङ्की (सन्) शब्दपातिनम् इषुम् विससर्ज ॥ ७३

अन्वयः। तत् नृपतेः प्रतिषिद्धम् एव यत् पङ्क्तिरथः विलङ्घ्य कृतवान्। श्रुतवन्तः रजोनिमीलिताः (सन्तः) अपथे पदम् अर्पयन्ति हि ॥ ७४

अन्वयः। हा तात! इति क्रन्दितम् आकर्ण्य विषण्णः (सन्) तस्य वेतसगूढं प्रभवम् अन्विष्यन् शल्यप्रोतम् सकुम्भं मुनिपुत्रं प्रेक्ष्य क्षितिपः अपि तापात् अन्तःशल्य इव आसीत् ॥ ७५

अथ जातु कदाचित् रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृततन्मार्गः, विपिने वने पार्श्वचरैरलक्ष्यमाणः, तुरगवेगादित्यर्थः। श्रमेण फेनमुचा सफेनं स्विद्यतेत्यर्थः। तुरङ्गमेण तपस्विभिर्गाढामवगाढां तमसां नाम नदीं सरितं प्राप ॥ ७२

तस्यास्तमसाया अम्भसि कुम्भपूरणेन भव उत्पन्नः। पचाद्यच्। पटुर्मधुरः उच्चैर्गम्भीरो निनदो ध्वनिरुच्चचार उदियाय। तत्र निनदे स नृपः। द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन्। शब्देन शब्दानुसारेण पततीति शब्दपातिनम् इषुं विससर्ज। स्वागतावृत्तम् ॥ ७३

तत् कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव, यदेतत्कर्म गजवधरूपम् पङ्क्तिरथो दशरथो विलङ्घ्य "अन्यत्रकामी युद्धादन्यत्र कपिवधं न कुर्यात्" इति शास्त्रमुल्लङ्घ्य कृतवान्। ननु विदुषस्तस्य कथमीदृग्विचेष्टितमत आह—अपथ इति। श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिता रजोगुणावृताः सन्तः। न पन्था इत्यपथम्। "पथो विभाषा" इति वा समासान्तः। "अपथं नपुंसकम्" इति नपुंसकत्वम् "अपन्थास्त्वपथं तुल्यम्" इत्यमरः। अविहितपथे अमार्गे पदमर्पयन्ति निक्षिपन्ति हि प्रवर्तन्त इत्यर्थः। वैतालीयं वृत्तम् ॥ ७४

हे तातेति! तातो जनकः। "हा विषादशुगार्तिषु" इति। "तातस्तु जनकः

तेनावतीर्य्य तुरगात्प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयाम्बभूव ॥ ७६

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥ ७७

अन्वयः । प्रथितान्वयेन तेन तुरगात् अवतीर्य्य पृष्टान्वयः जलकुम्भनिषण्णदेहः स्खलद्भिः अक्षरपदैः आत्मानम् द्विजेतरतपस्विसुतम् कथयाम्बभूव ॥ ७६

अन्वयः । सः नृपतिः तच्चोदितः ( सन् ) अनुद्धृतशल्यमेव तम् अवसन्नदृशोः सकाशम् निनाय, तथागतम् एकपुत्रम् तम् उपेत्य अज्ञानतः स्वचरितम् शशंस च ॥ ७७

पिता" इति चामरः । हा तातेति क्रन्दितं क्रोशनमाकर्ण्य, विषण्णो भयोत्पन्न तस्य क्रन्दितस्य वेतसैः गूढं छन्नम् । प्रभवत्यस्मादिति प्रभवः कारणम् । त शल्येन शरेण प्रोतं स्यूतम् । "शल्यं शङ्कौ शरे वंशे" इति विश्वः । सकुम्भं पु स क्षितिपोऽपि तापाद्दुःखादन्तःशल्य इवासीत् । मत्तमयूरं वृत्तम् ॥ ७५

प्रथितान्वयेन प्रख्यातवंशेन । एतेन पापभीरुत्वं सूचितम् । तेन राज्ञा तुर पृष्टान्वयो ब्रह्महत्याशङ्कया पृष्टकुलः, जलकुम्भनिषण्णदेहः स मुनिपुत्रः स्खलद्भिः अशक्तिवशादर्द्धोच्चारितैरित्यर्थः । अक्षरप्रायैः पदैरक्षरपदैः आत्मानं द्वि तपस्विसुतस्य तम् द्विजेतरतपस्विसुतं कथयाम्बभूव । न तावत्त्वं वणिक एवाह करणः । "वैश्यात्तु करणः शूद्रायाम्" इति याज्ञवल्क्यः । कुतो ब्रह्महत्येदं च रामायणे—"ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं रा मनसो व्यथा ॥ शूद्रायामस्मि वैश्येन जातो जनपदाधिप ।" इति ॥ ७६

तच्चोदितस्तेन पुत्रेण चोदितः "पितृसमीपं प्रापय" इत्युक्तः स नृपतिः, मनुत्पाटितशरमेव तं मुनिपुत्रम्, अवसन्नदृशोर्नष्टचक्षुषोः अन्धयोरित्यर्थः । पित्रो "पिता माता" इत्येकशेषः । सकाशं समीपं निनाय । इदञ्च रामाय तत्र—"अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं भार्य्यया ॥" इति नदीतीरएव मृतं पुत्रं प्रति पित्रोरानयनाभिधानाद् वेतसगूढम् । एकश्चासौ पुत्रश्चैकपुत्रस्तम् । एकग्रहणं पित्रोरनन्यगतिकत्व तं मुनिपुत्रमुपेत्य सन्निकृष्टं गत्वा अज्ञानतः करिभ्रान्त्या स्वचरितं मातापितृभ्याम् । क्रियाग्रहणाच्चतुर्थी । शशंस कथितवान् ॥ ७७

दम्पती बहु विलप्य शिशो: प्रहर्त्रा
शं निखातमुदहारयतामुरस्त: ।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्ध: ॥ ७८

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोसलपति: प्रथमापराद्ध: ॥ ७९

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलन: करोति ॥ ८०

अन्वय: । तौ दम्पती बहु विलप्य शिशो: उरस्त: निखातम् शल्यम् प्रहर्त्रा उदहारयताम्, स: परासु: अभूत् । अथ वृद्ध: हस्तार्पितै: नयनवारिभि: एव भूमिपतिं शशाप ॥ ७८

अन्वय: । (हे राजन्!) 'भवान् अपि अन्त्ये वयसि अहम् इव पुत्रशोकात् दिष्टान्तम् आप्स्यति" इति उक्तवन्तम् आक्रान्तपूर्व्वम् तम् मुक्तविषम् भुजङ्गम् इव (स्थितम्) प्रथमापराद्ध: कोसलपति: प्रोवाच ॥ ७९

अन्वय: । भगवता अदृष्टतनयाननपद्मशोभे मयि पातित: अयम् शाप: अपि सानुग्रह: । इन्धनेद्ध: ज्वलन: कृष्यां क्षितिम् दहन् अपि बीजप्ररोहजननीम् करोति ॥ ८०

तौ जाया च पतिश्च दम्पती । राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातित: । "दम्पती जम्पती जायापती भार्य्यापती च तौ" इत्यमर: । बहु विलप्य भूरि परिदेव्य । "विलाप: परिदेवनम्" इत्यमर: । शिशो: उरस्त: वक्षस: । 'पञ्चम्यास्तसिल्" । निखातं शल्यं प्रहर्त्रा राज्ञा उदहारयताम् उद्धारयामासतु: । स शिशु: परासुर्गत-प्राणोऽभूत् । अथ वृद्ध: हस्तार्पितैर्नयनवारिभिरेव शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं शशाप ॥ ७८

हे राजन्! भवानप्यन्त्ये वयसि अहमिव पुत्रशोकात् दिष्टान्तं कालावसानम् । मरणमित्यर्थ: । "दिष्ट: काले च दैवे स्याद्दिष्टम्" इति विश्व: । आप्स्यति । इत्युक्तवन्तम् । आक्रान्त: पदाहत: पूर्व्वम् आक्रान्तपूर्व: । सुप्सुपेति समास: । तम् प्रथमसपक्रतमित्यर्थ: । मुक्तविषम् अपकारात् पश्चादुत्सृष्टविषं भुजङ्गमिव स्थितं तं वृद्धं प्रति प्रथमापराद्ध: । प्रथमापराधी । कर्त्तरि क्त: । इदञ्च सहने कारणमुक्तम् । कोसलपतिर्दशरथ: शापदानात् पश्चादपि एनं मुनिं प्रोवाच ॥ ७९

अदृष्टा तनयाननपद्मशोभा येन तस्मिन्नपुत्रके मयि भगवता पातित: । वच्चप्रायत्वात्

इत्यङ्गते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्त्रं परासुमनुगन्तुमनाः सदारः ॥ ८१

प्राप्तानुगः सपदि शासनमस्य राजा
सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः ।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥ ८२

अन्वयः। इत्थंगते ( सति ) वसुधाधिपेन गतघृणः तव वध्यः अयम् किम् ? इति अभिहितः स मुनिः सदारः परासुं पुत्त्रमनुगन्तुमनाः ( सन् ) हुताशनवतः एधान् ययाचे ॥ ८१

अन्वयः। प्राप्तानुगः राजा सपदि अस्य शासनम् सम्पाद्य पातकविलुप्तधृतिः अन्तर्निविष्टपदम् आत्मविनाशहेतुम् शापम् अम्बुराशिः और्वम् ज्वलनम् इव दधत् निवृत्तः ॥ ८२

पातित इत्युक्तम् । "अयं पुत्त्रशोकान्म्रियताम्" इत्येवंरूपः शापोऽपि ... वृद्धकुमारीवरन्यायेनेष्टावाप्तेरन्तरायकत्वात्सोपकार एव । निग्राहकस्य ... मर्थान्तरन्यासेनाह—कृष्यामिति । इध्यनैः काष्ठैः इद्धः प्रज्वलितः ज्वलनोऽग्निः कर्षणार्हाम् । "ऋदुपधाच्च कृपि चृतेः" इति क्यप् । क्षितिं दहन्नपि बीजानां बीजाङ्कुराणाम् जननीमुत्पादनक्षमां करोति ॥ ८०

इत्यङ्गते प्रवृत्ते सति । वसुधाधिपेन राज्ञा, गतघृणः निष्करुणः ... इत्यर्थः । अत एव तव वध्यो वधार्होऽयं जनः । अयमिति राज्ञी ... स्वात्मनिर्देशः । किं विधत्तामित्यभिहित उक्तः, मया किं विधेयमिति विज्ञापितः ... मुनिः सदारः सभार्यः परासुं गतासुम् पुत्त्रमनुगन्तुं मनो यस्य सोऽनुगन्तुमनाः ... काममनसोरपि" इति मकारलोपः । हुताशनवतः साग्नीनेधान् काष्ठानि ... चात्रात्मघातदोषः । 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजल... प्रविधीयते ।" इत्युक्तेः ॥ ८१

प्राप्तानुगः प्राप्तानुचरो राजा सपदि अस्य मुनेः शासनं काष्ठसम्भारणरूपं ... सम्प्रति प्राप्तानुचरत्वात् सम्पाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिर्नष्टोत्साहः सन् ... निर्विष्टपदमन्तर्लब्धस्थानमात्मविनाशहेतुं शापम् । अम्बुराशिरौर्वं ज्वलनं वडवानलम् ... और्वस्तु वाडवो वडवानलः" इत्यमरः । दधद्धृतवान् सन्,निवृत्तः वनादिति ...

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ
रघुवंशे महाकाव्ये मृगयावर्णनो नाम नवमः सर्गः ।

# दशमः सर्गः ।

पृथिवीं शासतस्तस्य पाकशासनतेजसः ।
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १

न चोपलेभे पूर्व्वेषामृणनिर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोऽपहम् ॥ २

अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३

अन्वयः। पाकशासनतेजसः पृथिवीम् शासतः अनूनर्द्धेः तस्य किञ्चित् ऊनम् शरदाम् [अयु]तम् ययौ ॥ १

अन्वयः। सः पूर्व्वेषाम् ऋणनिर्मोक्षसाधनम् सद्यः शोकतमोऽपहम् सुताभिधानम् [ज्यो]तिः न उपलेभे च ॥ २

अन्वयः। प्रत्ययापेक्षसन्ततिः स नृपः मन्थात् प्राक् अनभिव्यक्तरत्नोत्पत्तिः अर्णवः इव [चि]रम् अतिष्ठत् ॥ ३

आशंसे नित्यमानन्दं रामनामकथामृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

पृथिवीं शासतः पालयतः पाकशासनतेजस इन्द्रवर्चसः। अनूनर्द्धेर्महासमृद्धेस्तस्य [दश]रथस्य किंचिदूनमीषत् न्यूनं शरदां वत्सराणाम्। 'स्याद्वतौ वत्सरे शरत्' इत्यमरः। [अ]युतं दशसहस्रं ययौ। 'एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम्। कोट्यर्बुदं च पद्मं [...]नात् स्थानं दशगुणं स्यात् ॥" इत्यार्यभट्टः। इदं च मुनिशापात्परं वेदितव्यम् न तु [...]नात्। "षष्टिवर्षसहस्राणि जातस्य मम कौशिक! दुःखेनोत्पादितश्चायं न रामं [...]मर्हसि ॥" इति रामायणविरोधात्। नाप्यभिषेकात्परं तस्यापि 'सम्यग्विनीतमथ [...]हरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम्' (८।९४) इति कौमारानुष्ठितत्वा[भि]धानात् स एव विरोध इति ॥ १

स दशरथः पूर्वेषां पितॄणामृणनिर्मोक्षसाधनम्। 'एष वा अनृणो यः पुत्री' इति श्रुतेः। [...]णाद्यणविमुक्तिकारणम्। सद्यः शोक एव तमस्तदपहन्तीति शोकतमोऽपहम्। [अभ]यङ्कर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य 'अपेः क्लेशतमसोः' इति डप्रत्ययः। सुता[भि]धानं सुताख्यं ज्योतिर्नोपलेभे न प्राप च ॥२

प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा संततिर्यस्य स तथोक्तः। "प्रत्ययोऽधीनशपथज्ञान-

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः।
आरेभिरे जितात्मानः पुत्त्रीयामिष्टिमृत्विजः॥ ४

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम्।
अभिजग्मुर्निदाघार्तास्छायावृक्षमिवाध्वगाः॥ ५

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः।
अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम्॥ ६

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम्॥ ७

अन्वयः। ऋष्यशृङ्गादयः ऋत्विजः जितात्मानः सन्तः, सन्तानका[ङ्क्षिणः तस्य]
पुत्त्रीयाम् इष्टिम् आरेभिरे॥ ४

अन्वयः। तस्मिन् अवसरे देवाः पौलस्त्योपप्लुताः (सन्तः) निदा[घार्ताः अध्वगाः]
छायावृक्षम् इव हरिम् अभिजग्मुः॥ ५

अन्वयः। ते च उदन्वन्तम् प्रापुः आदिपूरुषश्च बुबुधे। अव्याक्षे[पः भविष्यन्त्याः]
कार्य्यसिद्धेर्लक्षणम् हि॥ ६

अन्वयः। दिवौकसः भोगिभोगासनासीनम् तत्फणामण्डलोदर्चि[र्मणिद्योतितविग्रह]
तम् ददृशुः॥ ७

विश्वासहेतुषु" इत्यमरः। स नृपः। मन्थात्प्राक् मन्थनात्पूर्वमनभिव्यक्ता ...
पत्तिर्यस्य सोऽर्णव इव। चिरमतिष्ठत्। सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वादि...

ऋष्यशृङ्गादयः। ऋष्यशृङ्गो नाम कश्चिदृषिः। तदादयः। ऋतुमतौ ...
ऋत्विजो याज्ञिकाः। "ऋत्विग्दधृक्—" इत्यादिना क्विन्तो निपातः। ...
जितान्तःकरणाः सन्तः, सन्तानकाङ्क्षिणः पुत्त्रार्थिनस्तस्य दशरथस्य पुत्त्रीयां ...
"पुत्त्राच्छ च" इति छप्रत्ययः। इष्टिं यागमारेभिरे प्रचक्रमिरे॥ ४

तस्मिन्नवसरे पुत्त्रकामेष्टिप्रवृत्तिसमये देवाः। पुलस्त्यस्य गोत्रापत्यं पु[मान् पौलस्त्यो]
रावणः। तेनोपप्लुताः पीड़िताः सन्तः। निदाघार्त्ता घर्मातुराः अध्वानं ग...
पान्थाः। "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति डप्रत्ययः। इ...
छायाप्रधानो वृक्षः छायावृक्षमिव। शाकपार्थिवादित्वात् समासः। हरिं विष्णुमभिजग्मुः॥ ५

ते देवाश्च उदन्वन्तं समुद्रम्। "उदन्वानुदधौ च" इति नि[पातः। प्रापुः।]
आदिपुरुषो विष्णुश्च बुबुधे। योगनिद्रां जहावित्यर्थः। गमनप्रतिबोध[योः]
चकारौ। तथाहि—अव्याक्षेपो गम्यस्याव्यासङ्गः अविलम्ब इति यावत्। ...
कार्य्यसिद्धेर्लक्षणं चिह्नं हि। उक्तञ्च "अनन्यपरता चास्य कार्य्यसिद्धेस्तु लक्षणम्" ...
द्यौरोको येषां ते दिवौकसो देवाः। पृषोदरादित्वात् साधुः। ...

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९
प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यामपां सारं बिभ्राणं बृहतोरसा ॥ १०

अन्वयः। पद्मनिषण्णायाः श्रियः क्षौमान्तरितमेखले आस्तीर्णकरपल्लवे अङ्के निक्षिप्त-
णम् ॥ ८

अन्वयः। प्रबुद्धपुण्डरीकाक्षम् बालातपनिभांशुकम् प्रारम्भसुखदर्शनम् शारदम् दिव-
इव ॥ ९

अन्वयः। प्रभानुलिप्तश्रीवत्सम् लक्ष्मीविभ्रमदर्पणम् कौस्तुभाख्यम् अपांसारम् बृहता
सा बिभ्राणम् ॥ १०

सं। तथा च बुद्धचरिते—"न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा
म्" इति। तत्र "दिवु क्रीडादौ" इति धातोः "इगुपध—" इति कः। दिवमोक-
मिति विग्रहः। भोगिनः शेषस्य भोगः शरीरम्। "भोगः सुखे स्त्र्यादिभृतावहेश्च
काययोः" इत्यमरः। स एवासनं सिंहासनम् तत्रासीनमुपविष्टम्। आसेः शानच्।
दास," इतीकारादेशः। तस्य भोगिनः फणामण्डले य उदर्चिष उद्गश्मयो मणयस्तैर्दी
विग्रहं तं विष्णुं ददृशुः ॥ ७

कीदृशं विष्णुम्। पद्मे निषण्णाया उपविष्टायाः श्रियः क्षौमान्तरिता दुकूलव्यवहिता
खला यस्य तस्मिन्। आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन्। विशेषणद्वयेनापि
योः सौकुमार्यात्कटिमेखलास्पर्शासहत्वं सूच्यते। तस्मिन्नङ्के निक्षिप्तौ चरणौ येन
॥ ८

पुनः कीदृशम्। प्रबुद्धे विकसिते पुण्डरीके इवाक्षिणी यस्य तम्, दिवसे तु
रीकमेवाक्षि तस्येति विग्रहः। बालातपनिभमंशुकं यस्य तम्। पीताम्बरधरमित्यर्थः।
स बालातपव्याजांशुकमित्यर्थः। "निभो व्याजसदृशयोः" इति विश्वः। प्रकृष्ट-
भौ योगो येषां ते प्रारब्धा योगिनः। तेषां सुखदर्शनम्। अन्यत्र प्रारम्भ आदौ
दर्शनं शारदं शरत्संबन्धिनं दिवसमिव स्थितम् ॥ ९

पुनः किंविधम्। प्रभया अनुलिप्तमनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन, लक्ष्म्या
मदर्पणम्, कौस्तुभ इत्याख्या यस्य तम्। अपां समुद्राणां सारं स्थिरांशम्, अम्मयमणि-
त्यर्थः। बृहतोरसा बिभ्राणम् ॥ १०

वाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११
दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३
योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४

अन्वयः । विटपाकारैः दिव्याभरणभूषितैः वाहुभिः (उपलक्षितम्), आविर्भूतम् अपरम् पारिजातम् इव (स्थितम्) ॥ ११

अन्वयः । दैत्यस्त्रीगण्डलेखानाम् मदरागविलोपिभिः चेतनावद्भिः ... जयस्वनम् ॥ १२

अन्वयः । मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा विनीतेन प्राञ्जलिना ... उपस्थितम् ॥ १३

अन्वयः । योगनिद्रान्तविशदैः पावनैः अवलोकनैः सौखशायनिकान् ऋषीन् अनुगृह्णन्तम् ॥ १४

विटपाकारैः शाखाकारैर्दिव्याभरणभूषितैर्वाहुभिरुपलक्षितम् । अपाम् मध्ये आविर्भूतमपरं द्वितीयं पारिजातमिव स्थितम् ॥ ११

दैत्यस्त्रीगण्डलेखानामसुराङ्गनागण्डस्थलीनां यो मदरागस्तं विलुम्पन्तीति मदरागविलोपिनः । तैश्चेतनावद्भिः सजीवैर्हेतिभिः सुदर्शनादिभिः "हेतिः शस्त्रं च वह्निज्वाला च हेतयः" इत्यमरः । उदीरितजयस्वनम् । जयशब्दैर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः ॥ १२

मुक्तो भगवत्सन्निधानात्त्यक्तः शेषेण अहीश्वरेण सह विरोधः सहजोऽपि वैरं येन । कुलिशव्रणा अमृताहरणकाले इन्द्रयुद्धे ये वज्रप्रहारास्त एव लक्ष्माणि यस्य । प्रबद्धोऽञ्जलिर्येन तेन प्राञ्जलिना । प्रबद्धाञ्जलिनेत्यर्थः । विनीतेनानुद्धतेन गरुत्मता उपस्थितम् । पुरा किल तेन विष्णुना मातलिप्रार्थितेन भगवता तद्दुहितुः पत्युः कस्यचित् सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणपक्षमिति ... वलाद्य इति गर्वितं स्ववामतर्जनीभारेणैव भङ्क्त्वा भगवान् ... महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ॥ १३

योगो मनसो विषयान्तरव्यावृत्तिः । तद्रूपा या निद्रा तस्या अवसानं ...

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५

नमो विश्वसृजे पूर्व्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८

अन्वयः । अथ सुराः सुरद्विषाम् शमयित्रे तस्मै विष्णवे प्रणिपत्य अवाङ्मनसगोचरम्
...यम् एनम् तुष्टुवुः ॥ १५

अन्वयः । पूर्व्वम् विश्वसृजे तदनु विश्वम् बिभ्रते अथ विश्वस्य संहर्त्रे त्रेधा स्थितात्मने
...भ्यम् नमः ॥ १६

अन्वयः । एकरसम् दिव्यम् पयः देशे देशे रसान्तराणि यथा अश्नुते एवम् अविक्रियः
...म् गुणेषु अवस्थाः ( अश्नुषे ) ॥ १७

अन्वयः । हे देव ! त्वम् अमेयः मितलोकः अनर्थी प्रार्थनावहः अजितः जिष्णुः
अत्यन्तम् अव्यक्तः व्यक्तकारणम् ॥ १८

...रवलोकनैः सुखशयनं पृच्छन्तीति सौखशायनिकास्तान् । "पृच्छतौ सुस्नातादिभ्यः"
...उपसंख्यानाट्ठक्प्रत्ययः । भृग्वादीनृषीननुगच्छन्तम् ॥ १४

अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य
...त्यं स्तोतार्हम् । "एतिस्तुशास्वृदृजुषः क्यप्" इति क्यप्प्रत्ययः । वाक् च मनश्च वाङ्मनसे ।
"अचतुर—" इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः ।
...मेनं विष्णुं तुष्टुवुः अस्तुवन् ॥ १५

पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे, तदनु सर्गानन्तरं विश्वं बिभ्रते, अथ विश्वस्य संहर्त्रे,
...र्थं त्रेधा सृष्टिस्थितिसंहारकत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै ब्रह्मविष्णुहरात्मने
...भ्यं नमः ॥ १६

ननु कूटस्थस्य कथं नैरूप्यमित्याशङ्क्यौपाधिकमित्याह—एकरसं मधुरैकरसं दिव्यं
...एवं दिव्यं पयः, वर्षोदकं देशे देशे ऊषरादिदेशे, अन्यान् रसान् रसान्तराणि लवणादीनि
...था अश्नुते प्राप्नोति एवमविक्रियो निर्विकार एकरूप इत्यर्थः । त्वं गुणेषु सत्त्वादिषु
...अवस्थाः स्रष्टृत्वादिरूपा अश्नुषे ॥ १७

हे देव ! त्वममेयो लोकैरियत्तया न परिच्छेद्यः । मितलोकः परिच्छिन्नलोकः ।
...नर्थी निःस्पृहः । आवहतीत्यावहः । पचाद्यच् । प्रार्थनानामावहः कामदः ।

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९
सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २०
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१

अन्वयः। त्वां हृदयस्थम् अनासन्नम् अकामम् तपस्विनम् दयालुम् अनघ-
स्पृष्टम् पुराणम् अजरम् विदुः ॥ १९

अन्वयः। त्वम् सर्व्वज्ञः अविज्ञातः। त्वम् सर्व्वयोनिः आत्मभूः। त्वं सर्व्व-
प्रभुः अनीशः। त्वम् एकः सर्व्वरूपभाक् ॥ २०

अन्वयः। त्वाम् सप्तसामोपगीतम् सप्तार्णवजलेशयम् सप्तार्चिर्मुखम् सप्तलोकैकसंश्रयम्
आचख्युः ॥ २१

अजितोऽन्यैर्न जितः। जिष्णुर्जयशीलः। अत्यन्तमव्यक्तोऽतिसूक्ष्मरूपः। ...
कारणम् ॥ १८

हे देव ! त्वां हृदयस्थं सर्वान्तर्यामितया नित्यसन्निहितं तथाप्यनासन्नं
विप्रकृष्टञ्च विदुः। सन्निकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः। तथा ...
कामोऽभिलाषोऽस्य तं परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम्। तथापि तपस्विनं
युक्तं विदुः। यो निष्कामः स कथं तपः कुरुत इति विरोधः। परिहारस्तु
दुस्तरं तपस्तप्यते। दयालुं परदुःखापहरणपरं तथाप्यनघस्पृष्टं नित्यादुः-
दुःखिनं विदुः। 'अघं दुरितदुःखयोः' इति विश्वः। दयालुरदुःखी चेति विरो-
घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः। परभाग्योपजीवी च षड़ेते नित्यदुःखिताः
महाभारते। पुराणम् अनादिम् अजरं निर्व्विकारत्वादचरं विदुः। चिरत्वं
इति विरोधालङ्कारः। उक्तञ्च—'आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता' इति।
चालौकिकमहिमत्वं व्यज्यते ॥ १९

त्वं सर्वं जानातीति सर्व्वज्ञः। "इगुपध—" इति कप्रत्ययः। अविज्ञातः ...
विज्ञात इत्यर्थः। त्वं सर्वस्य योनिः कारणम्। त्वम् आत्मन एव भवतीत्या-
ते किञ्चित्कारणमस्तीत्यर्थः। त्वं सर्व्वस्य प्रभुः। त्वमनीशः। त्वमेकः सर्व्वरूपभाक्
एव सर्वात्मना वर्त्तस इत्यर्थः ॥ २०

हे देव ! त्वां सप्तभिः सामभिः रथन्तरादिभिरुपगीतम्। "तद्धितार्थ—"
पदसमासः। सप्तानामर्णवानां समाहारः सप्तार्णवम्। ... पूर्वंपदसमासः। ...

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४

अन्वयः । चतुर्वर्गफलं ज्ञानम्, चतुर्युगाः कालावस्थाः, चतुर्वर्णमयः लोकः ( इति )
म् चतुर्मुखात् त्वत्तः ( जातम् ) ॥ २२

अन्वयः । योगिनः अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ज्योतिर्मयम् त्वाम् विमुक्तये
न्वन्ति ॥ २३

अन्वयः । कः अजस्य जन्मगृह्णतः निरीहस्य हतद्विषः स्वपतः जागरूकस्य तव याथा-
वेद ॥ २४

र्वलोकाश्रयः तम् । "भयवासवासिष्वकालात्" इत्यलुक् । सप्तार्चिर्मुखं यस्य तम् ।
मुखा वै देवाः" इति श्रुतेः । सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम् । एवं-
म् आचख्युः ॥ २१

चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः । "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः"
मरः । तत्फलकं यज्ज्ञानम् । चत्वारि युगानि कृतत्रेतादीनि यासु ताश्चतुर्युगाः
ावस्थाः कालपरिमाणम् । चत्वारो वर्णाः प्रकृताः उच्यते यस्मिन्निति चतुर्वर्णमयः
र्णप्रचुर इत्यर्थः । तत्प्रकृतवचने मयट् । "तद्धितार्थ—" इत्यादिना तद्धितार्थे विषये
ुषः । स लोकः । इत्येवंरूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः, जातमिति शेषः ।
सर्व्वमसृजत यदिदं किञ्च" इति श्रुतेः ॥ २२

अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्त्तितम् । तेन मनसा योगिनो हृदयाश्रयं
स्थं ज्योतिर्मयं त्वां विमुक्तये मोक्षार्थं विचिन्वन्ति अन्विष्यन्ति ध्यायन्तीत्यर्थः ॥ २३
न जायत इत्यजः । "अन्येष्वपि दृश्यते" इति डप्रत्ययः । तस्याजस्य जन्मशून्यस्यापि
गृह्णतः मत्स्यादिरूपेण जायमानस्य । निरीहस्य चेष्टारहितस्यापि हतद्विषः शत्रु-
तः, जागरूकस्य सर्व्वसाक्षितया नित्यप्रबुद्धस्यापि स्वपतः निद्रामनुभवतः । इत्थं
रुद्धचेष्टस्य तव याथार्थ्यं को वेद वेत्ति । "विदो लटो वा" इति णलादेशः ॥ २४

शब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः।
पर्य्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्त्तितुम्॥
बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे॥ २६
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम्।
गतिस्त्वं वीतरागाणामभूयः-सन्निवृत्तये॥ २७
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा॥

अन्वयः। शब्दादीन विषयान् भोक्तुम् दुश्चरम् तपः चरितुम् प्रजाः पातुम् [illegible] वर्त्तितुम् पर्य्याप्तः असि॥ २५

अन्वयः। आगमैः बहुधा भिन्नाः अपि सिद्धिहेतवः पन्थानः जाह्नवीयाः [illegible] इव त्वयि एव पतन्ति॥ २६

अन्वयः। त्वयि आवेशितचित्तानाम् त्वत्समर्पितकर्मणाम् वीतरा[illegible] सन्निवृत्तये त्वम् गतिः॥ २७

अन्वयः। तव मह्यादिः महिमा प्रत्यक्षः अपि अपरिच्छेद्यः, आप्त[illegible] साध्यम् त्वाम् प्रति का कथा॥ २८

किञ्च। कृष्णादिरूपेण शब्दादीन् विषयान् भोक्तुम्। नरनारायणादिरूपे[illegible] रितुम्। तथा दैत्यमर्दनेन प्रजाः पातुम्। औदासीन्येन ताटस्थ्येन [illegible] समर्थः असि। भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचा[illegible] समर्थः इत्यर्थः॥ २५

आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पुरुषार्थ[illegible] उपायाः। जाह्नव्या इमे जाह्नवीया गाङ्गाः। "वृद्धाच्छः" इति छप्रत्ययः। [illegible] ते अपि आगमैरागतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च। अर्णवे इव, त्वय्येव [illegible] ग्रन्ति। येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः। यथाहुराचार्य्याः—"[illegible] योऽपि विश्वकर्मैत्युपासते" इति॥ २६

त्वयि आवेशितं निवेशितं चित्तं यैस्तेषाम्। तुभ्यं समर्पितानि [illegible] "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि कौन्तेय। [illegible] मे॥" इति भगवद्वचनात्। वीतरागाणां विरक्तानामभूयःसंनि[illegible] वृत्तये मोक्षायेत्यर्थः। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था वि[illegible] श्रुतेरित्यर्थः॥ २७

प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादिर्महिमैश्वर्य्यमपरि[illegible]

केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९

उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३०

अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१

महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२

अन्वयः । स्मरणेन केवलम् पुरुषम् पुनासि । यतः अनेन एव त्वयि शेषाः वृत्तयः [निवे]दितफलाः ॥ २९

अन्वयः । उदधेः रत्नानि इव विवस्वतः तेजांसि इव दूराणि ते चरितानि स्तुतिभ्यः [व्यति]रिच्यन्ते ॥ ३०

अन्वयः । ते अनवाप्तं अवाप्तव्यं किञ्चन न विद्यते । एकः लोकानुग्रहः एव ते जन्म-[क]र्मणोः हेतुः ॥ ३१

अन्वयः । तव महिमानम् उत्कीर्त्य वचः यत् संह्रियते तत् श्रमेण अशक्त्या वा, गुणा[नाम्] इयत्तया न ॥ ३२

[भा]वार्थः । आप्तवाग्वेदः । "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः । [अनु]मानं "क्षित्यादिकं सकर्तृकं कार्य्यत्वाद्घटवत्" इत्यादिकम् । ताभ्यां साध्यं गम्यं त्वां [प्रति] का कथा । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम् । तत्कारणमप्रत्यक्षममपरिच्छेद्य[म्] किमु वक्तव्यमित्यर्थः ॥ २८

स्मरणेन केवलं कृत्स्नम् । 'केवलः कृत्स्नमेकश्च' इति शाश्वतः । पुरुषं स्मर्त्तारं जनं [पुना]सि । यतः तदित्यर्थः । अनेन स्मृतिकार्य्येणैव त्वयि त्वद्विषयी याः शेषा अवशिष्टा[ः] [वृत्त]यो दर्शनस्पर्शनादयो व्यापारास्ता निवेदितफला विज्ञापितकार्य्याः । तव स्मरणस्यैवैतत् [फल]म्, दर्शनादीनान्तु कियदिति नावधारयाम इति भावः ॥ २९

उदधेः रत्नानीव, विवस्वतस्तेजांसीव, दूराणि अवाङ्मनसगोचराणि ते चरितानि [स्तुति]भ्यो व्यतिरिच्यन्ते, निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥ ३०

अनवाप्तम् अप्राप्तम्, अवाप्तव्यं प्राप्तव्यं ते तव किञ्चन किञ्चिदपि न विद्यते नित्यपरि-[पूर्ण]त्वादिति भावः । तर्हि किंनिबन्धने जन्मकर्मणी ? तत्राह—लोकेति । एको लोका-[नुग्र]ह एव ते तव जन्मकर्मणोर्हेतुः । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः, न स्वार्थे-[त्यर्थ]ः ॥ ३१

तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत्, तद्वचःसंहरणं श्रमेण वाग्व्यापार-

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥

तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैरृतोदधेः ॥ ३४

अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥ ३५

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६

अन्वयः । इति ते सुराः तम् अधोक्षजम् प्रसादयामासुः । हि स
भूतार्थव्याहृतिः, स्तुतिः न ॥ ३३

अन्वयः । सुराः कुशलसंप्रश्नव्यञ्जितप्रीतये तस्मै अप्रलयोद्वेलात् नैरृतो
आचख्युः ॥ ३४

अन्वयः । अथ भगवान् वेलासमासन्नशैलरन्ध्रानुनादिना स्वरेण परि
(सन्) उवाच ॥ ३५

अन्वयः । पुराणस्य कवेः तस्य वर्णस्थानसमीरिता कृतसंस्कारा भार
एव बभूव ॥ ३६

शान्त्या, अशक्त्या कार्त्स्न्येन वक्तुमशक्यत्वाद्वा । गुणानामियत्तया एवा
तेषामानन्त्यादिति भावः ॥ ३२

इति ते सुराः, तम् अधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिन् तमधोक्षजम्
मासुः प्रसन्नं चक्रुः । हि यस्मात् परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य
भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । "युक्ते क्ष्मादावृते भूतम्"
स्तुतिर्न प्रशंसामात्रम् । महान्तो हि यथाकथञ्चिन्न सुलभा इति भावः ।
तिष्ठतीति परमेष्ठी । "परमे कित्" इत्युणादिसूत्रेण तिष्ठतेरिनिः ।
बहुलम्' इति सप्तम्या अलुक् । 'स्थास्थिन्स्थूणाम्' इति षत्वम् ।
सुरा देवाः कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै,
त्यर्थः । अन्यथा अनवसरविज्ञप्तिस्तु खराणामिव निष्फला स्यादिति भावः ।
प्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्य्यादात्, नैरृतो राक्षसः, स एवोदधिः
कथितवन्तः ॥ ३४

अथ वेलायामब्धिकूले समासन्नानां सन्निकृष्टानां शैलानां रन्ध्रेषु
प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिस्तिरस्कृतसमुद्रघोषः भगवानुवाच ।
पुराणस्य चिरन्तनस्य कवेस्तस्य भगवती वर्णस्थानेषु उरःकण्ठ

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्य्यातशेषा चरणाद्गङ्गेवार्द्ध्वप्रवर्त्तिनी ॥ ३७

जाने वा रक्षसाक्रान्तावनुभावपराक्रमौ ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८

विदितं तप्यमानञ्च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९

कार्य्येषु चैककार्य्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४०

अन्वयः । विभोः वदनोद्गता सदशनज्योत्स्ना सा, चरणात् निर्य्यातशेषा ऊर्द्ध्वप्रवर्त्तिनी [गङ्ग]ा इव बभौ ॥ ३७

अन्वयः । रक्षसा वः अनुभावपराक्रमौ अङ्गिनां प्रथममध्यमौ उभौ गुणौ तमसा इव [आ]क्रान्तौ जाने ॥ ३८

अन्वयः । च (किञ्च) अकामोपनतेन एनसा साधोः हृदयम् इव तेन तप्यमानम् [भुव]नत्रयम् मे विदितम् ॥ ३९

अन्वयः । च (किञ्च) एककार्य्यत्वात् कार्य्येषु वज्रिणा न अभ्यर्थ्यः अस्मि । हि [वा]तः स्वयम् एव अग्नेः सारथ्य प्रतिपद्यते ॥ ४०

यगुच्चारिता अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा [भार]ती वाणी चरितार्था बभूवेव । एवकारस्त्वसम्भावनाविपरीतभावनाव्युदासार्थः ॥ ३६

विभोर्विष्णोर्वदनादुद्गता निःसृता सदशनज्योत्स्ना दन्तकान्तिसहिता । इदञ्च विशेषणं [...]वस्यातिशयार्थम् । अत एव सा भारती चरणादङ्घ्रेर्निर्य्याता चासौ शेषा च निर्यात[शे]षा । निःसृतावशिष्टेत्यर्थः । "स्त्रियाः पुंवत्—" इत्यनुवर्त्त्य "पुंवत्कर्मधारय—" इति [पुं]वद्भावः निर्यातशब्दस्य । या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । [निर्]यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्द्ध्वप्रवर्त्तिन्यूर्द्ध्ववाहिनी गङ्गेव । बभौ । [इ]त्युत्प्रेक्षा ॥ ३७

हे देवाः ! वो युष्माकमनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा रावणेन । अङ्गिनां [श]रीरिणां प्रथममध्यमावुभौ गुणौ सत्त्वरजसौ तमसेव तमोगुणेनेव आक्रान्तौ जाने वाक्यार्थः [...]सं ॥ ३८

किञ्च अकामेन अनिच्छया उपनतेन प्रमादादागतेन एनसा पापेन साधोः सज्जनस्य [हृ]दयमिव । तेन रक्षसा तप्यमानं संतप्यमानम् । तपेर्भौवादिकात्कर्मणि शानच् । भुवन[त्र]यं च मे विदितम् मया ज्ञायत इत्यर्थः । "मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः । "क्तस्य वर्त्तमाने" इति षष्ठी ॥ ३९

किञ्च । एककार्य्यत्वादावयोरेककार्य्यकत्वाद्धेतोः, कार्य्येषु कर्त्तव्यार्थेषु विषयेषु वज्रिणा [इ]न्द्रेण अभ्यर्थ्य इदं कुर्विति प्रार्थनीयो नास्मि । तथाहि—वातः स्वयमेवाग्नेः सारथ्यं

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे।
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा॥
स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः॥
धातारं तपसा प्रीतं ययाचे स हि राक्षसः।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः॥४३॥
सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम्।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्॥

अन्वयः। स्वासिधारापरिहृतः दशमः मूर्धा मे चक्रस्य कामम् ... रक्षसा स्थापितः॥ ४१

अन्वयः। मया स्रष्टुः वरातिसर्गात् तु तस्य दुरात्मनः रिपोः अत्या... भोगिन इव सोढम्॥ ४२

अन्वयः। हि सः राक्षसः मर्त्येषु आस्थापराङ्मुखः ( सन् ) तपसा प्रीतं धातारं दैवात् सर्गात् अवध्यत्वं ययाचे॥ ४३

अन्वयः। सः अहम् दाशरथिः भूत्वा तच्छिरःकमलोच्चयम् तीक्ष्णैः ... बलिक्षमम् करिष्यामि॥ ४४

साहाय्यं प्रतिपद्यते प्राप्नोति, न तु वह्निप्रार्थनया इत्येवकारार्थः। प्रेक्षावतां हि ... एव प्रवृत्तिः, न तु परप्रार्थनया। स्वार्थश्चायं ममापीत्यर्थः॥ ४०

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण यद्दशमं ... तत् मचक्रार्थमित्याह—स्वासिधारया स्वखड्गधारया परिहृतः। ... मूर्धा मे मम चक्रस्य कामं पर्याप्तो लभ्यांशः प्राप्तव्यभाग इव तेन रक्षसा स्थापितः ... तमहं हनिष्यामीत्यर्थः॥ ४१

तर्हि किं प्रागुपेक्षितमत आह—किन्तु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानात् ... दुरात्मनः रिपोः रावणस्यात्यारूढमत्यारोहणम् अतिवृद्धिरित्यर्थः। ... भोगिनः सर्पस्यात्यारूढं चन्दनेनेव, सोढम्। चन्दनद्रुमस्यापि तथा ... द्रष्टव्यम्॥ ४२

सम्प्रति वरस्वरूपमाह—स राक्षसस्तपसा प्रीतं सन्तुष्टं धातारं ब्रह्माणम् ... आस्थापराङ्मुख आदरविमुखः सन्, मर्त्याननादृत्येत्यर्थः। दैवादष्टविधाद्दैवीय... ययाचे हि॥ ४३

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—सोऽहम्।

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८

अन्वयः । यज्वभिः विधिवत् कल्पितम् भागम् मायाविभिः निशाचरैः अनालीढम् ...रात् पुनः आदास्यध्वे ॥ ४५

अन्वयः । मरुतां पथि वैमानिकाः मेघावरणतत्पराः पुण्यकृतः पुष्पकालोकसंक्षोभम् ...तु ॥ ४६

अन्वयः । (हे देवाः ! यूयम्) शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः अदूषिताम् ...न्दीनाम् वेणीबन्धान् मोक्ष्यध्वे ॥ ४७

अन्वयः । सः कृष्णमेघः रावणावग्रहक्लान्तम् मरुत्सस्यम् इति वागमृतेन अभिवृष्य ...दधे ॥ ४८

...शरथिः । "अत इञ्" इति इञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः शरैस्तस्य रावणस्य ...व कमलानि तेषामुच्चयं राशिं रणभूमेर्बलिचमं पूजार्हं करिष्यामि । पुष्पविशदा ...जेति भावः ॥ ४४

हे देवाः ! यज्वभिर्याज्ञिकैर्विधिवत् कल्पितमुपहृतं भागं हविर्भागं मायाविभिर्मायाः ... "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । निशाचरैः रक्षोभिरनालीढमना... ...तं यथा तथा अचिरात् पुनरादास्यध्वे ग्रहीष्यध्वे ॥ ४५

मरुतां देवानां पथि व्योम्नि वैमानिका विमानैश्चरन्तः । "चरति" इति ठक्प्रत्ययः । ...रणतत्पराः रावणभयात् मेघेष्वन्तर्धानतत्पराः पुण्यकृतः सुकृतिनः पुष्पकालोकेन ...या रावणविमानदर्शनेन यः संक्षोभो भयचकितं तं त्यजन्तु । 'संक्षोभो भयचकितम्' ...शब्दार्णवः ॥ ४६

हे देवाः ! यूयं शापेन नलकूवरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात् ...ये कचग्रहाः केशाकर्षास्तैरदूषिताननुपहतान् स्वर्गबन्दीनां हृतस्वर्गाङ्गनानां वेणी... ...मोक्ष्यध्वे । पुरा किल नलकूवरेणात्मानमभिसरन्त्या रम्भाया बलात्कारेण सम्भो... ...तेन दुरात्मा रावणः शप्तः—स्त्रीणां बलाद्ग्रहणे मूर्धा ते शतधा भविष्यतीति ...या कथानुसन्धेया ॥ ४७

... कृष्णो विष्णुः स एव मेघो नीलमेघश्च । विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः ।

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९
अथ तस्य विशाम्पत्युरन्ते कामस्य कर्मणः ।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५०
हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१
प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२

अन्वयः। पुरुहुतप्रभृतयः सुराः अंशैः सुरकार्य्योद्यतम् विष्णुम् द्रुमाः पु[ष्पैः वायुम्]
इव अनुययुः ॥ ४९

अन्वयः। अथ तस्य विशाम्पत्युः काम्यस्य कर्मणः अन्ते ( कश्चित् ) पुरु[षः ऋत्विजां]
विस्मयेन सह अग्नेः प्रबभूव ॥ ५०

अन्वयः। आद्यस्य पुंसः अनुप्रवेशात् तेन अपि दुर्व्वहम् हेमपात्रगतम्
दोर्भ्याम् आदधानः ॥ ५१

अन्वयः। नृपः प्राजापत्योपनीतम् तत् अन्नम् उदन्वता आविष्कृतम् पय[सां सारं]
वृषा इव प्रत्यग्रहीत् ॥ ५२

विश्रवःशब्दाच्छिवादित्वादण् विश्रवसः "विश्रवणरवणौ" इत्यन्तर्गतसूत्रेण
वृत्तिविषये रवणादेशे रावण इति सिद्धम्। स एवावग्रही वर्षप्रतिबन्धः।
स्नानं मरुतो देवा एव शस्य' तत्। इत्येवं रूपेण वागमृतेन वाक्सलिलेन।
शेषे स्यात्पीयूषे सलिलेऽमृतम्" इति विश्वः। अभिव्याभिषिच्य तिरोदधेऽन्तर्दधे।

पुरुहूतप्रभृतय इन्द्राद्याः सुराः, सुरकार्य्ये रावणवधरूपे उद्यतं विष्णुम् अं[शैः]
द्रुमाः पुष्पैः स्वांशैर्वायुमिव। अनुययुः। सुग्रीवादिरूपेण वानरयोनिषु [अवतीर्णा इत्य]
भिप्रायः ॥ ४९

अथ तस्य विशाम्पत्युर्दशरथस्य सम्बन्धिनः काम्यस्य कर्मणः पुत्रकामेष्टेरन्ते
पावकात् पुरुषः कश्चिद्दिव्यः पुमानृत्विजां विस्मयेन सह प्रबभूव प्रादुर्बभूव।
वात्तेषामपि विस्मयोऽभूदित्यर्थः ॥ ५०.

तमेव पुरुषं विशिनष्टि—आद्यस्य पुंसो विष्णोरनुप्रवेशादधिष्ठानाद्धेतोस्ते[न]
नापि दुर्वहम्। चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वादित्यर्थः
पात्रगत पर्यास पक्व' चरु' पयश्चरु' पायसान्न' दोर्भ्यामादधानो वहन्।
ष्मपक्व ओदनश्चरुः" इति याज्ञिकाः ॥ ५१

नृपो दशरथः प्राजापत्येन प्रजापतिसम्बन्धिना पुरुषेण उपनीतं, तत्तु अन्नं

अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ॥
प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३
स तेजो वैष्णवं पत्नोर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४
अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः सम्भाविताम् ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५

अन्वयः। अनेन तस्य राज्ञः अन्यदुर्लभाः गुणाः कथिताः, यत् त्रैलोक्यप्रभवः अपि न् प्रसूतिं चकमे ॥ ५३

अन्वयः। सः चरुसंज्ञितम् वैष्णवम् तेजः पत्न्योः अहर्पतिः प्रत्यग्रम् आतपम् पृथिव्योः इव विभेजे ॥ ५४

अन्वयः। तस्य कौसल्या अर्चिता, केकयवंशजा प्रिया, अतः ईश्वरः सुमित्राम् ताभ्याम् विताम् ऐच्छत् ॥ ५५

नरं विद्धि मामिहाभ्यागतं नृप" इति रामायणात्। तदन्नं पायसान्नम्। चरुन्वता ना आविष्कृतं प्रकाशितं पयसां सारमञ्तं इवा वासव इव। "वासवो विचक्षा त्वष्टा" र। प्रत्यग्रहीत् स्वीचकार ॥ ५२
स्य राज्ञो दशरथस्य अन्यदुर्लभा असाधारणा गुणा अनेन कथिताः व्याख्याताः। त् त्रयो लोकाः त्रैलोक्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तस्य प्रसवः कारणं पि तस्मिन् राज्ञि प्रसूतिम् उत्पत्तिं चकमे कामितवान्। त्रिभुवनकारणस्यापि कारण- परमावधिगुणसमाश्रय इत्यर्थः ॥ ५३
स नृपः, चरुसंज्ञास्य संजाता चरुसंज्ञितम्। वैष्णवं तेजः पत्न्योः कौसल्या-कैकेय्योः। पृथिवी च द्यावापृथिव्यौ। "दिवसश्च पृथिव्याम्" इति चकाराद्दिवशब्दस्य द्यावादेशः। द्यावापृथिव्योः। अह्नः पतिरहर्पतिः। "अहरादीनां पत्यादिषु वा रेफः" इत्युपसंख्या- नलिको रेफस्य रेफादेशो विसर्गापवादः। प्रत्यग्रमातपं बालातपमिव। विभेजे, ददावित्यर्थः ॥ ५४
पत्नीवरे सति द्वयोरेव विभागे कारणमाह—तस्य राज्ञः। कौ पृथिव्यां सलति गच्छ- कोसलः। "सल् गतौ"। पचाद्यच्। कुशब्दस्य पृषोदरादित्वाद्गुणः। कोसलस्य त्यं स्त्री कौसल्या। "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ्। "यङश्चाप्" चाप्। अत एव सूत्रे निर्देशात् कोसलशब्दो दन्त्यसकारमध्यमः। अर्चिता ज्येष्ठा । केकयवंशजा कैकेयी। प्रिया इष्टा। अतो द्वेतीरीश्वरी भर्ता नृपः सुमित्रां ताभ्यां ाकैकेयीभ्यां सम्भावितां भागदानेन मानितम् ऐच्छत इच्छति स्म। एवञ्च सामान्यं भागप्राप्यमिति राज्ञ उचितज्ञता कौशलञ्च लभ्यते ॥ ५५

ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६
सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ ५७
ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसम्भवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८

अन्वयः। बहुज्ञस्य महीक्षितः पत्युः चित्तज्ञे ते उभे पत्न्यौ चरोः अर्धार्धभागाभ्यां ताम् अयोजयताम् ॥ ५६

अन्वयः। सा उभयोः अपि सपत्न्योः भ्रमरी वारणस्य मदनिस्यन्दरेखयोः इव प्रणयवती आसीत् हि ॥ ५७

अन्वयः। ताभिः प्रजाभूत्यै देवांशसम्भवः गर्भः सौरीभिः अमृताख्याभिः नाडीभिः अम्मयः इव दध्रे ॥ ५८

बहुज्ञस्य सर्व्वज्ञस्य उचितज्ञस्येत्यर्थः। पत्युर्महीक्षितः क्षितीश्वरस्य। विशेषणाभ्यां राज्ञोऽनुसरणीयतामाह। चित्तज्ञे अभिप्रायज्ञे ते उभे पत्न्यौ कौसल्याकैकेय्यौ। अर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ, ताभ्यामर्धार्धभागाभ्याम्। "पुंस्यर्धोऽर्धं समेंऽशके" इत्यमरः। तां सुमित्रामयोजयतां युक्तां चक्रतुः। अत्र न रामायणसंवादी तत्र चरोरर्धं कौसल्यायै अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्रायै अभिधानात्। किन्तु पुराणान्तरसंवादो द्रष्टव्यः। उक्तञ्च नारसिंहे—"ते पिण्डप्राशने काले सुमित्रायै महीपते। पिण्डाभ्यामल्पमल्पन्तु स्वभगिन्यै प्रयच्छतः॥" इति। तस्मान्नापि विरोधे पुराणान्तरात्समाधातव्यम् ॥ ५६

न च एवं सतोऽपि ईर्ष्या स्यादित्याह—सा सुमित्रा उभयोरपि। समान एकः पतिर्ययोस्तयोः सपत्न्योः। "नित्यं सपत्न्यादिषु" इति ङीप् नकारादेशश्च। भ्रमरी वारणस्य गजस्य मदनिस्यन्दरेखयोरिव गण्डद्वयगतयोरिति भावः। प्रणयवती आसीत्। सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं वारणस्येति ॥ ५७

ताभिः कौसल्यादिभिः प्रजानां भूत्यै अभ्युदयाय। देवस्य विष्णोरंशः अवयवो यस्य स गर्भः। सूर्यस्येमा सौर्यः ताभिः सौरीभिः। "सूर्यतिष्य—" इत्युपधालोपः। अमृता इत्याख्या यासां ताभिः। जलवहनसाम्यान्नाडीभिरिव। नाडीभिर्विसर्जनीनिर्दीधितिभिः अपां विकारः अम्मयो जलमयः गर्भ इव, दध्रे धृतः। कर्मणि वचनम्। गर्भो दधिरे इत्यर्थः। अत्र यादवः—"तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने। शतत्रयं हिमोत्सर्गे तावद्घर्मस्य सर्जने॥ आनन्दाश्च हि मेध्याश्च सूक्ष्मा इति। चतुःशतं दृष्टिवाहस्ताः सर्वा अमृताः स्त्रियः॥" इति ॥ ५८

सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारम्भाः शस्यानामिव सम्पदः ॥ ५९

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्त्तिभिः ॥ ६०

हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१

बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्य्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२

अन्वयः । समम् आपन्नसत्त्वाः आपाण्डुरत्विषः ताः अन्तर्गतफलारम्भाः शस्यानाम् सम्पदः इव रेजुः ॥ ५९

अन्वयः । सर्व्वाः स्वप्नेषु जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्त्तिभिः वामनैः गुप्तम् आत्मानम् ददृशुः ॥ ६०

अन्वयः । हेमपक्षप्रभाजालम् वितन्वता वेगाकृष्टपयोमुचा सुपर्णेन गगने (ताः) उह्यन्ते स्म ॥ ६१

अन्वयः । स्तनान्तरविलम्बिनम् कौस्तुभन्यासम् बिभ्रत्या पद्मव्यजनहस्तया लक्ष्म्याः च पर्य्युपासन्त ॥ ६२

समं युगपत् आपन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ता आपन्नसत्त्वा गर्भिण्यः । 'आपन्नसत्त्वा स्याद्गुर्व्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । अत एव आपाण्डुरत्विषः ईषत् पाण्डुरवर्णाः ता राजपत्न्यः । अन्तर्गताः गुप्ताः फलारम्भाः फलप्रादुर्भावाः यासां ताः । शस्यानां सम्पद इव, रेजुर्बभुः ॥ ५९

सम्प्रति तासां स्वप्नदर्शनान्याह—सर्व्वास्ताः स्वप्नेषु । जलजः शङ्खः । जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्त्तयो येषां तैर्वामनैर्ह्रस्वैः पुरुषैर्गुप्तं रक्षितमात्मानं स्वरूपं ददृशुः ॥ ६०

किञ्चेति चार्थः । हेम्नः सुवर्णस्य पक्षाणां प्रभाजालं कान्तिपुञ्जम् वितन्वता विस्तारयता । वेगेनाकृष्टाः पयोमुचो मेघा येन तेन सुपर्णेन गरुत्मता गरुड़ेन गगने ता उह्यन्ते स्म नीयन्ते स्म ॥ ६१

किञ्च । स्तनयोरन्तरे मध्ये विलम्बिनं लम्बमानम् । न्यास्यत इति न्यासः । कौस्तुभन्यासस्तम् । पत्या न्यस्तं । कौस्तुभमित्यर्थः । बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्य्युपास्यन्त उपासिताः ॥ ६२

कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३

ताभ्यस्तथाविधान् स्वप्नान् श्रुत्वा प्रीतो हि पार्थिवः ।
मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४

विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५

अथाग्रमहिषी राज्ञः प्रसूतिसमये सती ।
पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६

अन्वयः । दिव्यायाम् त्रिस्रोतसि कृताभिषेकैः परं ब्रह्म गृणद्भिः सप्तभिः ब्रह्मर्षिभिः उपतस्थिरे ॥ ६३

अन्वयः । पार्थिवः ताभ्यः तथाविधान् स्वप्नान् श्रुत्वा प्रीतः (सन्) आत्मानम् जगद्गुरोः गुरुत्वेन परार्ध्यम् मेने हि ॥ ६४

अन्वयः । एकः विभुः तासाम् कुक्षिषु प्रसन्नानाम् अपाम् (कुक्षिषु) प्रतिमाचन्द्रः इव अनेकधा विभक्तात्मा (सन्) उवास ॥ ६५

अन्वयः । अथ राज्ञः सती अग्रमहिषी प्रसूतिसमये औषधिः नक्तम् तमोऽपहम् ज्योतिः इव (तमोपहम्) पुत्रम् लेभे ॥ ६६

किञ्च । दिवि भवायां दिव्यायां त्रिस्रोतसि आकाशगङ्गायां कृताभिषेकैः कृतस्नानैः परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः सप्तभिर्ब्रह्मर्षिभिः कश्यपप्रभृतिभिः उपासाञ्चक्रिरे ॥ ६३

पार्थिवः दशरथः, ताभ्यः पत्नीभ्यः । "आख्यातोपयोगे" इत्यपादानत्वात् पञ्चमी । तथाविधान् उक्तप्रकारान् स्वप्नान् श्रुत्वा प्रीतः सन् । आत्मानं जगद्गुरोर्विष्णोः गुरुत्वेन पितृत्वेन हेतुना परार्ध्यं सर्वोत्कृष्टं मेने हि ॥ ६४

एकः एकरूपः विभुः विष्णुः तासां राजपत्नीनां कुक्षिषु गर्भेषु । प्रसन्नानां निर्मलानां अपां कुक्षिषु प्रतिबिम्बचन्द्र इव । अनेकधा, विभक्तात्मा सन् । उवास ॥ ६५

अथ राज्ञो दशरथस्य सती पतिव्रता । अग्र्या चासौ महिषी च अग्रमहिषी कौसल्या, प्रसूतिसमये प्रसूतिकाले, औषधिः नक्तं रात्रिसमये तमोऽपहन्तीति तमोऽपहम् । 'अपे क्लेशतमसोः' इति डप्रत्ययः । ज्योतिरिव । तमोऽपहं तमोनाशकरं पुत्रं प्राप ॥ ६६

राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७

रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥ ७०

अन्वयः । अभिरामेण वपुषा चोदितः गुरुः तस्य जगत्प्रथममङ्गलम् राम इति ामधेयम् चक्रे ॥ ६७

अन्वयः । रघुवंशप्रदीपेन अप्रतिमतेजसा तेन रक्षागृहगताः दीपाः प्रत्यादिष्टाः इव अभवन् ॥ ६८

अन्वयः । शातोदरी माता शय्यागतेन रामेण सैकताम्भोजबलिना शरत्कृशा जाह्नवी इव बभौ ॥ ६९

अन्वयः । कैकेय्याः भरतः नाम शीलवान् तनयः जज्ञे, यः प्रश्रयः श्रियम् इव नयित्रीम् अलञ्चक्रे ॥ ७०

अभिरमतेऽस्मिन्नित्यभिरामं मनोहरम् । अधिकरणार्थे घञ्प्रत्ययः । तेन वपुषा चोदितः रितो गुरुः पिता दशरथः, तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं राम इति नामधेयं क्रे । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥ ६७

रघुवंशस्य प्रदीपेन प्रकाशकेन, अप्रतिमतेजसा तेन रामेण, रक्षागृहगताः सूतिकागृह- ता दीपाः प्रत्यादिष्टाः प्रतिवद्धा इव अभवन् । महादीपसमीपे नाल्पाः स्फुरन्तीति ावः ॥ ६८

शातोदरी गर्भमोचनात् कृशोदरी माता, शय्यागतेन रामेण, सैकते पुलिने म्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव बभौ ॥ ६९

केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी । "तस्यापत्यम्" इत्यणि कृते "केकयमित्रयुप्रलयानां ादेरियः" इतीयादेशः । तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः । यस्तनयः । श्रयो विनयः श्रियमिव, जनयित्रीं मातरमलञ्चक्रे ॥ ७०

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१

निर्दोषमभवत् सर्व्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२

तस्योदये चतुर्मूर्त्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३

कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४

अन्वयः । सुमित्रा लक्ष्मणशत्रुघ्नौ यमौ सुतौ सम्यगाराधिता विद्या प्रबो[धविनयौ] इव सुषुवे ॥ ७१

अन्वयः । सर्व्वं जगत् निर्द्दोषम् आविष्कृतगुणम् च अभवत्, स्वर्गः हि गां [गतम्] पुरुषोत्तमम् अन्वगात् इव ॥ ७२

अन्वयः । चतुर्म्मूर्त्तेः तस्य उदये (सति) पौलस्त्यचकितेश्वराः दिशः वि[रजस्कैः] नभस्वद्भिः उच्छ्वसिताः इव ॥ ७३

अन्वयः । रक्षोविप्रकृतौ कृशानुः प्रभाकरः (च) अपधूमत्वात् प्रसन्नत्वा[त्] अपविद्धशुचौ इव आस्ताम् ॥ ७४

सुमित्रा, लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ, सम्यगाराधिता [विद्या] विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव सुषुवे ॥ ७१

सर्व्वम् जगल्लोको निर्दोषं दुर्भिक्षादिदोषरहितम्। आविष्कृतगुणं प्रकटीकृता[दा]दिगुणं च अभवत् । अथोत्प्रेक्ष्यते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्व[र्गोऽन्व]गादिव । स्वर्गो हि गुणवान्निर्दोषश्चेत्यागमः । स्वर्गतुल्यमभूदित्यर्थः ॥ ७२

चतुर्मूर्त्ते रामादिरूपेण चतूरूपस्य तस्यास्य हरेरुदये सति । पौलस्त्याद्रावणा[द्] भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशश्चयस्तः विरजस्कै रपधूलिभिर्नभस्वद्भि[र्वायुभि]र्मिषेण । उच्छ्वसिता इवः । इत्युत्प्रेक्षा । श्वसेः कर्त्तरि क्तः । स्वनाथशरणलाभसं[तुष्टानां] दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीशरक्षणं मूर्त्तिचतुष्टयप्रयोज[नमिति] भावः ॥ ७३

रक्षसा रावणेन विप्रकृतावपकृतौ पीड़िताविव्यर्थः । कृशानुरग्निः प्रभाकर[श्च] यथासंख्यमपधूमत्वात्प्रसन्नत्वाच्चापविद्धशुचौ निरस्तदुःखाविव आस्ताम् अभवताम् ॥ ७४

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५
पुत्रजन्मप्रवेश्यानां तूर्य्याणां तस्य पुत्रिणः ।
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६
सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ७७
कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥३८

अन्वयः। तत्क्षणम् राक्षसश्रियः अश्रुबिन्दवः दशाननकिरीटेभ्यः मणिव्याजेन पृथिव्याम् पर्य्यस्ताः ॥ ७५

अन्वयः। पुत्रिणः तस्य पुत्रजन्मप्रवेश्यानाम् तुर्य्याणाम् प्रथमम् दिवि देवदुन्दुभयः चक्रुः ॥ ७६

अन्वयः। अस्य भवने सन्तानकमयी वृष्टिः च पेतुषी। सा एव सन्मङ्गलोपचाराणाम् आदिरचना अभवत् ॥ ७७

अन्वयः। कृतसंस्काराः धात्रीस्तन्यपायिनः ते अग्रजेन इव ( स्थितेन ) पितुः आनन्देन समम् ववृधिरे ॥ ७८

तत्क्षणं तस्मिन् क्षणे रामोत्पत्तिसमये राक्षसश्रियोऽश्रुबिन्दवः दशाननकिरीटेभ्यो मणीनां व्याजेन मिषेण पृथिव्यां पर्य्यस्ताः पतिताः। रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः ॥ ७५

पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानाम् वादनीयानामित्यर्थः। तूर्य्याणां वाद्यानामारम्भमुपक्रमं प्रथमं दिवि देवदुन्दुभयश्चक्रुः। साक्षात् पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः ॥ ७६

अस्य राज्ञो भवने सन्तानकानां कल्पवृक्षकुसुमानां विकारः सन्तानकमयी वृष्टिश्च पेतुषी पपात। "क्वसुश्च" इति क्वसुप्रत्ययः। "उगितश्च" इति ङीप्। सा वृष्टिरेव सन्तः पुत्रजन्मन्यावश्यका ये मङ्गलोपचारास्तेषामादिरचना प्रथम क्रिया अभवत् ॥ ७७

कृताः संस्कारा जातकर्मादयो येषां ते। धात्रीणामुपमातृणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः। ते कुमाराः अग्रे जातेन अग्रजेन ज्येष्ठेनेव स्थितेन पितुरानन्देन समं ववृधिरे। कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थः। कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ॥ ७८

स्वाभाविकं विनीतत्वं तेषां विनयकर्म्मणा।
सुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम्॥ ७९
परस्पराविरुद्धास्ते तद्रघोरनघं कुलम्।
अलमुद्योतयामासुर्देवारण्यमिवर्त्तवः॥ ८०
समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः॥ ८१
तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः॥ ८२

अन्वयः। तेषां स्वाभाविकं विनीतत्वम् विनयकर्म्मणा हविर्भुजाम् सहजम् हविषा इव सुमूर्च्छ॥ ७९

अन्वयः। परस्पराविरुद्धाः ते तत् अनघम् रघोः कुलम् ऋतवः देवारण्यम् अलम् उद्योतयामासुः॥ ८०

अन्वयः। सौभ्रात्रे समाने अपि यथा उभौ रामलक्ष्मणौ तथा भरतशत्रुघ्नौ द्वन्द्वं बभूवतुः॥ ८१

अन्वयः। यथा चन्द्रसमुद्रयोः यथा वायुविभावस्वोः (तथा) तेषाम् ऐक्यम् कदाचन न बिभिदे॥ ८२

तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्मणा हविर्भुजामग्नीनां सहजं तेजो हविषा आज्यादिकेनेव सुमूर्च्छ ववृधे। निसर्गसंस्कार विनीता इत्यर्थः॥ ७९

परस्परमविरुद्धा अविद्विष्टाः सौभ्रात्रगुणवन्त इत्यर्थः। ते कुमारास्तत् प्रसिद्धं निष्पापं रघोः कुलम्, ऋतवो वसन्तादयो देवारण्यं नन्दनमिव, सहजविरोधादृ ऋतूनां सहावस्थानसम्भावनार्थं देवविशेषणम्। अलमत्यन्तमुद्योतयामासु प्रकाशयामासुः सौभ्रात्रवन्तः कुलभूषणायन्त इति भावः॥ ८०

शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः। "नद्यृतश्च" इति कप् न भवति भ्रातुरिति निषेधात्। तेषां भावः सौभ्रात्रम् युवादित्वादण्। तस्मिन् समाने तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः। तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं साहचर्य्येणाभिव्यक्तौ बभूवतुः। "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रयोगाभिव्यक्ति इत्यभिव्यक्तार्थे निपातः। क्वचित् कस्यचित् स्नेहो नातिरिच्यत इति भावः॥ ८१

तेषां चतुर्णां मध्ये द्वयोर्द्वयोः रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः। तथा वायुविभावस्वोर्वातवह्न्योरिव। चन्द्रसमुद्रयोरिव च। ऐक्यमेकमत्यं कदाचन न बिभिदे। एकत्र समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते। सहजः सहकारी हि वह्नेर्वायुः। चन्द्रे हि वर्धते सिन्धुस्तत्क्षये च क्षीयते इति॥ ८२

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४

गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६

अन्वयः । प्रजानाथाः ते तेजसा प्रश्रयेण च निदाघान्ते श्यामाभ्रा दिवसाः इव प्रजानाम् मनः जह्रुः ॥ ८३

अन्वयः । सः चतुर्धा व्यस्तः पृथिवीपतेः प्रसवः ( चतुर्धा ) अङ्गवान् धर्मार्थकाममोक्षाणाम् अवतारः इव बभौ ॥ ८४

अन्वयः । गुरुवत्सलाः ते गुणैः गुरुम् चतुरन्तेशम् तम् एव महार्णवाः रत्नैः इव आराधयामासुः ॥ ८५

अन्वयः । भग्नदैत्यासिधारैः दन्तैः सुरगजः इव पणबन्धव्यक्तयोगैः उपायैः नय इव युगदीर्घैः दोर्भिः हरिः इव तदीयैः अंशैः चतुर्भिः तैः अवनीपतीनां पतिः चकाशे ॥ ८६

प्रजानाथास्ते कुमाराः तेजसा प्रभावेन प्रश्रयेण विनयेन च । निदाघान्ते ग्रीष्मान्ते । श्यामान्यभ्राणि मेघा येषां ते श्यामाभ्राः । नातिशीतोष्णा इत्यर्थः । दिवसा इव । प्रजानां मनो जह्रुः ॥ ८३

स चतुर्धा । 'सङ्ख्यायां विधार्थे धा' इत्यनेन धाप्रत्ययः । व्यस्तो विभक्तः पृथिवीपतेर्दशरथस्य प्रसवः सन्तानः । चतुर्द्धा अङ्गवान्मूर्त्तिमान् धर्मार्थकाममोक्षाणामवतार इव बभौ ॥ ८४

गुरुवत्सलाः पितृभक्तास्ते कुमाराः गुणैर्विनयादिभिर्गुरुं पितरम् । चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम् । "तद्धितार्थे—" इत्यादिनोत्तरपदसमासः । तं दशरथमेव महार्णवाश्चत्वारो रत्नैरिव । आराधयामासुरानन्दयामासुः ॥ ८५

भग्ना दैत्यानामसिधारा यैस्तैश्चतुर्भिर्दन्तैः सुरगज ऐरावत इव । पणबन्धेन फलसिद्ध्या व्यक्तयोगैरनुमितप्रयोगैरुपायैश्चतुर्भिः सामादिभिर्नयो नीतिरिव । युगवद्दीर्घैश्चतुर्भिर्दोर्भिर्भुजैर्हरिर्विष्णुरिव । तदीयैर्हरिसंबन्धिभिरंशैरंशभूतैश्चतुर्भिस्तैः पुत्रैरवनिपतीनां पती राजराजो दशरथश्चकाशे दिदिपे ॥ ८६

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनीसमाख्यया
व्याख्यया समेतो महाकवि-कालिदासकृतौ रघुवंशे महाकाव्ये
रामावतारो नाम दशमः सर्गः ।

# एकादशः सर्गः ।

—:०*०:—

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥
कृच्छ्रलब्धमपि लब्धवर्णभाक् तं दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता ॥

अन्वयः । सः क्षितीश्वरः कौशिकेन एत्य अध्वरविघातशान्तये काकपक्षधरम् याचितः किलः । तेजसां वयः न समीक्ष्यते हि ॥ १

अन्वयः । लब्धवर्णभाक् ( सः ) कृच्छ्रलब्धम् अपि सलक्ष्मणम् तम् मुनये असुप्रणयिनाम् अपि अर्थिता रघोः कुले कदाचित् न व्यहन्यत ॥ २

रामचन्द्रचरणारविन्दयोरन्तरङ्ग चर भृङ्गलीलया ।
तव सन्ति हि रसाश्चतुर्विधास्तान् यथारुचि सदैव निर्विश ॥

कौशिकेन कुशिकापत्येन विश्वामित्रेण, एत्य अभ्यागत्य स क्षितीश्वरो अध्वरविघातशान्तये यज्ञविघ्नविध्वंसाय काकपक्षधरं बालकोचितशिखाधरम् । "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः । रामं याचितः किल प्रार्थितः । याचेर्द्विकर्म्मकादप्रधाने कर्मणि क्तः । "अप्रधाने दुहादीनाम्" इति वचनात् । बालाधिकार इत्याशङ्क्याह—तेजसां तेजस्विनां वयो बाल्यादि न समीक्ष्यते अप्रयोजकमित्यर्थः । अत्र सर्गे रथोद्धता वृत्तम् । उक्तञ्च—"रान्नराविह रथोद्धता लगौ" इति ॥ १

१ । वाच्यान्तरम् । कौशिकः काकपक्षधरं रामं क्षितीश्वरं याचितवान् । कौशिकेन कर्त्तरि तृतीया, अध्वरविघ्नशान्तये निमित्तार्थे चतुर्थी, कुशिकस्य गोत्रापत्यं पुमान् विश्वामित्रस्य पितामहः कुशिकः । अत्र विशेषेण तेजोरूपेण सामान्यस्य रामस्य विशेषस्य समर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो यथा—सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते, साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

विचारः । ननु तेजःशब्देन गुणवाचकः पदार्थः बुध्यते, तर्हि कथमस्य वयः सम्भवति । परमाणुसमष्टिभूतेषु स्थावरजङ्गमात्मकेषु वस्तुषु वयसां गणना व्यवह्रियते, इति तेजःप्रभृतीनां गुणवाचकानां पदार्थानां कथं तत् सम्भवेत् । सत्यं । गुणगुणिनोरभेदसम्बन्धात तेजःशब्देन प्राणिनः उच्यन्ते जीविनो विना अन्येषु पदार्थेषु तेषां सम्भवात् । अतएव वयसां सम्भवो युज्यते इति ।

यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३

तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि वाष्पविन्दवः ॥ ४

अन्वयः । पार्थिवः तयोः निर्गमाय पुरमार्गसंस्क्रियाम् यावत् आदिशति तावत् मरुत्सखैः सपुष्पजलवर्षिभिः घनैः सा आशु विदधे ॥ ३

अन्वयः । निदेशकरणोद्यतौ धन्विनौ तौ पितुः चरणयोः निपेततुः । भूपतेः अपि वाष्पविन्दवः प्रवत्स्यतो नम्रयोः तयोः उपरि ( निपेतुः ) ॥ ४

लब्धा वर्णाः प्रसिद्धयो यैस्ते लब्धवर्णा विचक्षणाः । "लब्धवर्णो विचक्षणः" इत्यमरः । तान् भजतदृति लब्धवर्णभाक् विद्वत्सेवीत्यर्थः । स राजा कृच्छ्रलब्धमपि सलक्ष्मणं तं रामं मुनये दिदेश अतिसृष्टवान् । तथाहि असुप्रणयिनां प्राणार्थिनामपि अर्थिता याञ्चा रघोः कुले कदाचिदपि न व्यहन्यत न विहता न विफलीकृतेत्यर्थः । वैरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावह इति भावः ॥ २ .

पार्थिवः पृथिवीश्वरः तयोर्निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसंमार्जनगन्धोदकवनपुष्पापहाररूपसंस्कारं यावत् आदिशति आज्ञापयति । तावत् मरुत्सखैर्वायुसखैः । अनेन धूलिसंमार्जनं गम्यते । सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिर्घनैः सा मार्गसंस्क्रिया आशु विदधे विहिता । एतेन देवकार्य्यप्रवृत्तयोर्देवानुकूल्यं सूचितम् ॥ ३

निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुश्चरणयोर्निपेततुः प्रणतावित्यर्थः । भूपतेरपि वाष्पविन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः अत एव नम्रयोः । "नमिकम्पि –" इति रप्रत्ययः । तयोरुपरि निपेतुः पतिताः ॥ ४

२। वाच्यान्तरम् । लब्धवर्णभाजा सलक्ष्मणः सः मुनये दिदिशे । मुनये सम्प्रदाने चतुर्थी । दिदिशेत्यत्र दिशधातुः दानार्थे एव प्रयुज्यते अन्यथा मल्लिनाथस्य अतिसृष्टवानिति-व्याख्या वृथा स्यात् । विचारः । ननु दशरथस्य विश्वामित्राय रामलक्ष्मणयोर्दानं कथं सम्भवेत् ? स्वस्वत्वध्वंसपूर्व्वकं परस्वत्वोत्पादनं दानं । किमिदं लक्षणमत्र सङ्गच्छते ? चेन्न, तर्हि का विरक्ति वद । सत्यं । अत्र दानस्येयं सार्थकता यत् भावि परिणय उद्दिश्य सीतायै ऊर्म्मिलायै च तयोर्दानं युक्तं, चेत् तत् तर्हि कथं मुनये सम्प्रदानं भवति ? सत्यं । विवाह घटकाय कन्यापक्षः वरपक्षश्च स्वमभिप्रायं ददाति न वराय कन्यायै वा इति शेषः ।

३। वाच्यान्तरम् । पार्थिवेन पुरमार्ग-संस्क्रिया आदिश्यते, मरुत्सखाः सपुष्पजलवर्षिणो घनाः तां विदधिरे । तयोः कर्त्तरि षष्ठी, निर्गमाय चतुर्थी निमित्तार्थं । संस्क्रियां कृधातोः शप्रत्ययेन सिद्धं "सपर्य्युपात् कृञः समवर्षणे" इति सूत्रेण सुडागमो जातः ।

४। वाच्यान्तरम् । ताभ्यां निदेश करणोद्यताभ्यां धन्विभ्यां चरणयोः निपेते । विन्दुभिः निपेते । अनेन परस्परस्य पितृवात्सल्यं पुत्रवात्सल्यञ्च शोभते ।

तौ पितुर्नयनजेन वारिणा किञ्चिदुच्चितशिखण्डकावुभौ।
धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ॥ ५
लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः।
आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा॥ ६
मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः।
रेजतुर्गतिवशात् प्रवर्त्तिनौ भास्करस्य मधुमाधवाविव॥ ७

अन्वयः। पितुः नयनजेन वारिणा किञ्चित् उच्चितशिखण्डकौ धन्विनौ [illegible] पौरदृष्टिकृतमार्गतोरणौ (सन्तौ) तम् ऋषिम् अन्वगच्छताम्॥ ५

अन्वयः। ऋषिः लक्ष्मणानुचरम् एव तम् राघवम् नेतुम् ऐच्छत् इति [illegible] आशिषम् प्रयुयुजे, वाहिनीम् न, हि सा (एव) तयोः रक्षणविधौ क्षमा॥ ६

अन्वयः। मातृवर्गचरणस्पृशौ तौ महौजसः मुनेः पदवीम् प्रपद्य (तौ) भास्करस्य गतिवशात् प्रवर्त्तिनौ मधुमाधवौ इव रेजतुः॥ ७

पितुर्नयनजेन वारिणा किञ्चिदुच्चितशिखण्डकावीषत्सिक्तचूड़ौ। "शिखा चूड़ा [illegible] स्यात्" इत्यमरः। "शेषाद्विभाषा" इति कप्प्रत्ययः। धन्विनौ तावुभौ पौरदृष्टि[illegible] मार्गतोरणानि सम्पाद्यानि कुवलयानि यथोस्तौ तथोक्तौ संघशो निरीक्ष्यमाणौ [illegible] तमृषिमन्वगच्छताम्॥ ५

ऋषिर्लक्ष्मणानुचरमेव लक्ष्मणमात्रानुचरं तं राघवम् नेतुमैच्छदिति हेतो[illegible] आशिषम् प्रयुयुजे प्रयुक्तवान्। वाहिनीं सेनां न प्रयुयुजे न प्रेषितवान्। हि [illegible] आशीरेव तयोः कुमारयोः रक्षणविधौ क्षमा शक्ता॥ ६

मातृवर्गस्य चरणान् स्पृशत इति मातृवर्गचरणस्पृशौ कृतमातृवर्गनमस्कारौ [illegible] "स्पृशोऽनुदके क्विन्" इति क्विन्प्रत्ययः। तौ महौजसः मुनेः पदवीं प्रपद्य [illegible] भास्करस्य गतिवशात् मेषादिराशिसंक्रान्त्यनुसारात् प्रवर्त्तिनौ मधुमाधवाविव चैत्र[illegible] रेजतुः। "फणाञ्च सप्तानाम्" इति वैकल्पिकावेत्वाभ्यासलोपः। "स्याच्चैत्रे चैत्रि[illegible] इति। "वैशाखे माधवो राधः" इति चामरः॥ ७

५। वाच्यान्तरम्। ताभ्यां किञ्चिदुच्चितशिखण्डकाभ्यां उभाभ्यां धन्वि[illegible] दृष्टिकृतमार्गतोरणाभ्यां स ऋषिरन्वगम्यत। वारिणा तृतीया अनुक्ते कर्त्तरि।

६। वाच्यान्तरम्। ऋषिणा लक्ष्मणानुचरं राघवं नेतुं इष्यते। अमुना [illegible] प्रयुयुजे न वाहिनी प्रयुयुजे।

७। वाच्यान्तरम्। मातृवर्गचरणस्पृग्भ्यां प्रवर्त्तिभ्यां मधुमाधवाभ्यामिव [illegible] समन्वयः। भास्करेण सह मुनेः मधुमाधवाभ्यां तयोरौपम्य जायते। [illegible] श्रेयं। गतिवशात् हेतौ पञ्चमी। श्रौत्युपमा यथा—श्रौती यथैव-वाशब्दा [illegible] यदिति।

वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमप्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम् ॥ ८

तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्त्तिनाविव ॥ ९

पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ १०

अन्वयः । वीचिलोलभुजयोः तयोः चपलम् अपि गतम् शैशवात् तोयदागमे उद्ध्यभिद्ययोः नामधेयसदृशम् इव अशोभत ॥ ८

अन्वयः । मणिकुट्टिमोचितौ मुनिप्रदिष्टयोः बलातिबलयोः विद्ययोः प्रभावतः मातृपार्श्वपरिवर्त्तिनौ इव पथि न मम्लतुः ॥ ९

अन्वयः । वाहनोचितः सानुजः राघवः पुराविदः पितृसखस्य पूर्ववृत्तकथितैः उह्यमानः इव पादचरम् अपि न व्यभावयत् ॥ १०

वीचिलोलभुजयोस्तरङ्गचञ्चलबाह्वोः । इदं विशेषणं नदीपमानसिद्ध्यर्थं वेदितव्यम् । चापलं चञ्चलमपि गतं गतिः शैशवाद्धेतोरशोभत । किमिव तोयदागमे वर्षासमये । उदकमत्युद्ध्यः भिनत्ति कूलमिति भिद्यः । "भिद्योद्ध्यौ नदे" इति क्यबन्तौ निपातौ । उद्ध्यभिद्ययोर्नदविशेषयोर्नामधेयसदृशं नामानुरूपं विचेष्टितमिव । उदकोज्झनकूलभेदनव्यापार इव तयोरुत्पन्नं चापलमपि शोभत इति भावः ॥ ८

मणिकुट्टिमोचितौ मणिबद्धभूमिसञ्चारोचितौ तौ मुनिप्रदिष्टयोः कौशिकेनोपदिष्टयोः बलातिबलयोर्विद्ययोर्बलातिबलाख्ययोर्मन्त्रयोः प्रभावतः सामर्थ्यात् मातृपार्श्वपरिवर्त्तिनौ मातृसमीपवर्त्तिनाविव पथि न मम्लतुः । न ग्लानावित्यर्थः । अत्र रामायणश्लोकः—"क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलाञ्चैव पठतः पथि राघव" इति ॥ ९

वाहनोचितः सानुजो राघवः । पुराविदः पूर्ववृत्ताभिज्ञस्य पितृसखस्य मुनेः पूर्ववृत्त-

८। वाच्यान्तरम् । गतेन चपलेन विचेष्टितेन इव अशुभ्यत । तयोः कर्त्तरि षष्ठी । शैशवात् हेतौ पञ्चमी उद्ध्यभिद्ययोः कर्त्तरि षष्ठी । समन्वयः । उद्ध्यभिद्याभ्यां तयोः विचेष्टितस्य सह गतस्य औपम्यं युज्यते । अलङ्कारः पूर्ववदेव । वीचिवत् तरङ्गतुल्यौ लोलौ चञ्चलौ भुजौ ययोः तयोरिति बहुव्रीहिः ।

९। वाच्यान्तरम् । मणिकुट्टिमोचिताभ्यां मातृपार्श्वपरिवर्त्तिभ्यां न मम्ले । प्रभावतः हेतौ पञ्चमी । समन्वयः । पथा सह मातृपार्श्वस्य साम्यम् । अलङ्कारः श्रौती उपमा । चतुरः बालकाः मातुः पार्श्वात् अन्यस्मिन् पार्श्वे गत्वा यथा बालकाः न क्लिश्यन्ते तथा तौ तावन्तं दीर्घस पन्थानं अतिक्रम्य मन्त्रबलेन नाक्लिश्यतामिति भावः । तुल्ययोगी श्लोकौ यथा भट्टौ । "रामस्य यामथैनं विजयां जयाञ्च रक्षोगणम् क्षिप्नुमविक्लतात्मा । अध्यापिपद्गाधिसुतो यथावन्निघातयिष्यन् युधि यातुधानानिति" ।२ २१

१०। वाच्यान्तरम् । वाहनोचितेन सानुजेन राघवेण उह्यमानेन इव, पादचारोऽपि

तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्त्रिणः ।
वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे ॥ ११ ॥

नाम्भसां कमलशोभिनां तथा शाखिनाञ्च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्म्मणा ॥ १३ ॥

अन्वयः । सरांसि रसवद्भिः अम्बुभिः पतत्त्रिणः श्रुतिसुखैः कूजितैः, वायवः पुष्परेणुभिः, जलदाः च छायया तौ सिषेविरे ॥ ११ ॥

अन्वयः । तपस्विनः तयोः उभयोः लघुना दर्शनेन यथा प्रीतिम् आपुः शोभिनाम् अम्भसाम् दर्शनेन तथा न, परिश्रमच्छिदाम् शाखिनाम् दर्शनेन च (प्रीतिम् आपुः) ॥ १२ ॥

अन्वयः । सः आत्तकार्मुकः दाशरथिः स्थाणुदग्धवपुषः मदनस्य तपोवनं चारुणा विग्रहेण प्रतिनिधिः अभवत् कर्म्मणा न ॥ १३ ॥

कथितैः पुरावृत्तकथाभिरुह्यमान इव वाहनेन प्राप्यमाण इव । वहेर्धातोः कर्मणि 'उह्यमानः' इत्यत्र दीर्घादिरपपाठः दीर्घप्राप्त्यभावात् । पादचारमपि न ज्ञातवान् ॥ १० ॥

तौ राघवौ कर्म्मभूतौ सरांसि कर्तृणि रसवद्भिर्मधुरैरम्बुभिः सिषेविरे । पत्त्रिणः । सुखयन्तीति सुखानि । पचाद्यच् । श्रुतीनां सुखानि । तैः कूजितैः सुरभिपुष्परेणुभिः । जलदाश्छायया च । सिषेविरे इति सर्व्वत्र सम्बध्यते ॥ ११ ॥

तप एषामस्तीति तपस्विनः । 'तपःसहस्राभ्यां विनीनी' इति विनिप्रत्ययः । "विशिष्टेऽल्पे लघुः" इत्यमरः । तयोरुभयोः कर्म्मभूतयोः दर्शनेन यथा प्रीतिमापुः कमलशोभिनामम्भसां दर्शनेन नापुः । परिश्रमच्छिदां शाखिनां दर्शनेन च नापुः ।

स आत्तकार्मुकः । दशरथस्यापत्यं पुमान् दाशरथिः रामः । "अत इञ्" (आत्मा वा स्वयमितिशेषः) न व्याभाव्यत । पूर्व्ववृत्तकथितैः अनुक्ते कर्तरि कथितैरित्यत्र भावे क्तः सकर्मकाद्धातोर्भावेऽपि हि प्रत्यये कर्म्मसम्बन्धी भवत्येवेति वाच्योऽत्र चालङ्कारः यथा—वाच्येवादि प्रयोगे स्यादप्रयोगे परः पुनः ।

११ । वाच्यान्तरम् । सरोभिः पतत्रिभिः वायुभिः जलदैश्च तौ सिषेवाते । कूजितः रेणुभिः छायया च सर्व्वत्र करणे तृतीया ।

१२ । वाच्यान्तरम् । तपस्विभिः प्रीतिरापे । दर्शनेन तृतीया करणे, कर्त्तरि । विशिष्टेऽल्प लघु वाचाः शिक्यसदृशेदङ्गुरुज इत्यमरः । लघुत्वीवेऽगुरौ विभु । निःसारे च मनोज्ञे च पृक्कायाञ्च लघुस्त्रियामिति रसः ।

१३ । वाच्यान्तरम् । तेन प्रतिनिधिना अभूयत । पुरा किल भगवता अनुरुध्यमानः कामः महायोगिनः शिवस्य समाधिसंहाराय रतिदेव्या सहवर्ती

तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि।
निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्यताम्॥ १४
ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाच्छविः।
ताड़का चलकपालकुण्डला कालिकेव निविड़ा बलाकिनी॥ १५

अन्वयः। कौशिकात् विदितशापया सुकेतुसुतया पथि खिलीकृते तौ स्थल-
वेशिताटनी धनुषी लीलया एव अधिज्यताम् निन्यतुः॥ १४
अन्वयः। अथ तयोः ज्यानिनादं गृह्णती बहुलक्षपाच्छविः चलकपालकुण्डला
ड़का निविड़ा बलाकिनी कालिका इव प्रादुरास॥ १५

यः। स्थाणुर्हरः "स्थाणुः कीले हरे स्थिरे" इति विश्वः। तेन दग्धवपुषो मदनस्य तपो-
प्राप्य चारुणा विग्रहेण कायेन। "विग्रहः समरे काये" इति विश्वः। प्रतिनिधिः
कृतिः सदृशः अभवत्, कर्म्मणा न पुनः देहेन मदनसुन्दर इति भावः॥ १३

अथ रामायणवचनम्—"अगस्त्यः परमः क्रुद्धस्ताड़कामभिशप्तवान्। पुरुषादी महायक्षी
कृता विकृतानना। इदं रूपमपहाय दारुणं रूपमस्तु ते॥" इति। तदेतदाह—विदित
पयेति। कौशिकादाख्यातुः। "आख्यातोपयोगे" इत्यपादानात् पञ्चमी। विदितशापया
तुसुतया ताड़कया खिलीकृते पथि। "खिलमप्रहतं स्थानम्" इति हलायुधः। तौ
लक्ष्मणौ। स्थले निवेशिते अटनी धनुःकोटी याभ्यां तौ तथोक्तौ। "कोटिरस्याटनिः"
मरः। लीलयैव धनुषी। अधिकृते ज्ये मौर्व्यौ ययोस्ते अधिज्ये। "ज्या मौर्वी मातृ-
मु" इति विश्वः। तयोर्भावस्तत्तामधिज्यतां निन्यतुर्नीतवन्तौ। नयतेर्द्विकर्म्मकः॥ १४
अथ तयोर्ज्यानिनादं गृह्णती जानती शृण्वतीत्यर्थः। बहुलक्षपाच्छविः कृष्णपक्षराात्रि-
र्। "बहुलः कृष्णपक्षे च" इति विश्वः। चले कपाले एव कुण्डले यस्याः सा तथोक्ता
का। निविड़ा सान्द्रा बलाकिनी बलाकावती। 'व्रीह्यादिभ्यश्च' इतीनिः। कालि-
तुप्रस्थं गत्वा शिवस्य भावनेनसमुद्भवेन वह्निना आत्मानं भस्मीचकार इति पौराणिकी
अनुसन्धेया। विचारः। ननु प्रतिनिधिशब्देन तृतीया, षष्ठीवाव समाकृष्यते? तत्
सङ्गच्छते। सत्यं तुल्यार्थवाचित्वात् युक्तम् तृतीया सर्व्वत्र प्रतिनिधियोगे भवति॥१५
१४। वाच्यान्तरम्। ताभ्यां स्थलनिवेशिताटनी धनुषी अधिज्यता निन्ये। विदित-
पया, सुकेतुसुतया तृतीया अनुक्ते कर्त्तरि। लीलया प्रकृत्यादिभ्यस्तृतीया। उत्प्र चा-
कारः।

१५। वाच्यान्तरम्। ज्यानिनादं गृह्णत्या, बहुलक्षपाच्छव्या, चलकपालकुण्डलया-
निविड़या, बलाकिन्या, कालिकयेव, ताड़कया प्रादुरासे। समन्वयः। निविड़या बलाकिन्या
चलकपालकुण्डलायाः साम्यं। कालिकया सह बहुलक्षपाच्छवेः साम्यं। ज्यानिनादेन
कस्य मेघगर्जनस्य साम्यं ज्ञेयम्। अलङ्कारोऽत्र श्रौती उपमा लक्षणमस्य पूर्व्वं-
म्। विचारः। ननु प्रादुरासेत्यत्र कथं न भूरादेशो भवति? "अस्तिब्रुवोर्भुवची"

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६ ॥
उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥ १७ ॥

अन्वयः । तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया तया पितृकाननोत्थया वात्यया इव भरताग्रजः अभ्यभावि ॥ १६

अन्वयः । राघवः उद्यतैकभुजयष्टिम् श्रोणिलम्बिपुरुषान्त्रमेखलाम् ताम् विलोक्य पत्रिणा सह वनितावधे घृणाम् मुमोच ॥ १७

कैव घनावलीव । "कालिका योगिनीभेदे कार्ष्ण्यां गौर्य्यां घनावलौ" इति विश्वः। रास प्रादुर्बभूव ॥ १५

तीव्रवेगेन धूताः कम्पिता मार्गवृक्षा यया तयोक्तया । प्रेतचीवराणि वसनं यस्याः चीवरवाः तया प्रेतचीवरवसा । वसतेराच्छादनार्थात् क्विप् । स्वनेन हिंस्रनादेन तया ताड़कया । पितृकानने श्मशाने उत्था उत्पन्ना । 'आतश्चोपसर्गे' इत्युत्पूर्वात् कर्त्तरि कप्रत्ययः । तया वात्ययेव वातसमूहेनेव । "पाशादिभ्यो यः" इति यः। अग्रजो रामोऽभ्यभावि अभिभूतः । कर्मणि लुङ् । तीव्रवेगेत्यादिविशेषणानि उभयत्र योज्यानि ॥ १६

उद्यतोन्नमितैको भुज एव यष्टिर्यस्यास्ताम् । आयतीमायान्तीम् । इणो शतरि "उगितश्च" इति ङीप् । श्रोणिलम्बिनी पुरुषाणामन्त्राण्येव मेखला यस्यास्ताम्। विशेषणद्वयेनाप्याततायित्वं सूचितम् । अतएव तां विलोक्य राघवो वनितावधे घृणां मुमोच । ...लट्प्रभृतेष्वतुर्लकारादन्यत्र अस्ते भूरादेशः विहितोऽस्ति । तर्हि कथं प्रादुर्बभूवेति चिन्त्यम् । प्रादुरासीत्यत्र अदादिकस्य अस्तेः प्रयोगो न भवति, तु दीप्त्यर्थस्य अस्तेः ग्रहणं ज्ञेयमिति ।

१६ । वाच्यान्तरम् । तीव्रवेगधूतमार्गवृक्षा, प्रेतचीवरवाः, स्वनोग्रा, पितृकाननोत्था वात्येव सा, भरताग्रजं अभ्यभूत् । सर्व्वत्रैव तृतीया अनुक्ते कर्त्तरि । समस्तपितृकाननोत्थया वात्यया सह प्रेतचीवरवससः स्वनोग्रायाः साम्यम । अन्यत् सुगमं । श्रौती उपमा । विचारः । ननु कथमत्र पूर्णोपमालङ्कारो न युज्यते, यतो वात्यायां उपमेयायाः ताड़कायाः साधारणधर्म्मसमागमादिति । तन्न युक्तम् । अवयवशून्यया वात्यया सह मूर्त्तिमत्याः ताड़कायाः साधारणधर्म्मस्य महत् वैलक्षण्यात् विशेषणानां कथा दुरापास्तां । ननु श्लिष्टोपमायाः सङ्गतिरत्र न कथं भवेत्! आरोपाभावादिति ।

१७ । वाच्यान्तरम् । राघवेण पत्रिणा सह, वनितावधे घृणा मुमुचे । ... गिय पत्रमोचनात् अभेदाध्यवसायमूलोऽलङ्कारोऽत्र सहोक्तिः यथा—सहार्थस्य ...

यच्चकार विवरं शिलाघने ताड़कोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १८

बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम् ।
विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १९

अन्वयः। सः रामसायकः शिलाघने ताड़कोरसि यत् विवरं चकार तत् रक्षसाम् अप्रविष्टविषयस्य अन्तकस्य द्वारताम् अगमत् ॥ १८

अन्वयः। सा बाणभिन्नहृदया निपेतुषी सती केवलाम् स्वकाननभुवम् न व्यकम्पयत् (किन्तु) विष्टपत्रयपराजयस्थिराम् रावणश्रियम् अपि (व्यकम्पयत्) ॥ १९

निमित्ते घृणां जुगुप्सां करुणां वा। "जुगुप्साकरुणे घृणे" इत्यमरः। पत्त्रिणा इषुणा सह। "पत्री रोप इषुर्द्वयोः" इत्यमरः। मुमोच मुक्तवान्। आततायिवधे मनुः—"आततायिनमायान्तं हन्यादेवाविचारयन्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥" इति ॥ १७

सः रामसायकः शिलावद्घने सान्द्रे ताडकोरसि यद्विवरं रन्ध्रं चकार तद्विवरं रक्षसामप्रविष्टविषयस्य अप्रविष्टरक्षोदेशस्येत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति विश्वः। अन्तकस्य यमस्य द्वारतामगमत्। इयं प्रथमा रक्षोमृतिरिति भावः ॥ १८

बाणभिन्नहृदया निपेतुषी निपतिता सती। "क्वसुश्च" इति क्वसुप्रत्ययः। "उगितश्च" इति ङीप्। सा केवलामेकाम्। "निर्णीते केवलमिति। त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। स्वकाननभुवं न व्यकम्पयत्। किन्तु विष्टपत्रयस्य लोकत्रयस्य पराजयेन स्थिरां रावणश्रियमपि व्यकम्पयत् ताड़कावधश्रवणेन रावणस्यापि भयमुत्पन्नमिति भावः ॥ १९
स्यात् वाचकं द्वयोः। सासहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्। पत्त्रिणा सहयोगे तृतीया।

१८। वाच्यान्तरम्। रामसायकेन विवरम् चक्रे। तेन द्वारता अगमि। अत्र प्रस्तुते विवरे अप्रस्तुतवस्तुनः द्वारतायाः व्यवहारसमारोपणात् प्रवेशकार्यस्य साम्यलाच्च समासोक्त्यलङ्कारोऽत्र युज्यते तद्यथा—समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः। अन्तयति यः स अन्तकः।

१९। वाच्यान्तरम्। बाणभिन्नहृदयया निपेतुष्या तया केवला स्वकाननभूः न, विष्टपत्रयपराजयस्थिरा, रावणश्रीः अपि व्यकम्प्यत। अत्र ताड़कायाः पतनेन रावणश्रियः कम्पनस्य स्वरूपकथनेतरत्वात् प्रतीयमानोत्प्रेक्षालङ्कारोऽत्र व्यज्यते।

राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २०
नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ।
ज्योतिरिन्धननिपाति भास्करात् सूर्य्यकान्त इव ताड़कान्तकः ॥ २१

अन्वयः । सा निशाचरी दुःसहेन राममन्मथशरेण हृदये ताड़िता गन्धवद्रुधिरचन्दनोक्षिता ( सती ) जीवितेशवसतिं जगाम ॥ २०

अन्वयः । अथ ताड़कान्तकः अवदानतोषितात् मुनेः नैर्ऋतघ्नम् मन्त्रवत् अस्त्रम् सूर्य्यकान्तः भास्करात् इन्धननिपाति ज्योतिः इव प्रापत् ॥ २१

अत्र ताड़कायां अभिसारिकायाः समाधिरभिधीयते—सा । निशासु चरतीति निशाचरी राक्षसी अभिसारिका च । दुःसहेन सोढुमशक्येन, राम एव मन्मथः ! अन्यत्र रामः मन्मथः । तस्य शरेण हृदये उरसि मनसि च । "हृदयं मनउरसोः" इति विश्वः । ताड़िता विद्धाङ्गा गन्धवद्दुर्गन्धि यद्रुधिरमसृक् तदेव चन्दनं तेन उक्षिता सिक्ता । अन्यत्र गन्धवती सुगन्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्यामुक्षिता । "रुधिरं कुङ्कुमासृजोः" इत्युभयत्रापि विश्वः । जीवितेशस्यान्तकस्य प्राणेश्वरस्य च वसतिं जगाम ॥ २०

अथानन्तरं ताड़कान्तको रामः । अवदानं पराक्रमः । "पराक्रमोऽवदानं स्यात्" इति भागुरिः । तेन तोषितान्मुनेः । नैर्ऋतान् राक्षसान् हन्तीति नैर्ऋतघ्नम् । "अमनुष्यकर्तृके च" इति ठक् । मन्त्रवत् मन्त्रयुक्तमस्त्रम् । सूर्य्यकान्तो मणिविशेषो भास्करात् । इन्धनं निपातयतीतीन्धननिपाति काष्ठदाहकं ज्योतिरिव प्रापत् प्राप्तवान् ॥ २१

२० । वाच्यान्तरम् । ताड़ितया, गन्धवद्रुधिरचन्दनोक्षितया. तया, निशाचर्या जीवितेशवसतिः जग्मे । अत्र राम मन्मथः, रुधिरचन्दनोक्षितेत्यत्र रामे मन्मथस्यारोपात् रुधिरे चन्दनस्यारोपणात् च रूपकालङ्कारः । दुःसहेन. गन्धवत्, जीवितेश इत्यादिषु पदेषु श्लेषात् अर्थश्लेषोऽलङ्कारः अस्टीकृतः, तयोरङ्गाङ्गिभावेन सङ्करः । विचारः । ननु राममन्मथशरेणेत्यादौ उपमेयस्य आधिक्यात्, गन्धवद्रुधिरचन्दनमित्यत्र उपमानस्य न्यूनत्वात् च गन्धवत्-जीवितेत्यादौ अर्थयोः श्लिष्टत्वात् न कथं व्यतिरेकालङ्कारः ? सत्यं । रूपकवशेन वतरयेन व्यतिरेकस्य शक्तेरभावात् तन्न युक्तम् । ननु प्रस्तुते राम-शर-निहताया ताड़काया यमसदनगमने, अप्रस्तुतस्य मन्मथशरस्य, प्राणवल्लभस्य भवनगमनरूप व्यवहारस्य समारोपात् न कथं समासोक्तिः ? सत्यं । कार्य्यलिङ्गविशेषणस्य वैयर्थ्याभावात् तन्न सङ्गच्छते ।

२१ । वाच्यान्तरम् । ताड़कान्तकेन सूर्य्यकान्तेन इव । इन्धनानिपाति ज्योतिः मन्त्रवत्, नैर्ऋतघ्नं अस्त्रं प्रापि । अवदानतोषितात् मुनेः, भास्कराच्च पञ्चमी श्रौत्युपमा । समन्वयः । भास्करेण सह अवदानतोषितस्य मुनेः साम्यं । इन्धननिपातिना ज्योतिषा सह. मन्त्रवदस्त्रस्य साम्यं । सूर्य्यकान्तेन सार्द्धं ताड़कान्तकस्य वर्त्तते ।

वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् ।
उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः ॥ २२
आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम् ।
बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २३
तत्र दीक्षितमृषिं ररक्षतुर्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात् क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥ २४

अन्वयः । ततः परम् राघवः ऋषेः श्रुतम् पावनम् वामनाश्रमपदम् उपेयिवान् (सन्) प्रथमजन्मचेष्टितानि अस्मरन् अपि उन्मनाः बभूव ॥ २२

अन्वयः । ततः मुनिः शिष्यवर्गपरिकल्पितार्हणम् बद्धपल्लवपुटाञ्जलिद्रुमम् दर्शनोन्मुखमृगम् आत्मनः तपोवनम् आससाद ॥ २३

अन्वयः । तत्र दशरथात्मजौ दीक्षितम् ऋषिम् शरैः विघ्नतः क्रमोदितौ शशिदिवाकरौ रश्मिभिः अन्धतमसात् लोकम् इव ररक्षतुः ॥ २४

ततः परं राघवः । ऋषेः कौशिकादाख्यातुः श्रुतं पावनं शोधनं वामनस्य स्वपूर्वावतारस्याश्रमपदमुपेयिवान् उपगतः सन् । "उपेयिवाननाश्वाननूचानश्च" इति निपातः । प्रथमजन्मचेष्टितानि रामवामनयोरैक्यात स्मृतियोग्यान्यपि रामस्याज्ञानावतारत्वेन संस्कारदौर्बल्यादस्मरन्नपि उन्मना उत्सुको बभूव ॥ २२

ततो मुनिः । शिष्यवर्गेण परिकल्पिता सज्जिता अर्हणा पूजासामग्री यस्मिं स्तत्तथोक्तम् । बद्धाः पल्लवपुटाः एव अञ्जलयो येस्ते तथाभूता द्रुमा यस्मिंस्तत्तथोक्तम । दर्शनेन दर्शनेन उन्मुखा मृगा यस्मिंस्तत् आत्मनस्तपोवनमाससाद । एतेन विशेषणत्रयेणा-तिथिसत्कारताच्छील्यविनयशान्तयः सूचिताः ॥ २३

तत्रैव तपोवने दशरथात्मजौ दीक्षितं दीक्षासंस्कृतमृषिं शरैर्विघ्नतो विघ्नेभ्यः । क्रमेण रात्रिंदिवमथोरुदितौ शशिदिवाकरौ रश्मिभिरन्धतमसाद्गाढध्वान्तात् । "ध्वान्ते

२२। वाच्यान्तरम् । उपेयुषा, अस्मरतापि उन्मनसा राघवेन बभूवे। ऋषेरपादाने पञ्चमी। उपेयिवान् उपपूर्वस्य इधातोः क्वसुप्रत्ययेन निपातनात् सिद्धम्। वामनस्य स्वात्मिको हानिः सुपसिद्धा । अन्ययोगः संग्राहकोऽपेरर्थः प्रतिभाति ।

२३। वाच्यान्तरम् । मुनिना शिष्यवर्गपरिकल्पितार्हणं, बद्धपल्लवपुटाञ्जलिद्रुमं, दर्शनोन्मुखमृगं तपोवनं आससेदे । तपोवनमितिपद केन सिद्ध, चेत तपसांवनम चतुर्थी- इत्यादिना षष्ठी समासेन, भेदभावात न सङ्गत तत । तपसे वनम इत्यादिना चतुर्थी-समासेन न सङ्गतं प्रकृत्यर्थाभावात् । तपःप्रधानं वनम्, इत्यादिना शाकपार्थिवादिः मध्यमपदलोपात् कर्मधारय एव युक्तः ।

२४। वाच्यान्तरम् । क्रमोदिताभ्यां शशिदिवाकराभ्यां अन्धतमसात् लोक इव, दशरथात्मजाभ्यां दीक्षितः ऋषिः ररक्षे । विघ्नतः पञ्चमी अपादाने, शरैः तृतीया करणे,

वीक्ष्य वेदिमथ रक्तविन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम् ।
सम्भ्रमोऽभवदपोढकर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५
उन्मुखः सपदि लक्ष्मणाग्रजो वाणमाश्रयमुखात् समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २६
तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत् स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुड़ः प्रवर्त्तते ॥ २७

अन्वयः। अथ बन्धुजीवपृथुभिः रक्तविन्दुभिः प्रदूषिताम् वेदिम् वीक्ष्य अपोढकर्मणा
च्युतविकङ्कतस्रुचाम् ऋत्विजाम् सम्भ्रमः अभवत् ॥ २५

अन्वयः। सपदि लक्ष्मणाग्रजः आश्रयमुखात् वाणम् समुद्धरन् उन्मुखः सन्
गृध्रपक्षपवनेरितध्वजम् रक्षसाम् बलम् अपश्यत ॥ २६

अन्वयः। सः ( रामः ) तत्र ( वने ) यौ मखद्विषाम् अधिपती तौ शरव्यम् अकरोत्
इतरान् न। महोरगविसर्पिविक्रमः गरुड़ः राजिलेषु प्रवर्त्तते किम् ? ॥ २७

गाढ़ेऽन्धतमसम्" इत्यमरः। "अवसमन्धेभ्यस्तमसः" इति समासान्तोऽच्प्रत्ययः। लोकानि
ररक्षतुः रक्षणप्रवृत्तावभूतामित्यर्थः ॥ २४

अथ बन्धुजीवपृथुभिर्बन्धुजीवकुसुमस्थूलैः। "रक्तकस्तु बन्धुजीवकः" इत्यमरः।
रक्तविन्दुभिः प्रदूषितामुपहतां वेदिं वीक्ष्य अपोढकर्मणां त्यक्तव्यापाराणाम्। च्युत-
विकङ्कतस्रुचो येभ्यस्तेषामृत्विजां याजकानां संभ्रमोऽभवत्। विकङ्कतग्रहणं खदिरादु-
पलक्षणम्। स्रुगादीनां खदिरादिप्रकृतिकत्वात्। स्रुगादिपात्रस्यैव विकङ्कतप्रकृतिकत्वम्।
तथाह भगवानापस्तम्बः—"खादिरस्रुचः पर्णमयीर्जुहुग्राहैकङ्कती: स्रुचो वा" इति ॥ २५

सपदि लक्ष्मणाग्रजो रामो वाणमाश्रयमुखात् तूणीरमुखात् समुद्धरन्। उन्मुखः
ऊर्द्ध्वमुखः अम्बरे गृध्रपक्षपवनेरीरिताः कम्पिता ध्वजा यस्य तत्तथोक्तम्। रक्षसां दुर्निमित्त-
सूचनमेतत्। तदुक्तं शकुनार्णवे—'आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्द्धि गृहोर्ध्वमार्गे'
इति। रक्षसां बलमपश्यत् ॥ २६

स रामस्तत्र रक्षसां बले यौ मखद्विषामधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यमकरोत्।
अभ्यतमस्मात् पञ्चमी अपादाने, रश्मिभिः करणे द्वयोर्वा। समन्वयः। शशिदिवाकरयोः
सह दशरथात्मजयोः, रश्मिभिः सह शराणाम्, अन्धतमसेन सह विघ्नस्य, लोकेन सह
सारूप्यमिति।

२५। वाच्यान्तरम्। संभ्रमेण अभूयत। रक्तविन्दुभिः अनुक्ते कर्त्तरि तृतीया,
ऋत्विजः, षष्ठी सम्बन्धे।

२६। वाच्यान्तरम्। लक्ष्मणाग्रजेन रामेण वाणं समुद्धरता उन्मुखेन अम्बरे
गृध्रपक्षपवनेरितध्वजं बलम् अदृश्यत। आश्रयमुखात् पञ्चमी अपादाने, रक्षसां षष्ठी
सम्बन्धे।

२७। वाच्यान्तरम्। तेन तौ शरव्यम् अक्रियेताम्। महोरगविसर्पिविक्रमेण ग-

सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत् पाण्डुपत्रमिव ताड़कासुतम् ॥ २८
यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २९

अन्वयः । अस्त्रकोविदः सः उग्रजवम् वायुदैवतम् अस्त्रम् धनुषि सन्दधे । तेन शैलगुरुम् अपि ताड़कासुतम् पाण्डुपत्रम् इव अपातयत् ॥ २८

अन्वयः । सुबाहुः इति यः अपरः राक्षसः तत्र तत्र मायया विससर्प ; क्षुरप्रशकलीकृतं तं कृती आश्रमात् बहिः पत्रिणाम् व्यभजत् ॥ २९

...शं लक्ष्यं शरव्यञ्च' इति हलायुधः । इतरान्नाकरोत् । तथाहि—महोरगविसर्पिविक्रमो ...ड़ गरुत्मान् राजिलेषु जलव्यालेषु प्रवर्त्तते किम् ? न प्रवर्त्ततइत्यर्थः "अलगर्दो जलव्यालः ...ौ राजिलडुण्डुभौ" इत्यमरः ॥ २७

अस्त्रकोविदोऽस्त्रज्ञः स रामः उग्रजवमुत्कटजवं वायुदैवतं वायुर्दैवतं यस्य तद्वायव्यमस्त्रं ...षि सन्दधे संहितवान् । कर्त्तरि लिट् । तेनास्त्रेण शैलवद्‌ गुरुमपि ताड़कासुतं ...रीचम्, पाण्डुपत्रमिव परिणतपर्णमिवेत्यर्थः । अपातयत् पातितवान् ॥ २८

सुबाहुरिति योऽपरो राक्षसस्तत्र तत्र मायया सम्बरविद्यया विससर्प सञ्चचार । क्षुरप्रैः ...कलीकृतं तं सुबाहुं कृती कुशली रामः । 'कृती च कुशलः समौ" इत्यमरः । आश्रमा-...हिः पत्रिणां पक्षिणाम् । 'पक्षिणौ शरपक्षिणौ' इत्यमरः । व्यभजत् विभज्य दत्त-...नित्यर्थः ॥ २९

...व प्रतीयते । शरव्यमित्यत्र विधेयप्राधान्यात् नपुंसकत्वं,न तु कृधातुः द्विकर्म्मको भवति । ...स पूर्व्वार्द्धपरार्द्धयोः साम्यगम्ययोः सामान्येन एकधर्म्माभिभूतत्वात् प्रतिवस्तूपमालङ्कारोऽत्र ...ीयते । तद्यथा—प्रतिवस्तूपमा सा स्यात् वाक्ययोः गम्यसाम्ययोः । एकोऽपि धर्म्मः ...मान्यः यत्र निर्द्दिश्यते पृथक् ॥ समन्वयः । गरुड़ेन सह रामस्य, राजिलेभ्यः इतरयोः ...सुजङ्गयोः साम्यं तौ स्पृष्टौ इति ।

२८ । वाच्यान्तरम् । तेन अस्त्रकोविदेन उग्रजवं वायुदैवतम् अस्त्रम् सन्दधे, शैल-...रः ताड़कासुतः पाण्डुपत्रमिव अपात्यत । तेन तृतीया करणे । श्रौती उपमा । ...न्वयः । पाण्डुपत्रेण सह शैलगुरोः ताड़कासुतस्य साम्यं ज्ञेयम् ।

२९ । वाच्यान्तरम् । सुबाहुना इति अपरेण राक्षसेन विससृपे ; कृतिना क्षुरप्रशक-...ीकृतः स व्यभज्यत । मायया तृतीया करणे, पत्रिणां सम्बन्धे षष्ठी, आश्रमात् बहिस् ...योगे पञ्चमी । तत्र तत्र वीप्सार्थे द्वित्वम् । तत्र तत्र इत्यादौ तद्‌शब्देन आकाङ्क्षमाणो ...सङ्गो अस्ति न वा, चेदस्ति तर्हि कुत्र ? यत्र यत्र रामस्तं आक्रमितुं ऐयेष इत्यनेन यद्-...शब्देन आकाङ्क्षानिवृत्तिः ।

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्त्तयन् क्रियाः ॥ ३०

तौ प्रणामचलकाकपक्षकौ भ्रातराववभृथाप्लुतो मुनिः ।
आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१

तं न्यमन्त्रयत संभृतक्रतुर्मैथिलः स मिथिलां व्रजन् वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ ३२

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३

अन्वयः । ऋत्विजः इति अपास्तमखविघ्नयोः तयोः सांयुगीनम् विक्रमम् अभिन[न्द्य]
वाग्यतस्य कुलपतेः क्रियाः यथाक्रमम् निरवर्तयन् ॥ ३०

अन्वयः । अवभृथाप्लुतः मुनिः प्रणामचलकाकपक्षकौ तौ भ्रातरौ आशिषामनु[पदम्]
दर्भपाटिततलेन पाणिना समस्पृशत् ॥ ३१

अन्वयः । संभृतक्रतुः मैथिलः तम् न्यमन्त्रयत, वशी सः मिथिलाम् व्रजन् तद्[धनुः]
श्रवणजं कुतूहलम् बिभ्रतौ राघवौ अपि निनाय ॥ ३२

अन्वयः । गताध्वभिः तैः सायम् शिवेषु आश्रमतरुषु वसतिः अगृह्यत येषु दीर्घत[पसः]
परिग्रहः वासवक्षणकलत्रतां ययौ ॥ ३३

इत्यपास्तमखविघ्नयोस्तयोः राघवयोः, संयुगे रणे साधुः सांयुगीनस्तम् । "प्रतिजनादि[भ्यः]
खञ्" इति खञ् प्रत्ययः । 'सांयुगीनो रणे साधुः' इत्यमरः । विक्रममभिनन्द्य, ऋत्वि[जो]
याज्ञिकाः । वाचि यतो वाग्यतो मौनी तस्य कुलपतेर्मुनिकुलेश्वरस्य क्रियाः क्रतु[कर्माणि]
यथाक्रमं निरवर्तयन्निष्पादितवन्तः ॥ ३०

अवभृथे दीक्षान्ते आप्लुतः स्नातो मुनिः । "दीक्षान्तोऽवभृथो यज्ञे" इत्य[मरः]
प्रणामेन चलकाकपक्षकौ चञ्चलचूडौ तौ भ्रातरावाशिषामनुपदमनन्तरम् दर्भपाटित[तलेन]
कुशक्षतान्तःप्रदेशेन पवित्रेणेत्यर्थः । पाणिना समस्पृष्टवान् सतोषादिति भावः ॥ ३१

संभृतक्रतुः संकल्पितसंसारः । मिथिलायां भवो मैथिलो जनकस्तं विश्वामित्रं न्यमन्त्र[यत]
आहूतवान् । वशी स मुनिर्मिथिलां जनकनगरीं व्रजंस्तस्य जनकस्य धनुःश्रवण[जं]
कुतूहलं बिभ्रतौ राघवौ अपि निनाय नीतवान् ॥ ३२

गताध्वभिस्तैस्त्रिभिः सायं शिवेषु रम्येष्वाश्रमतरुषु वसतिः स्थानम् अगृह्यत ।

३० । वाच्यान्तरम् । ऋत्विग्भिः क्रियाः निरवर्त्यन्त ।

३१ । वाच्यान्तरम् । अवभृथाप्लुतेन मुनिना प्रणामचलकाकपक्षकौ तौ भ्रा[तरौ]
समस्पृश्येताम् । पाणिना तृतीया करणे ।

३२ । वाच्यान्तरम् । सम्भृतक्रतुना मैथिलेन स न्यमन्त्र्यत । वशिना तेन मि[थिलां]
मिथिलां व्रजता कुतूहलं बिभ्रतौ राघवौ ( मिथिलां ) निन्याते ।

३३ । वाच्यान्तरम् । गताध्वानस्ते वसतिम् अगृह्णन् । परिग्रहेण वासवक्षणकल[त्रता]

प्रत्यपद्यत चिराय यत् पुनश्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥ ३४

राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्य्यया देहबद्धमिव धर्म्ममभ्यगात् ॥ ३५

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३६

अन्वयः। शिलामयी गौतमवधूः चारु वपुः चिराय पुनः यत् प्रत्यपद्यत, सः किल्बिषच्छिदाम् रामपादरजसाम् अनुग्रहः किल ॥ ३४

अन्वयः। जनकः जनेश्वरः राघवान्वितम् तम् मुनिम् उपस्थितम् निशम्य अर्थकाम-सहितम् देहबद्धम् धर्म्मम् इव सपर्य्यया अभ्यगात् ॥ ३५

अन्वयः। दिवः गाम् गतौ पुनर्वसू इव ( स्थितौ ) तौ विलोचनैः पिबताम् विदेहनगरीनिवासिनाम् मनः पक्ष्मपातम् अपि वञ्चनाम् मन्यते स्म ॥ ३६

...स्य दीर्घतपसो गौतमस्य परिग्रहः पत्नी । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः। अहल्येति यावत् । वासवस्येन्द्रस्य क्षणकलत्रतां ययौ ॥ ३३

शिलामयी भर्तृशापाच्छिलात्वं प्राप्ता गौतमवधूरहल्या चारु स्वं वपुश्चिराय पुनः प्रत्यपद्यत ...वती यत् । स किल्बिषच्छिदां पापहारिणाम् ; 'पापं किल्बिषकल्मषम्' इत्यमरः । रामपादरजसामनुग्रहः किल प्रसादः किलेति श्रूयते ॥ ३४

राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वर निशम्य । अर्थकामाभ्यां सहितं देवबद्धं बद्धदेहम् । मूर्तिमन्तमित्यर्थः । वाहिताग्न्यादित्वात् साधुः । धर्म्ममिव । सपर्य्यया अभ्यगात् प्रत्युद्गतवान् ॥ ३५

दिवः सुरवर्त्मनः आकाशात् । "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः । गां भुवं गतौ । ...। किल गौतमरूपिणा भगवता इन्द्रेण गौतमपत्नी अहल्या गृहीता । तत एव वासव-...कलत्रता युक्ता ।

३४। वाच्यान्तरम् । शिलामय्या गौतमवध्वा यत् प्रत्यपद्यत । किल प्रसिद्धार्थे । पुरा ...भगवान् गौतमः छद्मवेशिना इन्द्रेण सह स्वपत्न्या अहल्यायाः व्यभिचारम् अवगम्य ...न तावत् शीलामयी भूत्वा अस्मिन्नेव तिष्ठ, यावत् रामपादस्पर्शेण स्वं वपुः न प्राप्स्यसि इति शशाप ।

३५। वाच्यान्तरम् । जनेश्वरेण जनकेन अर्थकामसहितः देहबद्धः धर्म्म इव राघवा-...तः स मुनिः अभ्यगामि । सपर्य्यया तृतीया करणे । श्रौती अलङ्कारः । समन्वयः; ...। सह मुनेः, अर्थकामसहिताभ्यां राघवयोः साम्यं बोधव्यम् ।

३६। वाच्यान्तरम् । मनसा पक्ष्मपातोऽपि वञ्चना मन्यते स्म । वञ्चनामित्यत्र विधेये;

यूपवत्यवसिते क्रियाविधौ कालवित् कुशिकवंशवर्धनः।
रामामिष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव सः॥ ३७

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः।
स्वं विचिन्त्य च धनुर्दुरानमं पीड़ितो दुहितृशुल्कसंस्थया॥ ३८

अन्वयः। यूपवति क्रियाविधौ अवसिते (सति) कालवित् कुशिकवंशवर्धनः सः रामम् इष्वसनदर्शनोत्सुकम् मैथिलाय कथयाम्बभूव॥ ३७

अन्वयः। पार्थिवः प्रथितवंशजन्मनः शिशोः तस्य ललितम् वपुः वीक्ष्य, स्वम् दुरानमम् धनुः विचिन्त्य च दुहितृशुल्कसंस्थया पीड़ितः॥ ३८

"स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः। पुरं तन्नामकनच्चवाधिदैवते इव स्थितौ। तौ राघवौ विलोचनैः पिबताम्। अन्याखया पश्यतामित्यर्थः। विदेहनगरी मिथिला। तन्निवासिनां मनः वर्त्म पक्ष्मपातं निमिषमपि तद्दर्शनप्रतिबन्धकत्वादवचनां विडम्बनां मन्यते स्म मेने। 'लट् स्म' इति भूतार्थे लट्॥ ३६

यूपवति क्रियाविधौ कर्मानुष्ठाने क्रतावित्यर्थः। अवसिते समाप्ते सति, कालवित् अवसरज्ञः कुशिकवंशवर्द्धनः स मुनि रामम्। अस्यतेऽनेनेत्यसनम्। इषुणामसनमिष्वासनं चापम् तस्य दर्शने उत्सुकं मैथिलाय जनकाय कथयाम्बभूव कथितवान्॥ ३७

पार्थिवो जनकः। प्रथितवंशे जन्म यस्य तथोक्तस्य। एतेन वरसम्पत्तिरुक्ता शिशोस्तस्य रामस्य ललितं कोमलं वपुः वीक्ष्य, स्वं स्वकीयं दुरानममानमयितुमशक्यम्। नमेर्खल् धनुर्विचिन्त्य च. दुहितृशुल्कं कन्यामूल्यं जामातृदेयम्। "शुल्कं घट्टादिदेये मातृवन्धकेऽपि च' इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या। 'संस्था स्थितौ नाशे' इति विश्वः। पीड़ितो बाधितः। शिशुना रामेण दुष्करमिति दुःखित इति भावः॥ ३८

प्राधान्यात् स्त्रीलिङ्गता वर्त्तते; विलोचनैः तृतीया करणे। विचारः। पिबतामित्यत्र रूढ़िप्रसिद्धेरर्थं विहाय कथं दृशधातोरर्थमेव प्रकटयति? सत्यम् विलोचनैरिति साहचर्य्यात् लक्षणया दृशेरर्थ उपलभ्यते। यथा गङ्गायां घोषः वसतीत्यत्र गङ्गापदेन तीरं लक्षणया शीतलपावनत्वादिरवगम्यते तथा नेत्रैः पिबन्तीत्यत्र नेत्रपानजनितज्ञानेन लक्षणया आत्मनः तृप्तिसाधनत्वादिराख्यत।

३७। वाच्यान्तरम्। कालविदा कुशिकवंशवर्द्धनेन तेन इष्वसनदर्शनोत्सुकः रामः मैथिलाय कथयाम्बभूवे। क्रियाविधौ भावे सप्तमी। मैथिलाय क्रियायोगे चतुर्थी।

३८। वाच्यान्तरम्। दुहितृशुल्कसंस्था पार्थिवं पीड़ितवती। दुहितृशुल्कसंस्थया तृतीया अनुक्ते कर्त्तरि। विचारः। दुरानममिति पदं कथं सिध्यति चेत् खलप्रत्ययेन साधयितुं चेष्टसे तर्हि आपूर्वात् धातोः खलप्रत्ययस्य अभावः चेत् अप्रत्ययेन साधयितुं यतसे तर्हि कथं विशेषणं भवति। दुरानममितिपदं निशेषमस्ति अप्रत्ययेन सिद्धं पदम् [illegible] विशेष्यं [illegible] पदस्यास्य रचनं सुदुष्करमिति। पदमिदं सुधीभिर्विभाव्यं अहं अवसरामि

अब्रवीच्च भगवन् मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ३९
क्षेपिता हि बहवो नरेश्वरास्तेन तात ! धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान् स्वान् विधूय धिगिति प्रतस्थिरे ॥४०
प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा कृतम् ।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ४१

अन्वयः। अब्रवीच्च—हे भगवन ! बृहद्भिः मतङ्गजैः अपि यत् कर्म दुष्करम् तत्र कलभस्य मोघवृत्ति चेष्टितम् अहम् अनुमन्तुम् न उत्सहे ॥ ३९

अन्वयः हे तात ! तेन धनुषा बहवः धनुर्भृतः नरेश्वराः क्षेपिताः; हि ते ज्यानिघातकठिनत्वचः स्वान् भुजान् धिक् इति विधूय प्रतस्थिरे ॥ ४०

अन्वयः। ऋषिः तम् प्रत्युवाच—अयम् सारतः निशम्यताम् अथवा गिरा कृतम्; गिरौ अशनिः इव चापे एव भवतः व्यक्तशक्तिः भविष्यति ॥ ४१

अब्रवीच्च मुनिमिति शेषः। किमिति। हे भगवन् मुने ! बृहद्भिर्मतङ्गजैर्महागजैरपि दुष्करं यत् कर्म तत्र कर्मणि कलभस्य बालगजस्य। 'कलभः करिशावकः' इत्यमरः। मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसमनुमन्तुमहं नोत्सहे ॥ ३९

हे तात ! तेन धनुषा बहवो धनुर्भृतो नरेश्वरा क्षेपिता क्षिप प्रापिता हि। जिह्रेतेर्ण्यन्तात् कर्मणि क्तः। 'अर्तिह्री' इत्यादिना पुगागमः। ते नरेश्वरा ज्यानिघातैः कठिनत्वचः स्वान् भुजान् धिगिति विधूयावमत्य प्रतस्थिरे प्रस्थिताः ॥ ४०

ऋषिस्तं प्रत्युवाच। किमिति। अयं रामः सारतो बलेन निशम्यतां श्रूयताम्। अथवा गिरा भारवर्णनया कृतमलम्। मौनं वक्तव्येत्यर्थः। 'युगपर्याप्तयोः कृतम्' इत्यमरः। अन्वयं चैतम्। 'कृतं निवारणनिषेधयोः' इति गणव्याख्याने। गिरेति करणे तृतीया निषेधक्रियां प्रति कारणत्वात्। किन्त्वशनिर्वज्रो गिराविव चापे धनुष्येव भवतस्तव व्यक्तशक्तिर्दृष्टसारो भविष्यति ॥ ४१

३९। वाच्यान्तरम्। पार्थिवेन प्रोचे। मया अनुमन्तुम् उत्सह्यते। मतङ्गजैः तृतीया अनुक्ते कर्तरि, कलभस्य कर्तरि षष्ठी।

४०। वाच्यान्तरम्। तत् धनुः बहून् धनुर्भृतः नरेश्वरान् क्षेपितवत्। बहुभिः धनुर्भृद्भिः नरेश्वरैः क्षेपितैः प्रतस्थे। तेन धनुषा, अनुक्ते कर्तरि तृतीया। समोविप्रावसमः इति प्रतस्थिरे आत्मनेपदम्।

४१। वाच्यान्तरम्। ऋषिणा स प्रत्युचे। इमं निशामय। अशनिना गिराविव चापे अशनिना भविष्यते। सारतः प्रकृतिभ्यः तृतीया, गिरा अलमर्थे करणे तृतीया।
अन्वयः: गिरिणा सह चापस्य अशनिना सह व्यक्तशक्तेः साम्यं ज्ञातव्यम्।

एवमाप्तवचनात् स पौरुषं काकपक्षकधरेऽपि राघवे ।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२
व्यादिदेश गणशोऽथ पार्श्वगान् कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४३
तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४४

अन्वयः । सः एवमाप्तवचनात् काकपक्षकधरे अपि राघवे पौरुषम् त्रिदशगोपमात्रके कृष्णवर्त्मनि दाहशक्तिम् इव श्रद्दधे ॥ ४२

अन्वयः । अथ मैथिलः कार्मुकाभिहरणाय पार्श्वगान् सहस्रलोचनः तैजसस्य धनुषः प्रवृत्तये तोयदानिव गणशः व्यादिदेश ॥ ४३

अन्वयः । दाशरथिः प्रसुप्तभुजगेन्द्रभीषणम् तत् धनुः वीक्ष्य आददे ; वृषध्वजः येन विद्रुतक्रतुमृगानुसारिणम् बाणम् असृजत् ॥ ४५

एवमाप्तस्य मुनेर्वचनात् स जनकः काकपक्षकधरे बालेऽपि राघवे पुरुषस्य पौरुषं पराक्रमम् । "हायनान्तयुवादिभ्योऽण्" इति युवादित्वादण् । "पौरुषं पुरुषस्य भावे कर्मणि तेजसि" इति विश्वः । त्रिदशगोप इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः "प्रमाणे द्वयसच्—" इत्यादिना मात्रच्प्रत्ययः । ततः स्वार्थे कप्रत्ययः । तस्मिन् कृष्णवर्त्मनि वह्नौ दाहशक्तिमिव । श्रद्दधे विश्वस्तवान् ॥ ४२

अथ मैथिलः पार्श्वगान् पुरुषान् कार्मुकाभिहरणाय कार्मुकमानेतुम् । "तुमर्थाच्च" इति चतुर्थी । सहस्रलोचन इन्द्रस्तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आविर्भावाय तोयदान् मेघानिव गणशः गणात् । "संख्यैकवचनाच्च वीप्सायाम्" इति शस्प्रत्ययः । व्यादिदेश प्रजिघाय ॥ ४३

दाशरथिः रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयङ्करं तद्धनुर्वीक्ष्य आददे जग्राह । [illegible]

४२ । वाच्यान्तरम् । तेन दाहशक्तिरिव पौरुषः श्रद्दधे । समन्वयः । दाशरथिना सह पौरुषस्य, कृष्णवर्त्मना सह राघवस्य साम्यं ज्ञातव्यमिति ।

४३ । वाच्यान्तरम् । सहस्रलोचनेन तोयदा इव, मैथिलेन पार्श्वगाः व्यादिदिशिरे । समन्वयः । सहस्रलोचनेन मैथिलस्य, तोयदैः सह पार्श्वगानां, धनुषः प्रवृत्त्या सह कार्मुकाभिहरणस्य साम्यं ज्ञेयम् ।

४४ । वाच्यान्तरम् । दाशरथिना प्रसुप्तभुजगेन्द्रभीषणं तत् धनुः आददे । विद्रुतक्रतुमृगानुसारी बाणः असृज्यत । येन वृषध्वजेन । पुरा [illegible]

आततज्यमकरोत् स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७

अन्वयः । सः संसदा विस्मयस्तिमितनेत्रम् ईक्षितः (सन्) शैलसारम् अपि (धनुः) पेशलम् पुष्पचापम् इव नातियत्नतः आततज्यम् अकरोत् ॥ ४५

अन्वयः । तेन अतिमात्रकर्षणात् भज्यमानम् वज्रपौरुषस्वनम् धनुः दृढमन्यवे भार्गवाय क्षत्रम् पुनः उद्यतम् न्यवेदयत् इव ॥ ४६

अन्वयः । अथ मैथिलः रुद्रकार्मुके दृष्टसारम् वीर्यशुल्कम् अभिनन्द्य राघवाय अयोनिजाम् रूपिणीम् श्रियम् इव (स्थिताम्) तनयाम् न्यवेदयत् ॥ ४७

...कंठं यस्य स शिवो येन धनुषा । क्रतुरेव मृगः विद्रुतं पलायितं क्रतुमृगमनुसरतीति ...सारिणं शिविः । तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजत् मुमोच ॥ ४४

आततेति । स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन् कर्मणि तद्यथा तथा ईक्षितः सन् । शैलस्येव सारो यस्य तच्छैलसारमपि धनुः । स्मरः पेलवं कोमलं पुष्पचापमिव । ...यत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यमधिज्यमकरोत् ॥ ४५

भज्येति । तेन रामेण अतिमात्रकर्षणाद्भज्यमानम् अत एव वज्रपरुषस्वनम् । वज्रमिव परुषः स्वनो यस्य तत् धनुः कर्तृ दृढमन्यवे दृढक्रोधाय । "मन्युः क्रोधे क्रतौ दैन्ये" इति विश्वः । भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्यतं न्यवेदयदिव ज्ञापयामासेव ॥ ४६

दृष्टेति । अथ मैथिलो जनको रुद्रकार्मुके दृष्टः सारः स्थिरांशो यस्य तद्दृष्टसारम् । "सारो बले स्थिरांशे च" इति विश्वः । वीर्यमेव शुल्कम् धनुर्भङ्गरूपमित्यर्थः । अभिनन्द्य राघवाय अयोनिजां देवयजनसंभवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव ...समर्पितवान् वाचेति शेषः ॥ ४७

...प्रजापतिना दक्षस्य यज्ञं विध्वंसितुं उद्यते, तदा पिनाकपाणेः रौद्रीं मूर्तिम् ...भयेन मृगरूपमवलम्ब्य पलायितुमारभमानं यज्ञमुद्दिश्य बाणमिममसृजत् इति ...रेखा बोध्या ।

४५। वाच्यान्तरम् । स्मरेण पेशलः पुष्पचापः इव, ईक्षितेन तेन शैलसारमपि ...) आततज्यं अक्रियत । समन्वयः । स्मरेण सह तस्य, पुष्पचापेन सह शैलसारस्य ...साम्यं ज्ञेयम् । नातियत्नतः प्रकृत्यादिभ्यः तृतीया ।

४६। वाच्यान्तरम् । भज्यमानेन वज्रपरुषस्वनेन धनुषा उद्यतं क्षत्रं न्यवेद्यत इव । ...कर्षणात् हेतौ पञ्चमी । दृढमन्यवे भार्गवाय क्रियायोगे चतुर्थी; तेन धनुषे ...ति तृतीया, उत्प्रेक्षालङ्कारः ।

मैथिलः सपदि सत्यसङ्गरो राघवाय तनयामयोनिजाम्।
सन्निधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान्॥ ४८
प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम्।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति॥ ४९
अन्विष्य सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग् द्विजः।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्म्मि काङ्क्षितम्॥ ५०

अन्वयः। सत्यसङ्गरः मैथिलः द्युतिमतः तपोनिधेः सन्निधौ अग्निसाक्षिक इव राघ[वाय]
अयोनिजाम् तनयाम् सपदि अतिसृष्टवान्॥ ४८

अन्वयः। महाद्युतिः (जनकः) "इदम् निमेः कुलम् दुहितुः परिग्रहात् भृत्य[भावि]
दिश्यताम्" इति (वाचिकम् ज्ञापयितुम्) महितं पुरोधसं कोसलाधिपतये प्राहि[णोत्]
च॥ ४९

अन्वयः। स च सदृशीम् स्नुषाम् अन्विष्य, अनुकूलवाक् द्विजः च एनम्
कल्पवृक्षफलधर्म्मि सुकृताम् काङ्क्षितम् सद्यः एव पच्यते हि॥ ५०

उक्तमेवार्थं सोपस्कारमाह—सत्यसङ्गरः सत्यप्रतिज्ञः। "अथ प्रतिज्ञा निर्माण[...]
पत्सु संगरः"। इत्यमरः। मैथिलः राघवाय अयोनिजां तनयां द्युतिमतो[...]
तपोनिधेः कौशिकस्य सन्निधौ। अग्निः साक्षी यस्य सोऽग्निसाक्षिकः। "शेषाद्वि[...]
इति कप्प्रत्ययः। स इव, सपदि अतिसृष्टवान् दत्तवान्॥ ४८

महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दश[...]
प्राहिणोत् प्रहितवांश्च। किमिति? निमिर्नाम जनकानां पूर्वजः कश्चित्। इदं[...]
कुलं दुहितुः सीतायाः परिग्रहात् स्नुषात्वेन स्वीकाराद्धेतोः। भृत्यस्य भावी भ[...]
सोऽस्यास्तीति भृत्यभावि दिश्यताम् अनुमन्यतामिति॥ ४९

सः दशरथस्य सदृशीमनुरूपां स्नुषामन्विष्य, रामविवाहमाचकाङ्क्षेत्यर्थः। अनुकू[...]
स्नुषासिद्धिरूपानुकूलार्थवादी द्विजो जनकपुरोधाश्च एनं दशरथं प्राप। तथाहि—[...]

४७। वाच्यान्तरम्। मैथिलेन, रूपिणी श्रीरिव, अयोनिजा तनया ए[...]
न्वेयत। राघवाय चतुर्थी सम्प्रदाने।

४८। वाच्यान्तरम्। सत्यसङ्गरेण, अग्निसाक्षिकेन इव मैथिलेन राघवाय अयो[...]
तनया अतिसृष्टा।

४९। वाच्यान्तरम्। महाद्युतिना महितः पुरोधाः प्राहीयत, इदं कुलं भृ[...]
दिश्यतु। कोसलाधिपतये क्रियायोगे चतुर्थी। दुहितुः कर्मणि षष्ठी, परिग्र[...]
ल्यब्लोपे हेतौ वा पञ्चमी।

५०। वाच्यान्तरम्। तेन सदृशी स्नुषा अन्वीषे। अनुकूलवाचा द्विजे[...]

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान् वचनमग्रजन्मनः।
उच्चचाल वलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः ॥ ५१
आससाद मिथिलां स वेष्टयन् पीड़ितोपवनपादपां बलैः।
प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥ ५२
तौ समेत्य समये स्थिताबुभौ भूपती वरुणवासवोपमौ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ५३

अन्वयः। वलभित्सखः वशी कल्पितपुरस्क्रियाविधेः तस्य अग्रजन्मनः वचनम् शुश्रुवान् सैन्यरेणुमुषितार्कदीधितिः ( सन् ) उच्चचाल ॥ ५१
अन्वयः। सः बलैः पीड़ितोपवनपादपाम् मिथिलाम् वेष्टयन् आससाद। सा पुरी स्त्री आयतम् कान्तपरिभोगम् इव प्रीतिरोधम् असहिष्ट ॥ ५२
अन्वयः। समये स्थितौ वरुणवासवोपमौ तौ उभौ भूपती समेत्य स्वप्रभावसदृशीम् कन्यकातनयकौतुकक्रियाम् वितेनतुः ॥ ५३.

फलस्य यो धर्मः सद्यः पाकरूपः सोऽस्यास्तीति कल्पवृक्षफलधर्मि। तत्. सुकृतां पुण्यकारिणां काङ्क्षितं मनोरथः सद्य एव पच्यते हि। कर्मकर्तरि लट्। स्वयमेव पक्वं भवतीत्यर्थः। "कर्मवत् कर्मणा तुल्यक्रिये"ति कर्मवद्भावात् "भावकर्मणोः" इत्यात्मनेपदम् ॥ ५०

वलभित्सख इन्द्रसहचरो वशी स्वाधीनतावान्। "वश आयत्ततायां च" इति विश्वः। कल्पितपुरस्क्रियाविधेः कृतपूजाविधेस्तस्य अग्रजन्मनो द्विजस्य वचनं जनकेन संदिष्टं शुश्रुवान् श्रुतवान्। शृणोतेः क्वसुः। सैन्यरेणुमुषितार्कदीधितिः सन् उच्चचाल प्रतस्थे ॥ ५१
स दशरथः बलैः सैन्यैः पीडितोपवनपादपां मिथिलां वेष्टयन् परिधीकुर्वन् आससाद। सा पुरी स्त्री युवतिरायतमतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोगमिव, प्रीत्या रोधं प्रीतिरोधम् असहिष्ट सोढवती। रोषरोधस्तु न सह्यत इति भावः ॥ ५२

समये स्थितौ आचारनिष्ठौ। "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः। वरुणवासवौ उपमा उपमानं ययोस्तौ तथोक्तौ। तावुभौ भूपती जनकदशरथौ समेत्य ...पे। विशेषेण सुकृतां काङ्क्षितस्य परिपाकेन सामान्यस्य रामविवाहरूपकार्य्यस्य समर्थनात् र्थान्तरन्यासोऽलङ्कारः।

५१। वाच्यान्तरम्। वलभित्सखेन, वशिना, शुश्रुषा, सैन्यरेणुमुषितार्कदीधितिना चचले। वलभिदः सखा, कल्पितः पुरस्क्रियायाः विधिर्येन।
५२। वाच्यान्तरम्। तेन पीड़ितोपवनपादपा मिथिला वेष्टयता आससे। स्त्रिया इव तया पुर्य्या कान्तपरिभोगः आयतः प्रतिरोधः असहि। बलैः तृतीया करणे, शीषो उपमा। समन्वयः। स्त्रिया सह पुर्य्याः, कान्तपरिभोगेन सह पीडितोपवनपादपायाः साम्यं रोध्यम्।

पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्म्मिलाम् ।
यौ तयारवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहात् ।
सामदानविधिभेदविग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५

अन्वयः। रघूद्वहः पार्थिवीम् उदवहत्, अथ लक्ष्मणः तदनुजाम् ऊर्म्मिलाम् (उदवहत्), यौ वरौजसौ तयोः अवरजौ तौ सुमध्यमे कुशध्वजसुते (उदवहताम्)॥ ५४

अन्वयः। ते चतुर्थसहिताः त्रयः सूनवः नववधूपरिग्रहात् तस्य भूपतेः सिद्धिमन्तः सामदानविधिभेदविग्रहाः इव बभुः ॥ ५५

स्वप्रभावसदृशीमात्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ । तनोतेर्लिट् ॥ ५३

उद्वहतीत्युद्वहः । पचाद्यच् । रघूणां मुद्वहो रघूद्वहो रामः । पृथिव्या अपत्यं स्त्री पार्थिवी "तस्यापत्यम्" इत्यणि "टिड्ढा—" इति ङीप् । तां सीतामुदवहत् परिणीतवान् । अथ लक्ष्मणस्तस्याः सीताया अनुजां जनकस्यौरसीमूर्मिलामुदवहत् । यौ वरौजसौ तयोः रामलक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्त्तिं च उदवहताम्। नात्र व्युत्क्रमविवाहदोषो भिन्नोदरत्वात्। तदुक्तम् "पितृव्यपुत्रे सापत्ने परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवेत्तायदूषणम्।" इति ॥ ५४

ते चतुर्थसहितास्त्रयः चत्वार इत्यर्थः। वृत्तानुसारादेवमुक्तम् । सूनवो नववधूपरिग्रहात् सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य सामदानविधिभेदविग्रहाश्चत्वार उपाया इव बभुः । विधीयत इति विधिः, दानमेव विधिः । विग्रहो दण्डः । सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसन्धेयम् ॥ ५५

५३ । वाच्यान्तरम् । स्थिताभ्यां वरुणवासवाभ्यां उभाभ्यां भूपतिभ्यां प्रभावसदृशी कन्यकातनयकौतुकक्रिया वितेने। अलङ्कारोऽत्र उपमा ।

५४ । वाच्यान्तरम् । रघूद्वहेन पार्थिवी, लक्ष्मणेन ऊर्म्मिला उदोढा । ताभ्यां सुमध्यमे कुशध्वजसुते उदौह्येताम् ।

५५ । वाच्यान्तरम् । तैः चतुर्थ सहितैः त्रिभिः सूनुभिः सिद्धिमद्भिः. सामदानविधिभेदविग्रहैरिव बभे । नववधूपरिग्रहात् इतौ पञ्चमी । उपमालङ्कारः । समन्वयः । सामदानविधिभेदविग्रहैः सिद्धिमद्भिः सह नववधूयुक्तानां तेषां चतुर्णां सूनूनां साम्यं वेदितव्यम्।

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन् कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः ॥ ५६
एवमात्तरतिरात्मसम्भवांस्तान् निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्त्तत ॥ ५७
तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८

अन्वयः। ताः नराधिपसुताः नृपात्मजैः, ते च ताभिः कृतार्थताम् अगमन्; स वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः अभवत ॥ ५६

अन्वयः। एवम् आत्तरतिः सः दशरथः तान् चतुरः अपि आत्मसम्भवान् तत्र निवेश्य त्रिषु अध्वसु (सत्सु) विसृष्टमैथिलः स्वाम् पुरीम् न्यवर्त्तत ॥ ५७

अन्वयः। जातु वर्त्मसु ध्वजतरुप्रमाथिनः प्रतीपगाः मरुतः, उत्तटाः नदीरयाः स्थलीम् इव तस्य वरूथिनीं भृशतया चिक्लिशुः ॥ ५८

ता नराधिपसुता जनककन्यकाः नृपात्मजैर्दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसम्पत्त्या अगमन्। ते च ताभिस्तथा। किंच, स वराणां वधूनां च समागमः प्रत्ययानां प्रकृतीनां च योग इव। संनिभातीति संनिभः अभवत्। पचाद्यच्। प्रत्ययाः सनादयः, प्रकृतयः विधीयन्ते ताः प्रकृतयः। यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदतापीति भावः ॥ ५६

एवमात्तरतिरनुरागवान् स दशरथस्तांश्चतुरोऽप्यात्मसम्भवान् पुत्रांस्तत्र मिथिलायां निवेश्य स्थापयित्वा। 'निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तितः' इति विश्वः। त्रिष्वध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन्। स्वां पुरीं न्यवर्त्तत। उद्देश्यक्रियापेक्षया कर्मत्वं पुर्याः ॥ ५७

जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान् प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः, प्रतीपगाः प्रतिकूलगामिनो मरुतः। उत्तटा नदीरयाः स्थलीम् अकृत्रिमभूमिमिव "जानपद—"इत्यादिना ङीप्। तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्नन्ति स्म ॥ ५८

५६। वाच्यान्तरम्। ताभिः नराधिप-सुताभिः नृपात्मजैः, तैः (सुतैः) ताभिश्च कृतार्थता अगामि। तेन वरवधूसमागमेन, प्रत्ययप्रकृतियोगसन्निभेन अभूयत। उपमालङ्कारः। समन्वयः। प्रत्ययैः सह नृपात्मजानां प्रकृतिभिः सह राजसुतानां साम्यं ज्ञेयम्।

५७। वाच्यान्तरम्। आत्तरतिना दशरथेन विसृष्टमैथिलेन स्वा पुरी न्यवर्त्यत।

५८। वाच्यान्तरम्। उत्तटैः नदीरयैः स्थलीव ध्वजतरुप्रमाथिभिः प्रतीपगैः मरुद्भिः वरूथिनी चिक्लिशे। समन्वयः। उत्तटैः नदीरयैः सह प्रतीपमरुतां, स्थल्या सह वरूथिन्याः साम्यं ज्ञातव्यम्। उपमालङ्कारः।

लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेशमण्डलः ।
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ॥ ५९
श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ ६०
भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववाशिरे ।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥ ६१

अन्वयः । तदनन्तरं बद्धभीमपरिवेशमण्डलः रविः, वैनतेयशमितस्य भोगिनः भोगवेष्टितः च्युतः मणिः इव लक्ष्यते स्म ॥ ५९

अन्वयः । श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः रजःस्वलाः दि... (रजःस्वलाः) अङ्गनाः इव अवलोकनक्षमाः नो बभूवुः ॥ ६०

अन्वयः । भास्करः यां दिशम् अध्युवास च तां श्रिताः, शिवाः क्षत्रशोणितपितृक्रियो... भार्गवं चोदयन्त्यः इव प्रतिभयं ववाशिरे ॥ ६१

तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेशस्य परिधेर्मण्डलं यस्य सः "परिवे... परिधिरुपसूर्यकमण्डले" इत्यमरः । रविः वैनतेयशमितस्य गरुडहतस्य भोगिनः सर्... भोगेन कायेन । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । वेष्टितः, च्यु... शिरोभ्रष्टः मणिरिव, लक्ष्यते स्म ॥ ५९

श्येनपक्षा एव परिधूसरा अलका यासां तास्तथोक्ताः । सान्ध्यमेघा एव रुधिरार्द्रा... वासांसि यासां तास्तथोक्ताः । रजो धूलिरामास्तीति रजस्वलाः "रजःकृष्यासुतिपरि... वलच्" इति वलच्प्रत्ययः । दिशः रजस्वला ऋतुमत्य अङ्गना इव । "स्याद्रजः पुष्पमार्त... इत्यमरः । अवलोकनक्षमा दर्शनार्हा नो बभूवुः । एकत्रादृष्टदोषादपरत्र शास्त्रदोषा... विज्ञेयम् । अत्र रजोदृष्टिरुत्पात उक्तः ॥ ६०

भास्करो यां दिशमध्युवास च यस्यां दिशि उषितः । 'उपान्वध्याङ्वसः' इति कर्मत्व... तां दिशं श्रिताः शिवा गोमायवः । "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः" इत्यम... क्षत्रशोणितेन या पितृक्रिया पितृतर्पणं तत्रोचितं परिचितं भार्गवं चोदयन्त्य इव प्रति... भयङ्करं ववाशिरे ररुवुः । "वाशृ शब्दे" इति धातोर्लिट् । "तिरश्चां वाशितं रुत... इत्यमरः ॥ ६१

५९ । वाच्यान्तरम् । बद्धभीमपरिवेशमण्डलं रविं, वेष्टितम् च्युतं मणिमि... अलक्षयन्त स्म । उपमालङ्कारः । समन्वयः । भोगवेष्टितेन च्युतेन मणिना सह बद्धभीमपरिवे... मण्डलस्य रवेः साम्यम् ।

६० । वाच्यान्तरम् । श्येनपक्षपरिधूसरालकाभिः, सान्ध्यमेघरुधिरार्द्रवासो... दिग्भिः रजस्वलाभिः अङ्गनाभिरिव अवलोकनक्षमाभिः न बभूवे । उपमालङ्का... [illegible] पदश्लिष्टत्वात् श्लेषालङ्कारेण [illegible] तयोरङ्गाङ्गिभावेन सङ्करः ।

तत्प्रतीपपवनादिवैकृतं प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः स्वन्तमित्यलघयत् स तद्व्यथाम् ॥ ६२ ॥
तेजसः सपदि राशिरुत्थितः प्रादुरास किल वाहिनीमुखे ।
यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात् ॥ ६३ ॥
पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ ६४ ॥

अन्वयः । तत् प्रतीपपवनादिवैकृतं प्रेक्ष्य कृत्यवित् क्षितेः ईश्वरः शान्तिम् अधिकृत्य गुरुं अन्वयुङ्क्त । सः स्वन्तम् इति तद्व्यथाम् अलघयत् ॥ ६२

अन्वयः । सपदि उत्थितः तेजसः राशिः वाहिनीमुखे प्रादुरास किल । यः सैनिकैः नयनानि प्रमृज्य चिरात् लक्षणीयपुरुषाकृतिः (अभूत्) ॥ ६३

अन्वयः । यः पित्र्यं अंशं उपवीतलक्षणं मातृकं च (अंशं) ऊर्जितं धनुः दधत् (सन्) ससोमः घर्मदीधितिः इव सद्विजिह्वः चन्दनद्रुमः इव (स्थितः) ॥ ६४

तत्प्रतीपपवनादिवैकृतं दुर्निमित्तं प्रेक्ष्य कृत्यवित् कार्यज्ञः क्षितेरीश्वरः शान्तिमनर्थशान्तिमधिकृत्य उद्दिश्य गुरुं वसिष्ठम् अन्वयुङ्क्त अपृच्छत् । "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः । स गुरुः स्वन्तं शुभोदर्कं भावीति तस्य राज्ञो व्यथामलघयत् लघूकृतवान् ॥ ६२
सपदि उत्थितस्तेजसो राशिर्वाहिनीमुखे सेनाग्रे प्रादुरास किल खलु । यः सैनिकैर्नयनानि प्रमृज्य चिराल्लक्षणीया भावनीया पुरुषाकृतिर्यस्य स तथोक्तः अभूदिति शेषः ॥ ६३
उपवीतं लक्षणं चिह्नं यस्य तम् । पितुरयं पित्र्यः । 'वायुऋतुपित्रुषसो यत्' इति यत्प्रत्ययः । तमंशम् । धनुषोर्जितं धनुरूर्जितम् । मातुरयं मातृकः । 'ऋतष्ठञ्' इति ठञ्प्रत्ययः । तमंशं च दधत् यो भार्गवः ससोमश्चन्द्रयुक्तो । घर्मदीधितिः सूर्य इव सद्विजिह्वः ससर्पश्चन्दनद्रुम इव स्थितः ॥ ६४

(१) पाठान्तरम् । भास्करेण या दिक् अध्युषे । श्रिताभिः शिवाभिः नीदयन्तीभिः ... । अलङ्कारः वाच्योत्प्रेक्षा ।
(२) पाठान्तरम् । कृत्यविदा क्षितीश्वरेण गुरुः अन्वयुज्यत । गुरुणा तद्व्यथा अलघ्यत ।
(३) पाठान्तरम् । उत्थितेन राशिना लक्षणीयपुरुषाकृतिना प्रादुरासे । किल ... । सैनिकैः कर्त्तरि तृतीया ।
(४) पाठान्तरम् । उपवीतलक्षणं पित्र्यं अंशं मातृकं च ऊर्जितं धनुः ... येन ससोमेन घर्मदीधितिना इव सद्विजिह्वेन चन्दनद्रुमेन इव भूयते । मालोपमालङ्कारः तद्यथा—मालोपमा यदेकस्योपमानं बहु दृश्यते ।

येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा।
वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥ ६५

अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः।
क्षत्रियान्तकरणैकविंशतेर्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम्।
बालसूनुरवलोक्य भार्गवं स्वां दशाञ्च विषसाद पार्थिवः ॥ ६७

अन्वयः। येन रोषपरुषात्मनः स्थितिभिदोऽपि पितुः शासने तस्थुषा वेपमानजननीशिरश्छिदा (सता) प्राक् घृणा अजीयत; ततः मही (अजीयत) ॥ ६५

अन्वयः। यः दक्षिणश्रवणसंस्थितेन अक्षबीजवलयेन क्षत्रियान्तकरणैकविंशतेः व्याजपूर्वगणनां उद्वहन् इव निर्बभौ ॥ ६६

अन्वयः। बालसूनुः पार्थिवः भार्गवं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितं स्वां दशाञ्च अवलोक्य विषसाद ॥ ६७

रोषपरुष आत्मा बुद्धिर्यस्य सः। 'आत्मा जीवो धृतिर्बुद्धिः' इत्यमरः। तस्य रोषपरुषात्मनः, स्थितिभिदोऽपि मर्य्यादालङ्घिनोऽपि शासने तस्थुषा स्थितेन, वेपमानजननीशिरश्छिदा येन, प्राक् घृणा अजीयत, ततोऽनन्तरं मही अजीयत। मातृहन्तुः क्षत्रहन्तुः कुतो जुगुप्सेति भावः ॥ ६५

यो भार्गवः दक्षिणश्रवणे संस्थितेन अक्षबीजवलयेन अक्षमालया, क्षत्रियान्तकरणैकविंशतेः क्षत्रियवधानाम् एकविंशतिसंख्याया व्याजः अक्षमालारूपः पूर्वो यस्यास्तां गणनाम् उद्वहन् निर्बभौ ॥ ६६

पितुर्जमदग्नेर्वधभवेन क्षत्रियकर्तृकवधोद्भवेन मन्युना कोपेन राजवंशानां निधनाय नाशार्थम्। "निधनं स्यात् कुले नाशे" इति विश्वः। दीक्षितम् प्रवृत्तमित्यर्थः। तं भार्गवं...

६५। वाच्यान्तरम्। तस्थिवान् वेपमानजननीशिरश्छिद् यः प्राक् घृणां अजयत् ततो महीं अजयत्। पुराकिल परशुरामस्य माता रेणुका देवी जलार्थं नदीं जगाम तत्र नद्यास्तटे रममाणौ गन्धर्वदम्पती विलोक्य तस्याः मनसि महान् विकारो अजायत तदा गृहं प्रत्यागता। समाधियोगेन सर्व्वमवगच्छता जमदग्निना अपि गन्धर्व्वेन सह रमणं अभिलाषीभवति किमिति पृच्छ्यमाना सा तद्वाक्यं स्वीचकार ततः स महता कोपेन रक्तलोचनः सन् स्वपत्न्याः शिरश्छेदनाय ज्येष्ठं तनयमादिदेश। स तादृशं दुष्करं कर्म्म कर्त्तुं नस्वीकृतवान्। तदनुजश्च ज्येष्ठमनुजगाम, ततः कनीयान् परशुरामः पितुराज्ञां प्रतिपालयितुं अङ्गीकृतवान् तेनैव तत् कर्म्म साधितं च, अतएव जननीशिरश्छित्त्वेन प्रसिद्धः इति पौराणिकी वार्त्ता ज्ञेया।

६६। वाच्यान्तरम्। व्याजपूर्व्वगणनामुद्वहता इव येन निर्बभे। दक्षिणश्रवणसंस्थितेन अक्षबीजवलयेन तृतीया करणे। पुरा किल कार्त्तवीर्य्यार्जुनेन निरागसं पितरं निहतं प्रज्वलितेन कोपवह्निना क्षत्रकुलं भस्मीकर्त्तुं एकविंशतिं वारान् येते।

नाम राम इति तुल्यमात्मजे वर्त्तमानमहिते च दारुणे ।
हृदयमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८

अर्घ्यमर्घ्यमिति वादिनं नृपः सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ६९

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७०

अन्वयः । आत्मजे दारुणे अहिते च तुल्यं वर्त्तमानं राम इति नाम हारसर्पयोः रत्नजातं इव अस्य हृदयं भयदायि अभवत् ॥ ६८

अन्वयः । सः अर्घ्यम् अर्घ्यम् इति वादिनं नृपं अनवेक्ष्य यतः भरताग्रजः ततः क्षत्रकोपदहनार्चिषं उदग्रतारकाम् दृशं सन्दधे ॥ ६९

अन्वयः । तेन कार्मुकनिषक्तमुष्टिना शरं अङ्गुलीविवरचारिणं कुर्वता युयुत्सुना (रामेण) विगतभीः पुरोगतः राघवः निजगदे ॥ ७०

... दशां चावलोक्य बालाः सूनवो यस्य स पार्थिवो विषसाद । स्वस्यातिदौर्बल्याच्छत्रो-... कोपात् कान्दिशीकोऽभवदित्यर्थः ॥ ६७

आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यमविशेषेण वर्त्तमानं राम इति नाम, हारसर्पयोर्वर्त्तमानं रत्नजातमिव । अस्य दशरथस्य हृद्यं हृदयङ्गमं भयदायि भयङ्करं अभवत् ॥ ६८

सः भार्गवः । "अर्घ्यमर्घ्यम्" इति वादिनं नृपमनवेक्ष्य, यतः यत्र भरताग्रजस्-तत्र । "इतराभ्योऽपि दृश्यन्ते" इति सार्वविभक्तिकस्तसिः । तत्र तस्मिन्विषये यः क्षत्रकोपदहनः रोषाग्निः तस्यार्चिषं ज्वालामिव स्थिताम् । "ज्वालाभासौ नपुंस्यर्चिः" इत्यमरः । उदग्रा तारका कनीनिका यस्यास्ताम् । "तारकाक्ष्णः कनीनिका" इत्यमरः । दृशं सन्दधे ॥ ६९

कार्मुकनिषक्तमुष्टिना, युयुत्सुना योद्धुमिच्छता, शरम् अङ्गुलीविवरचारिणं कुर्वता, तेन भार्गवेन कर्त्रा, विगतभीर्निर्भीकः सन्, पुरोगतोऽग्रगतो राघवो निजगदे उक्तः । कर्मणि लिट् ॥ ७०

६७ । वाच्यान्तरम् । पार्थिवेन विषेदे । वधभवेन मन्युना हेतौ तृतीया, राज-संनिधनाय चतुर्थी निमित्तार्थे ।

६८ । वाच्यान्तरम् । हृद्येन भयदायिना हारसर्पयोः वर्त्तमानेन रत्नजातेन इव अभूयत । समन्वयः । हारेण सह रामस्य, सर्पेण सह परशुरामस्य तुल्यता ज्ञेया । ... ध्यारोऽस्य श्रौती ।

६९ । वाच्यान्तरम् । तेन क्षत्रकोपदहनार्चिः उदग्रतारका दृक् सन्दधे । इतस्ततः ... अधिकरणे सप्तमी । अर्घ्यमर्घ्यमिति सम्भ्रमे द्वित्वम् ।

क्षत्रजातमपकारवैरि मे तान्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ७१
मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्य्यशृङ्गमिव भग्नमात्मनः ॥ ७२
अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीड़मावहति मे स सम्प्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ७३

अन्वयः । क्षत्रजातं मे अपकारवैरि तत् बहुशः निहत्य शमं गतः (अ) (तथापि) सुप्तसर्पः दण्डघट्टनात इव तव विक्रमश्रवात् रोषितः अस्मि ॥७१

अन्वयः । त्वम् अन्यपार्थिवैः अनमितपूर्व्वं मैथिलस्य धनुः अक्षणोः किल । तत् नि भवता आत्मनः वीर्य्यशृङ्गं भग्नं इव समर्थये ॥ ७२

अन्वयः । अन्यदा जगति रामः इति अयं शब्दः उच्चरितः (सन्) माम् एव अगात् सम्प्रति त्वयि उदयोन्मुखे (सति) व्यस्तवृत्तिः सः (शब्दः) मे व्रीड़म् आवहति ॥७३

क्षत्रजातं क्षत्रजातिः मे अपकारेण पितृवधरूपेण वैरि द्वेषि । तत् क्षत्रजातं ब एकविंशतिवारान् निहत्य, शमं गतोऽस्मि । तथापि सुप्तसर्पो दण्डघट्टनादिव तव विक्र श्रवात् आकर्णनात रोषितः रोषं प्रापितः अस्मि ॥७१

अन्यैः पार्थिवैः अनमितपूर्वं पूर्वमनमितम् । सुप्सुपेतिसमासः । अस्य मैथिलस्य त्वम् अक्षणोः क्षतवान् । किलेति वार्तायाम् । "वार्तासंभाव्ययोः किल" इत्य तद्धनुर्भङ्गं निशम्य आकर्ण्य भवता आत्मनो मम वीर्य्यमेव शृङ्गम् भग्नमिव मन्ये ॥७२

अन्यदा अन्यस्मिन् काले जगति राम इत्ययं शब्द उच्चरितः सन् मामेव अगात् । सं त्वयि उदयोन्मुखे सति, व्यस्तवृत्तिर्विपरीतवृत्तिः अन्यगामीति तावत् । स शब्दो मे व्री मावहति लज्जां करोति ॥ ७३

७० । वाच्यान्तरम् । कार्म्मुकं निषक्तमुष्टिः शरं अङ्गुलीविवरचारिणं कुर्व्वन् पु स विगतभियं राघवं निजगदे ।

७१ । वाच्यान्तरम । मया शमो गतः । सुप्तसर्पेण इव रोषितेन भूयते । दण्ड नात् विक्रमश्रवात् च पञ्चमी हेतौ ।

७२ वाच्यान्तरम् । त्वया धनुः अक्षणुते । मया वीर्य्यशृङ्गं भग्नमिव समर्थ्यते ।

७३ । वाच्यान्तरम । रामेण इति अनेन शब्देन उच्चरितेन अहं अगायिषि । व्य वृत्तिना तेन व्रीड़ः आो.... । त्वयि भावे सप्तमी ।

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैहयस्त्वञ्च कीर्त्तिमपहर्त्तुमुद्यतः ॥ ७४

क्षत्त्रियान्तकरणोऽपि विक्रमस्तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥७५

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६

अन्वयः। अचले अकुण्ठितं अस्त्रं बिभ्रतः मम द्वौ रिपू समागसौ मतौ। धेनुवत्सहरणात् हैहयः कीर्त्तिं अपहर्त्तुं उद्यतः त्वं च ॥७४

अन्वयः। तेन क्षत्त्रियान्तकरणः अपि विक्रमः त्वयि अजिते (सति) मां न अवति ; पावकस्य महिमा सः गण्यते यः कक्षवत् सागरे अपि ज्वलति ॥७५

अन्वयः। त्वया यत् ऐश्वरं धनुः अभाजि (तत्) हरेः ओजसा आत्तबलं च विद्धि। नदीरयैः खातमूलं तटद्रुमं मृदुः अपि अनिलः पातयति ॥७६

अचले क्रौञ्चाद्रावपि अकुण्ठितमस्त्रं बिभ्रतो मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ। धेनोः पयस्विनीमधेनोर्वत्सस्य हरणाद्धेतोर्हैहयः कार्त्तवीर्य्यश्च, कीर्त्तिमपहर्त्तुमुद्यतस्त्वञ्च। वत्सहरणे भारतश्लोकः—'प्रमत्तश्चाश्रमात्तस्य होमधेन्वास्ततो बलात्। जहारं वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ ७४

तेन कारणेन क्रियते येनासौ करणः क्षत्त्रियान्तस्य करणोऽपि विक्रमः त्वयि अजिते मां न अवति न प्रीणाति। तथाहि—पावकस्याग्नेर्महिमा स गण्यते यः कक्षवत् कक्षे तृणे इव। "तत्र तस्येव।" इति सप्तम्यर्थे वतिः सागरेऽपि ज्वलति ॥७५

किंच। ऐश्वर धनुर्हरेर्विष्णोरोजसा बलेन आत्तबलं हृतसारं च विद्धि। यद्धनुस्त्वया अभाजि अभञ्जि "भञ्जेश्च चिणि" इति विभाषया नलोपः।—तथाहि—नदीरयैः खातमूलमवदारितपादं तटद्रुमं मृदुरप्यनिलः पातयति। ततः शिशुरपि रौद्रं धनुरभाङ्क्षमिति गर्वो न कार्य्य इति भावः ॥७६

७४। वाच्यान्तरम्। द्वाभ्यां रिपुभ्यां समागसोभ्यां मताभ्यां भूयते। त्वया उद्यतम्। ममेति कर्त्तरि षष्ठी, धेनुवत्सहरणात् हेतौ पञ्चमी।

७५। वाच्यान्तरम्। क्षत्त्रियान्तकरणेनापि विक्रमेण अहं अव्ये। जनाः तं महिमानं गणयन्ति, येन ज्वल्यते। अलङ्कारोऽत्र प्रतिवस्तूपमा, सूत्रन्तु पूर्व्वमुक्तं। तेन हेतौ तृतीया त्वयि भावे सप्तमी।

७६। वाच्यान्तरम्। विद्धताम्। त्वं धनुरभाङ्क्षीः। ओजसा कर्त्तरि तृतीया। नदीरयैः अनुक्ते कर्त्तरि तृतीया। दृष्टान्तालङ्कारो मन्यते। समन्वयः। ओजसा सह नदीरयस्य; मृदुना अनिलेन सह तव, आत्तबलेन धनुषा सह खातमूलस्य द्रुमस्य साम्यमिति।

तन्मदीयमिदमायुधं ज्यया संगमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७७
कातरोऽसि यदि वोद्गतार्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा बध्यतामभययाचनाञ्जलिः ॥ ७८
एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९

अन्वयः । तत् मदीयं इदं आयुधं ज्यया संगमय्य सशरं विकृष्यताम् । प्रधनं तिष्ठतु । एवं अपि अहं तुल्यबाहुतरसा त्वया जितः ॥ ७७

अन्वयः । यदि वा उद्गतार्चिषा मम परशुधारया तर्जितः कातरः असि, ज्यानिघात-कठिनाङ्गुलिः अभययाचनाञ्जलिः बध्यताम् ॥ ७८

अन्वयः । भीमदर्शने भार्गवे एवं उक्तवति ( सति ) राघवः स्मितविकम्पिताधरः ( सन् ) तद्धनुर्ग्रहणं एव समर्थं उत्तरं प्रत्यपद्यत ॥ ७९

तत्तस्मान्मदीयमिदमायुधं कार्मुकं ज्यया संगमय्य संयोज्य । "ल्यपि लघुपूर्वात्" इति णेरयादेशः । सशरं यथा तथा त्वया विकृष्यताम् । प्रधनं रणस्तिष्ठतु । प्रधनं तावदास्तामित्यर्थः । "प्रधनं मारणे रणे" इति विश्वः । एवमपि मद्धनुःकर्षणेऽप्यहं तुल्यबाहुतरसा समबाहुबलेन । "तरसी बलरंहसी" इत्यमरः । त्वया जितः ॥ ७७

यदिवा उद्गतार्चिषा उद्गतत्विषा मम परशुधारया तर्जितः कातरोऽसि भीतोऽसि । तथा ज्यानिघातेन कठिना अङ्गुलयो यस्य स तथोक्तः अभययाचनाञ्जलिरभयप्रार्थनार्थाञ्जलिः बध्यताम् । "तौ युतावञ्जलिः पुमान्" इत्यमरः ॥ ७८

भीमदर्शने भार्गवे एवमुक्तवति सति, राघवः, स्मितेन हासेन विकम्पिताधरः सन् तद्धनुर्ग्रहणमेव समर्थं उचितमुत्तरं प्रत्यपद्यत अङ्गीचकार ॥ ७९

७७ । वाच्यान्तरम् । मदीयम् इदम् आयुधं विकर्ष, प्रधनेन स्थीयताम् । तुल्यबाहुतराः त्वं मां जितवान् । ज्यया सहार्थे तृतीया । त्वया तृतीया कर्त्तरि ।

७८ । वाच्यान्तरम् । तर्जितेन कातरेण भूयते । ज्यानिघात-कठिनाङ्गुलिः अभययाचनाञ्जलिं बधान । अर्चिषा परशुधारया तृतीया कर्त्तरि । यदि वा इत्यत्र यत्शब्देन तत्शब्दस्य आकाङ्क्षा न वर्त्तते, यदशब्दोऽत्र स्वस्मिन् अर्थेन तिष्ठति, यदिवा अथवा इति ।

७९ । वाच्यान्तरम् । राघवेन तद्धनुर्ग्रहणं समर्थम् उत्तरं प्रत्यपादि । उक्तवति भीमदर्शने भार्गवे भावे सप्तमी ।

पूर्व्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत्।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः॥ ८०

तेन भूमिनिहितैककोटि तत् कार्मुकञ्च बलिनाधिरोपितम्।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः॥ ८१

तावुभावपि परस्परस्थितौ वर्द्धमानपरिहीनतेजसौ।
पश्यति स्म जनता दिनात्यये पार्वणौ शशिदिवाकराविव॥ ८२

अन्वयः। पूर्व्वजन्मधनुषा समागतः सः अतिमात्रलघुदर्शनः अभवत्। नवाम्बुदः केवलः अपि सुभगः, त्रिदशचापलाञ्छितः किं पुनः॥ ८०

अन्वयः। बलिना तेन भूमिनिहितैककोटि तत् कार्मुकं च अधिरोपितम्। भूभृतां रिपुः च धूमशेषः धूमकेतनः इव निष्प्रभः आस॥ ८१

अन्वयः। परस्परस्थितौ वर्द्धमानपरिहीनतेजसौ तौ उभौ अपि दिनात्यये पार्व्वणौ शशिदिवाकरौ इव जनता पश्यति स्म॥ ८२

पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन समागतः संगतः स रामः अतिमात्रमत्यन्तं लघुदर्शनः प्रियदर्शनोऽभवत्। तथाहि—नवाम्बुदः केवलो रिक्तोऽपि सुभगः। त्रिदशचापेन इन्द्रधनुषा लाञ्छितश्चिह्नितः किं पुनः। सुभग एवेति भावः॥ ८०

बलिना तेन रामेण भूमिनिहिता एका कोटिर्यस्य तत्। कर्मणे प्रभवतीति कार्मुकं धनुः। "कर्मण उकञ्" इत्युकञ्प्रत्ययः। अधिरोपितम्। भूभृतां रिपुर्भार्गवश्च। धूमशेषः धूमकेतनः अग्निरिव, निष्प्रभो निस्तेजस्क आस बभूव। आसेति तिङन्तप्रतिरूपकमव्ययं दीप्त्यर्थकस्यासे रूपं वा॥ ८१

परस्परस्थितौ अन्योन्याभियुक्तौ। वर्द्धमानश्च परिहीनश्चेति द्वन्द्वः। वर्द्धमानपरिहीने तेजसी ययोस्तौ उभौ राघवभार्गवावपि, दिनात्यये सायंकाले पर्वणि भवौ पार्वणौ शशिदिवाकराविव। जनता जनसमूहः। "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः। पश्यति स्म अपश्यत्। अत्र राघवस्य शशिना भार्गवस्य भानुना औपम्यं द्रष्टव्यम्॥ ८२

८०। वाच्यान्तरम्। समागतेन अतिमात्रलघुदर्शनेन तेन अभूयत। केवलेन नवाम्बुदेन सुभगेन भूयते, त्रिदशचापलाञ्छितेन पुनः किं। पूर्व्वजन्मधनुषा सहार्थे तृतीया। अर्थान्तरन्यासालङ्कारः सूत्रन्तु पूर्व्वमुक्तम्।

८१। वाच्यान्तरम्। सं बली भूमिनिहितैककोटि. तत् कार्मुकम् अधिरोपितवान्। भूभृतां रिपुणा धूमकेतनेन इवनिष्प्रभेण रिपुणा आसि। तेन बलिना कर्त्तरि तृतीया। उपमालङ्कारः सूत्रन्तु पूर्व्वमुक्तम्। समन्वयः। धूमशेषेन सह निष्प्रभस्य। धूमकेतनेन सह रिपोः साम्य ज्ञेयम्।

८२। वाच्यान्तरम्। जनतया, पार्व्वणौ शशिदिवाकराविव वर्द्धमानपरिहीनतेजसौ, परस्परस्थितौ तौ उभौ दृश्येते स्म। पूर्णोपमालङ्कारः। सूत्रन्तु—सा पूर्णा यदि

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्य्यमात्मनि।
स्वञ्च संहितममोघमाशुगं व्याजहार हरसूनुसन्निभः॥ ८३
न प्रहर्त्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि।
शंस किं गतिमनेन पत्त्रिणा हन्मि लोकमुत ते मखार्जितम्॥ ८४
प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम्।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा॥ ८५

अन्वयः। हरसूनुसन्निभः कृपामृदुः राघवः आत्मनि स्खलितवीर्य्यं तं भार्गवं स्वं संहितम् अमोघं आशुगं च अवेक्ष्य व्याजहार॥ ८३

अन्वयः। अभिभवति अपि त्वयि विप्रः इति हेतोः निर्दयं प्रहर्त्तुं अलं न अस्मि। अनेन पत्त्रिणा किं ते गतिं हन्मि? उत मखार्जितं लोकं हन्मि? शंस॥ ८४

अन्वयः। ऋषिः तं (रामं) प्रत्युवाच—तत्त्वतः त्वां पुरातनं पुरुषं न वेद्मि (इति) न। मया गां गतस्य तव वैष्णवं धाम दिदृक्षुणा (सता) कोपितः हि असि॥ ८५

हरसूनुसन्निभः स्कन्दसमः कृपामृदुः राघवः, आत्मनि विषये स्खलितवीर्य्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितममोघमाशुगं बाणञ्च अवेक्ष्य व्याजहार बभाषे॥ ८३

अभिभवत्यपि त्वयि विप्र इति हेतोः निर्दयं प्रहर्त्तुम् अलं शक्तो नास्मि। किन्तु अनेन पत्त्रिणा शरेण ते गतिं गमनं हन्मि, उत मखार्जितं लोकं स्वर्गं हन्मि, शंस ब्रूहि। ८४

ऋषिर्भार्गवः तं रामं प्रत्युवाच। किमिति? तत्त्वतः स्वरूपतः त्वां पुरातनं पुरुषं वेद्मीति न, किन्तु वेद्म्येव इत्यर्थः। किन्तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजो दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितो ह्यसि॥ ८५

सामान्यधर्म्मो औपम्यवाचि च, उपमेयं चोपमानं भवेद्वाच्यमियं पुनः। समन्वयः। इन्दु दिवाकराभ्यां सह, परस्परस्थितयोः वर्द्धमानपरिहीनतेजसोः तयोरुभयोः भार्गव पार्थिवाभ्यां रामराघवयोः पूर्व्वोदयक्षययोः साम्यं। विचारः। ननु कथमत्र रामस्य तेजसः वर्द्धमानत्वं परशुरामस्य तेजसः हीनत्वं गम्यते? तयोर्न कथं वैपरीत्यं बुध्यते? दिनात्यये इति विशेषणेन सूर्य्यस्य ध्वंसोऽवगम्यते। चत्रियान्तकरणात् ब्राह्मणस्य सूर्य्येण साम्यं।

८३। वाच्यान्तरम्। हरसूनुसन्निभेन कृपामृदुना, राघवेण व्याजह्रे।

८४। वाच्यान्तरम्। अलं मया न भूयते। मया ते गतिः उत मखार्जितो लोको हन्यते शस्यताम् त्वयेतिशेषः। पत्त्रिणा तृतीया करणे।

८५। वाच्यान्तरम्। ऋषिणा स प्रत्यूचे, पुरातनः पुरुषस्त्वं मया न विदितः तव वैष्णवं धाम दिदृक्षुणा त्वं कोपितेन भूयते। तत्त्वतः प्रकृत्यादिभ्यस्तृतीया स्थाने तस्

भस्मसात् कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्य्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६

तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।
पीड़यिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७

प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत् स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८

अन्वयः । पितृद्विषः भस्मसात्, ससागरां वसुधां च पात्रसात् कृतवतो मे परमेष्ठिना त्वया आहितः जयविपर्य्ययः अपि श्लाघ्य एव ॥ ८६

अन्वयः । तत् (हे) मतिमतां वर ! पुण्यतीर्थगमनाय ईप्सितां मे गतिं रक्ष । खिलीकृता स्वर्गपद्धतिः अभोगलोलुपं मां न पीड़यिष्यति ॥ ८७

अन्वयः । राघवः तथेति प्रत्यपद्यत प्राङ्मुखः (सन्) सायकं विससर्ज च । सः (सायकः) सुकृतः अपि भार्गवस्य दुरत्ययः स्वर्गमार्गपरिघः अभवत् ॥ ८८

पितृद्विषः पितृवैरिणो भस्मसात् कृतवतः कोपेन भस्मीकुर्वतः । "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः । ससागरां वसुधाञ्च पात्रसात् पात्राधीनं देयं कृतवतः । "देये त्रा च" इति चकारात् सातिः । कृतकृत्यस्य मे परमेष्ठिना परमपुरुषेण त्वया आहितः कृतो जयविपर्य्ययः पराजयोऽपि श्लाघ्य आश्लाघ्य एव ॥ ८६

तत्तस्मात्कारणात् हे मतिमतां वर ! पुण्यतीर्थगमनाय आमुष्मिकामीप्सितां मे गतिं रक्ष पालय । किन्तु खिलीकृता अपि स्वर्गपद्धतिरभोगलोलुपं भोगनिःस्पृहं मां न पीड़यिष्यति, अतस्तामेव जहीत्यर्थः ॥ ८७

राघवस्तथेति प्रत्यपद्यत अङ्गीकृतवान् । प्राङ्मुखः सायकं विससर्ज च । स सायकः सुकृतोऽपि साधुकारिणोऽपि । करोतेः क्विप् । भार्गवस्य दुरत्ययो दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धोऽभवत् ॥ ८८

८६ । वाच्यान्तरम् । परमेष्ठिना त्वया आहितं जयविपर्य्ययं अहं श्लाघिष्ये । परमेष्ठिना त्वया अनुक्ते कर्त्तरि तृतीया ।

८७ । वाच्यान्तरम् ! पुण्यतीर्थगमनाय मे गतिः रक्ष्यताम् । अभोगलोलुपः अहं खिलीकृतया स्वर्गपद्धत्या न पीड़यिष्ये । पुण्यतीर्थगमनाय चतुर्थी निमित्तार्थे ।

८८ । वाच्यान्तरम् । राघवेन तथेति प्रत्यपद्यत । प्राङ्मुखेन सायको विससृजे । तेन सायकेन दुरत्ययेन अभूयत ।

राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन् समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्त्तये ॥ ८९

राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफला मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ ९०

साधयाम्यहमविघ्नमस्तु ते देवकार्य्यमुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१

अन्वयः। राघवः अपि क्षम्यतां इति वदन् तपोनिधेः चरणौ समस्पृशत् । तरस्विनां तरसा निर्जितेषु शत्रुषु प्रणतिः एव कीर्त्तये ( भविष्यति ) ॥ ८९

अन्वयः। यदा मातृकं राजसत्वम् अवधूय पित्र्यं शमं गमितः अस्मि, तदा त्वया मम अनिन्दितफलः अयं निग्रहः अपि अनुग्रहीकृतः ननु ॥ ९०

अन्वयः। अहं साधयामि । देवकार्य्यम् उपपादयिष्यतः ते अविघ्नम् अस्तु । सलक्ष्मणं लक्ष्मणाग्रजम् इति वचः ऊचिवान् ऋषिः तिरोदधे ॥ ९१

राघवोऽपि 'क्षम्यताम्' इति वदन् तपोनिधेर्भार्गवस्य चरणौ समस्पृशत् प्रणनाम । तथाहि—तरस्विनां बलवतां तरसा बलेन निर्जितेषु शत्रुषु प्रणतिरेव कीर्त्तये भवतीति शेषः ॥ ८९

मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वम् अवधूय पितुरागतं पित्र्यं शमं गमितोऽस्मि । तदा मम अपेक्षितत्वादनिन्दितमगर्हितं फलं स्वर्गहानिलक्षणं यस्य सोऽयं निग्रहः अपकारः अपि अनुग्रहीकृतः ननु उपकारीकृतः खलु ॥ ९०

अहं साधयामि गच्छामि । देवकार्य्यमुपपादयिष्यतः सम्पादयिष्यतस्ते अविघ्नं विघ्नाभावोऽस्तु । "अव्ययं विभक्ति—" इत्यादिनार्थाभावेऽव्ययीभावः । सह लक्ष्मणेन सलक्ष्मणम् तम् । 'तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । लक्ष्मणाग्रजं रामम् इति वचः ऊचिवान् उक्तवान् । ब्रूञः क्वसुः । ऋषिस्तिरोदधे अन्तर्दधे ॥ ९१

८९ । वाच्यान्तरम् । राघवेण त्वं क्षमस्वेति वदता, चरणौ समस्पृश्येताम् । प्रणत्या भूयते । तरसा अनुक्ते कर्त्तरि तृतीया । कीर्त्तये चतुर्थी निमित्तार्थे ।

९० । वाच्यान्तरम् । शमं गमितेन मया भूयते । त्वं अनिन्दितफलं निग्रहमपि इमं अनुग्रहीकृतवान् ।

९१ । वाच्यान्तरम् । मया साध्यते । ते देवकार्य्यं अविघ्नेन भूयताम् । सलक्ष्मणं लक्ष्मणाग्रजं इति वचः ऊचुषा ऋषिणा तिरोदधे ।

तस्मिन् गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत् क्षणशुचः परितोषलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ९३

अन्वयः। तस्मिन् गते (सति) पिता विजयिनं रामं स्नेहात् परिरभ्य, पुनः जातम् अमन्यत। क्षणशुचः तस्य परितोषलाभः कक्षाग्निलङ्घिततरोः वृष्टिपातः इव अभवत् ॥ ९२

अन्वयः अथ शर्वकल्पः अवनिपालः क्लृप्तरम्योपकार्ये पथि कतिचित् शर्वरीः गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः कुवलयितगवाक्षां अयोध्यां पुरम् अविशत् ॥ ९३

तस्मिन् भार्गवे गते सति, विजयिनं रामं पिता स्नेहेन परिरभ्य आलिङ्ग्य, पुनर्जातमेव अमन्यत। क्षणं शुचस्येति विग्रहः। क्षणशुचस्तस्य दशरथस्य परितोषलाभः सन्तोषप्राप्तिः कक्षाग्निना दावानलेन। "कक्षः स्यात्काननवीरुधोः" इति विश्वः। लङ्घितस्याभिहतस्य तरोः वृष्टिपात इव अभवत् ॥ ९२

अथ ईषदसमाप्तः शर्वः शर्वकल्पः। "ईषदसमाप्तौ—" इति कल्पप्प्रत्ययः। अवनिपालः क्लृप्ता रम्या नवा उपकार्या। सः तस्मिन् पथि कतिचिच्छर्वरीः रात्रीर्गमयित्वा मैथिलीदर्शनीनामङ्गनानां लोचनैः कुवलयानि येषां संजातानि कुवलयिताः। "तदस्य संजातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः। कुवलयिता गवाक्षा यस्यास्तां पुरम् अयोध्याम् अविशत् प्रविष्टवान् ॥ ९३

९२। वाच्यान्तरम्। पिता पुनरेव जातः (रामः) अमन्यत। वृष्टिपातेन इव परितोषलाभो अभूयत। तस्मिन् भावे सप्तमी। स्नेहात् हेतौ पञ्चमी, उपमालङ्कारः।
९३। वाच्यान्तरम्। शर्वकल्पेन अवनिपालेन कुवलयितगवाक्षा अयोध्या पुः अविश्यत। लोचनैः तृतीया करणे।

एकादशः सर्गः समाप्तः।

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया-समेते महाकवि-कालिदासकृतौ रघुवंशे महाकाव्ये सीता-विवाहवर्णनो नाम एकादशः सर्गः।

# द्वादशः सर्गः

—:०:—

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १
तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २

अन्वयः । निर्विष्टविषयस्नेहः दशान्तम् उपेयिवान् सः उषसि प्रदीपार्चिः इव आसन्ननिर्वाणः आसीत् ॥१

अन्वयः । जरा कैकेयीशङ्कया इव पलितच्छद्मना कर्णमूलम् आगत्य, 'रामे श्रीः न्यस्यताम्" इति तम् आह ॥२

वन्दामहे महोदग्रदोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्तण्डमण्डलौ लोकनन्दनौ ॥

स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा यैरिति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयस्त एव स्नेहा । दशा यौवनादि तस्य अन्तं वार्द्धक्यम् उपेयिवान् स दशरथः । उषसि प्रदीपार्चिरिव दीपज्वालेव । पक्षे निर्वाणं मोक्षो यस्य सः तथोक्तः आसीत् । अर्चिःपक्षे तु विषयो देश आश्रयः आधारो यावत् । "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति विश्वः । स्नेहस्तैलं "स्नेहस्तैलादिकरसे द्रवे स्यात् सौहृदेऽपि च" इति विश्वः । दशा वर्त्तिका । "दशा वर्त्तावस्थायाम्" इति विश्वः । "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः ॥१

जरा कैकेयीशङ्कयेव पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण । "पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः । कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः राज्यलक्ष्मीः निधीयताम् इति तमाह । दशरथो वृद्धोऽहम् इति विचार्य रामस्य यौवराज्याभिषेकं चकाङ्क्षेत्यर्थः ॥२

१ । वाच्यान्तरम् । निर्विष्टविषयस्नेहेन उपेयुषा प्रदीपार्चिषा इव आसन्ननिर्वाणेन तेन अभूयत । उपमालङ्कारः ।

२ । वाच्यान्तरम् । जरया "रामे श्रियम् न्यस्य" इति सः उच्यते । कैकेयीशङ्कया इव तृतीया हेतौ । पलितच्छद्मना प्रकृत्यादिभ्यस्तृतीया । कैकेयीशङ्कयेव इत्यत्र वाक्यार्थे पलितच्छद्मना इत्यत्र अपह्नुतिस्तयोरङ्गाङ्गिभावेन सङ्करः ।

सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३

तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४

सा किलाश्वासिता चण्डी भर्त्रा तत् संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५

अन्वयः। पौरकान्तस्य रामस्य सा अभ्युदयश्रुतिः कुल्या उद्यानपादपान् इव पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ २

अन्वयः। क्रूरनिश्चया कैकेयी तस्य कल्पितम् अभिषेकसम्भारं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास ॥ ४

अन्वयः। सा चण्डी भर्त्रा आश्वासिता (सती) तत्संश्रुतौ वरौ इन्द्रसिक्ता भूः बिलमग्नौ उरगौ इव उद्ववाम किल ॥ ५

सा पौरकान्तस्य रामस्य अभ्युदयश्रुति अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित्। 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः। उद्यानपादपानिव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ २

क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं संभृतम् अभिषेकस्य संभारमुपकरणं शोकोष्णैः पार्थिवाश्रुभिर्दूषयामास। स्वदुःखमूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥ ४

चण्डी अतिकोपना। "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। सा किल भर्त्रा आश्वासिता सान्त्विता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता अभिवृष्टा भूः बिले बिलादौ मग्नौ उरगौ इव। उद्ववाम उज्जगार ॥ ५

३। पाठान्तरम्। तया अभ्युदयश्रुत्या कुल्यया उद्यानपादपा इव पौराः प्रत्येकं ह्लादयाञ्चक्रिरे। उपमालङ्कारः।

४। पाठान्तरम्। क्रूरनिश्चयया कैकेय्या कल्पितः अभिषेकसम्भारः दूषयामासे। शोकोष्णैः पार्थिवाश्रुभिः वतीया करणे।

५। पाठान्तरम्। आश्वासितया तया चण्ड्या संश्रुतौ वरौ, इन्द्रसिक्तया भुवा बिलमग्नौ उरगाविव उद्वेमाते। अलङ्कारः उपमा। समन्वयः। इन्द्रसिक्तया सह
बिलमग्नौ उरगाविव उद्वेमाते। अलङ्कारः उपमा। समन्वयः। इन्द्रसिक्तया सह
आश्वासितायाः, चण्ड्या सह भुवः, उरगाभ्यश्च सह वरयोः साम्यं। नीरसां भूरिति भावः। अन्यथा इन्द्रसिक्तायाः वैयर्थ्यं स्यात्। संश्रुतौ लोकेषु अप्रकाशितौ, अन्यथा बिलमग्नाभ्यां साम्यं न स्यात्।

तयोश्चतुर्दशैकेन रामं प्राव्राजयत् समाः ।
द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥ ६

पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ७

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८

स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः ॥ ९

अन्वयः । (सः) तयोः एकेन रामं चतुर्द्दश समाः प्राव्राजयत् द्वितीयेन वैधव्य... सुतस्य श्रियम् ऐच्छत् ॥ ६

अन्वयः । रामः रुदन् ( सन् ) प्राक् पित्रा दत्तां महीं प्रत्यपद्यत, पश्चात् मु... ( सन् ) वनाय गच्छ इति तदाज्ञां अग्रहीत् ॥ ७

अन्वयः । मङ्गलक्षौमे दधतः वल्कले वसानस्य च तस्य समं मुखरागं ज... विस्मिताः ( सन्तः ) ददृशुः ॥ ८

अन्वयः । सः गुरुं सत्यात् अलोपयन् सीतालक्ष्मणसखः ( सन् ) दण्डकारण्यं ... मनः च प्रत्येकं विवेश ॥ ९

सा तयोर्वरयोर्मध्ये एकेन वरेण रामं चतुर्दश समाः संवत्सरान्। ... द्वितीया । प्राव्राजयत् प्रावासयत् । द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां ... मात्रफलां न तूपभोगफलामिति भावः । श्रियमैच्छदियेष ॥६

रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार । सत्यागदुःखादिति ... पश्चाद्वनाय गच्छ इति एवंरूपां तदाज्ञीं पित्राज्ञां मुदितः अग्रहीत् । पित्राज्ञाकरण... दिति भावः ॥७

मङ्गलक्षौमे दधतो वल्कले वसानस्य आच्छादयतश्च तस्य रामस्य समम् एकविधं ... मुखवर्णं जना विस्मिता ददृशुः । सुखदुःखयोरविकृत इति भावः ॥८

स रामः गुरुं पितरं सत्याद्वरदानरूपात् अलोपयन् अभ्रंशयन् । सीतालक्ष्मण... सखेति विग्रहः । ताभ्यां सहितः सन्, दण्डकारण्यं विवेश, सतां मनश्च प्रत्येकं वि... पितृभक्त्या सर्वे सन्तः सन्तुष्टा इति भावः ।

६ । वाच्यान्तरम् । कैकेय्या रामः प्राव्राज्यत । वैधव्यैकफला श्रीः ऐष्यत । ... निर्धारे षष्ठी । एकेन, द्वितीयेन च तृतीया करणे । चतुर्द्दशसमाः अत्यन्त... 

७ । वाच्यान्तरम् । रामेण प्राक् दत्ता मही रुदता प्रत्यपद्यत । त्वया ( ... गम्यता म... पादनेन तदाज्ञा प्रत्यगृह्यत । पित्रा तृतीया करणे । वनाय ग... परिस्पन्दनगतावति चतुर्थी ।

८ । वाच्यान्तरम् । विस्मितैः जनैः सममुखरागो ददृशे ।

राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्म्मजम्।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १०

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम्।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११

अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम्।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२

अन्वयः। राजा अपि तद्वियोगार्त्तः (सन्) स्वकर्म्मजं शापं स्मृत्वा शरीरत्यागमात्रेण शुद्धिलाभं अमन्यत ॥१०

अन्वयः। विप्रोषितकुमारम् अस्तमितेश्वरं तत् राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां ययौ ॥११

अन्वयः। अथ अनाथाः प्रकृतयः मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभिः मौलैः आनाययामासुः ॥१२

तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजा अपि स्वकर्म्मणा मुनिपुत्रवधरूपेण जातं स्वकर्म्मजातं शापं पुत्रशोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् अमन्यत। स्मृत इत्यर्थः ॥१०

विप्रोषिता गताः कुमारा यस्मिंस्तत्तथोक्तम्। अस्तमितो मृत ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां भोग्यवस्तुतां ययौ। "आमिषं भोग्यवस्तुनि" इति केशवः ॥११

अथ अनाथाः प्रकृतयः अमात्याः। "प्रकृतिः सहजे योनावमात्ये परमात्मनि" इति केशवः। मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभिः पितृमरणगुप्त्यर्थमिति भावः। मौलैरासैः मन्त्रिभिरानाययामासुरागमयाञ्चक्रुः। १२

९। वाच्यान्तरम्। सीतालक्ष्मणसखेन गुरुं अखोपयता (रामेण) दण्डकारण्यं ... मनस प्रत्येकं विविशे। सत्यात् अपादाने पञ्चमी। उभयत्र सम्बन्धात् तुल्ययोगिता-लङ्कारः।

१०। वाच्यान्तरम्। तद्वियोगार्त्तेन राज्ञापि शुद्धिलाभः अमन्यत। शरीरत्याग-मात्रेण प्रकृत्यादिभ्यस्तृतीया।

११। वाच्यान्तरम्। विप्रोषितकुमारेण अस्तमितेश्वरेण राज्येन, आमिषता ययौ।

१२। वाच्यान्तरम्। अनाथाभिः प्रकृतिभिः मातृबन्धुनिवासी भरतः, स्तम्भिताश्रुभिः मौलैः आनाययामासे। स्तम्भिताश्रुभिः मौलैः "गतिबुद्धि—" इत्यादिना प्रयोज्यकर्त्तुः कर्म्मत्वाभावात् अनुक्ते तृतीया।

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत् पराङ्मुखः॥ १३
ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः।
तस्य पश्यन् ससौमित्रेरुदश्रुर्वसतिद्रुमान्॥ १४
चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा॥ १५
स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः॥ १६

अन्वयः। कैकेयीतनयः पितुः तथाविधं मृत्युं श्रुत्वा स्वस्याः मातुः केवलं न (किन्तु) श्रियः अपि पराङ्मुखः आसीत्॥१३

अन्वयः। (सः) ससैन्यः आश्रमालयैः दर्शितान् ससौमित्रेः तस्य वसतिद्रुमान् पश्यन् उदश्रुः (सन्) रामम् अन्वगात् च॥१४

अन्वयः। गुरोः कथितस्वर्गतिः (सः) चित्रकूटवनस्थं तं च अनुच्छिष्टसम्पदा लक्ष्म्या निमन्त्रयाञ्चक्रे॥१५

अन्वयः। सः हि तस्मिन् प्रथमजे अकृतश्रीपरिग्रहे भुवः स्वीकरणात् आत्मानं परिवेत्तारं मेने॥१६

कैकेयीतनयो भरतः पितुस्तथाविधं स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्या मातुः केवलं मातुरेव पराङ्मुखः न, किन्तु श्रियः अपि पराङ्मुखः आसीत्॥१३

ससैन्यो भरतः रामम् अन्वगाच्च। किं कुर्वन्? आश्रमालयैर्वनवासिभिर्दर्शितान् रामनिवासा इति कथितान् ससौमित्रेर्लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमानावासवृक्षान् पश्यन् उदश्रुः रुदन्॥१४

चित्रकूटवनस्थं तं रामञ्च गुरोः पितुः कथितस्वर्गतिः कथितपितृमरणः सन् अनुच्छिष्टाः अननुभूतशिष्टा सम्पद गुणोत्कर्षो यस्याः सा। 'सम्पद भूतौ गुणोत्कर्षे' इति केशवः। तया लक्ष्म्या करणेन निमन्त्रयाञ्चक्रे आहूतवान्॥१५

स हि भरतः प्रथमजेऽग्रजे तस्मिन् रामेऽकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणात्

१३। वाच्यान्तरम्। कैकेयीतनयेन पराङ्मुखेन अभूयत।
१४। वाच्यान्तरम्। दर्शितान् वसतिद्रुमान् पश्यता ससैन्येन (भरतेन) रामः अन्वगायि।
१५। वाच्यान्तरम्। कथितस्वर्गतिना, चित्रकूटवनस्थः स अनुच्छिष्टसम्पदा लक्ष्म्या निमन्त्रयाञ्चक्रे। अनुच्छिष्टसम्पदा लक्ष्म्या तृतीया करणे।

तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात् कर्त्तुं राज्याधिदेवते ॥ १७

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत् पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९

अन्वयः। स्वर्गिनः पितु निदेशात् अपाक्रष्टुं अशक्यं तं पश्चात् पादुके राज्याधिदेवते कर्त्तुं ययाचे ॥१७

अन्वयः। सः भ्रात्रा तथा इति उक्त्वा विसृष्टः पुरीं न अविशत् एव ; नन्दिग्रामगतः (सन्) तस्य राज्यं न्यासं इव अभुनक् ॥१८

अन्वयः। ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखः भरतः इति (उक्तानुष्ठानेन) मातुः पापस्य प्रायश्चित्तं इव अकरोत् ॥१९

...त्मानं परिवेत्तारं मेने। 'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्' इत्यमरः। ...र्त्तव्यतोऽपि-दारपरिग्रहसम इति भावः ॥१६

स्वर्गिणः पितुर्निदेशादपाक्रष्टुं निवर्त्तयितुमशक्यं तं रामं पश्चाद्राज्याधिदेवते ...तामिव्यौ कर्त्तुं पादुके ययाचे ॥१७

स भरतः भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीमयोध्यां नाविशदेव। किन्तु नन्दि...ग्रामगतः सन् तस्य रामस्य राज्यं न्यासमिव निक्षेपमिव अभुनक् अपालयत् न तूपभुक्तवानि...त्यर्थः। अन्यथा 'भुजोऽनवने' इत्यात्मनेपदप्रसङ्गः। भुजेर्लङ् ॥१८

...ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखो भरत इति पूर्वोक्तानुष्ठानेन मातुः पापस्य ...प्रायश्चित्तं तदपनोदकं कर्म्म अकरोदिव। इत्युत्प्रेक्षा। दृढभक्तिरित्यत्र दृढशब्दस्य 'स्त्रियाः ...पुंवत्—' इत्यादिना पुंवद्भावो दुर्घटः। "अप्रियादिषु" इति निषेधात्। भक्तिशब्दस्य

१६। वाच्यान्तरम्। तेन आत्मा परिवेत्ता मेने। स्वीकरणात् हेतौ पञ्चमी। ...स्मिन् अकृतस्त्रीपरिग्रहे प्रथमजे सप्तमी भावे।

१७। वाच्यान्तरम्। (तेन) अशक्यः स राज्याधिदेवते पादुके ययाचे। निदेशात् ...पञ्चमी अपादाने।

१८। वाच्यान्तरम्। भ्रात्रा विसृष्टेन तेन पुरी नैवाविश्यत ; नन्दिग्रामगतेन (तेन) न्यासमिव राज्यं अभुज्यत। उत्प्रेक्षालङ्कारः।

१९। वाच्यान्तरम्। दृढभक्तिना, राज्यतृष्णापराङ्मुखेन, भरतेन प्रायश्चित्तं इव ...क्रियत।

रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन्।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥ २०

प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम्।
कदाचिदङ्के सीतायाः शिश्ये किञ्चिदिव श्रमात् ॥ २१

ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन् ॥ २२

अन्वयः। सानुजः शान्तः रामः अपि वैदेह्या सह वने वन्येन वर्त्तयन् युवा (स) वृद्धेक्ष्वाकुव्रतं चचार ॥२०

अन्वयः। सः कदाचित् प्रभावस्तम्भितच्छायं वनस्पतिं आश्रितः (सन्) कि[ञ्चित्] श्रमात् इव सीतायाः अङ्के शिश्ये ॥२१

अन्वयः। ऐन्द्रिः द्विजः तस्याः स्तनौ प्रियोपभोगचिह्नेषु पौरोभाग्यं इव आच[रन्] नखैः विददार किल ॥२२

प्रियादिषु पाठात्। अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति. अथवा दृढभक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षितत्वात् सिद्धमिति समाधेयम्। [वृत्ति]कारस्य—दीर्घनिवृत्तिमात्रपरो दृढभक्तिशब्दो लिङ्गविशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षितं तस्मादस्त्रीलिङ्गत्वाद्दृढभक्तिशब्दस्यायं प्रयोग इत्यभिप्रायः। न्यासकारोऽप्येवम्। भोज[राज]—कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठात् भवानीभक्तिरित्यादौ कर्मसाधनत्वात् पुंवद्भाव[स्य] प्रतिषेधः। दृढभक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्वपदस्येत्याह ॥१९

सानुजः शान्तो रामोऽपि वैदेह्या सह वने वन्येन वनभवेन कन्दमूला[दिना] वर्तयन् वृत्तिं कुर्वन् जीवन् वृद्धेक्ष्वाकूणां व्रतं वनवासात्मकं युवा यौवनस्थ[ः] चचार ॥२०

स रामः कदाचित् प्रभावेण स्वमहिम्ना स्तम्भिता स्थिरीकृता छाया यस्य तं वनस्पति[म् आ]श्रितः सन् किञ्चिदीषच्छ्रमादिव सीताया अङ्के शिश्ये सुष्वाप ॥२१

ऐन्द्रिरिन्द्रस्य पुत्रो द्विजः पक्षी काकः तस्याः सीतायाः स्तनौ प्रियस्य रामस्य उपभोग[चि]ह्नेषु तत्कृतनखक्षतेष्वित्यर्थः। पुरोभागिनो दोषैकदर्शिनः कर्म पौरोभाग्यम्। "दोषै[कदृ]क् पुरोभागी" इत्यमरः। दुःश्लिष्टदोषाघातमाचरन् कुर्वन्निव नखैर्विददार विलिलेख किलेत्यैतिह्ये ॥२२

२०। वाच्यान्तरम्। वर्त्तयता सानुजेन शान्तेन युना रामेण वृद्धेक्ष्वाकुव्रतं चेरे। वैदेह्या सहयोगे तृतीया। वन्येन तृतीया करणे।

२१। वाच्यान्तरम्। आश्रितेन तेन शिश्ये। श्रमात् इति पञ्चमी। छन्दो[भ]ङ्गभयादेवास्य युज्यते।

तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः ।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ २३
रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः ।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥ २४
प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २५

अन्वयः। रामावबोधितः रामः तस्मिन् इषीकास्त्रं आस्थत्। सः एकनेत्रव्ययेन तस्मात् आत्मानं मुमुचे ॥२३

अन्वयः। रामः तु आसन्नदेशत्वात् पुनः भरतागमनं आशङ्क्य उत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥२४

अन्वयः। सः आतिथेयेषु ऋषिकुलेषु वार्षिकेषु ऋक्षेषु भास्करः इव वसन् दक्षिणां दिशम् ययौ ।

रामया सीतया अवबोधितो रामः तस्मिन् काके इषीकास्त्रं काशास्त्रम् ।"इषीका काश-र्वें" इति हलायुधः। आस्थत् अस्यतिस्म । "असु क्षेपणे" इति धातोर्लुङ्। "अस्य-तिवक्तिख्यातिभ्योऽङ्" इत्यङ्प्रत्ययः। "अस्यतेस्थुक्" इति थुगागमः। सः काकः एक-नेत्र व्ययेन दानेन तस्मादस्त्रादात्मानं मुमुचे मुक्तवान्। मुचेः कर्त्तरि लिट्। "धेनुं ...ोर्ष (२।१) इतिवत् प्रयोगः ॥२३

रामस्त्वासन्नदेशत्वाद्धेतोः पुनर्भरतागमनमाशङ्क्य उत्सुकसारङ्गाम् उत्कण्ठितहरिणां चित्रकूटस्थलीं जहौ तत्याज। आसन्नश्चासौ देशश्चेति विग्रहः ॥२४

स रामः। अतिथिषु साधून्यातिथेयानि। "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्-प्रत्ययः। तेषु ऋषिकुलेषु ऋष्याश्रमेषु, 'कुलं कुल्ये गणे देहे गेहे जनपदेऽन्वये" इति ...। वर्षासु भवानि वार्षिकाणि। 'वर्षाभ्यष्ठक्' इति ठक्प्रत्ययः। तेषु ऋक्षेषु नक्षत्रेषु ...षु वा भास्कर इव, वसन् दक्षिणां दिशं प्रययौ ॥ २५

२२। वाच्यान्तरम्। पौरभाग्यमाचरता एव ऐन्द्रिणा द्विजेन स्तनौ नखैः विददाते। ...तृतीया करणे, प्रियोपभोगचिह्नेषु विषयसप्तमी।

२३। वाच्यान्तरम्। रामावबोधितेन रामेण ईषिकास्त्रम् आसिष्ट। तेन आत्मा ...। तस्मात् अपादाने पञ्चमी। एकनेत्रव्ययेन तृतीया करणे।

२४। वाच्यान्तरम्। रामेण उत्सुकसारङ्गा चित्रकूटस्थली जहे। अङ्कविमा-...बोधने ङीप्। आसन्नदेशत्वात हेतौ पञ्चमी।

२५। वाच्यान्तरम्। वसता भास्करेणे व तेन रामेण दक्षिणा दिक् प्रयये। उपमा-...स्फुट एव।

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २६

अनुसूयातिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम् ॥ २७

सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ २८

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ २९

अन्वयः । तं अनुगच्छन्ती विदेहाधिपतेः सुता कैकेय्या प्रतिषिद्धा (अपि) गुणोन्मु[ख्यौ]
लक्ष्मीः इव बभौ ॥ २६

अन्वयः । सा अनुसूयातिसृष्टेन पुण्यगन्धेन अङ्गरागेण काननं पुष्पोच्चलितषट्प[दं]
चकार ॥ २७

अन्वयः । सन्ध्याभ्रकपिशः विराधः नाम राक्षसः, ग्रहः इन्दोः इव, तस्य रा[मस्य]
मार्गम् आवृत्य अतिष्ठत् ॥ २८

अन्वयः । लोकशोषणः सः तयोः मध्ये मैथिलीं, नभोनभस्ययोः, अन्तरे [वृष्टिम्]
अवग्रह इव जहार ॥ २९

तं रामम् अनुगच्छन्ती विदेहाधिपतेः सुता सीता कैकेय्या प्रतिषिद्धा निवारिता [अपि]
गुणोन्मुखी गुणोत्सुका लक्ष्मीः राजलक्ष्मीरिव बभौ ॥ २६

सा सीता अनुसूयया अत्रिभार्य्यया अतिसृष्टेन दत्तेन पुण्यगन्धेन अङ्गरागेण का[न]-
नम् पुष्पेभ्य उच्चलिता निर्गताः षट्पदा यस्मिंस्तत् तथाभूतं चकार ॥ २७

सन्ध्याभ्रकपिशो विराधो नाम राक्षसः ग्रहो राहुरिन्दोरिव, तस्य रामस्य मार्गम् [व]-
नम् आवृत्य अवरुध्य अतिष्ठत् ॥ २८

लोकस्य शोषणः शोषकः स राक्षसस्तयोः रामलक्ष्मणयोर्मध्ये मैथिलीम्. नभोनभ[स्य]...

२६ । वाच्यान्तरम् । गुणोन्मुख्या लक्ष्म्या इव प्रतिषिद्धयापि अनुगच्छन्त्या [तया]
बभे । तमनुयोगे द्वितीया, कैकेय्या कर्त्तरि तृतीया, उपमालङ्कारः ।

२७ । वाच्यान्तरम् । तया पुष्पोच्चलितषट्पदं काननञ्चक्रे । अनसूयातिसृष्टे[न]
पुण्यगन्धेन अङ्गरागेण तृतीया करणे ।

२८ । वाच्यान्तरम् । सन्ध्याभ्रकपिशेन विराधेन नाम राक्षसेन अस्थीयत् । उप[मा]-
लङ्कारः । समन्वयः । इन्दुना सह रामस्य, ग्रहेण सह विराधस्य साम्यम् ।

२९ । वाच्यान्तरम् । तेन तयोर्मध्ये मैथिली, नभनभस्ययोर्मध्ये वृष्टिः अवग्रहे[ण]
इव जह्रे । उपमालङ्कारः । समन्वयः । नभनभस्याभ्यां रामलक्ष्मणयोः, अवग्रहेण
विराधस्य, वृष्ट्या सह मैथिल्याः साम्यं ज्ञेयम् ।

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ ३०

पञ्चवट्यां ततो रामः शासनात् कुम्भजन्मनः ।
अनपोढस्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव ॥ ३१

रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम् ॥ ३२

अन्वयः। काकुत्स्थौ तं विनिष्पिष्य अशुचिना गन्धेन स्थलीं पुरा दूषयति इति वसुधायां निचख्नतुः च ॥ ३०

अन्वयः। ततः रामः कुम्भजन्मनः शासनात् पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ इव अनपोढस्थितिः (सन्) तस्थौ ॥ ३१

अन्वयः। तत्र मदनातुरा रावणावरजा राघवम्, निदाघार्त्ता व्याली मलयद्रुमम् इव अभिपेदे ॥ ३२

श्रावणभाद्रपदयोरन्तरे मध्ये वृष्टिम् अवग्रहो वर्षाप्रतिबन्ध इव। जहार। "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ॥ २९

ककुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ रामलक्ष्मणौ तं विराधं विनिष्पिष्य हत्वा, अशुचिना अपवित्रेण गन्धेन स्थलीमाश्रमभुवं पुरा दूषयति दूषयिष्यतीति हेतोः। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। वसुधायां निचख्नतुर्भूमौ खनित्वा निचिक्षिपतुः ॥ ३०

ततो रामः कुम्भजन्मनोऽगस्त्यस्य शासनात्, पञ्चानां वटानां समाहारः पञ्चवटी। "तद्धितार्थ"—इति तत्पुरुषः, "संख्यापूर्वो द्विगुः संज्ञायाम्" इति द्विगुः, "द्विगोः" इति ङीप्। "द्विगुरेकवचनम्" इत्येकवचनम्। तस्यां पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ वृद्धेः पूर्वावस्थायामिव, अनपोढस्थितिः अनतिक्रान्तमर्यादः तस्थौ ॥ ३१

तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा। "पूर्वपदात् संज्ञायाम्" इति

३०। वाच्यान्तरम्। काकुत्स्थाभ्यां निचख्ने। तेन स्थली पुरा दूष्यते। अशुचिना गन्धेन तृतीया करणे। इति हेत्वर्थे पञ्चमी। चकारोऽत्र समुच्चये।

३१। वाच्यान्तरम्। रामेण, विन्ध्याद्रिणा प्रकृताविव, अनपोढस्थितिना तस्थे। शासनात् हेतौ पञ्चमी। उपमालङ्कारः। समन्वयः। प्रकृत्याः सह पञ्चवट्याः, विन्ध्याद्रिणा रामस्य साम्यं ज्ञातव्यमिति।

३२। वाच्यान्तरम्। मदनातुरया, रावणावरजया (शूर्पणखया) राघवः, निदा-

सा सीतासन्निधावेव तं वव्रे कथितान्वया ।
अत्यारूढ़ा हि नारीणामकालज्ञो मनोभवः ॥ ३३
कलत्रवानहं बाले कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥ ३४
ज्येष्ठाभिगमनात् पूर्वं तेनाप्यनभिनन्दिता ।
साभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥ ३५

अन्वयः । सा सीतासन्निधौ एव कथितान्वया ( सती ) तं वव्रे । हि ( तथाहि ) अत्यारूढ़ः नारीणां मनोभवः अकालज्ञः ( भवति ) ॥ ३३

अन्वयः । वृषस्कन्धः रामः वृषस्यन्तीं तां ( राक्षसीम् ) "हे बाले ! अहम् कलत्रवान् मे कनीयांसं भजस्व" इति शशास ॥ ३४

अन्वयः । पूर्व्वं ज्येष्ठाभिगमनात् तेन ( लक्ष्मणेन ) अपि अनभिनन्दिता सा पुनः रामाश्रया ( सती ) उभयकूलभाक् नदी इव अभूत् ॥ ३५

आत्मन्। राघवम् निदाघार्त्ता घर्म्मतप्ता व्याकुला व्याली भुजङ्गी मलयद्रुमम् चन्दनद्रुमम् इव, अभिपेदे प्राप ॥ ३२

सा शूर्पणखा सीतासन्निधावेव कथितान्वया कथितस्ववंशा सती तं रामं वव्रे वृतवती। तथाहि—अत्यारूढ़ोऽतिप्रवृद्धो नारीणां मनोभवः कामः कालज्ञोऽवसरज्ञो न भवति। अकालज्ञो हि ॥ ३३

वृषः पुमान्। "वृषः स्याद्वासवे धर्म्मे सौरभेये च शुक्रले। पुंराशिभेदयो, शृङ्गे मूषकश्रेष्ठयोरपि" इति विश्वः। वृषं पुरुषमात्मार्थमिच्छतीति वृषस्यन्ती कामुकी। "वृषस्यन्ती च कामुकी" इत्यमरः। "सुप आत्मनः क्यच्" इति क्यच्प्रत्ययः, "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इत्यसुगागमः, ततो लटः शत्रादेशः, "उगितश्च" इति ङीप्। श्लोकार्थस्तु—वृषस्कन्धो रामो वृषस्यन्तीं तां राक्षसीं "हे बाले ! अहं कलत्रवान्, मे कनीयांसं कनिष्ठं भजस्व इति" शशास आज्ञापितवान् ॥ ३४

पूर्वं ज्येष्ठाभिगमनात् तेन लक्ष्मणेनाप्यनभिनन्दिता नाङ्गीकृता भूयो रामाश्रया

घार्त्तया, व्याल्या मलयद्रुम इव अभिपेदे। उपमालङ्कारः। समन्वयः। निदाघार्त्तया व्याल्या सह मदनातुरायाः रावणावरजायाः, चन्दनद्रुमेण राघवस्य साम्यं ज्ञेयम्।

३३। वाच्यान्तरम्। कथितान्वयया तया स वव्रे। अकालज्ञेन मनोभवेन अत्यारूढ़ेन भूयते। अर्थान्तरन्यासोऽलङ्कारः।

३४। वाच्यान्तरम्। कलत्रवता वृषस्कन्धेन मया, त्वया कनीयान् भज्यताम् इति रामेण सा वृषस्यन्ती शशासे।

संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥ ३६

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ॥ ३७

इत्युक्त्वा मैथिलीं भर्त्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ॥ ३८

अन्वयः। मैथिलीहासः क्षणसौम्यां तां निवातस्तिमिताम् उदधेः वेलां चन्द्रोदयः इव संरम्भं निनाय ॥३६

अन्वयः। अस्य उपहासस्य फलं सद्यः प्राप्स्यसि, मां पश्य, त्वया कृतम्, व्याघ्र्यां मृग्याः परिभवः इति अवेहि। भयात् भर्त्तुः अङ्के निविशतीं मैथिलीम् इत्युक्त्वा शूर्पणखा नाम्नः सदृशं रूपम् प्रत्यपद्यत् ॥३७॥३८

...लो उभे कूले भजतीत्युभयकूलभाक् नदीव अभूत्। सा हि यातायाताभ्यां पर्य्यायेण ...भयगामिनी नदीसदृश्यभूदित्यर्थः ॥३५

मैथिलीहासः क्षण सौम्यां सौम्याकारां तां राक्षसीम्, निवातेन स्तिमितां निश्चला-...वेलाम् अम्बुविकृतिम् अम्बुपूरमित्यर्थः। "अब्ध्यम्बुविकृती वेला" इत्यमरः। चन्द्रो-...इव संरम्भं संक्षोभं निनाय ॥३६

...श्लोकद्वयेनान्वयः। अस्योपहासस्य फलं सद्यः संप्रत्येव प्राप्स्यसि, मां पश्य, त्वया कर्त्ता ...उपहासरूपं करणं व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभव इत्यवेहि ॥३७

भयाद्भर्त्तुरङ्के निविशतीमालिङ्गन्तीं मैथिलीमित्युक्त्वा शूर्पणखा नाम्नः सदृशम् ...शूर्पाकारनखयुक्तमित्यर्थः। रूपमाकारं प्रत्यपद्यत स्वीचकार अदर्शयदित्यर्थः ॥३८

३५। वाच्यान्तरम्। अनभिनन्दितया रामाश्रयया तया (राक्षस्या), उभयकूलभाजा ...इव अभावि। उपमालङ्कारः।

३६। वाच्यान्तरम्। मैथिलीहासेन क्षणसौम्या सा, निवातस्तिमिता वेला चन्द्रो...इव संरम्भं निन्ये। उपमालङ्कारः। समन्वयः। चन्द्रोदयेन सह मैथिलीहासस्य, ...स्तिमितया वेलया सह क्षणसौम्यायाः तस्याः साम्यं, संरम्भस्य तु उभयत्र साम्यम्।

३७। वाच्यान्तरम्। फलं त्वया प्राप्स्यते, अहं दृश्ये त्वयेति शेषः। त्वया कृतं ...व्याघ्र्यां मृग्याः परिभवः इति अवेयताम् त्वयेति शेषः। मृग्याः षष्ठी कर्त्तरि। त्वयेति ...कर्त्तरि तृतीया।

३८। वाच्यान्तरम्। रूपेण सदृशेन प्रत्यपद्यत। भयात् हेतौ पञ्चमी। नाम्नः ...सम्बन्धे षष्ठी। प्रतिपूर्वस्य पदधातोः ज्ञानार्थत्वात् दर्शनार्थो युक्तः।

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद्बुबुधे विकृतेति ताम् ॥ ३९

पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ४०

सा वक्रनखधारिण्या वेणुकर्कशपर्वया ।
अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे ॥ ४१

अन्वयः। लक्ष्मणः प्रथमं कोकिलामञ्जुवादिनीं पश्चात् शिवाघोरस्वनां तां श्रु
विकृता इति बुबुधे ॥ ३९

अन्वयः। अथ सः विकृष्टासिः (सन्) क्षिप्रं पर्णशालां प्रविश्य भीषणां त
वैरूप्यपौनरुक्त्येन अयोजयत् ॥४०

अन्वयः। सा अम्बरे (स्थिता सती) वक्रनखधारिण्या वेणुकर्कशपर्वया अङ्कु
कारया अङ्गुल्या तौ अतर्जयत् ॥४१

लक्ष्मणः प्रथमं कोकिलावन्मञ्जुवादिनीं पश्चात् शिवावद्घोरस्वनां तां शूर्पणखां श्रु
तस्याः स्वनं श्रुत्वेत्यर्थः। सुस्वनः शङ्खः श्रूयत इतिवत् प्रयोगः। विकृता मायाविनीति बु
बुद्धवान् कर्त्तरि लिट् ॥३९

अथ स लक्ष्मणः विकृष्टासिः कोशोद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य। भी
यतीति भीषणाम्। नन्द्यादित्वाल्ल्युः कर्त्तरि। तां राक्षसीं वैरूप्यस्य पौनरुक्त्यम्। स्वरू
वैगुण्यम्। तेन अयोजयत् योजितवान्। स्वभावत एव विकृतां तां कर्णादिच्छेदेन
इतिविकृतामकरोदित्यर्थः ॥ ४०

सा वक्रनखं धारयतीति वक्रनखधारिणी तया वेणुवत् कर्कशपर्वया अत एव अङ्कुश
कार इवाकारो यस्याः सा तया अङ्गुल्या तौ राघवौ अम्बरे व्योम्नि स्थिता। "अ
व्योम्नि वाससि" इत्यमरः। अतर्जयत् अभर्त्सयत्। 'तर्ज भर्त्सने' इति धातोरौ
कादनुदात्तेत्त्वादात्मनेपदेन भाव्यम्, तथापि चक्षिङो ङित्करणान्ज्ञापकादनुदात्
निमित्तस्यानित्यत्वात् परस्मैपदमूह्यमित्युक्तमाख्यातचन्द्रिकायाम्। तर्जयते भर्
तर्जयतीत्यपि च दृश्यते कविष्विति ॥४१

३९। वाच्यान्तरम्। लक्ष्मणेन (प्रथमं) कोकिलामञ्जुवादिनीं (पश्चात्) शि
घोरस्वनां श्रुत्वा (अतएव) विकृता इति सा बुबुधे।

४०। वाच्यान्तरम्। विकृष्टासिना तेन लक्ष्मणेन (वैरूप्यपौनरुक्त्येन) भीष
सा अयोज्यत। वैरूप्यपौनरुक्त्येन तृतीया करणे।

४१। वाच्यान्तरम्। तया तौ अतर्ज्येताम्। वक्रनखधारिण्या। वेणुकर्कशप
अङ्कुशाकारया अङ्गुल्या तृतीया करणे।

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्॥ ४२

मुखावयवलूनां तां नैरृतां यत् पुरो दधुः।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम्॥ ४३

उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः।
निदधे विजयाशंसां चापे सीतांञ्च लक्ष्मणे॥ ४४

अन्वयः। (सा) जनस्थानं आशु प्राप्य खरादिभ्यः तथाविधं रामोपक्रमं नवं रक्षःपरिभवम् आचख्यौ च॥४२

अन्वयः। नैरृताः मुखावयवलूनां तां पुरः दधुः (इति) यत् यत् एव रामाभियायिनां तेषां अमङ्गलम् अभूत्॥४३

अन्वयः। उदायुधान् आपाततः दृप्तान् तान् प्रेक्ष्य राघवः चापे विजयाशंसां लक्ष्मणे सीतां च निदधे॥४४

सा आशु जनस्थानं प्राप्य खरादिभ्यो राक्षसेभ्यस्तथाविधं साङ्गच्छेदात्मकम्, उपक्रम्यत इत्युपक्रमः। कर्मणि घञ्प्रत्ययः। रामस्य कर्तुरुपक्रमं रामोपक्रमं रामेणादावुपक्रान्तमित्यर्थः। "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति क्लीवत्वम्। तत् नवं रक्षसां वर्णानां परिभवन् आचख्यौ च॥४२

नैरृताः राक्षसाः। "नैरृतो यातुरक्षसी" इत्यमरः। मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरो दधुः अग्रे चक्रुः इति यत् तदेव रामाभियायिनां राममभिद्रवतां तेषाममङ्गलम् अभूत्॥४३

उदायुधान् उद्यतायुधान् आपततः आगच्छतः दृप्तांस्तान् खरादीन् प्रेक्ष्य राघवश्चापे विजयाशंसामाशां लक्ष्मणे सीतां च निदधे। सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय [illegible] इति भावः॥४४

४२। वाच्यान्तरम्। तथाविधः रामोपक्रमः नवः परिभवः आचख्ये। खरादिभ्यः [illegible]योगे चतुर्थी।

४३। वाच्यान्तरम्। नैरृतैः मुखावयवलूना सा पुरो दधे येन, तेनैव अमङ्गलेन [illegible]भूयते।

४४। वाच्यान्तरम्। राघवेन चापे विजयाशंसा लक्ष्मणे सीता च निदधे। [illegible]लिङ्गाविभक्तिवचनसाम्यालङ्कारः।

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात् सममिवोद्ययुः ॥ ४७

अन्वयः। दाशरथिः एकः, यातुधानाः कामं सहस्रशः ( सन्ति )। तैः सः
ते ( यातुधानाः ) यावन्त एव तावान् च ददृशे ॥ ४५

अन्वयः। अथ शुभाचारः सः काकुत्स्थः असज्जनेन प्रयुक्तं दूषणम् ( दूषणाख्यं
आत्मनः ( दूषणम् ) इव, न चक्षमे ॥ ४६

अन्वयः। सः तं खरत्रिशिरसौ च शरैः प्रतिजग्राह। क्रमशः ( प्रयुक्ताः
तस्य ते ( शराः ) पुनः चापात् समम् इव उदययुः ॥ ४७

दाशरथिः रामः एकोऽद्वितीयः। यातुधानाः कामं सहस्रशः सन्तीति शेषः। तैः
धानैस्तु सः रामः आजौ ते यातुधाना यावन्तो यावत्संख्यका एव तावान्
संख्यकाश्च ददृशे ॥ ४५

अथ शुभाचार, रघी साधुचारी सद्वृत्तश्च सः काकुत्स्थः असज्जनेन दुर्जनेन रावणे
च प्रयुक्तं प्रेषितमुच्चारितं च दूषणं दूषणाख्यं राक्षसम् आत्मनो दूषणं दोषमिव
न सेहे प्रतिकर्तुं प्रवृत्त इत्यर्थः ॥ ४६

स रामः तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह प्रतिजहारेत्यर्थः। क्रमशो
क्रमम् प्रयुक्ता अपीति शेषः। तस्य ते शराः पुनश्चापात् समं युगपदिव उदययुः। अविच्छ
इति भावः ॥ ४७

४५। वाच्यान्तरम्। एकेन दाशरथिना, यातुधानैः तैः यावद्भिः श्रूयते।
तैर्यावद्भिः तावन्त ददृशुः। सहस्रशः वीप्सार्थे शस्।

४६। वाच्यान्तरम्। काकुत्स्थेन शुभाचारेण तेन प्रयुक्तं दूषणं
दूषणमिव न चक्षमे। असज्जनेन कर्त्तरि तृतीया।

४७। वाच्यान्तरम्। तेन स खरत्रिशिरसौ च प्रतिजगृहिरे। ते शराः
चापात् पञ्चमी अपादाने। क्रमशः वह्वल्पार्थाच्चेति शस्।

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरन्तु पतत्रिभिः ॥ ४८
तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन ॥ ४९
सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५०

अन्वयः। देहातिगैः यथापूर्व्वविशुद्धिभिः शितैः तैः बाणैः त्रयाणाम् आयुः (पीतं) रुधिरं पतत्रिभिः पीतम् ॥४८

अन्वयः। तस्मिन् रामशरोत्कृत्ते महति रक्षसां बले उत्थितं कबन्धेभ्यः अन्यच्च किञ्चन न ददृशे ॥४९

अन्वयः। सा सुरद्विषां वरूथिनी बाणवर्षिणं रामं योधयित्वा गृध्रच्छाये अप्रबोधाय सुष्वाप ॥५०

देहमतीत्य भित्त्वा गच्छन्तीति देहातिगाः तैः यथास्थिता पूर्वविशुद्धिर्येषां तैः, अति-क्रमेऽपि देहभेदात् प्रागिव रुधिरलेपरहितैरित्यर्थः। शितैस्तीक्ष्णैस्तैर्बाणैस्त्रयाणां खरादीनाम् आयुः पीतं, रुधिरन्तु पतत्रिभिः पीतम् ॥४८

तस्मिन् रामशरैः उत्कृत्ते छिन्ने महति रक्षसां बले उत्थितमुत्थानक्रियाविशिष्टं कबन्धेभ्यः शिरोहीनशरीरेभ्यः। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्' इत्यमरः। अन्यत् किञ्चन न ददृशे। कबन्धेभ्य इत्यत्र 'अन्यारात्—' इति पञ्चमी। निःशेषं इत्यर्थः।

सा सुरद्विषां वरूथिनी सेना, बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां गृध्रच्छायम्। "छाया बाहुल्ये" इति क्लीवत्वम्। तस्मिन्नप्रबोधाय अपुनर्बोधाय मरणायेत्यर्थः। अत्र सुरतश्रान्तकान्तासमाधिर्ध्वन्यते ॥५०

४८। वाच्यान्तरम्। देहातिगाः यथापूर्व्वविशुद्धयः शिताः बाणाः आयुः पतत्त्रिणः पीतवन्तः। उपमया आयुषोपमानमुपलभ्य तुल्ययोगितालङ्कारः।

४९। वाच्यान्तरम्। जनाः उत्थितं अन्यत् किञ्चित् न ददृशुः। कबन्धेभ्यः इत्यत्र पञ्चमी। रामशरोत्कृत्ते महति बले सप्तमी।

५०। वाच्यान्तरम्। तया वरूथिन्या। सुषुपे। अप्रबोधाय चतुर्थी निमित्तार्थे।

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम्।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ॥ ५१

निग्रहात् स्वसुराप्तानां वधाच्च धनदानुजः।
रामेण निहितं मेने पदं दशसु मूर्द्धसु ॥ ५२

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३

अन्वयः। एका शूर्पणखा एव रावणं प्रति राघवास्त्रविदीर्णानां तेषां र... दुष्प्रवृत्तिहरा अभवत् ॥५१

अन्वयः। धनदानुजः स्वसुः निग्रहात् आप्तानां वधात् च रामेण दशसु मूर्द्धसु... निहितं मेने ॥५२

अन्वयः। सः मृगरूपेण रक्षसा राघवौ वञ्चयित्वा पक्षीन्द्रप्रयासक्षणविघ्नितः (स... सीतां जहार ॥५३

एका शूर्पवन्नखानि यस्याः सा शूर्पणखा। "पूर्व्वपदात् संज्ञायाम्—" इति ण... "नखमुखात् संज्ञायाम्" इति ङीप्प्रतिषेधः। सैव रावणं प्रति राघवास्त्रैर्विदी... हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिं वार्त्तां हरति प्रापयतीति दुष्प्रवृत्तिहरा... "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्ययः ॥५१

स्वसुः शूर्पणखायाः निग्रहात् अङ्गच्छेदात् आप्तानां बन्धूनां खरादीनां वधाच्च... धनदानुजो रावणः, रामेण दशसु मूर्द्धसु पदं पादं निहितं मेने ॥५२

स रावणः मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य्य, पक्षीन्द्रस्य ज... प्रयासेन युद्धरूपेण क्षणं विघ्नितः संजातविघ्नः सन् सीतां जहार ॥५३

५१। वाच्यान्तरम्। एकया शूर्पणखया एव दुष्प्रवृत्तिहरा अभूयत। ... प्रतियोगे द्वितीया।

५२। वाच्यान्तरम्। धनदानुजेन पदं निहितं मेने। निग्रहात् वधात् च ... पञ्चमी। स्वसुः आप्तानां कर्म्मणि षष्ठी। रामेण कर्त्तरि तृतीया।

५३। वाच्यान्तरम्। पक्षीन्द्रप्रयासक्षणविघ्नितेन तेन सीता जह्रे। ... रक्षसा तृतीया करणे।

तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्त्तिभिः ॥ ५४

स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत्कर्म्म व्रणैरावेद्य संस्थितः ॥ ५५

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात् परा ववृतिरे क्रियाः ॥ ५६

अन्वयः । सीतान्वेषिणौ तौ लूनपक्षं कण्ठवर्त्तिभिः प्राणैः दशरथप्रीतेः अनृणं …म् अपश्यताम् ॥५४

अन्वयः । सः रावणहृतां मैथिलीं ताभ्यां वचसा आचष्ट, आत्मनः सुमहत्कर्म्म …ः आवेद्य संस्थितः ॥५५

अन्वयः । नवीभूत पितृव्यापत्तिशोकयोः तयोः तस्मिन् पितरि इव अग्निसंस्कारात् … क्रियाः ववृतिरे ॥५६

सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्त्तिभिः प्राणैः, दशरथ-…शरथसख्यस्य अनृणम् ऋणैर्विमुक्तं गृध्रं जटायुषम् अपश्यतां दृष्टवन्तौ । दृशेर्लङि …म् ॥५४

… जटायुः रावणहृतां मैथिलीं ताभ्यां रामलक्ष्मणाभ्याम् । "क्रियाग्रहणमपि …म्" इति संप्रदानत्वाच्चतुर्थी । वचसा वाग्वृत्त्या आचष्ट । आत्मनः सुमहत्कर्म …पं व्रणैरावेद्य संस्थितः मृतः ॥५५

…व्यापत्तिर्मरणम् । नवीभूतः पितृव्यापत्तिशोकौ ययोस्तौ तयोः राघवयोस्तस्मिन् गृध्रे …व अग्निसंस्कारादग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरे अवर्तन्त । तस्य …शौर्ध्वदैहिकं चक्रतुरित्यर्थः ॥५६

५४ । वाच्यान्तरम् । सीतान्वेषिभ्यां ताभ्यां लूनपक्षः अनृणः गृध्रः अदृश्यत । …र्त्तिभिः प्राणैः तृतीया उपलक्षणे ।

५५ । वाच्यान्तरम् । संस्थितेन तेन, रावणहृता मैथिली आख्यायत । ताभ्यां …योगे चतुर्थी । व्रणैः तृतीया करणे ।

५६ । वाच्यान्तरम् । पराभिः क्रियाभिः ववृते । अग्निसंस्कारात् इतौ पञ्चमी …र्थाहारः ।

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७
स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८
इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्त्तस्य रामस्येव मनोरथाः ॥ ५९

अन्वयः। वधनिर्धूतशापस्य कबन्धस्य उपदेशतः रामस्य समानव्यसने हरौ स
मुमूर्च्छ ॥५७

अन्वयः। वीरः सः वालिनं हत्वा चिरकाङ्क्षिते तत्पदे धातोः स्थाने आदेशम्
सुग्रीवं संन्यवेशयत् ॥५८

अन्वयः। कपयः भर्तृचोदिताः (सन्तः) आर्त्तस्य रामस्य मनोरथा इव इत
वैदेहीम् अन्वेष्टुं चेरुः च ॥५९

वधेन रामकृतेन निर्धूतशापस्य देवभुवं गतस्य कबन्धस्य रक्षोविशेषस्य उपदे
रामस्य समानव्यसने समानापदि सख्यं मुमूर्च्छ व्याप्तं बभूवेत्यर्थः। हरौ कपौ सुग्रीवे। "शुक्राहि
भेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। सख्यं मुमूर्च्छ ववृधे ॥५७

वीरः स रामः वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते तत्पदे वालिस्थाने
स्थाने आदेशमिव आदेशभूतं धात्वन्तरमिवेत्यर्थः। सुग्रीवं संन्यवेशयत् स्थापितव
यथा "अस्तेर्भूः" इत्यस्तिधातोः स्थाने आदेशो भूधातुरस्तिकार्य्यमशेषं समभिधत्ते त
भावः। आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ॥५८

वैदेहीम् अन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयः हनुमत्प्रमुख
आर्त्तस्य विरहातुरस्य रामस्य मनोरथाः कामा इव। इतस्ततश्चेरुर्नानादि
बभ्रमुश्च ॥५९

५७। वाच्यान्तरम्। सख्येन मुमूर्च्छे। उपदेशतः हेतौ पञ्चमी।

५८। वाच्यान्तरम्। तेन आदेश इव सुग्रीवः संन्यवेश्यत। उपमावक्ष
समन्वयः। स्थानेन सह तत्पदस्य, आदेशेन सह सुग्रीवस्य साम्यम्।

५९। वाच्यान्तरम्। चोदितैः कपिभिः मनोरथैरिव चेरे। उपमालङ्का
समन्वयः। इतस्ततः वैदेहीमन्वेष्टुं उभयत्र समानं। मनोरथैः सह कपिभिः
बोद्धव्यमिति।

प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात्।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः॥ ६०
दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता।
जानकी विषवल्लीभिः परीतेव महौषधिः॥ ६१
तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः॥ ६२

अन्वयः। मारुतिः सम्पातिदर्शनात् तस्याः प्रवृत्तौ उपलब्धायां निर्ममः संसारम् इव सागरं तीर्णः॥६०

अन्वयः। लङ्कायां विचिन्वता तेन विषवल्लीभिः परीता महौषधिरिव राक्षसीवृता जानकी दृष्टा॥६१

अन्वयः। कपिः भर्तुः अभिज्ञानम् अङ्गुलीयं तस्यै ददौ। तदा अनुष्णैः आनन्दाश्रुबिन्दुभिः प्रत्युद्गतमिव॥६२

सम्पातिर्नाम जटायुषो ज्यायान् भ्राता तस्य दर्शनात् तन्मुखादिति भावः। तस्याः सीतायाः प्रवृत्तौ वार्त्तायाम्। "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः। उपलब्धायां ज्ञातायाम् सत्याम्। मारुतस्यापत्यं पुमान् मारुतिः हनुमान् सागरम्। ममेत्यव्ययं ममतावाचि तद्रहितो निर्ममो निःस्पृहः संसारम् अविद्याबन्धनमिव तीर्णस्ततार। तरतेः कर्त्तरि क्तः॥६०

लङ्कायां रावणराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना, राक्षसीभिर्वृता जानकी, विषवल्लीभिः परीता परिवृता महौषधिः संजीवनी लतेव दृष्टा॥६१

कपिः हनुमान् भर्त्तुः रामस्य सम्बन्धि अभिज्ञानं प्रत्यभिज्ञानसाधकमङ्गुलीयम् ऊर्मिकाम्। "अङ्गुलीयकमूर्मिका" इत्यमरः। "जिह्वामूलाङ्गुलेश्छः" इति छप्रत्ययः।

६०। वाच्यान्तरम्। मारुतिना सागरः निर्ममेन संसार इव तीर्णः। प्रवृत्तौ भावे सप्तमी। सम्पातिदर्शनात् हेतौ पञ्चमी। उपमालङ्कारः। समन्वयः। संसारेण सह सागरस्य, निर्ममेन सह मारुतेः साम्यम्।

६१। वाच्यान्तरम्। विचिन्वन् स राक्षसीवृतां जानकीं विषवल्लीभिः परीतां महौषधिमिव दृष्टवान्। उपमालङ्कारः। समन्वयः। विषवल्लीभिः सह राक्षसीनां महौषध्यां सह जानक्याः साम्यम्, अन्यत् सुगमम्। विचिन्वता तेन कर्त्तरि तृतीया।

विचारः। ननु मारुतिः सागरं तीर्णः इत्यत्र कथं सकर्म्मकाद्धातोः कर्त्तरि क्तः? गत्यर्थाकर्मकेत्यादिना सूत्रेण नायं आक्रान्तः तर्हि कथं स्यात्। सत्यम्। आरम्भे कर्त्तरि क्त इत्यादिना पाक्षिकत्वात् आरम्भत्वाच्च कर्त्तरि क्तः युक्तः।

निर्वाप्य प्रियसन्देशैः सीतामक्षवधोद्धतः।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः॥ ६३
प्रत्यभिज्ञानरत्नञ्च रामायादर्शयत् कृती।
हृदयं स्वयमायातं वैदेह्या इव मूर्त्तिमत्॥ ६४
स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम्॥ ६५

अन्वयः। सः प्रियसन्देशैः सीतां निर्व्वाप्य अक्षवधोद्धतः क्षणसोढारिनिग्रहः (सन्) लङ्कां पुरीं ददाह॥६३

अन्वयः। कृती स्वयम् आयातं मूर्त्तिमत् वैदेह्याः हृदयमिव (स्थितम्) प्रत्यभिज्ञानरत्नं च रामाय अदर्शयत्॥६४

अन्वयः। हृदयन्यस्तमणिस्पर्शनिमीलितः सः अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिं प्राप॥६५

तस्यै जानक्यै ददौ। किंविधमङ्गुलीयम्। अनुष्णैः शीतलैः तस्याः आनन्दाश्रुबिन्दुभिः प्रत्युद्गतमिव स्थितम्। अयं भिज्ञानदर्शनादानन्दवाष्पो जात इत्यर्थः॥६२

स कपिः प्रियस्य रामस्य सन्देशैर्वाचिकैः सीतां निर्व्वाप्य सुखयित्वा अक्षस्य राजकुमारस्य वधेन उद्धतः दृप्तः सन्, क्षणं सोढः अरेरिन्द्रजितः कर्तुः निग्रहो ब्रह्मास्त्रबन्धरूपः येन स तथोक्तः सन्, लङ्कां पुरीं ददाह भस्मीचकार॥६३

कृती कृतकृत्यः कपिः स्वयमायातं मूर्तिमद्वैदेह्या हृदयमिव स्थितं तस्या एव प्रत्यभिज्ञानरत्नञ्च रामाय अदर्शयत॥६४

हृदये वक्षसि न्यस्तस्य धृतस्य मणेरभिज्ञानरत्नस्य स्पर्शेन निमीलितः मोहितः स रामः अविद्यमानः पयोधरसंसर्गः स्तनस्पर्शो यस्यास्तां तथाभूतां प्रियया आलिङ्गनेन निर्वृतिरानन्दस्तां प्राप॥६५

६२। वाच्यान्तरम्। कपिना अनुष्णैः तदानन्दाश्रुबिन्दुभिः प्रत्युद्गतमिव अभिज्ञानम् अङ्गुलीयं तस्यै ददे। तस्यै चतुर्थी सम्प्रदाने। तदानन्दाश्रुबिन्दुभिः तृतीया करणे। उतप्रेक्षालङ्कारः।

६३। वाच्यान्तरम्। अक्षवधोद्धतेन क्षणसोढारिनिग्रहेन तेन पुरी लङ्का ददाहे। प्रियसन्देशैः तृतीया करणे।

६४। वाच्यान्तरम्। कृतिना स्वयं आयातं मूर्त्तिमत् वैदेह्याः हृदयमिव प्रत्यभिज्ञानरत्नं रामाय अदर्श्यत। उतप्रेक्षालङ्कारः।

६५। वाच्यान्तरम्। हृदयन्यस्तमणिस्पर्शनिमीलितेन तेन अपयोधरसंसर्गा प्रियालिङ्गननिर्वृत्तिः प्रापे।

श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्त्तिभिः ॥ ६७

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ६८

तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९

अन्वयः। रामः प्रियोदन्तं श्रुत्वा तत्सङ्गमोत्सुकः ( सन् ) लङ्कायाः महार्णवपरिक्षेपं परिखालघुं मेने ॥६६

अन्वयः। सः केवलं भुवः पृष्ठे न, व्योम्नि ( च ), सम्बाधवर्त्तिभिः हरिसैन्यैः अनुद्रुतः (सन्) अरिनाशाय प्रतस्थे ॥६७

अन्वयः। विभीषणः राक्षसलक्ष्म्या स्नेहात् बुद्धिं आविश्य चोदित इव (सन्) उदधेः कूले निविष्टं तं प्रपेदे ॥६८

अन्वयः। राघवः तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव। काले समारब्धाः नीतयः फलं बध्नन्ति खलु ॥६९

प्रियायाः उदन्तं वार्त्ताम् । "उदन्तः साधुवार्त्तयोः" इति विश्वः। श्रुत्वा तस्याः सीतायाः सङ्गमे उत्सुको रामः, लङ्कायाः संबन्धी यः महार्णव एव परिक्षेपः परिवेष्टः तम् परिखालघुं दुर्गवेष्टनवत् सुतरं मेने ॥६६

केवलमेकं भुवः पृष्ठे भूतले न, किन्तु व्योम्नि च संबाधवर्त्तिभिः संकटगामिभिर्हरिसैन्यैः अनुद्रुतः अन्वितः सन् सः रामः अरिनाशाय प्रतस्थे चचाल ॥६७

उदधेः कूले निविष्टं तं रामम् विशेषेण भीषयते शत्रूनिति विभीषणो रावणानुजः। राक्षसलक्ष्म्या स्नेहाद्बुद्धिं कर्त्तव्यताज्ञानम् आविश्य चोदितः प्रणोदित इव प्रपेदे प्राप ॥६८

राघवस्तस्मै विभीषणाय। "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" इति सम्प्रदानत्वाच्चतुर्थी। निशाचरैश्वर्य्यं राक्षसाधिपत्यं प्रतिशुश्राव प्रतिज्ञातवान्। तथाहि—काले अवसरे समारब्धाः प्रक्रान्ता नीतयः फलं बध्नन्ति गृह्णन्ति जनयन्तीत्यर्थः। खलुः ॥६९

६६। वाच्यान्तरम्। तत्सङ्गमोत्सुकेन रामेण महार्णवपरिक्षेपः परिखालघुः मेने।
६७। वाच्यान्तरम्। अनुद्रुतेन तेन रामेण, अरिनाशाय प्रतस्थे। सम्बाधवर्त्तिभिः हरिसैन्यैः कर्त्तरि तृतीया।
६८। वाच्यान्तरम्। राक्षसलक्ष्म्या चोदितेन विभीषणेन निविष्टः स प्रपेदे। स्नेहात् हेतौ पञ्चमी। राक्षसलक्ष्म्यां कर्त्तरि तृतीया। उत्प्रेक्षालङ्कारः।
६९। वाच्यान्तरम्। राघवेन ऐश्वर्य्यं प्रतिशुश्रुवे। समारब्धाभिः नीतिभिः फलं बध्यते। तस्मै प्रतिपूर्वस्य श्रुधातोर्योगे चतुर्थी। अर्थान्तरन्यासोऽलङ्कारः।

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ७०

तेनोत्तीर्य्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ ७१

रणः प्रववृते तत्र भीमः प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ॥ ७२

पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतङ्गजः ॥ ७३

अन्वयः। सः लवणाम्भसि प्लवगैः शार्ङ्गिणः स्वप्नाय रसातलात् उन्मग्नं शेषम् इव सेतुं बन्धयामास ॥७०

अन्वयः। तेन पथा उत्तीर्य्य पिङ्गलैः (अतएव) द्वितीयं हेमप्राकारं कुर्वद्भिः इव (स्थितैः) वानरैः लङ्कां रोधयामास ॥७१

अन्वयः। तत्र प्लवगरक्षसां भीमः दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः पादपाविद्धपरिघः, शिलानिष्पिष्टमुद्गरः अतिशस्त्रनखन्यासः शैलरुग्णमतङ्गजः रणः प्रववृते ॥७२-७३

सः रामः। लवणं क्षारम् अम्भो यस्य असौ लवणाम्भाः तस्मिन् लवणाम्भसि प्लवगैः प्रयोज्यैः। शार्ङ्गिणो विष्णोः स्वप्नाय शयनाय रसातलात्पातालात् उन्मग्नम् उत्थितं शेषमिव स्थितम् सेतुं बन्धयामास ॥७०

रामसैन पथा सेतुमार्गेण उत्तीर्य्य सागरमिति शेषः। पिङ्गलैः सुवर्णवर्णैः अत एव द्वितीयं हेमप्राकारं कुर्वद्भिरिव स्थितैर्वानरैर्लङ्कां रोधयामास ॥७१

तत्र लङ्कायां प्लवगानां रक्षसाञ्च भीमः भयङ्करः दिग्विजृम्भितं काकुत्स्थपौलस्त्ययोः रामरावणयोर्जयघोषणं जयशब्दो यस्मिन् स तथोक्तो रणः प्रववृते प्रवृत्तः। "युद्धमायोधनं जन्यं ... समरानीकरणाः कलहविग्रहौ" इत्यमरः ॥७२

किम्विधो रणः—पादपैर्वृक्षैराविद्धा भग्नाः परिघा लौहबद्धकाष्ठानि यस्मिन् स तथोक्तः। "परिघः परिघातनः" इत्यमरः। शिलाभिर्निष्पिष्टाश्चूर्णिता मुद्गरा यस्मिन् स तथोक्तः, "द्रुघणो मुद्गरघनौ" इत्यमरः। अतिशस्त्राः शस्त्राण्यतिक्रान्ता नखन्यासा यस्मिन् सः तथोक्तः। शैलैः रुग्णा भग्ना मतङ्गजा यस्मिन् सः तथोक्तः ॥७३

७०। वाच्यान्तरम्। उन्मग्नः शेषः इव तेन सेतुः बन्धयामासे। प्लवगैः प्रयोज्यकर्त्तरि तृतीया अनुक्ते वा। रसातलात् अपादाने पञ्चमी, स्वप्नाय चतुर्थी निमित्तार्थे। उत्प्रेक्षालङ्कारः।

७१। वाच्यान्तरम्। रामेण लङ्का रोधयामासे। तेन पथा करणे तृतीया। पिङ्गलैः वानरैः प्रयोज्यकर्त्तरि तृतीया। उत्प्रेक्षालङ्कारः।

७२। वाच्यान्तरम्। भीमेन दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणेन रणेन प्रववृते।

अथ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ७४

कामं जीवति मे नाथ इति सा विजहौ शुचम् ।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ७५

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६

अन्वयः। अथ त्रिजटा रामशिरश्छेददर्शनोद्भ्रान्तचेतनां सीतां मायेति शंसन्ती समजीवयत् ॥ ७४

अन्वयः। सा "मे नाथः जीवति" इति (हेतोः) शुचं कामं विजहौ। (किन्तु) प्राक् अस्य अन्तं सत्यं मत्वा जीविता अस्मि इति (हेतोः) लज्जिता ॥ ७५

अन्वयः। गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः क्षणक्लेशः दाशरथ्योः स्वप्नवृत्तः इव अभवत् ॥ ७६

अथानन्तरम्। छिद्यत इति छेदः खण्डः, शिर एव छेद इति विग्रहः। रामशिरश्छेदस्य विद्युज्जिह्वाख्यराक्षसमायानिर्मितस्य दर्शनेन उद्भ्रान्तचेतनां गतसंज्ञां सीतां त्रिजटा नाम काचित् सीतापक्षपातिनी राक्षसी, "मायाकल्पितं न त्वेतत् सत्यम् इति शंसन्ती कथयन्ती। "शप्श्यनोर्नित्यम्" इति नित्यं नुमागमः। समजीवयत् ॥ ७४

सा सीता, "मे नाथो जीवति" इति हेतोः शुचं शोकं कामं विजहौ। किन्तु प्राक् पूर्वम् अस्य नाथस्य अन्तं नाशं सत्यं यथार्थं मत्वा "जीविता जीवितवत्यस्मि" इति हेतोर्लज्जिता लज्जावती। कर्त्तरि क्तः। दुःखादपि दुःसहो लज्जाभर इति भावः ॥ ७५

गरुडस्तार्क्ष्यः तस्य आपातेन आगमनेन विश्लिष्टं मेघनादस्येन्द्रजितः अस्त्रेण नागपाशेन बन्धनं यस्मिन् सः तथोक्तः, क्षणक्लेशः दाशरथ्योः रामलक्ष्मणयोः स्वप्नवृत्तः स्वप्नावस्थायां भूत इव अभवत् ॥ ७६

७३। वाच्यान्तरम्। पादपविटपरिवेन शिलानिष्पिष्टमुद्गरेण अतियत्ननखन्यासेन शैलप्रभतङ्गजेन भूयते।

७४। वाच्यान्तरम्। शंसन्त्या त्रिजटया रामशिरश्छेददर्शनोद्भ्रान्तचेतना सीता समजीव्यत।

७५। वाच्यान्तरम्। नाथेन जीव्यते। तया शुक् विजहे। जीवितया भूयते, लज्जितया भूयते।

७६। वाच्यान्तरम्। गरुडापातविश्लिष्टमेघनादास्त्रबन्धनेन क्षणक्लेशेन स्वप्नवृत्तेन इव अभूयत। उपमालङ्कारः।

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद्विदीर्णहृदयः शुचा ॥ ७७

स मारुतिसमानीतमहौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥ ७८

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किञ्चित्पर्य्यशेषयत् ॥ ७९

अन्वयः । ततः पौलस्त्यः शक्त्या लक्ष्मणं वक्षसि बिभेद । रामः तु अनाहतः अपि शुचा विदीर्णहृदयः आसीत् ॥ ७७

अन्वयः । सः मारुतिसमानीतमहौषधिहतव्यथः ( सन् ) पुनः शरैः लंकास्त्रीणां विलापाचार्य्यकं चक्रे ॥ ७८

अन्वयः । सः, शरत्कालः मेघस्य इव, मेघनादस्य नादं इन्द्रायुधप्रभं धनुः च किञ्चित् ( अपि ) न पर्य्यशेषयत् ॥ ७९

ततः पौलस्त्यो रावणः शक्त्या कासूनामकेन आयुधेन । "कासूसामर्थ्ययोः शक्तिः" इत्यमरः । लक्ष्मणं वक्षसि बिभेद विदारयामास । रामस्तु अनाहतोऽपि अप्रहतोऽपि शुचा शोकेन विदीर्णहृदयः आसीत् ॥ ७७

सः लक्ष्मणः मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या संजीवन्या हृतव्यथः सन्, पुनः शरैः लङ्कास्त्रीणां विलापे परिदेवने । 'विलापः परिदेवनम्' इत्यमरः । आचार्य्यकमाचार्य्यकर्म । "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञ् । चक्रे । पुनरपि राक्षसान् जघानेति व्यज्यते ॥ ७८

सः लक्ष्मणः, शरत्कालो मेघस्येव, मेघनादस्येन्द्रजितः नादं सिंहनादम् । मेघस्य गर्जितं च । इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुश्च किञ्चिदल्पमपि न पर्य्यशेषयत् नावशेषितवान् तमवधीदित्यर्थः ॥ ७९

७७ । वाच्यान्तरम् । पौलस्त्येन लक्ष्मणः बिभिदे । अनाहतेनापि रामेण विदीर्णहृदयेन अभूयत । शक्त्यां तृतीया करणे, शुचा कर्त्तरि तृतीया ।

७८ । वाच्यान्तरम् । मारुतिसमानीतमहौषधिहतव्यथेन तेन आचार्य्यकं चक्रे । शरैः तृतीया करणे ।

७९ । वाच्यान्तरम् । तेन शरत्कालेन नादः इन्द्रायुधप्रभं धनुश्च किञ्चित् न पर्य्यशेष्यत ।

कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः।
ररोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः॥ ८०
अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान्।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः॥ ८१
इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।
रजांसि समरोत्थानि तच्छोणितनदीष्विव॥ ८२

अन्वयः। कपीन्द्रेण स्वसुः तुल्यावस्थः कृतः कुम्भकर्णः टङ्कच्छिन्नमनःशिलः शृङ्गी इव रामं ररोध॥ ८०

अन्वयः। प्रियस्वप्नः भवान् भ्रात्रा अकाले वृथा बोधितः इति इव असौ रामेषुभिः दीर्घनिद्रां प्रवेशितः॥ ८१

अन्वयः। इतराणि रक्षांसि अपि वानरकोटिषु समरोत्थानि रजांसि तच्छोणितनदीषु इव पेतुः॥ ८२

कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायाः तुल्यावस्थः नासाकर्णच्छेदेन सदृशः कृतः कुम्भकर्णः टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषः यस्य स तथोक्तः। "टङ्कः पाषाणभेदनः" इति, "धातुर्मनःशिलाद्यद्रेः" इति चामरः। शृङ्गी शिखरीव, रामं ररोध॥ ८०

प्रियस्वप्नः इष्टनिद्रः अनुजः भवान्, वृथा भ्राता रावणेन अकाले बोधितः इतीवासौ कुम्भकर्णः रामेषुभिः रामबाणैः दीर्घनिद्रां मरणं प्रवेशितः गमितः। यथा लोकेषु इष्टवस्तुविनाशाद्दुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते तद्वदिति भावः॥ ८१

इतराणि रक्षांसि अपि वानरकोटिषु समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहेष्विव, पेतुः निपत्य मृतानीत्यर्थः॥ ८२

८०। वाच्यान्तरम्। कपीन्द्रः कुम्भकर्णं तुल्यावस्थं कृतवान्। टङ्कच्छिन्नमनःशिलेन शृङ्गिणा इव (तेन) रामः रुरुधे। कपीन्द्रेण तृतीया कर्त्तरि।

८१। वाच्यान्तरम्। भ्राता, प्रियस्वप्नं वृथा भवन्तं बोधितवान्। रामेषवः इतीव अमुं दीर्घनिद्रां प्रवेशितवन्तः। भ्राता तृतीया कर्त्तरि। रामेषुभिः कर्त्तरि तृतीया।

८२। वाच्यान्तरम्। इतरैः रक्षोभिः वानरकोटिषु समरोत्थैः रजोभिः तच्छोणितनदीष्विव पेते। उपमालङ्कारः। समन्वयः। रजोभिः सह रक्षसां, नदीभिः सह वानरकोटीनां साम्यम्।

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ॥ ८३
रामं पदातिमालोक्य लङ्केशञ्च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः ॥ ८४
तमाधूतध्वजपटं व्योमगङ्गोर्म्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५

अन्वयः। अथ पौलस्त्यः अद्य जगत् अरावणम् अरामं वा इति निश्चितः (सन्) पुनः युद्धाय मन्दिरात् निर्ययौ ॥ ८३

अन्वयः। रामं पदातिं लंकेशं च वरूथिनम् अवलोक्य पुरन्दरः हरियुग्यं रथं तस्मै प्रजिघाय ॥ ८४

अन्वयः। राघवः देवसूतभुजालम्बी (सन्) व्योमगङ्गोर्मिवायुभिः आधूतध्वजपटं जैत्रं तम् अध्यास्त ॥ ८५

अथ पौलस्त्यो रावणः। अद्य जगदरावणं रावणशून्यम् अरामं रामशून्यं वा भवेदिति निश्चितो निश्चितवान्। कर्त्तरि क्तः। विजयमरणयोरन्यतरनिश्चयवान् पुनर्युद्धाय मन्दिरात् निर्ययौ निर्जगाम ॥ ८३

पादाभ्यामततीति पदातिः। तं पादचारिणं रामम्। वरूथो रथगुप्तिः। "रथगुप्तिर्वरूथो ना" इत्यमरः। अत्र वरूथेन रथो लक्ष्यते। वरूथिनं रथिनं लङ्केशं चालोक्य पुरन्दरः। युगं वहन्तीति युग्या रथाश्वाः। "तद्वहति रथयुगप्रासङ्गम्" इति यत्प्रत्ययः। हरियुग्यं कपिलवर्णाश्वम्। "शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। तं तस्मै रामाय प्रजिघाय प्रहितवान् ॥ ८४

राघवो व्योमगङ्गोर्मिवायुभिराधूतध्वजपटम्। मार्गवशादिति भावः। जेतैव जैत्रो जयनशीलः। तं जैत्रम्। जैत्रशब्दात्तृन्नन्तात् "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण् प्रत्ययः। तं रथं देवसूतभुजालम्बी मातलिहस्तावलम्बः सन् अध्यास्त अधिष्ठितवान् आरोहत् ॥ ८५

८३। वाच्यान्तरम्। अरावणेन, अरामेण वा जगता भूयते। इति निश्चितेन पौलस्त्येन निर्ययौ। मन्दिरात् पञ्चमी अपादाने। युद्धाय चतुर्थी निमित्तार्थे।

८४। वाच्यान्तरम्। पुरन्दरेण हरियुग्यं रथं प्रजिग्ये। तस्मै क्रियार्थोर्थे चतुर्थी।

८५। वाच्यान्तरम्। देवसूतभुजालम्बिना राघवेण आधूतध्वजपटः स जैत्रः अध्यास्यत। व्योमगङ्गोर्मिवायुभिः तृतीया कर्त्तरि।

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम् ॥ ८६
अन्योऽन्यदर्शनप्राप्तविक्रमावसरं चिरात् ।
रामरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७
भुजमूर्धोरुबाहुल्यादेकोऽपि धनदानुजः ।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः ॥ ८८

अन्वयः। मातलिः माहेन्द्रं तनुच्छदं तस्य आमुमोच, यत्र सुरद्विषां अस्त्राणि उत्पलदलक्लैव्यं आपुः ॥८६

अन्वयः। चिरात् अन्योऽन्यदर्शनप्राप्तविक्रमावसरं रामरावणयोः युद्धं चरितार्थम् इव अभवत् ॥८७

अन्वयः। अयथापूर्व्वः एकः अपि ( सन् ) धनदानुजः भुजमूर्द्धोरुबाहुल्यात् मातृवंशे स्थितः इव ददृशे ॥८८

मातलिरिन्द्रसारथिः माहेन्द्रम्। तनुश्छाद्यतेऽनेनेति तनुच्छदो वर्म्म। "पुंसि संज्ञायां प्रायेण" इति घः। तं तस्य रामस्य आमुमोच आसञ्जयामास। यत्र तनुच्छदे सुरद्विषां अस्त्राणि उत्पलदलानां यत् क्लैव्यं नपुंसकत्वं तदापुः ॥८६

चिरादन्योन्यदर्शनेन प्राप्तविक्रमावसरं रामरावणयोर्युद्धं योधनं चरितार्थं सफलम् अभवत्। प्राक्पराक्रमावसरदौर्लभ्यात् विफलस्य अद्य तल्लाभात् साफल्यं उत्प्रेक्ष्यते ॥८७

अभूतः पूर्वे यथापूर्वः। सुप्सुपेति समासः। यथापूर्व्वो न भवतीत्ययथापूर्वः। निहत-बान्धवःपरिवारशून्य इत्यर्थः। अत एव एकोऽपि सन् धनदानुजो रावणः। भुजाश्च मूर्द्धानश्च ऊरवः पादाश्च भुजमूर्द्धोरु। प्राण्यङ्गत्वादद्वन्द्वैकवद्भावः। तस्य बाहुल्याद्बहुलत्वाद्धेतोः। तथा च यादवः—"दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे" इति। मातृवंशे मातृसम्बन्धिनि कुले स्थित इव ददृशे दृष्टो हि। "वंशो वेणौ कुले वर्गे" इति विश्वः। अत्र रावणमातुः कैकसीकुलजाः रक्षोवर्ग इति लभ्यते। अतश्च कोऽप्यनेकरक्षःपरिवृत इवालक्ष्यतेत्यर्थः ॥८८

८६। वाच्यान्तरम्। मातलिना माहेन्द्रः तनुच्छदः आमुमुचे। अस्त्रैः क्लैव्यं आपे।

८७। वाच्यान्तरम्। अन्योन्यदर्शनप्राप्तविक्रमावसरेण चरितार्थेन इव युद्धेन अभावि।

८८। वाच्यान्तरम्। ( जनाः ) एकमपि धनदानुजं अयथापूर्वं स्थितं ददृशुः। भुजमूर्द्धोरुबाहुल्यात् हेतौ पञ्चमी। उत्प्रेक्षालङ्कारः।

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ ८९

तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे ॥ ९०

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१

अन्वयः। रामः लोकपालानां जेतारं स्वमुखैः अर्चितेश्वरं तुलितकैलासम् अरातिं बहु अमन्यत ॥८९

अन्वयः। अधिकक्रोधः पौलस्त्यः स्फुरति सीतासङ्गमशंसिनि तस्य सव्येतरे भुजे शरं निचखान ॥९०

अन्वयः। रामास्तः आशुगः रावणस्य हृदयं भित्त्वा उरगेभ्यः प्रियम् आख्यातुं इव भुवं विवेश ॥९१

लोकपालानामिन्द्रादीनां जेतारम्। "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। स्वमुखैः स्वशिरोभिः अर्चितेश्वरं तुलितकैलासं उत्क्षिप्तरुद्राद्रिं तमेवं शौर्य्यवीर्यसम्पन्नं महावीर्य्यमरातिं शत्रुं रामो गुणग्राहित्वाज्जेतव्योत्कर्षस्य जेतुः स्वोत्कर्षहेतुत्वाच्च बहु अमन्यत साधु मद्विक्रमस्यायं पर्य्याप्तो विषय इति बहुमानमकरोदित्यर्थः। बह्विति क्रियाविशेषणम् ॥८९

अधिकक्रोधः पौलस्त्यः स्फुरति स्पन्दमाने अत एव सीतासङ्गमशंसिनि तस्य रामस्य सव्य इतरो यस्मात्सव्येतरे दक्षिणे। "न बहुव्रीहौ" इतीतरशब्दस्य सर्वनामसंज्ञाप्रतिषेधः। भुजे शरं निचखान निखातवान् ॥९०

रामेणास्तः क्षिप्तः आशुगो बाणः। विश्रवसोऽपत्यं पुमान् रावणः। विश्रवस इदमपत्येऽर्थे अण्प्रत्यये सति 'विश्रवसो विश्रवणरवणौ' इति रवणादेशः। तस्य रावणस्यापि हृदयं वक्षो भित्त्वा विदार्य्य। उरगेभ्यः पातालवासिभ्यः प्रियम् आख्यातुमिव भुवं विवेश ॥९१

:—o—:

८९। वाच्यान्तरम्। रामेण जेता स्वमुखैरर्चितेश्वरः तुलितकैलासः अरातिः बहु अमन्यत। लोकपालानां कर्मणि षष्ठी।

९०। वाच्यान्तरम्। अधिकक्रोधेन पौलस्त्येन शरः निचख्ने।

९१। वाच्यान्तरम्। रामास्तेन आशुगेन भूः विविशे, उरगेभ्यः क्रियार्थे चतुर्थी। उत्प्रेक्षालङ्कारः।

वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः।
अन्योऽन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२

विक्रमव्यतिहारेण सामान्याभूद्द्वयोरपि।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ९३

कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ९४

अन्वयः। वाक्यं वचसा एव अस्त्रम् अस्त्रेण निघ्नतोः तयोः वादिनोः इव अन्योऽन्यसंरम्भः ववृधे ॥ ९२

अन्वयः। जयश्रीः विक्रमव्यतिहारेण द्वयोः अपि अन्तरा वेदिः मत्तवारणयोः इव सामान्या अभूत् ॥ ९३

अन्वयः। कृतप्रतिकृतप्रीतैः सुरासुरैः तयोः मुक्तां पुष्पवृष्टिं परस्परशरव्राताः न सेहिरे ॥ ९४

वाक्यं वचसैव अस्त्रमस्त्रेण निघ्नतोः प्रतिकुर्वतोस्तयोः रामरावणयोः, वादिनोः कथकयोरिव, अन्योऽन्यविषये जयसंरम्भो ववृधे ॥ ९२

जयश्रीर्विक्रमस्य व्यतिहारेण पर्यायक्रमेण तयोर्द्वयोरपि अन्तरा मध्ये। अव्ययमेतत्। वेदिकाकारा भित्तिः मत्तवारणयोरिव सामान्या साधारणा अभूत्, तत्न्यतरनियतैत्यर्थः। मत्तवारणयोरित्यत्र च "अन्तरान्तरेण युक्ते" इति द्वितीया न भवति। अन्तरशब्दे- नापेक्षा अन्ववान्वयात्। मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः ॥ ९३

कृतं स्वयमस्त्रप्रयोगः प्रतिकृतं परकृतप्रतीकारः ताभ्यां प्रीतैः सुरासुरैः यथासंख्यं रामरावणयोः मुक्तां पुष्पवृष्टिं द्वयीम् इति शेषः। परस्परं शरव्राताः न सेहिरे। ...त्वं किं त्वयेति आन्तराल एव इतरेतरबाणवृष्टिः इतरेतरपुष्पवृष्टिं अवारयत् ...रैः ॥ ९४

९२। पाठान्तरम्। अन्योन्यजयसंरम्भेण ववृधे। वचसा, अस्त्रेण तृतीया करणे ...व्यवहारः।

९३। पाठान्तरम्। जयश्रिया वेद्या इव सामान्यया अभावि। विक्रमव्यतीहारेण ...त्था हेतौ करणे वा।

९४। पाठान्तरम्। परस्परशरव्रातैः मुक्ता पुष्पवृष्टिः न सेहे। कृतप्रतिकृतप्रीतैः ...सुरैः तृतीया कर्त्तरि।

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत्॥ ९५
राघवो रथमप्राप्तां तामाशाञ्च सुरद्विषाम्।
अर्द्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम्॥ ९६
अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम्॥ ९७

अन्वयः। अथ रक्षः अयःशङ्कुचितां शतघ्नीं हृतां वैवस्वतस्य कूटशाल्मलिं इव शत्रवे अक्षिपत॥ ९५

अन्वयः। राघवः रथम् अप्राप्तां तां, सुरद्विषाम् आशां च, अर्द्धचन्द्रमुखैः बाणैः कदलीसुखं चिच्छेद॥ ९६

अन्वयः। एकधनुर्धरः प्रियाशोकशल्यनिष्कर्षणौषधम् अमोघं ब्राह्मम् अस्त्रम् अस्मै च धनुषि सन्दधे॥ ९७

अथ रक्षो रावणः अयसः शङ्कुभिः कीलैः चितां कीर्णां शतघ्नीं लौहकण्टकैः यष्टिविशेषाम्। "शतघ्नी तु चतुस्ताला लौहकण्टकसञ्चिता यष्टिः" इति केशवः। विस्मयवर्णां, वैवस्वतस्य अन्तकस्य कूटशाल्मलिमिव, शत्रवे राघवाय अक्षिपत् क्षिप्तवान्। कूटशाल्मलिरिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदायाः गौणीसंज्ञा। कूटशाल्मलिः एकमूलप्रकृतिः कण्टकीवृक्षविशेषः। "रोचनः कूटशाल्मलिः" इत्यमरः। शतघ्न्या गदायाः अयःशङ्कुचितत्वात् अनुसन्धेयम्॥९५

राघवः रथम् अप्राप्तां तां शतघ्नीं सुरद्विषां रक्षसाम् आशां विजयतृष्णाम्। "आशा तृष्णा दिशः प्रोक्ताः" इति विश्वः। अर्द्धचन्द्र इव मुखं येषां तैः बाणैः कदलीवत् सुखं तथा चिच्छेद। अथवा कदल्यामिव सुखम् अक्लेशः यस्मिन् कर्मणि तदिति क्रियाविशेषणम्।

एकः अद्वितीयः धनुर्धरः रामः प्रियायाः शोकं एव शल्यं तस्य निष्कर्षणम् उद्धारणम् औषधं तत् अमोघं ब्राह्मं ब्रह्मदैवताकम् अस्त्रम् अभिमन्त्रितं बाणम् अस्मै रावणाय तद्वधार्थमित्यर्थः, धनुषि सन्दधे॥९७

९५। वाच्यान्तरम्। रक्षसा अयःशंकुचिता शतघ्नी हृता कूटशाल्मलिरिव अक्षिप्यत। उपमालङ्कारः। शत्रवे निमित्तार्थे चतुर्थी।

९६। वाच्यान्तरम्। राघवेन अप्राप्ता सा (शतघ्नी) आशा च चिच्छिदे अर्द्धचन्द्रमुखैः बाणैः तृतीया करणे।

९७। वाच्यान्तरम्। एकधनुर्द्धरेण, अमोघं प्रियाशोकशल्यनिष्कर्षणौषधं ब्राह्मम् अस्त्रं सन्दधे।

तदृव्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८

तेन मन्त्रप्रयुक्तेन निमेषार्द्धादपातयत् ।
स रावणशिर:पङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यत: ।
रराज रक्ष:कायस्य कण्ठच्छेदपरम्परा ॥ १००

मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुन: सन्धानशङ्किनाम् ॥ १०१

अन्वय: । व्योम्नि शतधा भिन्नं दीप्तिमन्मुखं तत् (अस्त्रं) करालफणमण्डलं महोरगस्य वपु: इव ददृशे ॥९८

अन्वय: । स: मन्त्रप्रयुक्तेन तेन (अस्त्रेण) अज्ञातव्रणवेदनां रावणशिर:पङ्क्तिं निमेषार्द्धात् अपातयत् ॥९९

अन्वय: । पतिष्यत: रक्षकायस्य कण्ठच्छेदपरम्परा वीचिभिन्ना अप्सु बालार्कप्रतिमा इव रराज ॥१००

अन्वय: । पतितानि तस्य शिरांसि पश्यताम् अपि पुन: सन्धानशङ्किनां मरुतां मन: न अतिविशश्वास ॥१०१

व्योम्नि शतधा भिन्नं प्रसृतं, दीप्तिमन्ति मुखानि यस्य तत् ब्रह्मास्त्रम् । करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम् । "करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च" इति विश्व: । महोरगस्य शेषस्य वपुरिव, ददृशे दृष्टम् ॥९८

स रामो मन्त्रप्रयुक्तेन तेन अस्त्रेण अज्ञातव्रणवेदनाम् अतिशैघ्र्यादननुभूतव्रणदु:खां रावणशिर:पङ्क्तिं निमेषार्द्धादपातयत पातयामास ॥९९

पतिष्यत आसन्नपातस्य रक्ष:कायस्य रावणकलेवरस्य । छिद्यन्त इति छेदा: खण्डा: । कण्ठानां ये छेदास्तेषां परम्परा पङ्क्ति:, वीचिभिर्भिन्ना नानाकृता अप्सु बालार्कस्य प्रतिमा प्रतिबिम्बमिव, रराज । अर्कस्य बालविशेषणसाकण्ठसिद्ध्यर्थमिति भाव: ॥१००

पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुन: सन्धानशङ्किनाम्, पूर्वं तथादर्शनादिति भाव: । मरुताम् अमराणाम् । "मरुतौ पवनामरौ" इत्यमर: । मनो न अतिविशश्वास अतिविश्वासं न प्राप ॥१०२

९८ । वाच्यान्तरम् । भिन्नं दीप्तिमन्मुखं तत् करालफणमण्डलं वपुर्ददृशे जना इति शेष: । उपमालङ्कार: ।

९९ । वाच्यान्तरम् । तेन अज्ञातव्रणवेदना रावणशिर:पंक्ति: अपात्यत । निमेषार्द्धात् ल्यब्लोपे पञ्चमी । मन्त्रप्रयुक्तेन तेन तृतीया कर्मणि ।

१०० । वाच्यान्तरम् । कण्ठच्छेदपरम्परया वीचिभिन्नया बालार्कप्रतिमया इव रेजे ।

अथ मदगुरुपचैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥ १०२

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्य्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्द्धं रथं हरिसहस्रयुजं निनाय ॥ १०३

अथ मदगुरुपचैः अलिवृन्दैः लोकपालद्विपानां गण्डभित्तीः विहाय अनुगतं सुरभि सुरविमुक्तं पुष्पवर्षम्, उपनतमणिबन्धे पौलस्त्यशत्रोः मूर्ध्नि पपात ॥१०२

अन्वयः। हरेः यन्ता सपदि संहृतकार्मुकज्यं अनुष्ठितदेवकार्य्यं राघवं आपृच्छ्य नामाङ्करावणशराङ्कितकेतुयष्टिं हरिसहस्रयुजं रथम् ऊर्द्धं निनाय ॥१०३

अथ मदेन गजगण्डसञ्चारसंक्रान्तेन गुरुपचैर्भारायमाणपचैरलिवृन्दैः लोकपालद्विपाना-मैरावतादीनां गगनवर्त्तिनां गण्डभित्तीर्विहाय अनुगतमनुद्रुतं सुरभि सुगन्धि । "सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः। गन्धापले सौरभेय्यां सल्लकीमातृभेदयोः॥ सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभिः स्मृतम्॥" इति विश्वः। सुरविमुक्तं पुष्पवर्षम् उपनत आसन्नः मणिबन्धः राज्याभिषेकसमये भावी यस्य तस्मिन् पौलस्त्यशत्रोः रामस्य मूर्ध्नि पपात। इदमेव राज्याभिषेकसूचकमिति भावः ॥१०२

हरेरिन्द्रस्य यन्ता मातलिः सपदि संहृतकार्मुकज्यम् अनुष्ठितं देवकार्य्यं रावणवधरूपं येन तं राघवमापृच्छ्य साधु यामीत्यामन्त्र्य, नामाङ्कैर्नामाचरचिह्नैः रावणशरैरङ्कि-चिह्निता केतुयष्टिर्ध्वजदण्डो यस्य तम्। हरीणां वाजिनां सहस्रेण युज्यत इति हरिसहस्र-युक्, तम्। "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। हरिः" इत्युभयत्राप्यमरः। रथं ऊर्द्धं निनाय नीतवान् ॥१०३

१०१। वाच्यान्तरम्। मनसा नाति विशश्वसे ।

१०२। वाच्यान्तरम्। अनुगतेन सुरभिना सुरविमुक्तेन पुष्पवर्षेण पेते। मदगुरुपचैः अलिवृन्दैः तृतीया करणे ।

१०३। वाच्यान्तरम्। यन्त्रा नामाङ्करावणशराङ्कितकेतुयष्टिः हरिसहस्रयुक् रथः ऊर्द्धं निन्ये ।

रघुपतिरपि जातवेदो-विशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ १०४

अन्वयः । रघुपतिः अपि जातवेदोविशुद्धां प्रियां प्रगृह्य, प्रियसुहृदि विभीषणे वैरिणः श्रियं सङ्गमय्य रविसुतसहितेन ससौमित्रिणा तेन अनुयातः भुजविजितविमानरत्नाधिरूढः (सन्) पुरीं प्रतस्थे ॥ १०४

रघुपतिरपि जातवेदस्यग्नौ विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य । प्रियसुहृदि विभीषणे वैरिणो रावणस्य श्रियं राज्यलक्ष्मीं सङ्गमय्य सङ्गतां कृत्वा । गमेर्ण्यन्ताल्ल्यप्प्रत्ययः । "मितां ह्रस्वः" इति ह्रस्वः, "ल्यपि लघुपूर्व्वात" इति णेरयादेशः । रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेनानुयातोऽनुगतः सन् । विमानं रत्नमिव विमानरत्नमित्युपमितसमासः । भुजविजितं यद्विमानरत्नं पुष्पकं तदारूढः सन् । पुरीमयोध्यां प्रतस्थे । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । अत्र प्रस्थानक्रियायाः अकर्मकत्वेऽपि तदङ्गभूतोद्देश्यक्रियापेक्षया सकर्म्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम् । यथा "कुसूलान् पचति" इत्यादावादानक्रियागर्भः पाको विधीयत इति ॥ १०४

१०४ । वाच्यान्तरम् । अनुयातेन भुजविजितविमानरत्नाधिरूढेन रघुपतिना पुरी प्रतस्थे । रविसुतसहितेन ससौमित्रिणा, तेन कर्त्तरि तृतीया । उपसर्गयोगे आत्मनेपदम् । (स्रोविणावसम: )

द्वादशः सर्गः समाप्तः ।

इति श्रीमहामहोपाध्याय कोलाचल-मल्लिनाथ- सूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ रघुवंशे महाकाव्ये रावणवधो नाम द्वादशः सर्गः ।

# त्रयोदशः सर्गः ।

—:०*०:—

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १

वैदेहि ! पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २

अन्वयः । अथ गुणज्ञः सः रामाभिधानः हरिः शब्दगुणम् आत्मनः पदम् विमानेन विगाहमानः (सन्) रत्नाकरम् वीक्ष्य मिथः जायाम् इति उवाच ॥ १

अन्वयः । (हे) वैदेहि ! आ मलयात् मत्सेतुना विभक्तम् फेनिलम् अम्बुराशिम् छायापथेन (विभक्तम्) शरत्प्रसन्नम् आविष्कृतचारुतारम् इव पश्य ॥ २

त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार वन्धं मरणं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

अथ प्रस्थानानन्तरम् । जानातीति ज्ञः । 'इगुपध—' इत्यादिना कप्रत्ययः । गुणानां ज्ञो गुणज्ञः । रत्नाकरादिवर्ण्यगुणाभिज्ञ इत्यर्थः । स रामाभिधानो हरिः विष्णुः. शब्दो गुणो यस्य तच्छब्दगुणमात्मनः स्वस्य पदं विष्णुपदम् . आकाशमित्यर्थः । 'वियद्विष्णुपदम्' इत्यमरः । "शब्दगुणमाकाशम्" इति तार्किकाः । विमानेन पुष्पकेण विगाहमानः सन् । रत्नाकरं वीक्ष्य मिथो रहसि । "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । जायां पत्नीं सीतामिति वक्ष्यमाणप्रकारेणोवाच । रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविस्रम्भसूचनार्थम् ॥ १

हे वैदेहि ! सीते ! आ मलयात्मलयपर्यन्तम् । "पञ्चम्यपाङ्परिभिः" इति पञ्चमी । पदद्वयं चैतत् । मत्सेतुना विभक्तं द्विधाकृतम् । अत्यायतसेतुनेदं

१ । वाच्यान्तरम् । गुणज्ञेन विगाहमानेन तेन रामाभिधानेन हरिणा जाया इति ऊचे । विमानेन तृतीया करणे ।

२ । वाच्यान्तरम् । वैदेहि ! मत्सेतुना विभक्तः फेनिलः अम्बुराशिः छायापथेन विभक्तः शरत्प्रसन्न आविष्कृतचारुतारः आकाश इव त्वया दृश्यताम् । मत्सेतुना छायापथेन, तृतीया कर्त्तरि । उपमालङ्कारः । समन्वयः । छायापथेन सह मत्सेतोः आविष्कृतचारुतारेण सह फेनिलस्य, आकाशेन सह अम्बुराशेश्च साम्यम् । शरदृष्टान्त-मयत्र समानम् ।

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥ ३
गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि ।
अबिन्धनं वह्निमसौ बिभर्त्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ ४

अन्वयः । यियक्षोः गुरोः मेध्ये तुरङ्गे कपिलेन रसातलम् संक्रमिते ( सति ) तदर्थम् उर्वीम् अवदारयद्भिः नः पूर्वैः अयम् परिवर्द्धितः किल ॥ ३

अन्वयः । अर्कमरीचयः अस्मात् गर्भं दधति । अत्र वसूनि विवृद्धिम् अश्नुवते । असौ अबिन्धनम् वह्निम् बिभर्त्ति । अनेन प्रह्लादनम् ज्योतिः अजनि ॥ ४

पर्याधिकाश्च मङ्गुरुहम् । फेनिलं फेनवन्तम् । "फेनादिलच्च" इति लच्प्रत्ययः । विप्रकारो चायमिति भावः, अम्बुराशिम्, छायापथेन विभक्तं शरत्प्रसन्नमाविष्कृतचारुतार-काकाशमिव, पश्य । मम महानयं प्रयासस्त्वदर्थं इति हृदयम् । छायापथो नाम ज्योतिश्चक्रमध्यवर्त्ती कश्चित्तिरश्चीनोऽवकाशः ॥ २

यियक्षोर्यष्टुमिच्छोः । यजेः सन्नन्तादुप्रत्ययः । गुरोः सगरस्य मेध्ये अश्वमेधार्हे तुरगे कपिलेन मुनिना रसातलं संक्रमिते सति । तदर्थमुर्वीमवदारयद्भिः खनद्भिर्नोऽस्माकं पूर्वैः वृद्धैः सगरसुतैरयं समुद्रः परिवर्धितः किल । किलेत्यैतिह्ये । अतो नः पूज्य इति भावः । यद्यपि तुरङ्गहारी शतक्रतुस्तथापि तस्य कपिलसमीपे दर्शनात् स एवेति तेषां भ्रान्तिः । तन्मत्वैव कविना कपिलेनेति निर्दिष्टम् ॥ ३

अर्कमरीचयः अस्मादब्धेः अपादानात् गर्भमम्मयं दधति । वृष्ट्यर्थमित्यर्थः । अयमर्थो दशमसर्गे "ताभिर्गर्भः—" इत्यत्र स्पष्टीकृतः । अयं लोकोपकारीति भावः । अत्राब्धौ वसूनि धनानि । "धने रत्ने वसु स्मृतम्" इति विश्वः । विवृद्धिमश्नुवते प्राप्नुवन्ति सम्पद्य-

३। वाच्यान्तरम् । उर्वीमवदारयन्तः नः पूर्वे ( पुरुषाः ), इमं परिवर्द्धितवन्तः । कपिलेन तृतीया कर्त्तरि । मेध्ये तुरङ्गे संक्रमिते भावे सप्तमी । तस्मै इदं तदर्थं नित्य-समासः । पुरा किल सगरनृपतिः नवनवतितमं यज्ञं विधाय शततमं यज्ञं कर्तुं उद्युयुजे, तदैतत् इन्द्रः, शतक्रतुत्वस्य गौरवं मे अयं नाशयिष्यतीति अवधार्य तदीयं यज्ञाश्वमपहृत्य लोकचक्षुषामगोचरे कपिलमुनेः सकाशे स्थापितवान्. सगरतनयाः तमेवाश्वमवलोक्य अयं मुनिः पितुरश्वं अपहृतवान् इति बुद्ध्वा तमेव प्रहर्त्तुमारेभिरे, कोपाविष्टस्य मुनेः शापेन षष्टिः सहस्राणि सगरतनयानां भस्मसात् बभूवुः । तानुद्धर्त्तुम् तत्गोत्रापत्येन भगीरथेन गङ्गा नीता ।

४। वाच्यान्तरम् । अर्कमरीचिभिः गर्भः धीयते । वसुभिः विवृद्धिः अश्यते । अमुना अबिन्धनः वह्निः भ्रियते । अयं प्रह्लादनं ज्योतिः अजनिष्ट । अस्मात् अपादाने पञ्चमी । अनेन कर्त्तरि तृतीया ।

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ ५
नाभिप्ररूढ़ाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६
पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७

अन्वयः। ताम् ताम् अवस्थाम् प्रतिपद्यमानं महिम्ना दश दिशः व्याप्य स्थितम् विष्णोः इव अस्य रूपम् ईदृक्तया इयत्तया वा अनवधारणीयम् ॥५

अन्वयः। युगान्तोचितयोगनिद्रः पुरुषः लोकान् संहृत्य नाभिप्ररूढ़ाम्बुरुहासनेन प्रथमेन धात्रा संस्तूयमानः ( सन् ) अमुम् अधिशेते ॥६

अन्वयः। पक्षच्छिदा गोत्रभिदा आत्तगन्धाः महीध्राः शतशः शरण्यम् एनम् परेभ्यः उपप्लविनः नृपाः धर्मोत्तरम् मध्यमम् इव आश्रयन्ते ॥७

नित्यर्थः। असौ आप इन्धनं दाह्यं यस्य तद्दाहकं वह्निं बिभर्ति। अपकारिऽप्याश्रितं न त्यजतीति भावः। अनेन प्रह्लादनम् आह्लादकं ज्योतिश्चन्द्रः अजनि जनितम्। जनेर्ण्यन्तात् कर्मणि लुङ्। सौम्य इति भावः ॥४

तां तामनेकाम्। 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः। अवस्थामवोभावस्थाम्। विष्णुपक्षे सत्त्वाद्यवस्थाम्। प्रतिपद्यमानं भजमानं महिम्ना दश दिशो व्याप्य स्थितं विष्णोरिवास्य रत्नाकरस्य रूपं स्वरूपमकरीत्या बहुप्रकारत्वाद्व्यापकत्वाच्च ईदृक्तया इयत्तया वा प्रकारतः परिमाणतश्चानवधारणीयं दुर्निरूपम् ॥५

युगान्ते कल्पान्ते उचिता परिचिता योगः स्वात्मनिष्ठेव निद्रेव निद्रा यस्य, स पुरुषो विष्णुर्लोकान् संहृत्य। नाभ्यां प्ररूढं यदम्बुरुहं पद्मं तदासनेन तन्नाभिकमलाश्रयेण प्रथमेन धात्रा दक्षादीनामपि स्रष्टा पितामहेन संस्तूयमानः सन् अमुम् अधिशेते अमुष्मिन् शेते इत्यर्थः। कल्पान्तेऽप्यस्तीति भावः ॥६

पक्षच्छिदा गोत्रभिदेन्द्रेण। उभयत्र "सत्सूद्विष—" इत्यादिना क्विप्। आत्तगन्धा हृतगर्वाः अभिभूता इत्यर्थः। "गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः" इति विश्वः।

५। वाच्यान्तरम्। रूपं न अवधारयिष्यन्ति जना इति शेषः। ईदृक्तया, इयत्तया तृतीया करणे। अथ श्लेषोपमयोरङ्गाङ्गिभावेन सङ्करः। महिम्ना करणे तृतीया।

६। वाच्यान्तरम्। युगान्तोचितयोगनिद्रेन पुरुषेण संस्तूयमानेन असौ अधिशय्यते। अमुम् अधिशीङ्केति कर्मत्वम्। नाभिप्ररूढाम्बुरुहासनेन प्रथमेन धात्रा तृतीया कर्त्तरि।

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्त्तवक्त्राभरणं बभूव ॥ ८

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः ॥ ९

अन्वयः। आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियायाः भुवः प्रलयप्रवृद्धम् अस्य अच्छम् अम्भः मुहूर्त्तं वक्त्राभरणम् बभूव ॥८

अन्वयः। अनन्यसामान्यकलत्रवृत्तिः तरङ्गाधरदानदक्षः असौ मुखार्पणेषु प्रकृति-प्रगल्भाः सिन्धूः स्वयम् पिबति पाययते च ॥९

"आत्तगर्वोऽभिभूतः स्यात्" इत्यमरः। महीं धारयन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात् कप्रत्ययः। अतं अतः शरण्यं रक्षणसमर्थमिनं समुद्रम्। परेभ्य अनुभ्य उपप्लविनो नृपाः धर्मोत्तरं धर्मप्रधानं मध्यमं मध्यमभूपालमिव आश्रयन्ते। "अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः" इति कामन्दकः। आर्तबन्धुरिति भावः ॥७

आदिभवेन पुंसा आदिवराहेण रसातलात्प्रयुक्तोद्वहनक्रियायाः कृतोद्धरणक्रियायाः। विवाहक्रिया च व्यज्यते। भुवो भूदेवतायाः प्रलये प्रवृद्धमस्याब्धे रच्छमम्भो मुहूर्तं वक्त्राभरणं वस्त्रारचणार्थं मुखावगुण्ठनं बभूव। तदुक्तम्—"उद्धृतासि वराहेण कृष्णेन शतबाहुना" इति ॥८

अन्येषां पुंसां सामान्या साधारणा न भवतीत्यनन्यसामान्या कलत्रेषु वृत्तिर्भोगरूपा यस्य स तथोक्तः। इयमेवार्थं प्रतिपादयति—तरङ्ग इवाधरस्तस्य दाने समर्पणे दक्षश्चतुरोऽसौ समुद्रो मुखार्पणेषु प्रकृत्या सख्यादिप्रेषणं विना प्रगल्भा धृष्टाः सिन्धूर्नदीः। "सिन्धुः समुद्रे नद्यां च" इति विश्वः। स्वयं पिबति पाययते च। तरङ्गाधरमिति शेषः। 'न पादम्याङ्य—' इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः। 'गतिबुद्धिप्रत्यवसानार्थ—' इत्यादिना सिन्धूनां कर्मत्वम्। दम्पत्योर्युगपत्परस्पराधरपानमनन्यसाधारणमिति भावः ॥९

७। वाच्यान्तरम्। आत्तगन्धैः क्षतयो महीध्रैः एव शरण्यः, उपप्लविभिः नृपैः धर्मोत्तरः मध्यमो भूपाल इव आश्रियते। उपमालङ्कारः। पक्षच्छिदा कर्त्तरि तृतीया। परेभ्यः पञ्चमी अपादाने। समन्वयः। परैः सह पक्षच्छिदः गोत्रभिदः, उपप्लविभिः सह परेषाः आत्तगन्धानां, नृपैः सह महीध्राणां, धर्मोत्तरेण मध्यमेन सह शरण्यस्य एतस्य साम्यं ज्ञेयम्।

८। वाच्यान्तरम्। प्रलयप्रवृद्धेन अच्छेन अम्भसा मुहूर्तं वक्त्राभरणेन बभूवे, रसातलात् अपादाने पञ्चमी। आदिभवेन पुंसा तृतीया कर्त्तरि। समासोक्तिरलङ्कारोऽत्र व्यज्यते।

९। वाच्यान्तरम्। अनन्यसाधारणकलत्रवृत्तिना तरङ्गाधरदानदक्षेण अमुना प्रकृतिप्रगल्भा सिन्धवः पीयन्ते पाय्यन्ते च। अलङ्कारस्तु पूर्ववत्।

ससत्वमादाय नदीमुखाम्भः संमीलयन्तो विवृताननत्वात्।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान्॥१०
मातङ्गनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान्।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम्॥११
वेलानिलाय प्रसृता भुजङ्गा महोर्म्मिविस्फूर्जथुनिर्विशेषाः।
सूर्य्यांशुसम्पर्कसमृद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः॥१२

अन्वयः। अमी तिमयः विवृताननत्वात् ससत्वम् नदीमुखाम्भः आदाय संमीलयन्तः (सन्तः) सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्द्ध्वम् वितन्वन्ति॥१०

अन्वयः। सहसा उत्पतद्भिः मातङ्गनक्रैः द्विधा भिन्नान् समुद्रफेनान् पश्य। ये एषाम् कपोलसंसर्पितया कर्णक्षणचामरत्वम् व्रजन्ति॥११

अन्वयः। वेलानिलाय प्रसृताः महोर्म्मिविस्फूर्जथुनिर्विशेषाः एते भुजङ्गाः सूर्य्यांशुसम्पर्कसमृद्धरागैः फणस्थैः व्यज्यन्ते॥१२

अमी तिमयो मत्स्यविशेषाः। तदुक्तम्—"अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः" इति। विवृताननत्वाद्व्यात्तमुखत्वाद्धेतोः। आननं विवृत्येत्यर्थः। ससत्त्वं मत्स्यादिप्राणिसहितं नदीमुखाम्भ आदाय सम्मीलयन्तश्चञ्चुपुटानि सङ्घटयन्तः सन्तः सरन्ध्रैः शिरोभिर्जलप्रवाहानूर्ध्वं वितन्वन्ति। जलयन्त्रक्रीड़ासमाधिर्व्यज्यते॥१०

सहसोत्पतद्भिर्मातङ्गनक्रैर्मातङ्गाकारैर्ग्राहैर्द्विधा भिन्नान् समुद्रफेनान् पश्य। ये फेना एषां ग्रहमातङ्गनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति॥११

वेलानिलाय वेलानिलं पातुमित्यर्थः। "क्रियार्थोपपद—"इत्यादिना चतुर्थी। प्रसृता निर्गता महोर्मीणां विस्फूर्जथुरुद्रेकः। "ट्वितोऽथुच्" इत्यथुच्प्रत्ययः। तस्मान्निर्विशेषा दुर्ग्रहभेदा एते भुजङ्गाः सूर्य्यांशुसम्पर्केण समृद्धरागैः प्रवृद्धकान्तिभिः फणस्थैर्मणिभिर्व्यज्यन्ते उन्नीयन्ते॥१२

१०। वाच्यान्तरम्। अमीभिः तिमिभिः जलप्रवाहाः वितन्यन्ते। सरन्ध्रैः शिरोभिः तृतीया करणे। विवृताननत्वात् हेतौ पञ्चमी। ऊर्द्ध्वमित्यव्ययम्।

११। वाच्यान्तरम्। त्वया द्विधा भिन्नाः समुद्रफेनाः दृश्यन्ताम्। यैः कर्णक्षणचामरत्वं व्रज्यते। मातङ्गनक्रैः सहसोत्पतद्भिः तृतीया कर्त्तरि।

१२। वाच्यान्तरम्। सूर्य्यांशुसम्पर्कसमृद्धरागाः फणस्थाः मणयः प्रसृतान् महोर्मिविस्फूर्जथुनिर्विशेषान् एतान् भुजङ्गान् व्यञ्जन्ति। सूर्य्यांशुसम्पर्कसमृद्धरागैः फणस्थैः मणिभिः तृतीया कर्त्तरि।

तवाधरस्पर्द्धिषु विद्रुमेषु पर्य्यस्तमेतत् सहसोर्म्मिवेगात् ।
ऊर्द्धाङ्कुरप्रोतमुखं कथञ्चित् क्लेशादपक्रामति शङ्खयूथम् ॥ १३

प्रवृत्तमात्रेण पयांसि पातुमावर्त्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १४

दूरादयश्चक्र निभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥ १५

वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि ।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६

अन्वयः । तव अधरस्पर्द्धिषु विद्रुमेषु सहसा ऊर्म्मिवेगात् पर्य्यस्तम् ऊर्द्धाङ्कुरप्रोतमुखम् एतत् शङ्खयूथम् कथञ्चित् क्लेशात् अपक्रामति ॥ १३

अन्वयः । पयांसि पातुम् प्रवृत्तमात्रेण आवर्त्तवेगात् भ्रमता घनेन अयम् समुद्रः भूयः गिरिणा प्रमथ्यमानः इव भूयिष्ठम् आभाति ॥ १४

अन्वयः । अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी तमालतालीवनराजिनीला वेला धारानिबद्धा कलङ्करेखा इव आभाति ॥ १५

तवाधरस्पर्धिषु अधरसदृशेष्वित्यर्थः । विद्रुमेषु प्रवालेषु सहसोर्म्मिवेगात् पर्य्यस्तं प्रोत-मूर्द्धाङ्कुरैर्विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनम् एतत् शङ्खानां यूथं वृन्दं कथञ्चित् क्लेशा-दपक्रामति विलम्ब्यापसरतीत्यर्थः ॥ १३

पयांसि पातुं प्रवृत्त एव प्रवृत्तमात्रो न तु पीतवान् तेन आवर्त्तवेगात् । "स्यादावर्त्तो-म्भसां भ्रमः" इत्यमरः । भ्रमता घनेन अयं समुद्रो भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमान इव भूयिष्ठमत्यन्तमाभाति ॥ १४

अयश्चक्रनिभस्य लवणाम्बुराशेर्दूरात् तन्वी अणुत्वेन अवभासमाना तमालतालीवन-राजिभिः नीला तीरभूमिः धारानिबद्धा चक्राश्रिता कलङ्करेखा मालिन्यरेखेव, आभाति । "मालिन्यरेखान्तु कलङ्कमाहुः" इति दण्डी ॥ १५

१३। वाच्यान्तरम् । पर्य्यस्तेन ऊर्द्धाङ्कुरप्रोतमुखेन एतेन शङ्खयूथेन अपक्राम्यते । ऊर्म्मिवेगात् हेतौ पञ्चमी । क्लेशात् यब्लोपे पञ्चमी ।

१४। वाच्यान्तरम् । प्रमथ्यमानेन अनेन समुद्रेण भूयिष्ठम् आभायते । प्रवृत्तमात्रेण भ्रमता घनेन तृतीया करणे, आवर्त्तवेगात् हेतौ पञ्चमी । गिरिणा कर्त्तरि तृतीया । उप-मालङ्कारः । समन्वयः । गिरिणा सह प्रवृत्तमात्रस्य भ्रमतः घनस्य, प्रमथ्यमानेन सह आवर्त्त-स्य साम्यम् ।

१५। वाच्यान्तरम् । तन्व्या तमालतालीवनराजिनीलया वेलया धारानिबद्धया कलङ्करेखया इव आभायते । दूरात् यब्लोपे पञ्चमी । उपमालङ्कारः । समन्वयः । लव-णाम्बुराशिना सह चक्रनिभस्य, धारानिबद्धया कलङ्करेखया सह तन्व्याः तमालताली-वनराजिनीलायाः वेलायाः साम्यम् ।

एते वयं सैकतभिन्नशुक्तिपर्य्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्त्तेन विमानवेगात् कूलं फलावर्जितपूगमालम् ॥ १७

कुरुष्व तावत् करभोरु ! पश्चान्मार्गे मृगप्रेक्षिणि ! दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमिः ॥ १८

क्वचित् पथा सञ्चरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्त्तते पश्य तथा विमानम् ॥ १९

अन्वयः । (हे) आयताक्षि ! वेलानिलः केतकरेणुभिः ते आननम् सम्भावयति, बिम्बाधरबद्धतृष्णम् माम् मण्डनकालहानेः अक्षमम् वेत्ति इव ॥ १६

अन्वयः । एते वयम् सैकतभिन्नशुक्तिपर्य्यस्तमुक्तापटलम् फलावर्ज्जितपूगमालम् पयोधेः कूलम् विमानवेगात् मुहूर्त्तेन प्राप्ताः ॥ १७

अन्वयः । (हे) करभोरु ! (हे) मृगप्रेक्षिणि ! तावत् पश्चात् मार्गे दृष्टिपातम् कुरुष्व । एषा सकानना भूमिः विदूरीभवतः समुद्रात् निष्पतति इव ॥ १८

अन्वयः । विमानम् मे मनसः अभिलाषः यथाविधः तथा प्रवर्त्तते पश्य; क्वचित् सुराणाम्, क्वचित् घनानां, क्वचित् च पतताम् पथा सञ्चरते ॥ १९

हे आयताक्षि ! "वेला स्यात्तीरनीरयोः" इति विश्वः । वेलानिलः केतकरेणुभिः आननं सम्भावयति । किमर्थमित्यपेक्षायामुत्प्रेक्ष्यते—बिम्बाधरे बद्धतृष्णं मां मण्डनेन रणक्रियया कालहानिर्विलम्बस्तस्या अक्षमसहमानम् । कर्म्मणि षष्ठी । कालहानिम् मानं वेत्तीव वेत्ति किम् ? नो चेत्कथं सम्भवयेदित्यर्थः ॥ १६

एते वयं सैकतेषु भिन्नाभिः स्फुटिताभिः शुक्तिभिः पर्य्यस्तानि परितः क्षिप्तानि मुक्ता-पटलानि यस्मिंस्तत्तथोक्तं फलैरावर्जिता आनमिताः पूगमाला यस्मिंस्तत् पयोधेः कूलं विमानवेगात् मुहूर्त्तेन प्राप्ताः ॥ १७

"मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । करभ इवोरू यस्याः सा करभोरूः । "ऊरूत्तरपदादौपम्ये" इत्यूङ् । तस्याः संबुद्धिः हे करभोरु ! मृगवत् प्रेक्षत इति विग्रहः । हे मृगप्रेक्षिणि ! तावत् पश्चात् मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व । एषा सकानना भूमिर्विदूरीभवतः समुद्रान्निष्पतति निष्क्रामतीति । विदूरशब्दाच्चिः ...

हे देवि ! विमानं पुष्पकं मे मनसोऽभिलाषो यथाविधस्तथा प्रवर्त्तते पश्य । क्वचित् सुराणां पथा सञ्चरते । क्वचित् घनानां क्वचित् पततां पक्षिणाञ्च पथा सञ्चरते । "समस्तृतीयायुक्तात्" इति संपूर्वाच्चरतेरात्मनेपदम् ॥ १९

१६ । वाच्यान्तरम् । वेलानिलेन आननम् सम्भाव्यते । तेन बिम्बाधरबद्धतृष्णः अहं विद्ये । उत्प्रेक्षालङ्कारः । केतकरेणुभिः तृतीया करणे ।

१७ । वाच्यान्तरम् । एतैः अस्माभिः सैकतभिन्नशुक्तिपर्य्यस्तमुक्तापटलं फलावर्जितपूगमालं कूलं प्राप्तम् । मुहूर्त्तेन अपवर्गे तृतीया, विमानवेगात् हेतौ पञ्चमी ।

असौ महेन्द्रद्विपदानगन्धि: त्रिमार्गगावीचिविमर्दशीत: ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान् मुखे ते ॥ २०

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि ! कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१

अन्वय: । महेन्द्रद्विपदानगन्धि: त्रिमार्गगावीचिविमर्दशीत: असौ आकाशवायु: दिनयौवनोत्थान् स्वेदलवान् ते मुखे आचामति ॥२०

अन्वय: । (हे) चण्डि ! कुतूहलिन्या त्वया वातायनलम्बितेन करेण स्पृष्ट: उद्भिन्नविद्युद्वलय: घन: ते द्वितीयम् आभरणम् आमुञ्चति इव ॥२१

महेन्द्रद्विपदानगन्धि: ऐरावतमदगन्धि: । त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । "तद्धितार्थ—" इत्यादिनोत्तरपदसमास: । तस्या वीचीनां विमर्देन सम्पर्केण शीतं असावाकाशवायु: दिनयौवनोत्थान् मध्याह्नसम्भवान् ते मुखे स्वेदलवान् आचामति हरति । अनेन श्रमपरिहारो दर्शित: ॥२०

हे चण्डि ! कोपने ! "चण्डस्त्वत्यन्तकोपन:" इत्यमर: । कुतूहलिन्या विनोदार्थिन्या त्वया वातायने गवाक्षे लम्बितेनावस्रंसितेन करेण स्पृष्ट: उद्भिन्नविद्युद्वलय: घन:, ते द्वितीयमाभरणं वलयं आमुञ्चतीवार्पयतीव । चण्डि इत्यनेन कोपनशीलत्वाद्भीत: चिप्रं मुञ्चति मेघ इति व्यज्यते ॥२१

१८। वाच्यान्तरम् । (त्वया) दृष्टिपात: क्रियताम् । सत्तानया एतया भूर्व्यापद्यते इव । उत्प्रेचालङ्कार: । विदूरीभवत: समुद्रात् अपादाने पञ्चमी ।

विचार: । ननु तावत्शब्देन आकाङ्क्षमानस्य यावत्शब्दस्य सम्भावना क्वास्ति? नैवास्ति, कथं यावत्शब्दस्य विना तावत्शब्दस्य व्यवहार: सङ्गच्छते? "यत्तदोर्नित्यसम्बन्ध:" इत्यमिदं सूत्रं रच्यतेऽत्र ? सत्यम् । "यावत् तावच्च साकल्याऽवधौ मानेऽवधारणे" इत्यमर: । इत्यर्थे वर्तमान साकल्यार्थ-बोधकतया तावत्शब्देन यावत्शब्दो नाक्रान्त: । तावत् दृष्टिपातं कुरुष्व सम्यक् पश्य इत्यर्थ: ।

२०। वाच्यान्तरम् । यथाविधेन अभिलाषेण सूयते, तथा विमानेन प्रहत्यते । त्वया गम्यताम् । पथा करणे तृतीया ।

२०। वाच्यान्तरम् । महेन्द्रद्विपदानगन्धिना त्रिमार्गगावीचिविमर्दशीतेन अमुना आकाशवायुना दिनयौवनोत्था: स्वेदलवा आचम्यन्ते ।

२१। वाच्यान्तरम् । स्पृष्टेन उद्भिन्नविद्युद्वलयेन घनेन द्वितीयम् आभरणम् आमुच्यते इव । उत्प्रेचासमासक्त्योरङ्गाङ्गिभावेन सङ्कर: । कुतूहलिन्या त्वया कर्तरि तृतीया । वातायनलम्बितेन करेण तृतीया करणे ।

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥ २२
सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ २३
त्वं रक्षसा भीरु ! यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन् वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ २४

अन्वयः । अमी चीरभृतः जनस्थानम् अपोढविघ्नं मत्वा समारब्धनवोटजानि चिरोज्झितानि आश्रममण्डलानि यथास्वम् अध्यासते ॥२२

अन्वयः । सा स्थली एषा, यत्र त्वां विचिन्वता मया त्वच्चरणारविन्दविश्लेषदुःखाद् इव बद्धमौनम् उर्व्यां भ्रष्टम् एकं नूपुरम् अदृश्यत ॥२३

अन्वयः । (हे) भीरु ! त्वं रक्षसा यतः अपनीता तं मार्गं वक्तुम् अशक्नुवत्यः एताः लताः आवर्जितपल्लवाभिः शाखाभिः कृपया मे अदर्शयन् ॥२४

अमी चीरभृतस्तापसा जनस्थानमपोढविघ्नं अपास्तविघ्नं मत्वा शाला समारब्धा नवा उटजाः पर्णशाला येषु तानि । "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः । चिरोज्झितानि राक्षसभयादित्यर्थः । आश्रममण्डलानि आश्रमविभागान् यथास्वं स्वमनतिक्रम्य अध्यासते तिष्ठन्ति ॥२२

सा पूर्वानुभूता स्थल्येषा दृश्यत इत्यर्थः । यत्र स्थल्यां त्वां विचिन्वता अन्विष्यता मया त्वच्चरणारविन्देन यो विश्लेषो वियोगस्तेन यद्दुःखं तस्मादिव बद्धमौनं निःशब्दम् । उर्व्यां भ्रष्टमेकं नूपुरं मञ्जीरः । "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः । अदृश्यत दृष्टम् । उत्प्रेक्षा ॥२३

हे भीरु ! भयशीले ! 'भियः क्रुक्लुकनौ' इति क्रुः । ततो नदीत्वात् संबुद्धौ ह्रस्वः । त्वं रक्षसा रावणेन यतो येन मार्गेण । सार्वविभक्तिकस्तसिः । अपनीता अपहृता तं मार्गं वागिन्द्रियाभावाद्वक्तुमशक्नुवत्य एता लता वीरुधः, आवर्जिता नमिताः पल्लवाः पाणिस्थानीया यासां ताभिः शाखाभिः स्वावयवभूताभिः कृपया मे अदर्शयन्, हस्तचेष्टया अससूचयन्नित्यर्थः । "शाखा वेदविभागे स्याद्वृक्षांशे पक्षान्तरे भुजे" इति विश्वः । लतादीनामपि ज्ञानमस्त्येव । तदुक्तं मनुना—'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति ॥२४

२२ । वाच्यान्तरम् । अमीभिः चीरभृद्भिः समारब्धनवोटजानि, चिरोज्झितानि आश्रममण्डलानि अध्यास्यन्ते । अधिशीङिति कर्मत्वम् ।

२३ । वाच्यान्तरम् । एतया तया स्थल्या भूयते । विचिन्वन् अहं, बद्धमौनं अहं नूपुरम् अपश्यम् । त्वच्चरणारविन्दविश्लेषदुःखात् हेतौ पञ्चमी । विचिन्वता मया कर्तरि तृतीया । हेतूत्प्रेक्षालङ्कारः ।

२४ । वाच्यान्तरम् । एताभिः अशक्नुवतीभिः लताभिः स मार्गः अदर्श्यत; त्वं रक्षसा अपनीतवान् । यतो करणे तृतीया स्थाने तस् । कृपया हेतौ तृतीया । मे विभक्तिलात् चतुर्थी । आवर्जितपल्लवाभिः शाखाभिः करणे तृतीया ।

मृगयश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥२५

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६

गन्धश्च धाराहतपल्वलानां कादम्बमर्द्धोद्गतकेसरञ्च ।
स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे ॥२७

अन्वयः। मृग्यः च दर्भाङ्कुरनिर्व्यपेक्षाः उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्याम् दिशि व्यापारयन्त्यः तव अगतिज्ञं मां समबोधयन् ॥२५

अन्वयः। माल्यवतो गिरेः अम्बरलेखि एतत् शृङ्गम् पुरस्तात् आविर्भवति। यत्र घनैः नवम् पयः, मया च त्वद्वियोगाश्रु, समम् विसृष्टम् ॥ २६

अन्वयः। यस्मिन् धाराहतपल्वलानाम् गन्धः च अर्द्धोद्गतकेसरम् कादम्बम् च स्निग्धाः शिखिनाम् केकाः च ; (एतानि) त्वया विना मे असह्यानि बभूवुः ॥ २७

दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षाः निस्पृहाः मृग्यो मृगाङ्गनाश्चोत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः प्रवर्त्तयन्त्यः सत्यः तवागतिज्ञं गत्यनभिज्ञं मां समबोधयन् । दृष्टिचेष्टया त्वद्गतिमबोधयन् इत्यर्थः ॥ २५

माल्यवतो नाम गिरेरम्बरलेखि अभ्रङ्कषं शृङ्गमेतत्पुरस्तादग्रे आविर्भवति। यत्र शृङ्गे घनैर्मेघैर्नवं पयो मया त्वद्विप्रयोगेण यदश्रु तच्च समं युगपद्विसृष्टम् । मेघदर्शनाद्वर्षतुल्यमश्रु विमुक्तमिति भावः ॥ २६

यस्मिञ्छृङ्गे धाराभिर्वर्षधाराभिराहतानां पल्वलानां गन्धश्च । अर्धोद्गतकेसरं कादम्बं नीपकुसुमं च । स्निग्धा मधुराः शिखिनां बर्हिणाम् । 'शिखिनौ वह्निवर्हिणौ' इत्यमरः । केकाश्च । त्वया विना मेऽसह्यानि बभूवुः । 'नपुंसकमनपुंसकेन—' इति नपुंसकैकशेषः ॥ २७

२५। वाच्यान्तरम्। दर्भाङ्कुरनिर्व्यपेक्षाभिः व्यापारयन्तीभिः मृगीभिः अगतिज्ञः अहं समबोध्ये ।

२६। वाच्यान्तरम्। अम्बरलेखिना शृङ्गेण आविर्भूयते। घनाः नवं पयः, अहञ्च त्वद्विप्रयोगाश्रु समं विसृष्टवन्तः। सहोक्तिरलङ्कारः।

२७। वाच्यान्तरम्। असह्यैः बभूवे। एभिर्विशेषणैः वर्षावर्णनं विरहोद्दीपनञ्च सूच्यते। त्वया विना योगे तृतीया।

पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु ! तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथञ्चिद् घनगर्जितानि ॥ २८
आसारसिक्तक्षितिवाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः ।
विड़म्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः ॥ २९
उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥ ३०

अन्वयः । (हे) भीरु ! यत्र पूर्व्वानुभूतम् कम्पोत्तरम् तव उपगूढ़म् स्मरता मया गुहाविसारीणि घनगर्ज्जितानि कथञ्चित् अतिवाहितानि ॥२८

अन्वयः । यत्र विभिन्नकोशैः नवकन्दलैः आसारसिक्तक्षितिवाष्पयोगात् विड़म्ब्यमाना ते विवाहधूमारुणलोचनश्रीः माम् अक्षिणोत् ॥२९

अन्वयः । उपान्तवानीरवनोपगूढ़ानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि दूरावतीर्णा मे दृष्टिः खेदात् पिबति इव ॥३०

किञ्च हे भीरु । यत्र यस्मिन् पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तवोपगूढ़मुपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चिदतिवाहितानि, स्मारकत्वेनोद्दीपकत्वात् क्लेशेन गमितानीत्यर्थः ॥२८

यत्र यस्मिन् विभिन्नकोशैर्विकसितकुट्मलैर्नवकन्दलैः कन्दलीपुष्पैररुणवर्णैरासारैः धारासम्पातेन । "धारासम्पात आसारः" इत्यमरः । सिक्तायाः क्षितेर्वाष्पस्य धूमवर्णस्य योगाद्धेतोर्विड़म्ब्यमानानुक्रियमाणा ते विवाहधूमेनारुणा लोचनश्रीः । सादृश्यात् स्मर्यमाणेति शेषः । माम् अक्षिणोत् अपीड़यत् ॥२९

उपान्तवानीरवनोपगूढ़ानि पार्श्ववञ्जुलवनच्छन्नानि आलक्ष्या ईषद्दृश्याः परिप्लवाश्चञ्चलाः सारसा येषु तानि अमूनि पम्पासलिलानि पम्पासरोजलानि दूरादवतीर्णा मे दृष्टिस्तव खेदात्पिबतीव । न विहातुमुत्सहत इत्यर्थः ॥३०

२८ । वाच्यान्तरम् । स्मरन् अहं गुहाविसारीणि घनगर्ज्जितानि अतिवाहितवान् ।

२९ । वाच्यान्तरम् । विड़म्ब्यमानया विवाहधूमारुणलोचनश्रिया अहं अक्षीयि । आसारसिक्तक्षितिवाष्पयोगात् हेतौ पञ्चमी । उत्प्रेक्षालङ्कारः कर्त्तरि तृतीया ।

३० । वाच्यान्तरम् । दूरावतीर्णया दृष्ट्या उपान्तवानीरवनोपगूढ़ानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि पीयन्ते । उत्प्रेक्षालङ्कारः । खेदात् हेतौ पञ्चमी ।

त्वाविमुक्तानि रथाङ्गनाम्नामन्योन्यदत्तोत्पलकेसराणि।
द्वन्द्वानि दूरान्तरवर्त्तिना ते मया प्रिये! सस्पृहमीक्षितानि॥ ३१

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तवकाभिनम्राम्।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः॥ ३२

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम्।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम्॥ ३३

अन्वयः। (हे) प्रिये! यत्र अन्योन्यदत्तोत्पलकेसराणि अविमुक्तानि रथाङ्गनाम्नां द्वन्द्वानि ते दूरान्तरवर्त्तिना मया सस्पृहम् ईक्षितानि॥ ३१

अन्वयः। (किञ्च) स्तनाभिरामस्तवकाभिनम्राम् तन्वीम् इमाम् तटाशोकलताम् त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः अहम् सौमित्रिणा साश्रुः निषिद्धः (अभवम्)॥ ३२

अन्वयः। विमानान्तरलम्बिनीनाम् काञ्चनकिङ्किणीनाम् स्वनम् श्रुत्वा खम् उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वाम् प्रत्युद्व्रजन्ति इव॥ ३३

यत्र पम्पासरसि अन्योन्यस्मै दत्तोत्पलकेसराणि अविमुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रमिथुनानि ते तव दूरान्तरवर्त्तिना दूरदेशवर्त्तिना मया हे प्रिये, सस्पृह साभिलाषमीक्षितानि। तदानीं त्वामस्मार्षमित्यर्थः॥ ३१

किंच, स्तनादभिरामाभ्यां स्तवकाभ्याम् अभिनम्रां तन्वीमिमां तटाशोकस्य लतामत्वत्प्राप्तिबुद्ध्या त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुमालिङ्गितुं कामो यस्य सोऽहं सौमित्रिणा साश्रुर्निषिद्धः। नेयं सीतेति निवारितः। परिरब्धुकाम इत्यत्र 'तुम्काममनसोरपि' इति वचनात् मकारलोपः॥ ३२

विमानस्य अन्तरेषु अवकाशेषु लम्बन्ते यास्तासां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथभ्रमात् खं आकाशं उत्पतन्त्योऽमूर्गोदावरीसारसपङ्क्तयस्त्वां प्रत्युद्व्रजन्तीव॥ ३३

३१। वाच्यान्तरम्। अन्योन्यदत्तोत्पलकेसराणि अविमुक्तानि रथाङ्गनाम्नां द्वन्द्वानि ...वर्त्ती अहं ईक्षितवान्।

३२। वाच्यान्तरम्। सौमित्रिः परिरब्धुकामं साश्रुं ~~मां~~ निषिद्धवान्। त्वत्प्राप्ति... ...हेतौ तृतीया। स्मरस्य दशमावस्थायां वर्त्तमानो रामः।

३३। वाच्यान्तरम्। खमुत्पतन्तीभिः अमूभिः गोदावरीसारसपङ्क्तिभिः त्वं प्रत्युद्... ...इव। उत्प्रेक्षालङ्कारः।

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्द्धितबालचूता।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात् पञ्चवटी मनो मे॥ ३४॥
अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा स्मरामि वानीरगृहेषु सुप्तः॥ ३५॥
भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार।
तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम्॥ ३६॥

अन्वयः। पेशलमध्यया अपि त्वया घटाम्बुसंवर्द्धितबालचूता उन्मुखकृष्णसारा चिरात् दृष्टा एषा पञ्चवटी मे मनः आनन्दयति॥ ३४

अन्वयः। अत्र अनुगोदम् मृगयानिवृत्तः तरङ्गवातेन विनीतखेदः रहः त्वदुत्सङ्गनिषण्णमूर्द्धा (सन्) वानीरगृहेषु सुप्तः स्मरामि॥ ३५

अन्वयः। यः भ्रूभेदमात्रेण नहुषम् मघोनः पदात् प्रभ्रंशयाञ्चकार, आविलाम्भःपरिशुद्धिहेतोः तस्य मुनेः भौमः अयम् स्थानपरिग्रहः (दृश्यते)॥ ३६

पेशलमध्ययापि भारासहमयापीत्यर्थः। त्वया घटाम्बुभिः संवर्द्धिता बालचूता यस्याः सा उन्मुखा अस्मदभिमुखास्तत्संवर्द्धिता एव कृष्णसारा यस्याः सा चिराद्दृष्टा एषा पञ्चवटी मे मन आनन्दयत्याह्लादयति। पञ्चवटीशब्दः पूर्वमेव व्याख्यातः॥ ३४

अत्र पञ्चवट्याम्। गोदा गोदावरी तस्याः समीपेऽनुगोदम्। "अनुर्यत्समया" इत्यव्ययीभावः। मृगयाया निवृत्तः तरङ्गवातेन विनीतखेदो रहो रहसि। अत्यन्तसंयोगे द्वितीया। त्वदुत्सङ्गनिषण्णमूर्धा सन्नहं वानीरगृहेषु सुप्तः स्मरामि। वाक्यार्थः कर्म। इति यत् तत् स्मरामीत्यर्थः॥ ३५

यो मुनिर्भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव नहुषं राजानं मघोनः पदादिन्द्रत्वात् प्रभ्रंशयाञ्चकार प्रभ्रंशयति स्म। आविलाम्भःपरिशुद्धिहेतोः कलुषजलप्रसादहेतोस्तस्य मुनेरगस्त्यस्य। अगस्त्योदये शरदि जलं प्रसीदतीत्युक्तं प्राक्। भूमौ भवो भौमः स्थानपरिग्रह आश्रमो दृश्यत इति शेषः। भौम इत्यनेन दिव्योऽप्यस्तीत्युक्तम्। परिगृह्यत इति परिग्रहः। स्थानमेव परिग्रह इति विग्रहः॥ ३६

३४। वाच्यान्तरम्। घटाम्बुसंवर्द्धितबालचूतया उन्मुखकृष्णसारया चिराद् दृष्टया पञ्चवट्या मन आनन्द्यते। पेशलमध्ययापि त्वया कर्त्तरि तृतीया।

३५। वाच्यान्तरम्। मृगयानिवृत्तेन विनीतखेदेन उत्सङ्गनिषण्णमूर्ध्ना सुप्तेन स्मर्यते। तरङ्गवातेन तृतीया कर्त्तरि।

३६। वाच्यान्तरम्। येन नहुषः प्रभ्रंशयाञ्चक्रे, तस्य भौमेन अनेन स्थानपरिग्रहेण भूयते। भ्रूभेदमात्रेण प्रकृत्यादिभ्यस्तृतीया। पदात् पञ्चमी अपादाने, आविलाम्भः

त्रेताग्निधूमाग्रमनिन्द्यकीर्त्तेस्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७

एतन्मुनेर्मानिनि ! शातकर्णेः पञ्चाप्सरो नाम विहारवारि ।
आभाति पर्य्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन् मृगैः सार्द्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९

अन्वयः । अनिन्द्यकीर्त्तेः तस्य आक्रान्तविमानमार्गम् हविर्गन्धि त्रेताग्निधूमाग्रम् घ्रात्वा रजोविमुक्तः मे आत्मा लघिमानम् समश्नुते ॥ ३७

अन्वयः । ( हे ) मानिनि ! शातकर्णेः पञ्चाप्सरो नाम पर्य्यन्तवनम् एतत् विहारवारि विदूरात् मेघान्तरालक्ष्यम् इन्दुबिम्बम् इव आभाति ॥ ३८

अन्वयः । पुरा दर्भाङ्कुरमात्रवृत्तिः मृगैः सार्द्धम् चरन् सः ऋषिः समाधिभीतेन मघोना पञ्चाप्सरोयौवनकूटबन्धम् उपनीतः ॥ ३९

अनिन्द्यकीर्त्तेस्तस्य अगस्त्यस्य आक्रान्तविमानमार्गम्, हविर्गन्धोऽस्यास्तीति हविर्गन्धि, त्रय एव त्रेता अग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । पृषोदरादित्वादेत्वम् । त्रेताग्नेर्धूमाग्रमिदं घ्रात्वा आघ्राय रजसो गुणाद्विमुक्तो मे मम आत्मा अन्तःकरणं लघिमानं लघुत्वं समश्नुते प्राप्नोति ॥ ३७

हे मानिनि ! शातकर्णेर्मुनेः संबन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम् । पञ्चाप्सरसो यस्मिन्निति विग्रहः । पर्य्यन्तेषु वनानि यस्य तत् पर्य्यन्तवनमेतद्विहारवारि क्रीडासरो विदूरात्, मेघानामन्तरे मध्ये आलक्ष्यमीषल्लक्ष्यम् । 'आ ईषदर्थेऽभिव्याप्तौ' इत्यमरः । इन्दुबिम्बमिव, आभाति ॥ ३८

पुरा पूर्वस्मिन् काले दर्भाङ्कुरमात्रवृत्तिस्तन्मात्राहारो मृगैः सार्धं सह चरन् स ऋषिः शातकर्णिस्तपसो भीतेन मघोना इन्द्रेण पञ्चानामप्सरसां यौवनम् । तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । तदेव कूटबन्धः कपटयन्त्रमुपनीतः । "उन्माथः कूटयन्त्रं स्यात्" इत्यमरः । किलेत्यैतिह्ये । मृगसाहचर्यान्मृगवदेव बद्ध इति भावः ॥३९

[illegible] हेतोः हेत्वर्थे पञ्चमी । पुरा किल दैत्यविजितो भगवान् इन्द्रः हिमालयस्य कस्मिं-श्चित् प्रदेशे आत्मानं जुगोप ; तदा स्वर्गराज्यस्य परिरक्षणाय भूमण्डलात् राजानं नहुषं तत्र [illegible]पयामासुः ; स्वर्गराज्ये अधिष्ठितः स शचीं लब्धुकामः ताम् आहूतवान् ; सा च [illegible]महं मानुषस्य पत्नी भविष्यामीति भयात् कम्पिता सती नहुषं प्रत्यवदत्, ब्राह्मणवाहितेन [illegible]न विना भवतः सकाशे गन्तुं न शक्ष्यामीति श्रुत्वा राजा नहुषः अगस्त्यादीन् तत्कार्य-[illegible]नाय प्रवर्त्तयितुमारेभे । तदा स मुनिरगस्त्यः शापेन तं नहुषं पातयामास ।

३७ । पाठान्तरम् । रजोविमुक्तेन आत्मना लघिमा समश्नुते ।

तस्यायमन्तर्हितसौधभाजः प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४०
हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१
अमुं सहासप्रहितेक्षणानि व्याजार्द्धसन्दर्शितमेखलानि ।
नालं विकर्त्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२

अन्वयः । अन्तर्हितसौधभाजः तस्य अयं प्रसक्तसङ्गीतमृदङ्गघोषः वियद्गतः (सन्) पुष्पकचन्द्रशालाः प्रतिश्रुन्मुखराः करोति ॥ ४०

अन्वयः । नाम्ना सुतीक्ष्णः चरितेन दान्तः असौ अपरः तपस्वी एधवतां चतुर्णां हविर्भुजाम् अग्नीनां मध्ये ललाटन्तपसप्तसप्तिः (सन्) तपस्यति ॥ ४१

अन्वयः । सहासप्रहितेक्षणानि व्याजार्द्धसन्दर्शितमेखलानि सुराङ्गनाविभ्रमचेष्टितानि जनितेन्द्रशङ्कम् अमुं विकर्त्तुम् न अलम् (बभूवुः) ॥ ४२

अन्तर्हितसौधभाजो जलान्तर्गतप्रासादगतस्य तस्य शातकर्णेः प्रसक्तः सन्ततः सङ्गीतमृदङ्गघोषो वियद्गतः सन् पुष्पकस्य चन्द्रशालाः शिरोगृहाणि । 'चन्द्रशाला शिरोगृहम्' इति हलायुधः । क्षणं प्रतिश्रुद्भिः प्रतिध्वानैर्मुखरा ध्वनतीः करोति । "स्त्री प्रतिश्रुत् प्रतिध्वाने" इत्यमरः ॥ ४०

नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः सौम्योऽसावपरस्तपस्वी, एधवतामिन्धनवताम् । "काष्ठं दार्विन्धनन्त्वेधः" इत्यमरः । चतुर्णां हविर्भुजामग्नीनां मध्ये ललाटं तपतीति ललाटन्तपः सूर्यः । "असूर्यललाटयोर्दृशितपोः" इति खश्प्रत्ययः । "अरुर्द्विषद्-" इत्यादिना मुमागमः । ललाटन्तपः सप्तसप्तिः सप्ताश्वः सूर्यो यस्य स तथोक्तः सन् तपश्चरति । 'कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः' इति क्यङ् । "तपसः परस्मैपदं च" इति वक्तव्यम् ॥ ४१

जनितेन्द्रशङ्कम् तपसेति शेषः । अमुं सुतीक्ष्णं, सहासं प्रहितानि ईक्षणानि येषु तानि, व्याजेन केनचिन्मिषेण । "पुंस्यर्धोऽर्धं समेंऽशके" इति विश्वः । अर्धेन सन्दर्शिता मेखला येषु तानि सुराङ्गनानामिन्द्रप्रेषितानां विभ्रमा विलासा एव चेष्टितानि विकर्तुं स्खलयितुमलं समर्थानि न बभूवुरिति शेषः ॥ ४२

३८ । वाच्यान्तरम् । पयःपूरसा पर्य्यन्तवनेन विहारवारिणा मेघान्तरालक्ष्य इन्दुबिम्बेन इव अभायते । उपमालङ्कारः ।

३९ । वाच्यान्तरम् । समाधिभीतः मघोवा दर्भाङ्कुरमात्रवृत्तिं चरन्तं ऋषिं पञ्चाप्सरोयौवनकूटबन्धं उपनीतवान् । सर्गेः सहयोगे तृतीया ।

४० । वाच्यान्तरम् । प्रसक्तसङ्गीतमृदङ्गघोषेण वियद्गतेन (सता) पुष्पकचन्द्रशालाः प्रतिश्रुन्मुखराः क्रियन्ते । क्षणं व्याप्त्यर्थे द्वितीया ।

एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम्।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३
वाचंयमत्वात् प्रणतिं ममैष कम्पेन किञ्चित् प्रतिगृह्य मूर्ध्नः।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते ॥ ४४
अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः।
चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥४५

अन्वयः। ऊर्ध्वबाहुः एषः अक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावं सव्येतरं भुजं मे सभाजने इतः प्राध्वं प्रयुङ्क्ते ॥४३

अन्वयः। एषः वाचंयमत्वात् मम प्रणतिं किञ्चित् मूर्ध्नः कम्पेन प्रतिगृह्य विमानव्यवधानमुक्तां दृष्टिं पुनः सहस्रार्चिषि सन्निधत्ते ॥४४

अन्वयः। आहिताग्नेः शरभङ्गनाम्नः मुनेः अदः शरण्यं पावनं तपोवनं, यः (शरभङ्गः) चिराय अग्निं समिद्भिः सन्तर्प्य मन्त्रपूतां तनुम् अपि अहौषीत् ॥४५

ऊर्ध्वबाहुरेष सुतीक्ष्णोऽक्षमालैव वलयं यस्य तं मृगाणां कण्डूयितारम्, कुशा एव सूचयस्ता लुनातीति कुशसूचिलावस्तम्। "कर्मण्यण्" इत्यण्। एभिर्विशेषणैर्जपशीलत्वं भूतदया कर्मक्षमत्वं च द्योत्यते। सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्माननिमित्ते। "निमित्तात् कर्मयोगे" इति सप्तमी। इतः प्राध्वं प्रकृतानुकूलबन्धं प्रयुङ्क्ते। "आनुकूल्यार्थकं प्राध्वम्" इत्यमरः। अव्ययञ्चैतत् ॥४३

एष सुतीक्ष्णः वाचं यच्छतीति वाचंयमो मौनव्रती। "वाचि यमो व्रते" इति खच्-प्रत्ययः "वाचंयमपुरन्दरौ च" इति मुम्। तस्य भावस्तत्वात् मम प्रणतिं किञ्चिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मान्मुक्ताम्। "अपेतापोढमुक्तपतित—" इत्यादिना पञ्चमीसमासः। दृष्टिं पुनः सहस्रार्चिषि सूर्ये सन्निधत्ते। सम्यग्धत्त इत्यर्थः। अन्यथा अकर्मकत्वप्रसङ्गात् ॥४४

शरणे रक्षणे साधु शरण्यम्। पावयतीति पावनम्। अदो दृश्यमानं तपोवनमाहिताग्नेः शरभङ्गनाम्नो मुनेः सम्बन्धि। यः शरभङ्गश्चिराय अग्निं समिद्भिः सन्तर्प्य तर्पयित्वा पश्चान्मन्त्रैः पूतां शुद्धां तनुमप्यहौषीत् हुतवान्। जुहोतेर्लुङ् ॥४५

४१। पाठान्तरम्। नाम्ना सुतीक्ष्णेन दान्तेन अमुना अपरेण तपस्विना अभीष्टतपसमसमितिना तपस्यत। हविर्भुजामेधवतां चतुर्णां षष्ठी निर्धारे।

४२। पाठान्तरम्। व्यालार्धसन्दर्शितमेखलैः सहासप्रहितेक्षणैः सुराङ्गनाविभ्रमचेष्टितैः जनितेन्द्रशङ्कं अमु विकर्तुं नाशं भूयते।

४३। पाठान्तरम्। ऊर्ध्वबाहुना एतेन अक्षमालावलयः कण्डूयिता कुशसूचिलावः सव्येतरः भुजः प्रयुज्यते। मृगाणां कर्मणि षष्ठी।

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६
धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि ! चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७
एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ४८

अन्वयः । अधुना तस्य अतिथीनां सपर्या छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेषु अमीषु पादपेषु सुपुत्रेषु इव स्थिता ॥४६

अन्वयः । (हे) बन्धुरगात्रि ! धारास्वनोद्गारिदरीमुखः शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः असौ चित्रकूटः दृप्तः ककुद्मान् इव मे चक्षुः बध्नाति ॥४७

अन्वयः । प्रसन्नस्तिमितप्रवाहा विदूरान्तरभावतन्वी मन्दाकिनी (नाम) एषा सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावली इव भाति ॥४८

अधुना अस्मिन् काले तस्य शरभङ्गस्य सम्बन्धिनी अतिथीनां सपर्या अतिथिपूजा "पूजा नमस्यापचितिः सपर्यार्चार्हणाः" इत्यमरः । छायाभिर्विनीतोऽपनीतोऽध्वपरिश्रमो येषु भूयिष्ठानि बहुतमानि सम्भाव्यानि श्लाघ्यानि फलानि येषां तेषु अमीषु पादपेषु सुपुत्रेष्विव स्थिता । तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः ॥४६

धारा निर्झरधाराः । यद्वा धारया सातत्येन स्वनोद्गारि दर्यैव मुखं यस्य सः । शिखरं विषाणञ्च, तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्को यस्य सः, असौ चित्रकूटः हे बन्धुरगात्रि उन्नतानताङ्गि । "बन्धुरं तून्नतानतम्" इत्यमरः । दृप्तः ककुद्मान् वृषभ इव । चक्षुर्बध्नाति अनन्यासक्तं करोति ॥४७

प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा विदूरस्यान्तरस्य मध्यवर्तिदेशस्य भावात् तन्वी दूरदेशवर्तित्वात् तनुत्वेनावभासमाना मन्दाकिनी नाम काचिच्चित्रकूटनिकटवर्तिनी एषा सरिन्नगोपकण्ठे भूमेः कण्ठगता मुक्तावलीव भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वञ्च गम्यते ॥४८

४४ । वाच्यान्तरम् । एतेन विमानव्यवधानमुक्ता दृष्टिः पुनः सन्निधीयते । वाच्यत्वात् हेतौ पञ्चमी ।

४५ । वाच्यान्तरम् । अमुना पावनेन तपोवनेन भूयते । येन गन्धपूता अद्यापि ।

४६ । वाच्यान्तरम् । सपर्यया स्थितया भूयते । उपमालङ्कारः । पुत्रैः सह पादपानां साम्यम् ।

४७ । वाच्यान्तरम् । धारास्वनोद्गारिदरीमुखेन शृङ्गाग्रलग्नाम्बुदवप्रपङ्केन दृप्तेन चित्रकूटेन दृप्तेन ककुद्मता इव मे चक्षुः बध्यते । उपमालङ्कारः । शृङ्गाग्रलग्नाम्बुदवप्रपङ्कस्य ककुद्मता च चित्रकूटस्य साम्यम् ।

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥ ४९

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात् फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥ ५०

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलानुसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१

अन्वयः । अनुगिरम् अयं सुजातः तमालः ( दृश्यते ), यस्य सुगन्धि प्रवालम् आदाय मया ते यवाङ्कुरापाण्डुकपोलशोभी अवतंसः परिकल्पितः ॥ ४९

अन्वयः । अनिग्रहत्रासविनीतसत्त्वम् अपुष्पलिङ्गात् फलबन्धिवृक्षम् आविष्कृतोदग्रतरप्रभावम् अत्रेः तपःसाधनम् एतत् वनम् ॥ ५०

अन्वयः । अत्र अनसूया सप्तर्षिहस्तोद्धृतहेमपद्मां त्र्यम्बकमौलिमालां त्रिस्रोतसं तपोधनानाम् अभिषेकाय प्रवर्तयामास किल ॥ ५१

गिरेः समीपेऽनुगिरम् । "गिरेश्च सेनकस्य" इति समासान्तष्टच्प्रत्ययः । सुजातः स तमालोऽयं दृश्यते । यस्य तमालस्य शोभनो गन्धो यस्य तत् सुगन्धि । "गन्धस्य—" इत्यादिनेकारः समासान्तः । प्रवालं पल्लवमादाय मया ते यवाङ्कुरवदापाण्डौ कपोले शोभते यः सोऽवतंसः परिकल्पितः ॥ ४९

अनिग्रहत्रासा दण्डभयरहिता अपि विनीताः सत्त्वा जन्तवो यस्मिंस्तत् । अपुष्पलिङ्गात् पुष्परूपनिमित्तं विनैव फलबन्धिनः फलग्राहिणो वृक्षा यस्मिंस्तत् अतएवाविष्कृतोदग्रतरप्रभावं अत्रेर्मुनेस्तपसः साधनं वनमेतत् ॥ ५०

अत्र वनेऽनुसूया अत्रिपत्नी । सप्त च ते ऋषयश्च सप्तर्षयः । "दिक्संख्ये संज्ञायाम्" इति तत्पुरुषसमासः । तेषां हस्तैरुद्धृतानि हेमपद्मानि यस्यास्तां त्र्यम्बकमौलिमालां हरशिरोमालां त्रिस्रोतसं भागीरथीं तपोधनानामृषीणामभिषेकाय स्नानाय प्रवर्तयामास प्रवाहयामास । किलेत्यैतिह्ये ॥ ५१

४८ । वाच्यान्तरम् । प्रसन्नस्तिमितप्रवाहया विदूरान्तरभावतन्व्या मन्दाकिन्या नाम सरिता कण्ठगतया मुक्तावल्या इव भायते । उपमालङ्कारः । समन्वयः । मुक्तावल्याः सह मन्दाकिन्याः साम्यम् ।

४९ । वाच्यान्तरम् । सुजातम् इमं तमालं पश्य । यवाङ्कुरापाण्डुकपोलशोभिनं अवतंसं अहं कल्पितवान् ।

५० । वाच्यान्तरम् । अनिग्रहत्रासविनीतसत्त्वेन फलबन्धिवृक्षेण आविष्कृतोदग्रतरप्रभावेण तपःसाधनेन एतेन वनेन भूयते ।

५१ । वाच्यान्तरम् । अनसूयया सप्तर्षिहस्तोद्धृतहेमपद्मा त्र्यम्बकमौलिमाला त्रिस्रोताः प्रवर्तयामासे । तपोधनानां कर्त्तरि षष्ठी । अभिषेकाय चतुर्थी निमित्तार्थे ।

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥५२
त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥५३
क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥५४

अन्वयः । वीरासनैः ध्यानजुषां ऋषीणां समध्यासितवेदिमध्याः अमी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढाः इव विभान्ति ॥५२

अन्वयः । त्वया पुरस्तात् यः उपयाचितः, श्याम इति प्रतीतः सः अयं वटः फलितः (सन्) सपद्मरागः गारुडानां मणीनां राशिः इव विभाति ॥५३

अन्वयः । क्वचित् प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा मुक्तामयी यष्टिः इव । अन्यत्र इन्दीवरैः उत्खचितान्तरा सितपङ्कजानां माला इव ॥५४

वीरासनैर्जयसाधनैः । ध्यानं जुषन्ते सेवन्त इति ध्यानजुषः तेषां तैरुपविश्य ध्यायतां ऋषीणां सम्बन्धिनः समध्यासितवेदिमध्याः । इद वीरासनस्थानीयम् । अमी शाखिनोऽपि निवातनिष्कम्पतया योगाधिरूढा इव ध्यानभाज इव । ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति । वीरासने वशिष्ठः—"एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥" इति ॥५२

त्वया पुरस्तात् पूर्वं य उपयाचितः प्रार्थितः । तथा च रामायणे—"न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष ! पारयेन्मे व्रतं प्रति ॥" इति । श्याम इति प्रतीतः स वटोऽयं फलितः सन् सपद्मरागो गारुडानां मणीनां मरकतानां राशिरिव विभाति ॥५३

'क्वचित'—इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासङ्गमं वर्णयति—हे अनवद्याङ्गि ! यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति, त्वं पश्य । केव क्वचित् ...

५२ । वाच्यान्तरम् । समध्यासितवेदिमध्यैः योगाधिरूढैरिव अमीभिः शाखिभिः विभाव्यते । वीरासनैस्तृतीया करणे, निवातनिष्कम्पतया हेतौ तृतीया । समध्या... निवातनिष्कम्पतया सह ध्याननिमग्नस्य कुम्भकेन साम्यम् । वीरासनैः सह समध्यासितवेदिमध्यस्य साम्यम् । शाखिभिः सह योगिनां साम्यम् । उपमालङ्कारः ।

५३ । वाच्यान्तरम् । त्वं यं उपयाचितवती । श्याम इति प्रतीतेन तेन वटेन अमुना फलितेन सता सपद्मरागेण राशिनेव विभाव्यते । उपमालङ्कारः । सपद्मरागेण राशिना वट-फलानां साम्यम् ।

५४ । वाच्यान्तरम् । अनुविद्धया मुक्तामय्या यष्ट्या इव उत्खचितान्तरया मालया इव विभाव्यते । उपमालङ्कारः ।

क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५
क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि ! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७

अन्वयः। क्वचित् कादम्बसंसर्गवती प्रियमानसानां खगानां पंक्तिः इव। अन्यत्र कालागुरुदत्तपत्रा भुवः चन्दनकल्पिता भक्तिः इव ॥५५

अन्वयः। क्वचित् छायाविलीनैः तमोभिः शबलीकृता चान्द्रमसी प्रभा इव। अन्यत्र रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा इव ॥५६

अन्वयः। क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुः इव यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा विभाति (हे) अनवद्याङ्गि ! (त्वम्) पश्य ॥५७

...मया विसर्पन्ति सन्निहितमिति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा, सह गुम्फिता मुक्तामयी ...र्हारिव हारावलिरिव विभाति। अन्यत्र प्रदेशे इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा सह ...रचिता सितपङ्कजानां पुण्डरीकाणां मालेव विभातीति सर्वत्र सम्बन्धः ॥५४

क्वचित् कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव। "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। अन्यत्र कालागुरुणा दत्तपत्रा रचितमकरिका भुवश्चन्दनकल्पिता भक्तिरिव ॥५५

क्वचित् छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिकेव। अन्यत्र रन्ध्रेष्वालक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव ॥५६

क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुरिव। विभाति। शेषो व्याख्यातः। ...वाक्यक्रम ॥५७

५५। वाच्यान्तरम्। कादम्बसंसर्गवत्या पङ्क्त्या इव, कालागुरुदत्तपत्रया चन्दनकल्पितया भुवो भक्त्या इव (विभायते)। उपमालङ्कारः।

५६। वाच्यान्तरम्। शबलीकृतया चान्द्रमस्या प्रभया इव, आलक्ष्यनभःप्रदेशया शरदभ्रलेखया इव (विभायते) उपमालङ्कारः।

५७। वाच्यान्तरम्। कृष्णोरगभूषणया भस्माङ्गरागया तन्वा इव, भिन्नप्रवाहया गङ्गया विभायते। त्वया दृश्यताम्।

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात्।
तत्त्वाववोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः॥५८
पुरं निषादाधिपतेरिदं तद्यस्मिन् मया मौलिमणिं विहाय।
जटासु बद्धास्वरुदत् सुमन्त्रः कैकेयि! कामाः फलितास्तवेति॥५९
पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति॥६०

अन्वयः। अत्र समुद्रपत्न्योः जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वाववोधेन विना अपि भूयः शरीरबन्धः नास्ति किल॥५८

अन्वयः। निषादाधिपतेः तत् पुरम् इदम्, यस्मिन् मया मौलिमणिं विहाय जटासु बद्धासु [सतीषु] सुमन्त्रः (हे) कैकेयि! तव कामः फलिताः इति अरुदत॥५९

अन्वयः। आप्तवाचः बुद्धेः अव्यक्तम् इव पुण्यजनाङ्गनानां पयोधरैः निर्विष्टहेमाम्बुजरेणु ब्राह्मं सरः, यस्याः कारणम् उदाहरन्ति॥६०

अत्र समुद्रपत्न्योर्गङ्गायमुनयोर्जलसन्निपाते सङ्गमेऽभिषेकात् स्नानात् पूतात्मनां तनुत्यजां शुद्धात्मनां पुंसां तत्त्वाववोधेन तत्त्वज्ञानेन विनापि प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगो नास्ति किल। अन्यत्र ज्ञानादेव मुक्तिः। अत्र तु स्नानादेव मुक्तिरित्यर्थः॥५८

निषादाधिपतेर्गुहस्य तत् पुरमिदम्। यस्मिन् पुरे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीषु सुमन्त्रः "हे कैकेयि! तव कामा मनोरथाः फलिताः सफला जाताः" इत्यरुदत्। 'रुदिर् अश्रुविमोचने' इति धातोर्लुङ्॥५९

पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरैः स्तनैर्निर्विष्ट उपभुक्तो हेमाम्बुजरेणुर्यस्य तत्। तत्र ताः क्रीड़न्तीति व्यज्यते। ब्रह्मण इदं ब्राह्मम्। 'नस्तद्धिते' इति टिलोपः। ब्राह्मं सरो मानसाख्यं यस्याः सरय्वाः बुद्धेर्महत्तत्त्वस्य अव्यक्तं प्रधानमिव कारणम्। आप्तवाच आप्तवाचो वेदाः। यद्वा बहुव्रीहिणा मुनयः। उदाहरन्ति प्रवदन्ते॥६०

५८। वाच्यान्तरम्। शरीरबन्धेन न भूयते। अभिषेकात् हेतौ पञ्चमी। तत्त्वाववोधेन विनायोगे तृतीया।

५९। वाच्यान्तरम्। सुमन्त्रेण अरुद्यत। कामैः फलितैः अभूयत। मया कर्त्तरि तृतीया। जटासु भावे सप्तमी।

६०। वाच्यान्तरम्। निर्विष्टहेमाम्बुजरेणु ब्राह्मं सरः अव्यक्तमिव यस्याः कारणम् आप्तवाग्भिः उदाह्रियते। पयोधरैः तृतीया कर्त्तरि। उपमालङ्कारः। बुद्ध्या सह सरय्वाः अव्यक्तकारणेन सह ब्राह्मस्य सरसः साम्यम्, अन्यत् सुगमम्।

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम्।
तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१

यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्द्धितानाम्।
सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोशलानाम् ॥ ६२

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३

अन्वयः। तीरनिखातयूपा या तुरङ्गमेधावभृथावतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि जलानि अयोध्यां राजधानीम् अनु वहति ॥ ६१

अन्वयः। यां मे मानसं (कर्तृ) सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्द्धितानां उत्तरकोशलानां सामान्यधात्रीं इव सम्भावयति ॥ ६२

अन्वयः। मान्येन राज्ञा वियुक्ता सा इयं सरयूः मदीया जननी इव दूरे वसन्तं मां शिशिरानिलैः तरङ्गहस्तैः उपगूहति इव ॥ ६३

यूपः संस्कृतः पशुबन्धनार्थो दारुविशेषः। तीरनिखातयूपा या सरयूः तुरङ्गमेधा अश्वमेधास्तेषु अवभृथार्थमेवावतीर्णैरवगाढैरिक्ष्वाकुगोत्रापत्यैर्नृपैः। तद्राजत्वादणो लुक्। पुण्यतरीकृतानि अतिशयेन पुण्यानि कृतानि जलानि अयोध्यां राजधानीं नगरीमनु समीपे। तया सहितेत्यर्थः। अनुशब्दस्य "लक्षणेत्थम्भूत—" इत्यादिना कर्मप्रवचनीयत्वात् तद्योगे द्वितीया। वहति प्रापयति ॥ ६१

यां सरयूं मे मानसं कर्तृ, सैकतं पुलिनम् तदेवोत्सङ्गः, तत्र यत् सुखं तत्रोचितानां, प्राज्यैः प्रभूतैः पयोभिरम्बुभिः क्षीरैश्च। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। परिवर्द्धितानां उत्तरकोशलानामुत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरमिव सम्भावयति "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति विश्वः ॥ ६२

मदीया जननी कौसल्येव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सेयं सरयूः दूरे वसन्तं प्रोष्य आगच्छन्तमित्यर्थः, मां पुत्रभूतं शिशिरानिलैस्तरङ्गैरेव हस्तैरुपगूहतीव आलिङ्गतीव ॥ ६३

६१। वाच्यान्तरम्। तीरनिखातयूपया यया पुण्यतरीकृतानि जलानि उह्यन्ते। राजधानीं अनुयोगे द्वितीया। तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः कर्तरि तृतीया।

६२। वाच्यान्तरम्। मानसेन या सामान्यधात्रीव सम्भाव्यते। प्राज्यैः पयोभिः कर्तरि तृतीया, उपमालङ्कारः।

६३। वाच्यान्तरम्। मान्यः सः राजा मदीयां जननीम् इव ताम् इमां सरयूं वियुक्तवान्। यया अहं उपगुह्ये। उत्प्रेक्षालङ्कारः। शिशिरानिलैः तरङ्गहस्तैः तृतीया करणे।

विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६

अन्वयः । विरक्तसन्ध्याकपिशं पार्थिवं रजः पुरस्तात् यतः उज्जिहीते (ततः) हनूमत्कथितप्रवृत्तिः भरतः ससैन्यः (सन्) मां प्रत्युद्गतः (इति) शङ्के ॥ ६४

अन्वयः । साधुः सः (भरतः) पालितसङ्गराय मे अनघां संरक्षितां श्रियं, लक्ष्मणः मृधे खरादीन् हत्वा निवृत्ताय (मे संरक्षिताम् अनघां) त्वाम् इव प्रत्यर्पयिष्यति अद्धा ॥ ६५

अन्वयः । पदातिः चीरवासा असौ भरतः पश्चात् अवस्थापितवाहिनीकः (सन्) गुरुं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः (सन्) माम् अभ्युपैति ॥ ६६

विरक्ता अतिरक्ता या सन्ध्या तद्वत् कपिशं तास्रवर्णं पृथिव्या इदं पार्थिवं रजो धूलिः पुरस्तादग्रे यतो यस्मात् कारणादुज्जिहीते उद्गच्छति, तस्मात् हनुरस्यास्तीति हनूमान् "अवादीनां च" इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्त्ता यस्मै स भरतः ससैन्यः सन् मां प्रत्युद्गत इति शङ्के तर्कयामि । "शङ्का भयवितर्कयोः" इति शब्दार्णवः । यत्तदोर्नित्यसम्बन्धात् तच्छब्दलाभः ॥ ६४

किञ्च । साधुः सज्जनः स भरतः । "साधुर्वार्द्धुषिके चारौ सज्जने चापि वाच्यवत्" इति विश्वः । पालितसङ्गराय पालितपितृप्रतिज्ञाय मे मह्यमनघामदोषां भोगाभावादनुच्छिष्टां किन्तु संरक्षितां श्रियम् । मृधे युद्धे खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यति अद्धा सत्यम् । "सत्ये त्वद्धाञ्जसा" द्वयम् इत्यमरः ॥ ६५

असौ पदातिः पादचारी चीरवासा वल्कलवसनो भरतः पश्चात् पृष्ठभागेऽवस्थापिता वाहिनी सेना येन स तथोक्तः सन् । "नद्यृतश्च" इति कप् । गुरुं वसिष्ठं पुरस्कृत्य वृद्धैरमात्यैः सह अर्घ्यपाणिः सन् मामभ्युपैति ॥ ६६

६४ । वाच्यान्तरम् । विरक्तसन्ध्याकपिशेन पार्थिवेन रजसा उद्हीयते । मया शङ्क्यते ।

६५ । वाच्यान्तरम् । साधुना तेन अनघा श्रीः, लक्ष्मणेन संरक्षिता त्वमिव प्रत्यर्पयिष्यते । पालितसङ्गराय निवृत्ताय मे सम्प्रदाने चतुर्थी ।

६६ । वाच्यान्तरम् । अमुना पदातिना चीरवाससा भरतेन अवस्थापितवाहिनीकेन अर्घपाणिना (सता) अहं अभ्युपेये । वृद्धैः अमात्यैः सहयोगे तृतीया ।

पित्रा विसृष्टां मदपेक्षया यः
श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्र-
मभ्यस्यतीव व्रतमासिधारम् ॥६७

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥६८

अन्वयः । यः पित्रा विसृष्टाम् अङ्कगताम् अपि श्रियं युवा (अपि) मदपेक्षया अभोक्ता (सन्) इयन्ति वर्षाणि तया (श्रिया स्त्रिया च) सह उग्रम् आसिधारम् (नाम) व्रतं अभ्यस्यति इव ॥ ६७

अन्वयः । दाशरथौ एतावत् उक्तवति [सति] विमानं (कर्तृ) तदीयाम् इच्छाम् अधिदेवतया विदित्वा सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः उद्वीक्षितं (सत्) ज्योतिष्पथात् अवततार ॥ ६८

यो भरतः पित्रा विसृष्टां दत्तामङ्कमुत्सङ्गं च गतामपि यां श्रियं युवापि मदपेक्षया आशया अभोक्ता सन् । तृन्नन्तत्वात् "न लोक—" इति षष्ठीनिषेधः । इयन्ति वर्षाणि एतावतो वत्सरान् । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह । स्त्रियेति च गम्यते । उग्रं दुश्चरमासिधारं नाम व्रतमभ्यस्यतीव वर्तयतीव । 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् ॥' इति यादवः । इदमासिधाराचङ्क्रमणतुल्य-त्वादासिधारव्रतमित्युक्तम् ॥ ६७

दाशरथौ रामे एतावदुक्तवति सति विमानं पुष्पकं कर्तृ तदीयां रामसम्बन्धिनीमिच्छां अधिदेवतया मिषेण विदित्वा तत्प्रेरितं सदित्यर्थः । सविस्मयाभिर्भरतानुगाभिः प्रकृतिभिः प्रजाभिः उद्वीक्षितं सत् ज्योतिष्पथादाकाशादवततार ॥ ६८

६७ । वाच्यान्तरम् । येन भरतेन पित्रा विसृष्टाम् अङ्कगतामपि श्रियं यूवापि अभोक्ता (सता) उग्रं आसिधारं व्रतम् अभ्यस्यते । तया सहयोगे तृतीया । पित्रा अनुक्ते कर्तरि तृतीया । मदपेक्षया हेतौ तृतीया । इयन्ति वर्षाणि व्याप्त्यर्थे द्वितीया ।

६८ । वाच्यान्तरम् । विमानेन उद्वीक्षितेन अवतेरे । दाशरथौ भावे सप्तमी । अधि-देवतया हेतौ तृतीया । ज्योतिष्पथात् अपादाने पञ्चमी सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः अनुक्ते कर्तरि तृतीया ।

तस्मात् पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
सभ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्य्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढ़पितृराज्यमहाभिषेके ॥ ७०

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान् ।

अन्वयः । रामः सेवाविचक्षणहरीश्वरदत्तहस्तः ( सन् ) पुरःसरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण तस्मात् यानात् अवातरत् ॥ ६९

अन्वयः । सः प्रयतः इक्ष्वाकुवंशगुरवे प्रणम्य अर्घ्यं परिग्रहान्ते पर्य्यश्रुः (सन्) सभ्रातरं भरतम् अस्वजत ; तद्भक्त्यपोढ़पितृराज्यमहाभिषेके मूर्द्धनि उपजघ्रौ च ॥ ७०

अन्वयः । श्मश्रुप्रवृद्धिजनिताननविक्रियान् ( अतएव ) प्ररोहजटिलान् प्लक्षान् इ( स्थितान् ) प्रणमतः मन्त्रिवृद्धान् च शुभदृष्टिपातैः वार्त्तानुयोगमधुराक्षरया वाचा च अन्वग्रहीत् ॥ ७१

रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तो हस्तो हस्तावलम्बो यस्य तादृशः सन् । स्थानज्ञत्वात् पुरःसरो विभीषणस्तेन दर्शितेन अदूरमासन्नं महीतलं यस्य तेन भङ्गिभिर्विच्छित्तिभी रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्व्वणा मार्गेण तस्माद्यानात् पुष्पकादवातरत् अवतीर्णवान्, तरतेर्लङ् ॥ ६९

प्रयतः स राम इक्ष्वाकुवंशगुरवे वशिष्ठाय प्रणम्य नमस्कृत्य अर्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते पर्य्यश्रुः परिगतानन्दवाष्पः सन् सभ्रातरं भरतमस्वजत आलिङ्गत । तस्मिन् रामे भक्त्या अपोढ़ः परिहृतः पितृराज्यमहाभिषेको येन तस्मिन् मूर्द्धणि उपजघ्रौ च । "घ्रा गन्धोपादाने" लिटि रूपम् ॥ ७०

६९ । वाच्यान्तरम् । सेवाविचक्षणहरीश्वरदत्तहस्तेन रामेण अवतीर्य्यत । तस्मात् यानात् अपादाने पञ्चमी । पुरःसरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण तृतीया करणे ।

७० । वाच्यान्तरम् । पर्य्यश्रुणा-( रामेण ) सभ्राता भरतः अस्वज्यत उपजघ्रे च । गुरवे क्रियायोगे चतुर्थी ।

अन्वग्रहीत् प्रणमतः शुभदृष्टिपातै-
र्वार्त्तानुयोगमधुराक्षरया च वाचा ॥ ७१

दुर्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्त्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३

अन्वयः । अयं मे दुर्जातबन्धुः, ऋक्षहरीश्वरः, एष समरेषु पुरः प्रहर्त्ता पौलस्त्यः, इति आदृतेन रघुनन्दनेन कथितौ उभौ भरतः लक्ष्मणं व्युत्क्रम्य ववन्दे ॥ ७२

अन्वयः । तदनु सः ( भरतः ) सौमित्रिणा संससृजे । नम्रशिरसम् एनम् उत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन अस्य उरःस्थलेन भुजमध्यं क्लिश्यन् इव भृशम् आलिलिङ्ग ॥ ७३

श्मश्रूणां मुखरोम्णां प्रवृद्ध्या संस्काराभावादभिवृद्ध्या जनिता आननेषु विक्रिया विकृतिर्येषां तान् अतएव प्ररोहैः शाखावलम्बिभिरधोमुखैर्मूलैर्जटिलान् जटावतः प्लक्षान् न्यग्रोधानिव स्थितान् प्रणमतो मन्त्रिवृद्धांश्च शुभैः कृपार्द्रैर्दृष्टिपातैर्वार्त्तस्यानुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा चान्वग्रहीत् अनुगृहीतवान् ॥ ७१

अयं मे दुर्जातबन्धुरापद्बन्धुः । "दुर्जातं व्यसनं प्रोक्तम्" इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । एष समरेषु पुरःप्रहर्त्ता पौलस्त्यो विभीषणः । इत्यादृतेनादरवता । कर्त्तरि क्तः । रघूणां नन्दनेन रामेण कथितावुभौ विभीषणसुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्य आलिङ्गनादिभिरसम्भाव्य भरतो ववन्दे ॥ ७२

तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे सङ्गतः । सृज विसर्गे दैवादिकात् कर्त्तरि लिट् । नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढमालिलिङ्ग च । किं कुर्वन् ? रूढेन्द्रजित्प्रहरणव्रणैः कर्कशेन अस्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं

७१ । पाठान्तरम् । तेन, श्मश्रुप्रवृद्धिजनिताननविक्रियाः प्ररोहजटिलाः प्लक्षा इव प्रणमन्तः मन्त्रिवृद्धाः अन्वगृह्यन्त । शुभदृष्टिपातैः वार्त्तानुयोगमधुराक्षरया वाचा, तृतीया करणे । उपमालङ्कारः ।

७२ । पाठान्तरम् । कथितौ उभौ भरतेन ववन्दाते । आदृतेन रघुनन्दनेन कर्त्तरि तृतीया ।

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान् दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयैः
न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५

अन्वयः। तदानीं हरिचमूपतयः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः। मदवारिधाराः क्षरत्सु तेषु ते शैलाधिरोहणसुखानि उपलेभिरे ॥ ७४

अन्वयः। सानुप्लवः क्षणदाचराणां प्रभुः अपि दशरथप्रभवानुशिष्टः (सन्) रथान् भेजे। ये (रथाः) मायाविकल्परचितैः अपि तदीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभाः न (भवन्ति)॥ ७५

क्लिश्नन्निव पीड़यन्निव। क्लिश्नातिरयं सकर्म्मकः। "क्लिश्नाति भुवनत्रयम्" इति दर्शनात्। ननु रामायणे—"ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥" इति भरतस्य कानिष्ठं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्य, अनार्वैव श्लोको व्याख्यातः। सत्यम्। किन्तु रामायणश्लोकार्थः टीकाकृतोक्तः श्रूयताम्। "ततो लक्ष्मणमासाद्य—" इत्यादिश्लोके आसादनं लक्ष्मणवैदेह्योः अभिवादनन्तु वैदेह्या एव। अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्यत इति ॥ ७३

तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रानारुरुहुः। बहुधा मदवारिधाराः क्षरत्सु, वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखानि उपलेभिरे, लब्धवन्तो बभूवुः ॥७४

सानुप्लवः सानुगः। "अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः" इति यादवः। क्षणदाचराणां प्रभुर्विभीषणोऽपि प्रभवत्यस्मादिति प्रभवो जनकः दशरथः प्रभवो यस्य स दशरथप्रभवो रामः तेनानुशिष्टः आज्ञप्तः सन् रथान् भेजे। तानेव विशिनष्टि—ये रथा मायाविकल्परचितैः सङ्कल्पविशेषनिर्म्मितैरपि तदीयैर्विभीषणीयैः स्यन्दनैः रथैस्तुलितकृत्रिमभक्तिशोभाः तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ता न भवन्ति। तेऽपि तत्साम्यं न लभन्ते इत्यर्थः। कृत्रिमेत्यत्र "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः। "क्त्रेर्मम् नित्यम्" इति ममागमः ॥७५

७३। पाठान्तरम्। सौमित्रिः तं संसस्वजे। तेन नतशिराः एषः आलिलिङ्गे। रूढ़ेन्द्रजित्प्रहरणव्रणकर्कशेन, भुजमध्यसुरःस्थलेन करणे तृतीया।

७४। पाठान्तरम्। हरिचमूपतिभिः गजेन्द्राः आरुरुहिरे। तैः शैलाधिरोहणसुखानि उपलेभिरे।

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्
प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तत्
वन्द्यं युगं चरणयोर्जनकात्मजायाः ।

अन्वयः । ततः रघुपतिः सावरजः ( सन् ) विलसत्पताकं कामगति विमानं भूयः बुधबृहस्पतियोगदृश्यः तारापतिः दोषातनं तरलविद्युत् अभ्रवृन्दम् इव अध्यास्त ॥७६

अन्वयः । भरतः जगताम् ईश्वरेण प्रलयात् उर्वीम् इव वर्षात्ययेन अभ्रघनात् इन्दोः रुचं इव रामेण दशकण्ठकृच्छ्रात् प्रत्युद्धृतां धृतिमतीं मैथिलसुतां ववन्दे ॥७७

अन्वयः । लङ्केश्वरप्रणतिभङ्गदृढव्रतं वन्द्यं तत् जनकात्मजायाः चरणयोः युगं,—ज्येष्ठानुवृत्तिजटिलं साधोः अस्य ( भरतस्य ) शिरः च,—( इति ) उभयं समेत्य अन्योन्यपावनम् अभूत् ॥७८

ततो रघुपतिः सावरजो भरतलक्ष्मणसहितः सन् विलसत्पताकं कामेनेच्छानुसारेण गतिर्यस्य तद्विमानं भूयः पुनरपि बुधबृहस्पतिभ्यां योगेन दृश्यो दर्शनीयस्तारापतिश्चन्द्रो दोषातनम् "सायञ्चिरं प्राह्णे—" इत्यादिना दोषाशब्दादव्ययाट्ट्युप्रत्ययः, तरलविद्युच्चञ्चलतडिद्युक्तं वृन्दमिव अध्यास्त अधिष्ठितवान् ॥७६

तत्र विमाने । जगतामीश्वरेण आदिवराहेण प्रलयादुर्वीमिव वर्षात्ययेन शरदागमेन अभ्रघनात् मेघसङ्घातादिन्दोः रुचं चान्द्रिकामिव, रामेण दशकण्ठ एव कृच्छ्रं सङ्कटं तस्मात् प्रत्युद्धृतां धृतिमतीं मैथिलसुतां सीतां भरतो ववन्दे ॥७७

७५। वाच्यान्तरम् । सानुप्लवेन प्रभुणापि दशरथप्रभावानुशिष्टेन, रथाः भेजिरे । ये:गुणितक्रविमभक्तिशोभैः भूयते । यथा विकल्परचितैः वदीयैः स्यन्दनैः कर्त्तरि तृतीया ।

७६। वाच्यान्तरम् । सावरजेन रघुपतिना, विलसत्पताकं कामगतिविमानं बुधबृहस्पतियोगदृश्येन तारापतिना दोषातनं तरलं विद्युत् अभ्रवृन्दमिव अध्यासत । उपमालङ्कारः । समन्वयः । तारापतिना सह रघुपतेः बुधबृहस्पतियोगदृश्येन सह सावरजस्य विमानेन सह अभ्रवृन्दस्य साम्यम् ।

७७। वाच्यान्तरम् । ईश्वरेण उर्वी इव, वर्षात्ययेन रुचिरिव, रामेण प्रत्युद्धृताधृतिमती मैथिलसुता भरतेन ववन्दे । मालोपमालङ्कारः ।

ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥ ७८

क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्य्यमार्य्यः
साकेतोपवनमुदारमध्युवास ॥ ७९

अन्वयः । आर्य्यः काकुत्स्थः प्रकृतिपुरःसरेण स्तिमितजवेन पुष्पकेण क्रोशार्द्धं गत्वा शत्रुघ्नप्रतिविहितोपकार्य्यं उदारं साकेतोपवनं अध्युवास ॥७९

लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढव्रतमखण्डितपातिव्रत्यमतएव स्तं तत् जनकात्मजायाश्चरणयोर्युगं ज्येष्ठानुवृत्त्या जटिलं जटायुक्तं साधोः सज्जनस्यास्य भरतस्य शिरश्चेत्युभयं समेत्य मिलित्वान्योन्यस्य पावनं शोधकमभूत् ॥७८

आर्य्यः पूज्य काकुत्स्थो रामः प्रकृतयः प्रजाः पुरःसरो यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण, क्रोशोऽध्वपरिमाणविशेषः,क्रोशार्द्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्य्याः पटभवनानि यस्मिंस्तदुदारं महत् साकेतस्य अयोध्याया उपवनमध्युवास अधितिष्ठौ । "साकेतः स्यादयोध्यायां कोशला नन्दिनी तथा" इति यादवः ॥७९

७८। लङ्केश्वरप्रणतिभङ्गदृढव्रतेन, वन्द्येन. युगेन, ज्येष्ठानुवृत्तिजटिलेन शिरसा अन्योन्यपावनेन उभयेन अभावि ।

७९। वाच्यान्तरम् । आर्य्येण काकुत्स्थेन, शत्रुघ्नप्रतिविहितोपकार्य्यं, उदारं साकेतोपवनं अध्युषे। क्रोशार्द्धं व्याप्त्यर्थे द्वितीया । प्रकृतिपुरःसरेण, स्तिमितजवेन पुष्पकेण, तृतीया करणे ।

त्रयोदशः सर्गः समाप्तः ।

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथ-सुरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ
रघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम
त्रयोदशः सर्गः ।

# चतुर्दशः सर्गः ।

——:०:——

भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २

अन्वयः। अथ तत्र दाशरथी उपघ्नतरोः छेदात् व्रतत्यौ इव भर्तुः प्रणाशात् शोचनीयं दशान्तरं प्रपन्ने जनन्यौ समं अपश्यताम् ॥१

अन्वयः। यथाक्रमं प्रणतौ हतारी विक्रमशोभिनौ तौ उभौ उभाभ्यां अस्रान्धतया विस्पष्टं न दृष्टौ, ( किन्तु ) सुतस्पर्शसुखोपलम्भात् ज्ञातौ ॥२

सञ्जीवनं मैथिलकन्यकायाः सौन्दर्य्यसर्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम् ॥

अथ उपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ. उपघ्नतरोराश्रयवृक्षस्य 'उपघ्न आश्रये' इति निपातः छेदाद् व्रतत्यौ लते इव, "वल्ली तु व्रततिर्लता" इत्यमरः। भर्तुः पत्युः प्रणाशाच्छोचनीयं दशान्तरमवस्थान्तरम्, "अवस्थायां वस्त्रान्ते स्याद्दशापि" इति अमरः। प्रपन्ने प्राप्ते जनन्यौ कौशल्यासुमित्रे तत्र साकेतोपवने समं युगपदपश्यताम्। दृशेर्लङ् ॥१

यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तौ रामलक्ष्मणौ उभाभ्यां मातृभ्यामस्रैरश्रुभिरन्धतया हेतुना, "अस्रमश्रु च शोणितम्" इत्यमरः। विस्पष्टं न दृष्टौ, किन्तु सुतस्पर्शेन यत् सुखं तस्योपलम्भादनुभवाज्ज्ञातौ ॥२

१। वाच्यान्तरम्। दाशरथिभ्यां व्रतत्यौ इव शोचनीयं दशान्तरं प्रपन्ने जनन्यौ समम् अदृश्येताम्। उपमालङ्कारः। समन्वयः। छेदेन सह प्रणाशस्य, व्रततीभ्यां सह जनन्योः, उपघ्नतरुणा सह भर्तुः साम्यम्। शोचनीयं दशान्तरम् उभयत्र समानम्। भर्तुः कर्तरि षष्ठी। प्रणाशात् हेतौ पञ्चमी। छेदात् हेतौ पञ्चमी। उपघ्नतरोः कर्मणि षष्ठी। समम् क्रियाविशेषणम्।

२। वाच्यान्तरम्। प्रणतौ हतारी विक्रमशोभिनौ तौ उभौ उभे विस्पष्टं न दृष्ट-वत्यौ। अस्रान्धतया हेतौ तृतीया। सुतस्पर्शसुखोपलम्भात् हेतौ पञ्चमी।

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३

ते पुत्रयोर्नैऋतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
अभीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४

क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५

अन्वयः । तयोः आनन्दजः शिशिरः बाष्पः उष्णतप्तं गङ्गासरय्वोर्जलं अवतीर्णः हिमाद्रिनिस्यन्दः इव, शोकजं अशीतम् अश्रु बिभेद ॥३

अन्वयः । ते पुत्रयोः अङ्गे नैऋतशस्त्रमार्गान् आर्द्रान् इव सदयं स्पृशन्त्यौ क्षत्रकुला-ङ्गनानां अभीप्सितं अपि वीरसूशब्दं न अकामयेताम् ॥४

अन्वयः । भर्तुः क्लेशावहा अलक्षणा अहं सीतेति स्वं नाम उदीरयन्ती स्वर्गप्रतिष्ठस्य गुरोः महिष्यौ वधूः अभक्तिभेदेन ववन्दे ॥५

तयोर्मात्रोरानन्दजः शिशिरो बाष्पः शोकजमशीतमुष्णमश्रु उष्णतप्तं शैत्यवर्जं गङ्गासरय्वोर्जलं कर्म अवतीर्णो हिमाद्रेर्निस्यन्दी निर्झर इव बिभेद । आनन्देन शोकस्तिरोहित इत्यर्थः ॥३ .

ते मातरौ पुत्रयोरङ्गे शरीरे नैऋतशस्त्राणां राक्षसशस्त्राणां मार्गान् प्रहारान् सरसानिव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानामीप्सितमिष्टमपि वीरसूर्वीरमातेति शब्दं नाकामयेताम् । वीरप्रसवो दुःखहेतुरिति भावः ॥४

आवहतीत्यावहा । भर्तुः क्लेशावहा क्लेशकारिणी, अतएव अलक्षणाहं सीतेति स्वं नाम उदीरयन्ती स्वर्गः प्रतिष्ठा आस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा "वधूर्जाया" इत्यमरः । अभक्तिभेदेन ववन्दे । स्वर्गप्रतिष्ठस्येत्यनेन वैधव्यदर्शनदुःखं सूचितम् ॥५

३ । वाच्यान्तरम् । आनन्दजेन शिशिरेण बाष्पेण, शोकजम् अशीतम् उष्णतप्तं जलमवतीर्णेन हिमाद्रिनिस्यन्देन इव बिभिदे । उपमालङ्कारः । समन्वयः । हिमाद्रिनिस्यन्देन सह आनन्दजस्य शिशिरस्य बाष्पस्य ; उष्णतप्तेन जलेन सह शोकजस्य अश्रुणः गङ्गासरयूभ्यां मात्रोश्च साम्यम् ज्ञेयम् ।

४ । वाच्यान्तरम् । स्पृशन्तीभ्यां ताभ्यां वीरसूशब्दः नाकाम्यत । क्षत्रकुला-ङ्गनानाम् कर्तरि षष्ठी । उत्प्रेक्षालङ्कारः ।

५ । वाच्यान्तरम् । स्वं नाम उदरीयन्त्या वध्वा महिष्यौ ववन्दाते । अभक्तिभेदेन प्रकृत्यादिभ्यस्तृतीया ।

उत्तिष्ठ वत्से ! ननु सानुजोऽसौ वृत्तेन भर्त्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्णं इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्याम् ॥ ६

ततोऽभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८

अन्वयः। ननु वत्से ! उत्तिष्ठ ; असौ सानुजः भर्त्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं तीर्णः इति ते प्रियार्हां तां ( वधूं ) प्रियम् अपि अमिथ्याम् ऊचतुः ॥६

अन्वयः। अमात्यवृद्धाः जनन्योः आनन्दजलैः प्रारब्धं रघुवंशकेतोः अभिषेकं तीर्थाहृतैः काञ्चनकुम्भतोयैः निर्वर्तयामासुः ॥७

अन्वयः। रक्षःकपीन्द्रैः सरित्समुद्रान् सरसीः च गत्वा उपपादितानि जलानि जिष्णोः तस्य मूर्ध्नि विन्ध्यस्य ( मूर्ध्नि ) मेघप्रभवाः आपः इव अपतन् ॥८

हे वत्से ! उत्तिष्ठ असौ सानुजो भर्त्ता तवैव शुचिना वृत्तेन महत् कृच्छ्रं दुःखं तीर्णवान् इति प्रियार्हां तां वधूं प्रियमप्यमिथ्यां सत्यं ते श्वश्र्वावूचतुः। उभयं दुर्वचमिति भावः ॥६

ततः जनन्योरानन्दजलैरानन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः रामस्य अभिषेकम् अमात्यवृद्धास्तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः काञ्चनकुम्भतोयैर्निर्वर्तयामासुः निष्पादयामासुः ॥७

रक्षःकपीन्द्रैः सरितो गङ्गाद्याः समुद्रान् पूर्वादीन् सरसीर्मानसादींश्च गत्वा उपपादितानि सम्पादितानि जलानि जिष्णोर्जयशीलस्य, "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः। तस्य मूर्ध्नि विन्ध्यस्य विन्ध्याद्रेर्मूर्ध्नि मेघप्रभवा आप इव अपतन् ॥८

वाच्यान्तरम्। उत्थीयतां त्वयेति शेषः। सानुजेन अमुना भर्त्रा तीर्णेन भूयते। प्रियार्हा सा इति प्रियमप्यमिथ्या ऊचे। शुचिना वृत्तेन, करणे हेतौ वा तृतीया।

वाच्यान्तरम्। अमात्यवृद्धैः अभिषेकः प्रारब्धः निवर्त्तयामासे। आनन्दजलैः, काञ्चनकुम्भतोयैश्च तृतीया करणे ।

वाच्यान्तरम्। उपपादितैः जलैः मेघप्रभवाभिः अद्भिरिव अपत्यत। रक्षःकपीन्द्रैः कर्तरि। उपमालङ्कारः। समन्वयः। विन्ध्येन सह जिष्णोः मेघप्रभवाभिः सह जलस्य साम्यम्।

तपस्विवेशक्रिययापि तावत् यः प्रेक्षणीयः सुतरां बभूव।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत्पुनरुक्तदोषा ॥ ९
स मौलरक्षोहरिभिः ससैन्यस्तूर्य्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ १०
सौमित्रिणा सावरजेन मन्दमाधूतबालव्यजनो रथस्थः।
धृतातपत्रो भरतेन साक्षादुपायसङ्घात इव प्रवृद्धः ॥ ११

अन्वयः। यः तपस्विवेशक्रियया अपि सुतरां प्रेक्षणीयः बभूव, तस्य उदिता राजेन्द्रनेपथ्यविधानशोभा पुनरुक्तदोषा आसीत् ॥ ९

अन्वयः। सः ससैन्यः तूर्य्यस्वनानन्दितपौरवर्गः (सन्) मौलरक्षोहरिभिः (सह) सौधोद्गतलाजवर्षां उत्तोरणाम् अन्वयराजधानीं विवेश ॥ १०

अन्वयः। सावरजेन सौमित्रिणा मन्दं आधूतबालव्यजनः रथस्थः भरतेन धृतातपत्रः प्रवृद्धः साक्षात् उपायसंघातः इव (विवेश) ॥ ११

यो रामस्तपस्विवेशक्रिययापि तपस्विवेशरचनयापि सुतरामत्यन्तं प्रेक्षणीयस्तावदेव बभूव तस्य राजेन्द्रनेपथ्यविधानेन राजवेशरचनया उदिता या शोभा सा पुनरुक्तदोषो यस्याः पुनरुक्तदोषा विगुणा आसीत् ॥ ९

स रामः ससैन्यस्तूर्य्यस्वनैः आनन्दितपौरवर्गः सन् मूले भवाः मौलाः मन्त्रिणः रक्षोभिर्हरिभिश्च सह सौधेभ्य उद्गतलाजवर्षामुत्तोरणामन्वयराजधानीमयोध्यां विवेशवान् ॥ १०

सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दमाधूते बालव्यजने चामरे यस्य रथस्थो भरतेन धृतातपत्रः एवं चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां समष्टिरिव विवेशेति पूर्वेण सम्बन्धः ॥ ११

९। वाच्यान्तरम्। येन प्रेक्षणीयेन बभूवे। राजेन्द्रनेपथ्यविधानशोभया उदितया पुनरुक्तदोषया अभूयत। तावत् सम्यक्।

१०। वाच्यान्तरम्। तेन (रामेण) ससैन्येन तूर्य्यस्वनानन्दितपौरवर्गेण, सौधोद्गतलाजवर्षा उत्तोरणा अन्वयराजधानी विविशे।

११। वाच्यान्तरम्। आधूतबालव्यजनेन रथस्थेन धृतातपत्रेण प्रवृद्धेन उपायसङ्घातेन इव (विविशे)। उपमालङ्कारः। समन्वयः। प्रवृद्धेन उपायसङ्घातेन सह रामस्य सौमित्रेर्भरतस्य च साम्यम्। सौमित्रिणा भरतेन कर्त्तरि तृतीया।

प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२
श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।
प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३
स्फुरत्प्रभामण्डलमानुसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।
रराज शुद्धेति पुनः स्वपूर्य्यै संदर्शिता वह्निगतेव भर्त्रा ॥ १४

अन्वयः। वायुवशेन भिन्ना प्रासादकालागुरुधूमराजिः वनात् निवृत्तेन रघूत्तमेन स्वयं मुक्ता तस्याः पुरः वेणिः इव आबभासे ॥ १२

अन्वयः। साकेतनार्य्यः श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीं प्रासादवातायनदृश्यबन्धैः अञ्जलिभिः प्रणेमुः ॥ १३

अन्वयः। स्फुरत्प्रभामण्डलं आनुसूयं शाश्वतम् अङ्गरागं बिभ्रती सा (सीता) भर्त्रा स्वपुर्य्यै शुद्धा इति सन्दर्शिता पुनः वह्निगता इव रराज ॥ १४

वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमस्तस्य राजी रेखा वनान्निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता तस्याः पुरः पुर्य्या वेणिरिव आबभासे। पुरोऽपि पतिव्रतासमाधिरुक्तः। "न प्रोषिते तु संस्कुर्य्यान्न वेणीं च प्रमोचयेत्" इति हारीतः ॥ १२

श्वश्रूजनैरनुष्ठितचारुवेशां कृतसौम्यनेपथ्याम्. "आकल्पवेशौ नेपथ्यम्" इत्यमरः। कर्णीरथः स्त्रीयोग्योऽल्परथः "कर्णीरथः प्रवहणम्" इति यादवः। तत्रस्थां रघुवीरपत्नीं सीतां साकेतनार्य्यः प्रासादवातायनेषु दृश्यबन्धैर्लक्ष्यापुटैरञ्जलिभिः प्रणेमुः ॥ १३

स्फुरत्प्रभामण्डलं आनसूयं अनसूयया दत्तं शाश्वतं सदातनमङ्गरागं बिभ्रती सा सीता भर्त्रा स्वपुर्य्यै शुद्धेति सन्दर्शिता पुनर्वह्निगतेव रराज ॥ १४

१२। वाच्यान्तरम्। प्रासादकालागुरुधूमराज्या भिन्नया, मुक्तया वेण्या इव आबभासे। वायुवशेन तृतीया कर्त्तरि। वनात् पञ्चमी अपादाने। निवृत्तेन रघूत्तमेन कर्त्तरि तृतीया। उपमालङ्कारः। समन्वयः। वायुवशेन सह निवृत्तस्य रघूत्तमस्य, भिन्नया स मुक्तायाः, वेण्या सह प्रासादकालागुरुधूमराज्याश्च साम्यम्।

१३। वाच्यान्तरम्। श्वश्रूजनानुष्ठितचारुवेषा कर्णीरथस्था रघुवीरपत्नी साकेतनारीभि प्रणेमे। प्रासादवातायनदृश्यबन्धैः अञ्जलिभिः तृतीया करणे।

१४। वाच्यान्तरम्। बिभ्रत्या तया शुद्धया इति सन्दर्शितया, वह्निगतया इव रेजे। उत्प्रेक्षालङ्कारः। भर्त्रा तृतीया कर्त्तरि।

वेश्मानि रामः परिवर्हवन्ति विश्राण्य सौहार्दनिधि सुहृद्भ्यः।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥ १५

कृताञ्जलिस्तत्र यदम्ब ! सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः।
तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः ॥ १६

तथैव सुग्रीवविभीषणादीनुपाचरत् कृत्रिमसंविधाभिः ॥
सङ्कल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन ॥१७

अन्वयः। सौहार्दनिधिः रामः सुहृद्भ्यः परिवर्हवन्ति वेश्मानि विश्राण्य आलेख्यशेष पितुः बलिमत् निकेतं बाष्पायमाणः ( सन् ) विवेश ॥ १५

अन्वयः। तत्र रामः कृताञ्जलिः ( सन् ) "( हे ) अम्ब ! नः गुरुः यत् स्वर्गफला सत्यात् न अभ्रश्यत, इति यत् तत् चिन्त्यमानं तव सुकृतं"—( इति ) भरतस्य मा लज्जां जहार ॥ १६

अन्वयः। सुग्रीवविभीषणादीन् कृत्रिमसंविधाभिः तथा उपाचरत् यथा सङ्क मात्रोदितसिद्धयः ते चेतसि विस्मयेन क्रान्ताः ( भवन्ति ) ॥ १७

सुहृदो भावः सौहार्दं सौजन्यम्। "हृद्भगसिन्ध्वन्ते पूर्वपदस्य—" इत्युभयपदवृद्धि सौहार्दनिधी रामः सुहृद्भ्यः सुग्रीवादिभ्यः परिवर्हवन्ति उपकरणवन्ति वेश्मानि विश्रा दत्त्वा, आलेख्यशेषस्य पितुर्बलिमत् पूजायुक्तं निकेतं गृहं बाष्पायमाणो बाष्पमुद्व विवेश। "बाष्पोष्मभ्यामुद्वमने" इति क्यङ्प्रत्ययः ॥ १५

तत्र निकेतने कृताञ्जलिः सन् रामः हे अम्ब ! नो गुरुः पिता स्वर्गः फलं यस्य त सत्यान्नाभ्रश्यत न भ्रष्टवानिति यदभ्रंशनं तच्चिन्त्यमानं विचार्यमाणं तव सुकृतम्। प्रकारेण भरतस्य मातुः कैकेय्या लज्जां जहार अपानयत्। राज्ञां प्रतिज्ञापरिपालनं साधनमित्यर्थः। भरतग्रहणं तदपेचयापि कैकेय्यनुसरणद्योतनार्थम् ॥ १६

सुग्रीवविभीषणादीन् संविधीयन्त इति संविधा भोग्यवस्तूनि कृत्रिमसंविधाभिस्तथा प्रकारेणैवोपाचरत् यथा संकल्पमात्रेण इच्छामात्रेणोदितसिद्धयस्ते सुग्रीवादयश्चेतसि वि येन क्रान्ता आक्रान्ताः ॥ १७

१५। वाच्यान्तरम्। सौहार्दनिधिना रामेण बाष्पायमाणेन बलिमत् वि विविशे। सुहृद्भ्यः चतुर्थी सम्प्रदाने।

१६। वाच्यान्तरम्। कृताञ्जलिना. गुरुणा नाभ्रश्यत। चिन्त्यमानेन सुकृतेन ज जह्रे। स्वर्गफलात सत्यात अपादाने पञ्चमी।

१७। वाच्यान्तरम्। सुग्रीवविभीषणादयः उपाचर्यन्त। सङ्कल्पमात्रोदितसिद्धीन् त विस्मयः क्रान्तवान्। कृत्रिमसंविधाभिः तृतीया करणे।

सभाजनायोपगतान्स दिव्यान्मुनीन् पुरस्कृत्य हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम् ॥ १८

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्द्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपीन्द्रान्विससर्ज रामः ॥१९

तच्चात्मचिन्तासुलभं विमानं हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २०

अन्वयः। स सभाजनाय उपगतान् दिव्यान् मुनीन् पुरस्कृत्य तेभ्य हतस्य शत्रोः प्रभवादि स्वविक्रमे गौरवं आदधानं वृत्तं शुश्राव ॥१८

अन्वयः। तपोधनेषु प्रतिप्रयातेषु रामः सुखात् अविज्ञातगतार्द्धमासान् सीतास्वहस्तो-पहृताग्र्यपूजान् रक्षःकपीन्द्रान् विससर्ज्ज ॥१९

अन्वयः। आत्मचिन्तासुलभं सुरारेः जीवितेन सह हृतं दिवः पुष्पं पुष्पकं विमानं भूयः कैलासनाथोद्वहनाय अन्वमंस्त ॥२०

स रामः सभाजनाय अभिवन्दनाय उपगतान् दिवि भवान् मुनीन् अगस्त्यादीन् पुरस्कृत्य हतस्य शत्रोः रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवमुत्कर्षमादधानं वृत्तं तेभ्यो मुनिभ्यः शुश्राव श्रुतवान् । विजितोत्कर्षाज्जेतुरुत्कर्ष इत्यर्थः ॥१८

तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्य गतेषु सत्सु सुखादविज्ञात एव ऽर्द्धमासतयो गतो यां तान् अनन्तर सीतायाः स्वहस्तेनोपहृता दत्ताग्र्यपूजा उत्तमसम्भावना येभ्यस्तान्, तेन सौहार्द्दातिशय उक्तः । रक्षःकपीन्द्रान् रामो विससर्ज विसृष्टवान् ॥१९

तच्चात्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारेः रावणस्य जीवितेन सह हृतं दिवः पुष्पं स्वर्गस्याभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुबेरस्योद्वहनाय अन्वमंस्त अनुज्ञातवान् । भूयःपदयोगेन पूर्वमप्येतत्कौवेरमेवेति सूच्यते ॥२०

१८। वाच्यान्तरम् । तेन प्रभवादि वृत्तं गौरवं आदधानं शुश्रुवे । तेभ्यः क्रियायोगे चतुर्थी । सभाजनाय चतुर्थी निमित्तार्थे ।

१९। वाच्यान्तरम् । रामेण सीतास्वहस्तोपहृताग्र्यपूजाः रक्षःकपीन्द्राः विससृजिरे । तपोधनेषु प्रतिप्रयातेषु सप्तमी भावे । सुखात् यब्लोपे पञ्चमी ।

२०। वाच्यान्तरम् । आत्मचिन्तासुलभं हृतं पुष्पमिव ततविमानं पुष्पकं तेन अन्वमानि । कैलासनाथोद्वहनाय निमित्तार्थे चतुर्थी । जीवितेन सहयोगे तृतीया । सहोक्त्युप-स्कारोक्तिमावेन सङ्करः ।

पितुर्नियोगाद्वनवासमेवं निस्तीर्य्य रामः प्रतिपन्नराज्यः ।
धर्म्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ २१

सर्व्वासु मातृष्वपि वत्सलत्वात् स निर्व्विशेषप्रतिपत्तिरासीत् ।
षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२

तेनार्थवान् लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान् ।
तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री ॥ २३

अन्वयः । रामः एवं पितुः नियोगात् वनवासं निस्तीर्य्य प्रतिपन्नराज्यः ( सन् ) यथा धर्म्मार्थकामेषु तथा एव अवरजेषु समां वृत्तिं प्रपेदे ॥२१

अन्वयः । सः वत्सलत्वात् सर्व्वासु मातृषु अपि, चमूनां नेता षडाननापीतपयोधरासु कृत्तिकासु इव, निर्व्विशेषप्रतिपत्तिः आसीत ॥२२

अन्वयः । लोकः लोभपराङ्मुखेन तेन अर्थवान् आस । विघ्नभयं घ्नता तेन क्रियावान् । विनेत्रा तेन पितृमान् । शोकापनुदेन तेन (रामेण) एव पुत्री (आस) ॥२३

रामः एवं पितुर्नियोगात् शासनाद्वनवासं निस्तीर्य्य अनन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन् धर्म्मार्थकामेषु यथा तथैवावरजेषु अनुजेषु समां वृत्तिं प्रपेदे, अवैषम्येन व्यवहृतवानित्यर्थः ॥२१

स रामो वत्सलत्वात् स्निग्धत्वात् नतु लोकप्रतीत्यर्थम्, "स्निग्धस्तु वत्सलः" इत्यमरः सर्व्वासु मातृष्वपि निर्व्विशेषप्रतिपत्तिस्तुल्यसत्कार आसीत् । कथमिव? चमूनां नेता षण्मुखः षड्भिराननैरापीताः पयोधराः स्तना यासां तासु कृत्तिकास्विव ॥२२

लोको लोभपराङ्मुखेन वदान्येन तेन रामेण अर्थवान् धनिक आस बभूव । तिङन्तप्रतिरूपकमव्ययमेतत । विघ्नेभ्यो भयं घ्नता नुदता तेन क्रियावान् अनुष्ठानवान् आस। विनेत्रा नियामकेन तेन पितृमान् आस पितृ-न्नियच्छतीत्यर्थः । शोकमपनुदतीति शोकापनुदो दुःखस्य हर्त्ता तेन. "तुन्दशोकयोः परिमृजापनुदोः" इति कप्रत्ययः । तेन पुत्री पुत्रवान् आसः, पुत्रवदानन्दयतीत्यर्थः ॥२३

२१ । वाच्यान्तरम् । रामेण प्रतिपन्नराज्येन ( सता ), समा वृत्तिः प्रपेदे। नियोगात् इतौ पञ्चमी ।

२२ । वाच्यान्तरम् । नेत्रा इव निर्व्विशेषप्रतिपत्तिना तेन अभूयत । उपमावलात् । वत्सलत्वात् इतौ पञ्चमी । समन्वयः । नेत्रा सह निर्व्विशेषप्रतिपत्तिना तेन, कृत्तिकाभिः सह सर्व्वसां मातॄणां साम्यम् ।

२३ । वाच्यान्तरम् । लोकेन अर्थवता, क्रियावता, पितृमता, पुत्रिणा (च) अभूयत। सर्व्वत्रैव तेन अभेदे तृतीया । अभिधाऽऽलङ्कार, यथा—अभेदेनाभिधा इति इतोऽलङ्कार सह ।

स पौरकार्य्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितश्चारुवपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४
तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन् ॥ २५
अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डुरेण ।
आनन्दयित्री परिणेतुरासीत् अनक्षरव्यञ्जितदोहदेन ॥ २६

अन्वयः । सः काले पौरकार्य्याणि समीक्ष्य विदेहाधिपतेः दुहित्रा उपभोगोत्सुकया (अतएव) तदीयं चारु वपुः कृत्वा लक्ष्म्या इव उपस्थितः सन् रेमे ॥ २४

अन्वयः । चित्रवत्सु सद्मसु यथाप्रार्थितम् इन्द्रियार्थान् आसेदुषोः तयोः दण्डकेषु प्राप्तानि दुःखानि अपि सञ्चिन्त्यमानानि सुखानि अभूवन् ॥ २५

अन्वयः । अथ सीता अधिकस्निग्धविलोचनेन शरपाण्डुरेण—(अतएव) अनक्षर-व्यञ्जितदोहदेन मुखेन परिणेतुः आनन्दयित्री आसीत् ॥ २६

स रामः कालेऽवसरे पौराणां कार्य्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेर्दुहित्रा सीतया उपभोगोत्सुकया अतएव तदीयं सीतासंबन्धि चारु वपुः कृत्वा स्थितया लक्ष्म्येव उपस्थितः सङ्गतः रेमे । "उपस्थानन्तु सङ्गतिः" इति यादवः ॥ २४

चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु यथाप्रार्थितं यथेष्टं इन्द्रियार्थान् इन्द्रिय-विषयान् शब्दादीनासेदुषोः प्राप्तवतोस्तयोः सीतारामयोर्दण्डकेषु दण्डकारण्येषु प्राप्तानि दुःखान्यपि विरहविलापान् अन्वेषणादीनि सञ्चिन्त्यमानानि स्मर्य्यमानानि सुखानि अभूवन् । कारकस्तु चित्रदर्शनमिति द्रष्टव्यम् ॥ २५

अथ सीता अधिकस्निग्धविलोचनेन अत्यन्तमसृणलोचनेन शरवत् तृणविशेषवत् पाण्डुरेण अतएव अनक्षरमवाग्व्यापारं यथा भवति तथा व्यञ्जितं दोहदं गर्भो येन तेन मुखेन परिणेतुः पत्युरानन्दयित्री आसीत् ॥ २६

२४ । वाच्यान्तरम् । तेन उपस्थितेन (सता) रेमे । दुहित्रा उपभोगोत्सुकया लक्ष्म्या सहार्थे तृतीया । उपमालङ्कारः । समन्वयः । उपभोगोत्सुकया लक्ष्म्या सह दुहितुः साम्यम् ।

२५ । वाच्यान्तरम् । प्राप्तैः दुःखैः सञ्चिन्त्यमानैः सुखैः अभूयत ।

२६ । वाच्यान्तरम् । सीतया आनन्दयित्र्या अभूयत । अधिकस्निग्धविलोचनेन शर-पाण्डुरेण अनक्षरव्यञ्जितदोहदेन मुखेन उपलक्षणे तृतीया ।

तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम्।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलाषम्॥ २७

सा दृष्टनीवारबलीनि हिंस्रैः सम्बद्धवैखानसकन्यकानि।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि॥ २८

तस्यै प्रतिश्रुत्य रघुप्रवीरः तदीप्सितं पार्श्वचरानुयातः।
आलोकयिष्यन् मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह॥ २९

अन्वयः। प्रतीतः रमणः कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहसि अङ्कम् आरोप्य अभिलाषं पप्रच्छ॥ २७

अन्वयः। सा हिंस्रैः दृष्टनीवारबलीनि सम्बद्धवैखानसकन्यकानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः गन्तुम् इयेष॥ २८

अन्वयः। रघुप्रवीरः तस्यै तत् ईप्सितं प्रतिश्रुत्य पार्श्वचरानुयातः (सन्) मुदिताम् अयोध्याम् आलोकयिष्यन् अभ्रंलिहं प्रासादम् आरुरोह॥ २९

प्रतीतो गर्भज्ञानवान्, रमयतीति रमणः, प्रियां कृशाङ्गयष्टिं वर्णान्तरेण नीलिम्ना आक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहसि अङ्कमारोप्य अभिलाषं मनोरथं पप्रच्छ। एतच्च—"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति शास्त्रात्, न तु लौल्यादिति सन्धेयम्॥ २७

सा सीता हिंस्रैर्दृष्टा नीवारा एव बलयो येषु तानि। तिर्यग्भिक्षुकादिदानं बलिः। सम्बद्धाः कृतसम्बन्धाः कृतसख्या वैखानसानां कन्यका येषु तानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुमियेष अभिललाष॥ २८

रघुवीरो रामस्तस्यै सीतायै तत् पूर्वोक्तमीप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैस्तत्कालोचितैरनुयातः सन् मुदितां तामयोध्यामालोकयिष्यन् अभ्रं लेढीत्यभ्रंलिहमभ्रङ्कषं प्रासादमारुरोह। "वहाभ्रे लिहः" इति खश्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः॥ २९

२७। पाठान्तरम्। प्रतीतेन रमणेन अभिलाषः पप्रच्छे।

२८। पाठान्तरम्। तया ईषे। हिंस्रैः कर्तरि तृतीया।

२९। पाठान्तरम्। रघुप्रवीरेण पार्श्वचरानुयातेन आलोकयिष्यता (रामेण) अभ्रंलिहः प्रासादः आरुरुहे। तस्यै 'क्रुधद्रुहेर्ष्या' चतुर्थी।

कक्ष्यापणं राजपथं स पश्यत् विगाह्यमानां सरयूञ्च नौभिः ।
विलासिभिश्चाभ्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ ३०
स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१
निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः ॥ ३२

अन्वयः। सः कक्ष्यापणं राजपथं, नौभिः विगाह्यमानां सरयूं च, पौरैः विलासिभिः अभ्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे ॥३०

अन्वयः। वदतां पुरोगः विशुद्धवृत्तः सर्पाधिराजोरुभुजः विजितारिभद्रः सः स्ववृत्तम् उद्दिश्य भद्रम् अपसर्पं किंवदन्तीं पप्रच्छ ॥३१

अन्वयः। निर्बन्धपृष्टः स जगाद, (हे) मानवदेव! रक्षोभवनोषितायाः देव्याः परिग्रहात् अन्यत्र त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ॥३२

स रामः कक्ष्याः सम्बद्धा आपणाः पण्यभूमयो यस्मिन् स तं राजपथम् नौभिः समुद्रगामिनीभिर्विगाह्यमानां सरयूञ्च पौरैर्विलासिभिरध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे। विलासिन्यश्च विलासिनश्च विलासिनः, "पुमान् स्त्रिया" इत्येकशेषः ॥३०

वदतां वाग्मिनां पुरोगः श्रेष्ठो विशुद्धवृत्तः सर्पाधिराजः शेषः। तद्वदुरू भुजौ यस्य स विजितारिभद्री विजितारिश्रेष्ठः स रामः स्ववृत्तमुद्दिश्य भद्रं भद्रनामकमपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ। 'अपसर्पश्चरः' इति "किंवदन्ती जनश्रुतिः" इति चामरः ॥३१

निर्बन्धेनाग्रहेण पृष्टः सोऽपसर्पो जगाद। किमिति? हे मानवदेव! रक्षोभवनोषिताया देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्रेतरांशे तं वर्जयित्वेत्यर्थः त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ॥३२

३०। वाच्यान्तरम्। पश्यता तेन रेमे। नौभिः पौरैश्चानुक्ते कर्त्तरि तृतीया।
३१। वाच्यान्तरम्। पुरोगेण, विशुद्धवृत्तेन, सर्पाधिराजोरुभुजेन, विजितारिभद्रेण अपसर्पः भद्रः किंवदन्तीं पप्रच्छे।
३२। वाच्यान्तरम्; निर्बन्धपृष्टेन तेन जगदे। पौरैः त्वदीयं सर्वं चरितं स्तूयते। रक्षोभवनोषितायाः देव्या कर्मणि षष्ठी। परिग्रहात् इति पञ्चमी।

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्त्तिविपर्य्ययेण।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे॥ ३३

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सन्त्यजामि।
इत्येकपक्षाश्रयविक्लवत्वात् आसीत् स दोलाचलचित्तवृत्तिः॥ ३४

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः॥ ३५

अन्वयः। एवं कलत्रनिन्दागुरुणा कीर्त्तिविपर्य्ययेन अभ्याहतं वैदेहिबन्धोः हृदयम् अयोघनेन अभितप्तम् अयं इव विदद्रे किल॥३३

अन्वयः। आत्मनिर्वादकथाम् किम् उपेक्षे? उत अदोषां साध्वीं जायां सन्त्यजामि? इत्येकपक्षाश्रयविक्लवत्वात् सः दोलाचलचित्तवृत्तिः आसीत्॥३४

अन्वयः। (किञ्च) वाच्यम् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुम् ऐच्छत्। हि (तथाहि) यशोधनानां स्वदेहात् अपि यशः गरीयः, इन्द्रियार्थात् (गरीयः इति) किमु उत?॥३५

एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण कीर्त्तिविपर्य्ययेण अपकीर्त्या अभ्याहतं वैदेहिबन्धोः वैदेहिवल्लभस्य, 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः, कालिदास प्रतिबद्ध। हृदयम् अयोघनेन अभितप्तं सन्तप्तमय इव विदद्रे विदीर्णम्। कर्त्तरि लिट्॥३३

आत्मनो निर्वादोऽपवाद एव कथा तां किमुपेक्षे? उत अदोषां साध्वीं जायां सन्त्यजामि? उभयत्रापि प्रश्ने लट्। इत्येकपक्षाश्रयेऽन्यतरपक्षपरिग्रहे विक्लवत्वादपरिच्छेदकत्वात् स रामो दोला इव चला चित्तवृत्तिर्यस्य स आसीत्॥३४

किञ्च वाच्यमपवादम्, नास्त्यन्येन त्यागातिरिक्तोपायेन निवृत्तिर्यस्य तदनन्यनिवृत्ति निश्चित्य पत्न्यास्त्यागेन परिमार्ष्टुं परिहर्त्तुमैच्छत्। तथाहि, यशोधनानां पुंसां स्वदेहादपि यशो गरीयो गुरुतरम् इन्द्रियार्थात् स्रक्चन्दनवनितादेरिन्द्रियविषयाद्गरीय इति किमु वक्तव्यम्? "पञ्चमी विभक्तेः" इत्युभयत्रापि पञ्चमी। सीता चेन्द्रियार्थ एव॥३५

३३। वाच्यान्तरम्। अभ्याहतेन हृदयेन अभितप्तेन अयसा इव विदद्रे। कलत्रनिन्दागुरुणा कीर्त्तिविपर्य्ययेन अनुक्ते कर्त्तरि तृतीया। अयोघनेन अनुक्ते कर्त्तरि तृतीया। उपमालङ्कारः। समन्वयः। कीर्त्तिविपर्य्ययस्य च साम्यम्। अभितप्तेन सह अभ्याहतहृदयेन सह अयसः साम्यम्।

३४। वाच्यान्तरम्। आत्मनिर्वादकथा किं उपेक्ष्यते? अदोषा जाया सन्त्यज्यते? दोलाचलचित्तवृत्तिना तेन अभूयत। एकपक्षाश्रयविक्लवत्वात् हेतौ पञ्चमी।

३५। वाच्यान्तरम्। तेन परिमार्ष्टुम् ऐष्यत। स्वदेहात् इन्द्रियार्थात् पञ्चमी अपेक्षायाम्। अर्थान्तरन्यासोऽलङ्कारः।

स सन्निपात्यावरजान् हतौजाः तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥
राजर्षिवंशस्य रविप्रसूतेः उपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३७ ॥
पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥

अन्वयः । हतौजाः सः तद्विक्रियादर्शनलुप्तहर्षान् अवरजान् सन्निपात्य आत्माश्रयं कौलीनं तेभ्यः आचचक्षे पुनः इदं वाक्यम् उवाच च ॥ ३६ ॥

अन्वयः । रविप्रसूतेः राजर्षिवंशस्य सदाचारशुचेः मत्तः दर्पणस्य पयोदवातात् इव, कीदृशः अयं कलङ्कः उपस्थितः पश्यत ॥ ३७ ॥

अन्वयः । सः अहम् अपां तरङ्गेषु तैलबिन्दुम् इव, पौरेषु बहुलीभवन्तं तत्पूर्वं अवर्णं द्विपेन्द्रः आलानिकं स्थाणुम् इव, सोढुं न ईशे ॥ ३८ ॥

हतौजा निस्तेजस्कः स रामस्तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षानवरजान् सन्निपात्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्य आचचक्षे. पुनरिदं वाक्यमुवाच च ॥ ३६ ॥

रवेः प्रसूतिर्जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सदृत्तात् शुद्धात् मत्तो मत्सकाशात्, दर्पणस्य पयोदवातादिव अम्भःकणादित्यर्थः, कीदृशोऽयं कलङ्क उपस्थितः प्राप्तः पश्यत ॥ ३७ ॥

सोऽहम् अपां तरङ्गेषु तैलबिन्दुमिव पौरेषु बहुलीभवन्तं प्रसरन्तम् स एव पूर्वो यस्य तम् तत्पूर्वमवर्णमपवादम् । "अवर्णाक्षेपनिर्वादपरीवादापवादवत्" इत्यमरः । द्विपेन्द्रः, आलानमेव आलानिकम् । विनयादित्वात् स्वार्थे ठक् । अथवा आलानं बन्धनं प्रयोजनमस्य आलानिकम्, "प्रयोजनम्" इति ठक् । स्थाणुं स्तम्भमिव, भूतञ्च इतिवत् सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं न ईशे न शक्नोमि ॥ ३८ ॥

३६। वाच्यान्तरम् । हतौजसा तेन (रामेण) आत्माश्रयं कौलीनं आचचक्षे इदं च ऊचे । तेभ्यः क्रियायोगे चतुर्थी ।

३७। वाच्यान्तरम् । कीदृशेन अनेन कलङ्केन उपस्थितेन (भूयते), दृश्यताम् । सदाचारशुचेः, मत्तः, पयोदवातात् पञ्चमी अपादाने । उपमालङ्कारः । समन्वयः । दर्पणेन रविप्रसूतेः राजर्षिवंशस्य, पयोदवातेन सह सदाचारशुचेः मत्तः इति शब्दस्य साम्यम् ।

३८। वाच्यान्तरम् । तेन मया, द्विपेन्द्रेण आलानिकं स्थाणुमिव, तैलबिन्दुमिव बहुलीभवन्तं तत्पूर्वं अवर्णं सोढुं नेश्यते । उपमालङ्कारः । समन्वयः । द्विपेन्द्रेण सह अहम् । आलानिकेन स्थाणुना सह तैलबिन्दोरिव बहुलीभवतः तत्पूर्वस्य अवर्णस्य, तरङ्गैः सह पौराणां साम्यम् ।

तस्यापनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षः।
त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव ॥३८

अवैमि चैनामनघेति किन्तु लोकापवादो बलवान् मतो मे।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥४०

रक्षोवधान्तो न च मे प्रयासः व्यर्थः स वैरप्रतिमोचनाय।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥४१

अन्वयः। तस्य अपनोदाय फलप्रवृत्तौ उपस्थितायाम् (सत्याम्) अपि निर्व्य(पेक्षः)
(सन्) वैदेहसुतां पुरस्तात् पितुः आज्ञया समुद्रनेमिम् इव त्यक्ष्यामि ॥३८

अन्वयः। एनाम् अनघा इति च अवैमि. किन्तु मे लोकापवादः बलवान् म(तः)
(कुतः), हि (यस्मात्) प्रजाभिः भूमेः छाया शुद्धिमतः शशिनः मलत्वेन आरोपिता।

अन्वयः। (किञ्च) मे रक्षोवधान्तः प्रयासः व्यर्थः न च,(किन्तु) सः वैरप्रतिमोचना(य)
अमर्षणः द्विजिह्वः पदा स्पृशन्तं शोणितकाङ्क्षया दशति किम् ॥४१

तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ अपत्योत्पत्तौ उपस्थितायां सत्यामपि निर्व्य(पेक्षो)
निस्पृहः सन् वैदेहसुताम् पुरस्तात् पूर्वं पितुराज्ञया समुद्रनेमिम्, समुद्रनेमिरिव नेमिर(स्याः)
सा भूमिः तामिव त्यक्ष्यामि ॥३९

ननु सर्वथा साध्वी न त्याज्येत्यवाह—एनां सीतां अनघा साध्वीति च अवैमि, कि(न्तु)
मे मम लोकापवादो बलवान् मतः, कुतः? हि यस्मात् प्रजाभिर्भूमेश्छाया प्रति(बिम्बं)
शुद्धिमतो निर्म्मलस्य शशिनो मलत्वेन कलङ्कत्वेनारोपिता। अतो लोकापवाद एव ब(ल)
वानित्यर्थः ॥४०

किञ्च। मे रक्षोवधान्तः प्रयासो व्यर्थो न। किन्तु स वैरप्रतिमोचनाय वैरशोध(नाय)
तथाहि—अमर्षणोऽसहनो द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणितका(ङ्क्षया)
दशति किम्? किन्तु वैरनिर्य्यातनायेत्यर्थः ॥४१

३९। वाच्यान्तरम्। निर्व्यपेक्षेण (मया) समुद्रनेमिरिव वैदेहसुता त्यक्ष्यते। ...
हेतौ तृतीया। अपनोदाय चतुर्थी निमित्तार्थे। उपस्थितायां फलप्रवृत्तौ भावे स(प्तमी)
उपमालङ्कारः। समन्वयः। आज्ञया सह निर्व्यपेक्षतायाः,भूम्याः सह वैदेहसुतायाः ...

४०। वाच्यान्तरम्। एषा अनघा अवेयते,लोकापवादेन बलवता मतेन भूयते। ...
छायाम् आरोपितवत्यः। उपमालङ्कारः। छायया सह बलवतः लोकापवादस्य, शु(द्धि) ...
एतस्याः अनघायाः साम्यम्। शशिना सह रामस्य साम्यम् ज्ञेयम्।

४१। वाच्यान्तरम्। रक्षोवधान्तेन प्रयासेन व्यर्थेन न तेन भूयते। अमर्षणेन ...
जिह्वेन स्पृशन् दश्यते। वैरप्रतिमोचनाय चतुर्थी निमित्तार्थे। शोणितकाङ्क्षया ...
तृतीया। पदा करणे तृतीया। दृष्टान्तोऽलङ्कारः।

तदेष सर्गः करुणार्द्रचित्तैः न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः ॥४२

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् ।
न कश्चन भ्रातृषु तेषु शक्तः निषेद्धुमासीदनुमोदितुं वा ॥ ४३

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्त्तिः ।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥ ४४

अन्वयः। निर्ह्रतवाच्यशल्यान् प्राणान् मया चिरं धारयितुं वः अर्थिता यदि (अस्ति), तत् एषः मे सर्गः करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः ॥ ४२

अन्वयः। इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशम् ईशं ते भ्रातृषु कश्चन निषेद्धुम् अनुमोदितुं वा शक्तः न आसीत् ॥ ४३

अन्वयः। लोकत्रयगीतकीर्त्तिः यथार्थभाषी लक्ष्मणपूर्वजन्मा सः (रामः) निदेशे स्थितं लक्ष्मणं विलोक्य (हे) सौम्य ! इति आभाष्य च पृथक् आदिदेश ॥ ४४

तदेष मे सर्गो निश्चयः, "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः। करुणार्द्रचित्तैर्भवद्भिर्न प्रतिषेधनीयः। निर्हृतं वाच्यमेव शल्यं येषां तान् प्राणान् मया धारयितुं धारणं कारयितुं वो युष्माकं अर्थिता अर्थित्वमिच्छा यदि, अस्तीति शेषः ॥४२

इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशमतिक्रूराग्रहमीशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चन अपि निषेद्धुं निवारयितुमनुमोदितं प्रवर्त्तयितुं वा शक्तो नासीत्। उभयथापि प्रबलत्वादित्यर्थः ॥ ४३

लोकत्रयगीतकीर्तिर्यथार्थभाषी लक्ष्मणपूर्वजन्मा लक्ष्मणाग्रजः स रामो निदेशे स्थिताज्ञाकारिणं लक्ष्मणं विलोक्य "हे सौम्य ! सुभग !" इत्याभाष्य च पृथग्भरतशत्रुघ्नाभ्यां पृथक्कृत्य आदिदेश आज्ञापयामास ॥ ४४

४२। पाठान्तरम्। एतं सर्गं करुणार्द्रचित्ताः भवन्तः न प्रतिषेत्स्यन्ति, अर्थितया इति।

४३। पाठान्तरम्। कोऽपन इत्युक्तवन्तं रूक्षाभिनिवेशं ईशं निषेद्धुम् अनुमोदितुं शक्तेन न अभूयत। तेषु भ्रातृषु निर्धारे सप्तमी।

४४। पाठान्तरम्। लक्ष्मणपूर्वजन्मना लोकत्रयगीतकीर्त्तिना यथार्थभाषिणा तेन निदेशे स्थितः लक्ष्मणः पृथक् आदिदिशे।

प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम्॥ ४५
स शुश्रुवान् मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।
प्रत्यग्रहीदग्रजशासनं तत् आज्ञा गुरूणां ह्यविचारणीया॥ ४६
अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरङ्गैः।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे॥ ४७

अन्वयः। दोहदशंसिनी ते प्रजावती, तपोवनेषु स्पृहयालुः एव। सः त्वं रथी (सन्) तद्व्यपदेशनेयाम् एनां वाल्मीकिपदं प्रापय्य त्यज॥ ४५

अन्वयः। पितुः नियोगात् भार्गवेण मातरि द्विषद्वत् प्रहृतं शुश्रुवान् सः (लक्ष्मणः) तत् अग्रजशासनं प्रत्यग्रहीत्, गुरूणाम् आज्ञा अविचारणीया हि॥ ४६

अन्वयः। अथ (असौ लक्ष्मणः) अनुकूलश्रवणप्रतीतां वैदेहसुताम् अत्रस्नुभिः तुरङ्गैः युक्तधुरं सुमन्त्रप्रतिपन्नरश्मिं रथम् आरोप्य प्रतस्थे॥ ४७

दोहदो गर्भिण्या मनोरथः, तच्छंसिनी ते प्रजावती भ्रातृजाया, "प्रजावती भ्रातृजाया" इत्यमरः। तपोवनेषु स्पृहयालुरेव सस्पृहैव। "स्पृहिगृहि—" इत्यादिना आलुच्प्रत्ययः। सः त्वं रथी सन् तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यामेनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा। "विभाषापः" इत्ययादेशः, त्यज॥ ४५

पितुर्जमदग्नेर्नियोगाच्छासनाद्भार्गवेण जामदग्न्येन कर्त्रा। "न लोक—" इत्यादिना षष्ठीप्रतिषेधः। मातरि द्विषतीव द्विषद्वत्, "तत्र तस्येव" इति वतिप्रत्ययः, प्रहृतं प्रहारं शुश्रुवान् श्रुतवान्। "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः। स लक्ष्मणस्तदग्रजशासनं प्रत्यग्रहीत्। हि यस्माद् गुरूणामाज्ञा अविचारणीया॥ ४६

अथासौ लक्ष्मणः अनुकूलश्रवणेन प्रतीतामिष्टार्थश्रवणेन तुष्टां वैदेहसुतामत्रस्नुभिरत्रसनशीलैरनुद्धतैः, 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः। तुरङ्गैर्युक्तधुरं सुमन्त्रप्रतिपन्नरश्मिं गृहीतप्रग्रहं रथमारोप्य प्रतस्थे॥ ४७

४५। वाच्यान्तरम्। दोहदशंसिन्या प्रजावत्या स्पृहयाल्वा (भूयते)। तेन त्वया रथिना तद्व्यपदेशनेया एषा त्यज्यताम्।

४६। वाच्यान्तरम्। शुश्रुवुषा तेन तत् अग्रजशासनं प्रत्यग्राहि। अविचारणीयया आज्ञया भूयते। भार्गवेण तृतीया कर्त्तरि। पितुर्नियोगात् हेतौ पञ्चमी।

४७। वाच्यान्तरम्। तेन (लक्ष्मणेन) प्रतस्थे। अत्रस्नुभिः, तुरङ्गैः; तृतीया। (स्थोविभाषासमः इत्यात्मनेपदम्।)

सा नीयमाना रुचिरान् प्रदेशान् प्रियङ्करो मे प्रिय इत्यनन्दत्।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम्॥ ४८

जुगूह तस्याः पथि लक्ष्मणो यत् सव्येतरेण स्फुरता तदक्ष्णा।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन॥ ४९

सा दुर्निमित्तोपगताद् विषादात् सद्यः परिम्लानमुखारविन्दा।
राज्ञः शिवं सावरजस्य भूयात् इत्याशशंसे करणैरबाह्यैः॥ ५०

अन्वयः। सा रुचिरान् प्रदेशान् नीयमाना ( सती ) मे प्रियः प्रियङ्करः इति अनन्दत्। तम् आत्मनि कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध॥४८

अन्वयः। पथि लक्ष्मणः यत् ( दुःखं ) तस्याः जुगूह, तत् गुरु भावि दुःखम् अत्यन्तलुप्तप्रियदर्शनेन स्फुरता सव्येतरेण अक्ष्णा अस्यै आख्यातम्॥४९

अन्वयः। सा दुर्निमित्तोपगतात् विषादात् सद्यः परिम्लानमुखारविन्दा ( सती ) सावरजस्य राज्ञः शिवं भूयात् इति अबाह्यैः करणैः आशशंसे॥५०

सा सीता रुचिरान् प्रदेशान् नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियङ्करः प्रियकारीत्यनन्दत्। "क्षेमप्रियमद्रेऽण् च" इति चकारात् खच्प्रत्ययः। तं प्रियमात्मनि विषये कल्पद्रुमतां विहायासिपत्रवृक्षं जातं नाबुद्ध नाज्ञासीत्। बुध्यतेर्लुङ्, असिपत्रः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः। "असिपत्रो भवेत् कोषाकारे च नरकान्तरे" इति विश्वः। आसन्नघातुक इति भावः॥४८

पथि लक्ष्मणो यद् दुःखं तस्याः सीताया जुगूह प्रतिसंहृतवान् तद्गुरु भावि भविष्यद् दुःखम् अत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेनाक्ष्णास्यै सीतायै आख्यातम्। स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः॥४९

सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात् प्राप्ताद्विषादाद्दुःखात् सद्यः परिम्लानमुखारविन्दा सती सावरजस्य सानुजस्य राज्ञो रामस्य शिवं भूयादित्यबाह्यैः करणैरन्तःकरणैराशशंसे। शंसतेरपेक्षायामात्मनेपदमिष्यते। करणैरिति बहुवचनं क्रियावृत्त्यभिप्रायम्। पुनःपुनराशशंस इत्यर्थः॥५०

४८। वाच्यान्तरम्। तया नीयमानया ( सा ) अनन्द्यत। स असिपत्रवृक्षः जातः नाबोधि। निदर्शनालङ्कारोऽत्र ध्वन्यते। यथा—सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना।

४९। वाच्यान्तरम्। लक्ष्मणेन यत् जुगूहे। दर्शनं, स्फुरत, सव्येतरं, अक्षि, गुरु, भावि, तत दुःखं आख्यातवत। अस्यै क्रियायोगे चतुर्थी।

५०। वाच्यान्तरम्। शिवेन भविषीष्ट इति परिम्लानमुखारविन्दया तया आशशंसे। अबाह्यैः करणैः तृतीया करणे। दुर्निमित्तोपगतात् विषादात् हेतौ पञ्चमी।

गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन्।
अवार्य्यतेवोत्थितवीचिहस्तैः जह्नोर्दुहित्रा स्थितया पुरस्तात्॥५१
रथात् स यन्त्रा निगृहीतवाहात् तां भ्रातृजायां पुलिनेऽवतार्य्य।
गङ्गां निषादाहृतनौविशेषः ततार सन्धामिव सत्यसन्धः॥ ५२
अथ व्यवस्थापितवाक् कथञ्चित् सौमित्रिरन्तर्गतबाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार॥ ५३

अन्वयः। गुरोः नियोगात् साध्वीं वनितां विहास्यन् सुमित्रातनयः पुरस्तात् स्थितया जह्नोः दुहित्रा उत्थितवीचिहस्तैः अवार्य्यत इव॥५१

अन्वयः। सत्यसन्धः सः यन्त्रा निगृहीतवाहात् रथात् भ्रातृजायां तां पुलिने अवतार्य निषादाहृतनौविशेषः (सन्) गङ्गां सन्धाम् इव ततार॥५२

अन्वयः। अथ कथञ्चित् व्यवस्थापितवाक् अन्तर्गतबाष्पकण्ठः सौमित्रिः महीपतेः शासनम्, मेघः औत्पातिकम् अश्मवर्षम् इव उज्जगार॥५३

गुरोर्ज्येष्ठस्य नियोगात् साध्वीं वनिताम् अन्याय्यामित्यर्थः, वनान्ते विहास्यन् त्यक्ष्य… सुमित्रातनयो लक्ष्मणः पुरस्तादग्रे स्थितया जह्नोर्दुहित्रा जाह्नव्या उत्थितैर्वीचिहस्तैरवार्य… इव। अकार्य्यं मा कुरु इत्यवार्य्यत इव इत्युत्प्रेक्षा॥५१

सत्यसन्धः सत्यप्रतिज्ञः स लक्ष्मणो यन्त्रा सारथिना निगृहीतवाहात् बद्धाश्वात् र… भ्रातृजायां पुलिनेऽवतार्य्य आरोप्य, निषादेन किरातेन आहृतनौविशेष आनीतनौकः … गङ्गां भागीरथीम् सन्धां प्रतिज्ञामिव ततार। "सन्धा प्रतिज्ञा मर्य्यादा" इत्यमरः॥५२

अथ कथञ्चित् व्यवस्थापिता प्रकृतिमापादिता वाक् येन सः, अन्तर्गतबाष्पः कण्ठो य… सः, कण्ठस्तम्भिताश्रुरित्यर्थः, सौमित्रिर्महीपतेः शासनं मेघः उत्पाते भवमौत्पातिकमश्म… शिलावर्षमिव, उज्जगार उद्गीर्णवान्। दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम्॥५३

५१। पाठान्तरम्। विहास्यन्तं सुमित्रातनयं स्थिता दुहिता अवारयत्। उत्थित… वीचिहस्तैः तृतीया करणे। नियोगात् हेतौ पञ्चमी। उत्प्रेक्षालङ्कारः।

५२। पाठान्तरम्। तेन निषादाहृतनौविशेषेण, सत्यसन्धेन सन्धा इव गङ्गा तेरे। निगृहीतवाहात् रथात् पञ्चमी अपादाने। उपमालङ्कारः। समन्वयः। सन्धया स… गङ्गायाः, सत्यसन्धेन सह तस्य साम्यम्।

५३। पाठान्तरम्। व्यवस्थापितवाचा, अन्तर्गतबाष्पकण्ठेन, सौमित्रिणा शास… मघेन औत्पातिकः शिलावर्षं इव उत्जगरे।

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्त्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५४

इक्ष्वाकुवंशप्रभव कथं त्वां त्यजेदकस्मात् पतिरार्य्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥५५

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धः मोहादभूत् कष्टतरः प्रबोध ॥५६

अन्वयः। ततः अभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना सीता लता इव, सहसा स्वमूर्त्तिलाभप्रकृतिं धरित्रीं जगाम ॥ ५४

अन्वयः। इक्ष्वाकुवंशप्रभवः आर्य्यवृत्तः साधुचरितः पतिः त्वाम् अकस्मात् कथं त्यजेत् इति संशयिता इव तावत् जननी क्षितिः तस्यै प्रवेशं ( आत्मनि ) न ददौ ॥ ५५

अन्वयः। लुप्तसंज्ञा सा दुःखं न विवेद, प्रत्यागतासुः (सती) अन्तः समतप्यत। तस्याः सुमित्रात्मजयत्नलब्धः प्रबोध मोहात् कष्टतरः अभूत् ॥ ५६

ततः अभिषङ्गः पराभवः "अभिषङ्गः पराभवः" इत्यमरः, स एवानिलस्तेन विप्रविद्धा कम्पिता, प्रभ्रश्यमानानि पतन्ति आभरणानि च प्रसूनानि यस्याः सा सीता लतेव सहसा स्वमूर्त्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम। भूमौ पपातेत्यर्थः। स्त्रीणामापदि मातेव शरणमिति भावः ॥ ५४

इक्ष्वाकुवंशप्रभवः महाकुलप्रसूतिरित्यर्थः, आर्य्यवृत्तः साधुचरितः पतिः भर्त्ता त्वाम-कस्मादकारणात् कथं त्यजेत ? असम्भावितमित्यर्थः इति संशयितेव सन्दिहानेन तावत् कारणहेतुज्ञानावधेः प्रागित्यर्थः। जननी क्षितिस्तस्यै सीतायै प्रवेशम्, आत्मनीति शेषः, न ददौ ॥ ५५

लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद, प्रत्यागतासुर्लब्धसंज्ञा सती अन्तः समतप्यत दुःखेनादह्यतेत्यर्थः, तपेः कर्म्मणि लङ्, कर्म्मकर्त्तरीति केचित्, तत्र "तपस्तपः-कर्म्मकस्यैव" इति यङ्नियमात्। तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधो मोहात् कष्टतरोऽतिदुःखदोऽभूत्। दुःखवेदनासम्भवादिति भावः ॥५६

५४। वाच्यान्तरम्। अभिषङ्गानिलविप्रविद्धया प्रभ्रश्यमानाभरणप्रसूनया सीतया लतया इव स्वमूर्त्तिलाभप्रकृतिः धरित्री जग्मे। उपमालङ्कारः। समन्वयः। लतया सह सीतायाः साम्यम्, अन्यत् सर्व्वं सुगमम्।

५५। वाच्यान्तरम्। इक्ष्वाकुवंशप्रभवेण आर्य्यवृत्तेन पत्या कथं त्वं त्यज्येथाः संशयितया जनन्या क्षित्या प्रवेशः न ददे। तस्यै क्रियायोगे चतुर्थी।

५६। वाच्यान्तरम्। लुप्तसंज्ञया तया दुःखं न विविदे। (दुःखं) प्रत्यागतासुं (तां) समतपत्। सुमित्रात्मजयत्नलब्धेन प्रबोधेन कष्टतरेण अभावि। मोहात् अपेक्षार्थे पञ्चमी।

न चावदद्भर्तुरवर्णमार्य्या निराकरिष्णोर्वृजिनादृतेऽपि।
आत्मानमेव स्थिरदुःखभाजं पुनःपुनर्दुष्कृतिनं निनिन्द॥ ५७
आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि! क्षमस्वेति बभूव नम्रः॥५८
सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य! चिराय जीव।
विड़ोजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम्॥ ५९

अन्वयः। आर्य्या (सा सीता) वृजिनात् ऋते अपि निराकरिष्णोः भर्तुः अवर्णम् न अवदत्, (किन्तु) स्थिरदुःखभाजं दुष्कृतिनम् आत्मानम् एव पुनःपुनः निनिन्द॥ ५७

अन्वयः। रामावरजः सतीं ताम् आश्वास्य आख्यातवाल्मीकिनिकेतमार्गः (सन्) निघ्नस्य मे भर्तृनिदेशरौक्ष्यं (हे) देवि! क्षमस्व इति नम्रः बभूव॥ ५८

अन्वयः। सीता तम् उत्थाप्य वाक्यं जगाद। (हे) सौम्य! ते प्रीता अस्मि, चिराय जीव, यत् विड़ोजसा विष्णुः इव, अग्रजेन भ्रात्रा त्वम् इत्थं परवान् असि॥ ५९

आर्य्या साध्वी सा सीता वृजिनादृते एनसा विनापि, "कलुषं वृजिनैनोऽघम्" इत्यमरः। "अन्यारादितरर्ते—" इत्यादिना पञ्चमी। निराकरिष्णोर्निरासकस्य। "अलङ्कृञ्—" इत्यादिनेष्णुच् प्रत्ययः। भर्तुरवर्णमपवादं न चावदत् नैव अवादीत्। किन्तु स्थिरदुःखभाजमतएव दुष्कृतिनमात्मानं पुनःपुनर्निनिन्द॥ ५७

रामावरजो लक्ष्मणः सतीं साध्वीं तामाश्वास्य आख्यात उपदिष्टो वाल्मीकिनिकेतस्य आश्रमस्य मार्गो येन स तथोक्तः सन् निघ्नस्य पराधीनस्य "अधीनो निघ्न आयत्तः" इत्यमरः। मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तत् हे देवि! क्षमस्व इति नम्रः प्रणतो बभूव॥ ५८

सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद, किमिति? हे सौम्य! साधो! ते प्रीतास्मि। चिराय चिरं जीव। यत् यस्मात् विड़ौजसा इन्द्रेण विष्णुरुपेन्द्र इव अग्रजेन ज्येष्ठेन भ्रात्रा त्वमित्थं परवान् परतन्त्रोऽसि॥ ५९

५७। वाच्यान्तरम्। आर्य्यया अवर्णः नोद्यत। स्थिरदुःखभाक् दुष्कृती आत्मा निनिन्दे। वृजिनात् ऋते योगे पञ्चमी।

५८। वाच्यान्तरम्। आख्यातवाल्मीकिनिकेतमार्गेण, रामावरजेन, भर्तृनिदेशरौक्ष्यं (त्वया) क्षम्यताम् इति नम्रेण बभूवे।

५९। वाच्यान्तरम्। सीतया वाक्यं जगदे. प्रीतया भूयते। त्वया जीव्यताम्। विष्णुना इव परवता त्वया भूयते। विड़ौजसा, ज्येष्ठेन भ्रात्रा तृतीया इत्थं।

अश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः।
प्रजानिषेकं मयि वर्त्तमानं सूनोरनुध्यायत चेतसेति ॥ ६०

वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत् समक्षम्।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत् सदृशं कुलस्य ॥ ६१

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ६२

अन्वयः। सर्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्रणामः (सन्) विज्ञापय। मयि वर्त्तमानं सूनोः प्रजानिषेकं चेतसा अनुध्यायत इति ॥६०

अन्वयः। सः राजा त्वया मद्वचनात् वाच्यः। समक्षं वह्नौ विशुद्धाम् अपि मां लोकवादश्रवणात् अहासीः (इति) यत् तत् श्रुतस्य कुलस्य (च) सदृशम् किम्? ॥६१

अन्वयः। अथवा कल्याणबुद्धेः तव मयि अयं कामचारः न शङ्कनीयः। (किन्तु) मम एव जन्मान्तरपातकानां अप्रसह्यः विपाकविस्फूर्जथुः ॥६२

सर्वं श्वश्रूजनमनुक्रमेण प्रापितमत्प्रणामः सन् मत्प्रणाममुक्त्वेत्यर्थः, विज्ञापय। किमिति? निषिच्यत इति निषेकः मयि वर्त्तमानं सूनोस्तृत्पवंश्य प्रजानिषेकं गर्भं चेतसा अनुध्यायत गर्भाभिवृद्धिं चिन्तयत इति ॥६०

स राजा त्वया मद्वचनात् मद्वचनमिति कृत्वा, ल्यब्लोपे पञ्चमी; वाच्यो वक्तव्यः। किमिति आह—"वह्नौ" इत्यादिभिः सप्तभिः श्लोकैः। अक्ष्णः समीपे समक्षम्, अव्ययीभावः। समक्षमग्रे वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्यापवादस्य श्रवणादहासीस्त्याक्षीरिति यत् तच्छ्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम्। किन्त्वसदृशमित्यर्थः। यद्वा श्रुतस्य श्रवणस्य कुलस्य चेति योजना। कामचार्यसीति भावः ॥६१

अथवा कल्याणबुद्धेः सुधियस्तव कर्तुः मयि विषयेऽयं त्यागो न कामचार इच्छया कृतो न शङ्कनीयः, कामचारशङ्कापि न क्रियत इत्यर्थः। (किन्तु) ममैव जन्मान्तरपातकानामप्रसह्यो विपच्यत इति विपाकः फलित इव विस्फूर्जथुरशनिनिर्घोषः। "वज्रनिर्घोषमेघनिर्घोषः" इत्यमरः ॥६२

६०। वाच्यान्तरम्। प्रापितमत्-प्रणामेन (त्वया) श्वश्रूजनः विज्ञाप्यताम्, मयि वर्त्तमानः प्रजानिषेकः अनुध्यायताम् युष्माभिरितिशेषः। अनुक्रमेण प्रकृत्यादिभ्यस्तृतीया। कर्मणि करणे तृतीया।

६१। वाच्यान्तरम्। त्वं राजानं ब्रूयाः। विशुद्धा अहं त्वया अहायिषि। मद्वचनात् ल्यब्लोपे पञ्चमी। वह्नौ अधिकरणे सप्तमी। लोकवादश्रवणात् हेतौ पञ्चमी। श्रुतस्य कुलस्य सदृशशब्दयोगे षष्ठी।

६२। वाच्यान्तरम्। त्वं इमं कामचारं न शङ्केथाः। अप्रसह्येन विपाकविस्फूर्जथुना भूयते। जन्मान्तरपातकानां सम्बन्धे षष्ठी, कल्याणबुद्धेः तव कर्तरि षष्ठी।

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्द्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात् सोढ़ास्मि न तद्भवने वसन्ती ॥ ६३

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४

किंवा तवात्यन्तवियोगमोघे कुर्य्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजः त्वदीयमन्तर्गतमन्तरायः ॥ ६५

अन्वयः । पूर्वं उपस्थितां लक्ष्मीं अपास्य मया सार्द्धं वनं प्रपन्नः असि, तत् तया अति-रोषात् तद्भवने आस्पदं प्राप्य वसन्ती सोढ़ा न अस्मि ॥६३

अन्वयः । निशाचरोपप्लुतभर्तृकाणाम् तपस्विनीनां भवतः प्रसादात् शरण्या भूत्वा त्वयि दीप्यमाने (सति) शरणार्थम् अन्यं कथं प्रपत्स्ये ॥६४

अन्वयः । किंवा, तव अत्यन्तवियोगमोघे अस्मिन् हतजीविते उपेक्षां कुर्य्यां, रक्षणीयम् अन्तर्गतं त्वदीयं तेजः मे अन्तरायः न स्यात् यदि ॥६५

पूर्वमुपस्थितां प्राप्तां लक्ष्मीमपास्य मया सार्द्धं वनं प्रपन्नोऽसि प्राप्तोऽसि । तत् तया लक्ष्म्या अतिरोषात् तद्भवनं आस्पदं प्रतिष्ठाम् । आस्पदं प्रतिष्ठायाम्, इति निपातः प्राप्य वसन्ती अहं सोढा नास्मि ॥६३

निशाचरैरुपप्लुताः पीड़िता भर्तारो यासां ता निशाचरोपप्लुतभर्तृकाः । "नद्यृत" इति कप्प्रत्ययः, तासां तपस्विनीनां भवतः प्रसादादनुग्रहाच्छरण्या शरणसमर्था भूत्वा अद्य त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थमन्यं तपस्विनं कथं प्रपत्स्ये प्राप्स्यामि ॥६४

किंवा अथवा तव सम्बन्धिना अत्यन्तेन पुनःप्राप्तिरहितेन वियोगेन मोघे निष्फलेऽस्मिन् हतजीविते तुच्छजीविते उपेक्षां कुर्य्यां कुर्य्यामेव । रक्षणीयं रक्षणार्हमन्तर्गतं कुक्षिगतं त्वदीयं तेज शुक्रं गर्भरूपत् "शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च" इत्यमरः । अन्तरायो विघ्नो न स्याद्यदि ॥६५

६३ । वाच्यान्तरम् । वनं प्रपन्नेन भूयते । सा वसन्तीं मां सोढ़वती । कर्त्तरि तृतीया । मया सहयोगे तृतीया । अतिरोषात् हेतौ पञ्चमी ।

६४ । वाच्यान्तरम् । मया शरण्यया अन्यः कथं प्रपत्स्यते । प्रसादात् हेतौ पञ्चमी । त्वयि दीप्यमाने भावे सप्तमी । शरणार्थं क्रियाविशेषणम् ।

६५ । वाच्यान्तरम् । मया उपेक्षा क्रियते । रक्षणीयेन अन्तर्गतेन त्वदीयेन तेजसा अन्तरायेण न भूयेत यदि । मे कर्त्तरि षष्ठी ।

साहं तपः सूर्य्यनिविष्टदृष्टिः ऊर्द्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्त्ता न च विप्रयोगः ॥ ६६

नृपस्य वर्णाश्रमपालनं यत् स एव धर्म्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥ ६७

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ ६८

अन्वयः । सा अहं प्रसूतेः ऊर्द्ध्वं सूर्य्यनिविष्टदृष्टिः ( सती तथाविधं ) तपः चरितुं यतिष्ये । यथा भूयः मे जननान्तरे अपि त्वमेव भर्त्ता, न च विप्रयोगः ॥ ६६

अन्वयः । वर्णाश्रमपालनं यत् सः एव नृपस्य धर्म्मः मनुना प्रणीतः, अतः त्वया अहं निर्वासिता अपि तपस्विसामान्यम् अवेक्षणीया ॥ ६७

अन्वयः । तस्याः वाचं तथेति प्रतिगृह्य रामानुजे दृष्टिपथं व्यतीते ( सति ) सा व्यसनातिभारात् मुक्तकण्ठं विग्ना कुररी इव भूयः चक्रन्द ॥ ६८

साहं प्रसूतेरूर्द्ध्वं सूर्य्यनिविष्टदृष्टिः सती तथाविधं तपश्चरितुं यतिष्ये, यथा भूयस्तेन तपसा मे मम जननान्तरेऽपि त्वमेव भर्त्ता स्याः विप्रयोगश्च न स्यात् ॥ ६६

वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्य्यादीनाञ्च पालनं यत स एव नृपस्य धर्म्मो मनुना प्रणीत उक्तः । अतः कारणादेवं त्वया निर्व्वासिता निष्कासिताप्यहं तपस्विभिः सामान्यं साधारणं यथा भवति तथा अवेक्षणीया । कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः कैवायां कर्त्तव्येत्यर्थः ॥ ६७

तथेति तस्याः सीताया वाचं प्रतिगृह्य अङ्गीकृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीते अतिक्रान्ते सति सीता व्यसनातिभाराद्दुःखातिरेकात्—मुक्तकण्ठं यथा स्यात् तथा उच्चैरित्यर्थः, विग्ना भीता कुररी इव उत्क्रोशी इव 'उत्क्रोशकुररौ समौ' इत्यमरः, भूयः पुनरिदं चक्रन्द चुक्रोश ॥ ६८

६६। वाच्यान्तरम् । तया मया सूर्य्यनिविष्टदृष्ट्या ( सत्या ) तपश्चरितुं यतिष्यते । यथा भवा भूयेत ; विप्रयोगेन न भूयेत ।

६७। वाच्यान्तरम् । वर्णाश्रमपालनेन येन, तेन एव धर्म्मेण मनुना भूयते प्रणीतेन । त्वम् एवं निर्व्वासितां माम् अवेक्षेथाः । मनुना, त्वया कर्त्तरि तृतीया ।

६८। वाच्यान्तरम् । तया भूयते । तया विग्नया कुरर्य्या इव चक्रन्दे । व्यसनातिभारात् हेतौ पञ्चमी । रामानुजे सप्तमी भावे । उपमालङ्कारः ।

नृत्यं मयूराः कुसुमानि वृक्षाः दर्भानुपात्तान् विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावम् अत्यन्तमासीद्रुदितं वनेऽपि ॥ ६९

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ७०

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान् सुपुत्राशिषमित्युवाच ॥ ७१

अन्वयः । मयूराः नृत्यं, वृक्षाः कुसुमानि, हरिण्यः उपात्तान् दर्भान् विजहुः ; तस्याः समदुःखभावं प्रपन्ने वने अपि अत्यन्तं रुदितम् आसीत् ॥ ६९

अन्वयः । कुशेध्माहरणाय यातः कविः रुदितानुसारी ( सन् ) ताम् अभ्यगच्छत् निषादविद्धाण्डजदर्शनोत्थः यस्य शोकः श्लोकत्वम् आपद्यत ॥ ७०

अन्वयः । सीता विलापात् विरता ( सती ) नेत्रावरणम् अश्रु प्रमृज्य तं ववन्दे दोहदलिङ्गदर्शी मुनिः तस्यै सुपुत्राशिषं दाश्वान् दत्तवान्, इति उवाच ॥ ७१

मयूराः नृत्यं विजहुस्त्यक्तवन्तः, वृक्षाः कुसुमानि, हरिण्यः उपात्तान् दर्भान् ... तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वने अपि अत्यन्तं रुदितमासीत् ... यथा रामगेहेऽपीत्यपिशब्दार्थः ॥ ६९

कुशेध्माहरणाय यातः कविर्वाल्मीकी रुदितानुसारी सन् तां सीतामभ्यगच्छत् अभि... गमनञ्च दयालुतयेत्याह—निषादेति, निषादेन व्याधेन विद्धस्य अण्डजस्य क्रौञ्चस्य दर्शने... उत्थः उत्पन्नो यस्य शोकः श्लोकत्वमापद्यत श्लोकरूपेणाविरभूदित्यर्थः । स च श्लोकः पद्यते... "मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत् क्रौञ्चमिथुनादेकमवधीः का... मोहितम्" इति । तिरश्चामपि दुःखं न सेहे । किमुतान्येषामिति भावः ॥ ७०

सीता विलापात् विरता सती नेत्रावरणं दृष्टिप्रतिबन्धकमश्रु प्रमृज्य तं मुनिं ववन्दे ... दोहदलिङ्गदर्शी गर्भचिह्नदर्शी मुनिस्तस्यै सीतायै सुपुत्राशिषं सत्पुत्रप्राप्तिहेतुभूतां दाश्... दत्तवानिति वक्ष्यमाणप्रकारेणोवाच । "दाश्वान् साह्वान् मीढ्वांश्च" इति क्वसु... निपातः ॥ ७१

६९ । वाच्यान्तरम् । मयूरैः नृत्यं, वृक्षैः कुसुमानि, हरिणीभिः उपात्ताः दर्भाः विजहिरे । अत्यन्तेन रुदितेन अभूयत ।

७० । वाच्यान्तरम् । यातेन, रुदितानुसारिणा, कविना, सा अभ्यगम्यत । निषाद... विद्धाण्डजदर्शनोत्थेन शोकेन श्लोकत्वम् आपद्यत । कुशेध्माहरणाय चतुर्थी निमित्तार्थे ।

७१ । वाच्यान्तरम् । विरतया सीतया स ववन्दे । दोहदलिङ्गदर्शिना दाश्... मुनिना इति ऊचे । तस्यै सम्प्रदाने चतुर्थी । विलापात् अपादाने पञ्चमी ।

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि ! पितुर्निकेतम् ॥७२

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात् कलुषप्रवृत्तौ अस्त्येव मन्युर्भरताग्रजे मे ॥ ७३

उदारकीर्त्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां किन्तन्न येनासि ममानुकम्प्या ॥७४

अन्वयः। त्वां मिथ्यापवादक्षुभितेन भर्त्रा विसृष्टां प्रणिधानतः जाने ! (हे) वैदेहि ! विषयान्तरस्थं पितुः निकेतं प्राप्ता असि, तत् मा व्यथिष्ठाः ॥७२

अन्वयः। उत्खातलोकत्रयकण्टके अपि सत्यप्रतिज्ञे अपि अविकत्थने अपि त्वां प्रति अकस्मात् कलुषप्रवृत्तौ भरताग्रजे मे मन्युः अस्ति एव ॥७३

अन्वयः। उदारकीर्त्तिः तव श्वशुरः मे सखा, ते पिता सतां भवोच्छेदकरः, त्वं पतिदेवतानां धुरि स्थिता, येन मम अनुकम्प्या न असि तत् किम् ॥७४

त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने। वैदेहि ! विषयान्तरस्थं देशान्तरस्थं पितुर्जनकस्यैव निकेतं गृहं प्राप्तासि। तत् तस्मात् मा व्यथिष्ठा मा शोचीः। व्यथेर्लुङ्। "न माङ्योगे" इत्यडागमप्रतिषेधः। भर्त्तृत्यक्तानां पितृगृहवास एवोचित इति भावः ॥७२

उत्खातलोकत्रयकण्टकेऽपि रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः, सत्यप्रतिज्ञे सत्यसन्धेऽपि अविकत्थनेऽनात्मश्लाघिन्यपि इत्थं श्लोकपालेऽपि त्वां प्रति अकस्मादकारणात् कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपोऽस्त्येव। गुणाच्छादकोऽयं दोष इत्यर्थः। सीतानुनयार्थोऽयं रामोपालम्भः ॥७३

उदारकीर्त्तिस्तव श्वशुरो दशरथो मे सखा। ते पिता जनकः सतां विदुषां भवोच्छेदकरो ब्रह्मोपदेशादिना संसारदुःखध्वंसकारी। त्वं पतिदेवतानां पतिव्रतानां धुरि अग्रे स्थिता। येन निमित्तेन ममानुकम्प्या अनुग्राह्या नासि तत् किम् न किञ्चिदित्यर्थः ॥७४

७२। वाच्यान्तरम्। विसृष्टा त्वं मया ज्ञायसे। प्राप्तया भूयते। मा व्यथिष्ठाः इति शेषः। प्रणिधानतः तृतीया करणे। मिथ्यापवादक्षुभितेन भर्त्रा तृतीया कर्त्तरि।

७३। वाच्यान्तरम्। मन्युना भूयते। त्वां प्रतियोगे द्वितीया। सप्तम्येव अधिकरणे कारके।

७४। वाच्यान्तरम्। उदारकीर्त्तिना श्वशुरेण सख्या भूयते, पित्रा भवोच्छेदकरेण भूयते। स्थितया अनुकम्प्यया भूयते। येन हेतौ तृतीया।

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन्।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५
अशून्यतीरां मुनिसन्निवेशैस्तमोपहन्त्रीं तमसां वगाह्य।
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ॥ ७६
पुष्पं फलं चार्त्तवमाहरन्त्यो बीजञ्च बालेयमकृष्टरोहि।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७

अन्वयः। अस्मिन् तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वस। इतः अनघप्रसूतेः अपत्यसंस्कारमयः विधिः भविष्यति ॥७५

अन्वयः। मुनिसन्निवेशैः अशून्यतीरां तमोऽपहन्त्रीं तमसां नदीं वगाह्य तत्सैकतोत्सङ्गबलिक्रियाभिः ते मनसः प्रसादः सम्पत्स्यते ॥७६

अन्वयः। आर्त्तवं पुष्पं फलं च, अकृष्टरोहि बालेयं बीजं च आहरन्त्यः उदाराः मुनिकन्यकाः नवाभिषङ्गां त्वां विनोदयिष्यन्ति ॥७७

तपस्विसंसर्गेण विनीतसत्त्वे शान्तजन्तुकेऽस्मिन् तपोवने वीतभया निर्भीका सती इतोऽस्मिन् वनेऽनघप्रसूतेः। सुखप्रसूतेस्तेऽपत्यसंस्कारमयो जातकर्मादिरूपो विधिरनुष्ठानं भविष्यति ॥७५

सन्निविशन्ते येष्विति सन्निवेशा उटजाः, अधिकरणार्थे घञ् प्रत्ययः। मुनीनां सन्निवेशैरुटजैरशून्यतीरां तमसः शोकस्य पापस्य वा अपहन्त्रीम्। "तमस्तु क्लीबे ध्वान्ते नरकशोकयोः" इत्यमरः। तमसां नदीं वगाह्य तत्र स्नात्वा, बलिक्रियापेक्षया पूर्वकालता, तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिरिष्टदेवतापूजाविधिभिस्ते मनसः प्रसादः सम्पत्स्यते भविष्यति ॥७६

ऋतुरस्य प्राप्त आर्त्तवं स्वकालप्राप्तमित्यर्थः। पुष्पं फलञ्च, अकृष्टरोहि अकृष्टपच्यमित्यर्थः। बलये हितं बालेयं पूजायोग्यम्,"छदिरुपधिबलेर्ढञ्" इति ढञ्प्रत्ययः। बीजं नीवारादिधान्यञ्चाहरन्त्य उदारवाचः प्रगल्भगिरो मुनिकन्यका नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥७७

७५। वाच्यान्तरम्। वीतभयया उष्यताम्। अपत्यसंस्कारमयेन विधिना भविष्यते। एतौ सप्तमी अधिकरणे।

७६। वाच्यान्तरम्। प्रसादेन सम्पत्स्यते। मुनिसन्निवेशैः तृतीया करणे। तत्सैकतोत्सङ्गबलिक्रियाभिः करणे तृतीया।

७७। वाच्यान्तरम्। आहरन्तीभिः उदारवाग्भिः मुनिकन्यकाभिः नवाभिषङ्गा त्वं विनोदयिष्यसे।

पयोघटैराश्रमबालवृक्षान् संवर्द्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक् तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥७८

अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ७९

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८०

अन्वयः। स्वबलानुरूपैः पयोघटैः आश्रमबालवृक्षान् संवर्द्धयन्ती त्वं तनयोपपत्तेः प्राक् असंशयं स्तनन्धयप्रीतिम् अवाप्स्यसि ॥ ७८

अन्वयः। दयार्द्रचेताः वाल्मीकिः अनुग्रहप्रत्यभिनन्दिनीं ताम् आदाय सायं मृगाध्यासितवेदिपार्श्वं शान्तमृगं स्वं आश्रमं निनाय ॥ ७९

अन्वयः। शोकदीनां तदागमप्रीतिषु तापसीषु पितृभिः निर्विष्टसारां हिमांशोः अन्त्यां कलां दर्शः औषधीषु इव, अर्पयामास च ॥ ८०

स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः, सम्येरिति च अन्यते। आश्रमबालवृक्षान् संवर्धयन्ती त्वं तनयोपपत्तेः प्राक् पूर्व्वम् असंशयं यथा तथा स्तनं धयति पिबतीति स्तनन्धयः शिशुः, "नासिकास्तनयोर्ध्माधेटोः" इति खश्प्रत्ययः, "अरुर्द्विषत्—" इत्यादिना मुमागमः। तस्मिन् या प्रीतिस्ताम् अवाप्स्यसि। ततः परं सुलभ एव विनोद इति भावः ॥ ७८

दयार्द्रचेता वाल्मीकिः अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीताम् आदाय सायं मृगाध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥ ७९

शोकदीनां तां सीतां तस्याः सीताया आगमेन प्रीतिर्यासां तासु तापसीषु पितृभिरग्निष्वात्तादिभिर्निर्विष्टसारां भुक्तसारां हिमांशोरन्त्यामवशिष्टां कलां दर्शोऽमावास्याकाल औषधीष्विव अर्पयामास च। अत्र पराशरः—"पिबन्ति विमलं सोमं विशिष्टा तस्य या कला। सुधामृतमयीं पुण्यां तामिन्दोः पितरो मुने॥" इति। व्यासश्च—"अमायान्तु सदा सोम ओषधीः प्रतिपद्यते" इति ॥ ८०

७८। वाच्यान्तरम्। संवर्द्धयन्त्या त्वया स्तनन्धयप्रीतिः अवाप्स्यते। तनयोपपत्तेः प्राक्-पञ्चम्यन्तयोगे। स्वबलानुरूपैः पयोघटैः तृतीया करणे।

७९। वाच्यान्तरम्। दयार्द्रचेतसा वाल्मीकिना अनुग्रहप्रत्यभिनन्दिनी सा (सीता) मृगाध्यासितवेदिपार्श्वं शान्तमृगं स्वं आश्रमं सायं निन्ये।

८०। वाच्यान्तरम्। तेन वाल्मीकिना, शोकदीना सा तदागमप्रीतिषु तापसीषु, पितृभिः निर्विष्टसारा अन्त्या कला औषधीषु इव अर्पयामासे। उपमालङ्कारः। समन्वयः। ... सह वाल्मीकेः, निर्विष्टसारया अन्त्यया कलया सह शोकदीनायाः तस्याः। ... पितृभिः सह तदागमप्रीतीनां तापसीनां साम्यम्।

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्य्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ८१

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासन्ततये बभार ॥ ८२

अपि प्रभुः सानुशयोऽधुना स्यात् किमुत्सुकः शक्रजितोऽपि हन्ता ।
शशंस सीतापरिदेवनान्तमनुष्ठितं शासनमग्रजाय ॥ ८३

अन्वयः । ताः तस्यै सपर्य्यानुपदं दिनान्ते निवासहेतोः इङ्गुदीस्नेहकृतप्रदीपम् अ(न्तः)
आस्तीर्णमेध्याजिनतल्पम् उटजं वितेरुः ॥ ८१

अन्वयः । तत्र अभिषेकप्रयता वसन्ती विधिना अतिथिभ्यः प्रयुक्तपूजा वल्कलि(नी)
सा पत्युः प्रजासन्ततये वन्येन शरीरं बभार ॥ ८२

अन्वयः । प्रभुः अधुना अपि सानुशयः स्यात् किम् ? उत्सुकः शक्रजितः हन्ता (अपि)
सीतापरिदेवनान्तम् अनुष्ठितं शासनम् अग्रजाय शशंस ॥ ८३

वाल्मीकि-तपस्विन्यः तस्यै सीतायै सपर्य्यानुपदं पूजानन्तरं दिनान्ते सायङ्काले निवास(स्य)
हेतुस्तस्य निवासहेतोः निवासार्थमित्यर्थः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । "इ(ङ्गुदी)
तापसतरुः" इत्यमरः । इङ्गुदीस्नेहेन कृतप्रदीपमन्तरास्तीर्णं मेध्यशुद्धमजिनमेव त(ल्पं)
शय्या यस्मिन् तमुटजं पर्णशालां वितेरुः ददुः ॥ ८१

तत्र आश्रमेऽभिषेकेण स्नानेन प्रयता नियता वसन्ती विधिना शास्त्रेण अतिथि(भ्यः)
प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासन्ततये सन्तानाविच्छेदाय (वन्ये)
वन्येन कन्दमूलादिना शरीरं बभार पुपोष ॥ ८२

प्रभू राजा अधुनापि सानुशयः सानुतापः स्यात् किम् ? इति काकुः । उत्सु(कः)
शक्रजित इन्द्रजितो हन्ता लक्ष्मणोऽपि सीतापरिदेवनान्तं सीताविलापान्तम् अनुष्ठि(तं)
शासनम् अग्रजाय शशंस ॥ ८३

८१ । व्याख्यान्तरम् । ताभिः इङ्गुदीस्नेहकृतप्रदीपः, अन्तः आस्तीर्णमेध्याजिनतल्पः
उटजः तस्यै वितेरे । तस्यै सम्प्रदाने चतुर्थी, निवासहेतोः हेत्वर्थे षष्ठी ।

८२ । व्याख्यान्तरम् । अभिषेकप्रयतया, वसन्त्या, प्रयुक्तपूजया, वल्कलिन्या त(या)
शरीरं बभ्रे । विधिना करणे तृतीया । अतिथिभ्यः क्रियायोगे सम्प्रदाने वा चतुर्थी
प्रजासन्ततये चतुर्थी निमित्तार्थे; वन्येन तृतीया करणे ।

८३ । व्याख्यान्तरम् । प्रभुणा सानुशयेन भूयते किम् ? उत्सुकेन हन्त्रा शशं(से)
परिदेवनान्तं अनुष्ठितशासनं अग्रजाय शशंसे । अग्रजाय क्रियायोगे चतुर्थी ।

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४

निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥ ८५

तामेकभार्य्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसंघट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः ॥ ८६

अन्वयः। सहसा सबाष्पः रामः तुषारवर्षी सहस्यचन्द्रः इव बभूव, कौलीनभीतेन तेन वैदेहसुता गृहात् निरस्ता न मनसः ॥८४

अन्वयः। धीमान् वर्णाश्रमावेक्षणजागरूकः रजोरिक्तमनाः सः स्वयमेव शोकं निगृह्य भ्रातृसाधारणभोगम् ऋद्धं राज्यं शशास ॥८५

अन्वयः। परिवादभीरोः (अतएव) एकभार्य्याम् (अपि) साध्वीम् अपि तां त्यक्तवतः नृपस्य वक्षसि असङ्घट्टसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे ॥८६

सहसा सपदि सबाष्पो रामः तुषारवर्षी सहस्यचन्द्र इव बभूव, अत्युष्णतया तुषारवर्षिणा सहस्यचन्द्रेण तुल्योऽभूत् । "पौषे तैषसहस्यौ द्वौ" इत्यमरः । युक्तं चैतदित्याह,—कौलीनात् लोकापवादाद् भीतेन तेन रामेण वैदेहसुता सीता गृहात् निरस्ता, न मनसो मनस्स्थानात् न निरस्ता । पञ्चम्यास्तसिल् ॥८४

धीमान् वर्णानाम् आश्रमाणाञ्च अवेक्षणेऽनुसन्धाने जागरूकोऽप्रमत्तः । "जागरूकः" इत्यूकप्रत्ययः । रजोरिक्तमना रजोगुणशून्यचेताः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगम् शरीरस्थितिमात्रोपयुक्तमित्यर्थः, ऋद्धं राज्यं शशास ॥८५

परिवादभीरोर्निन्दाभीरोः अतएवैकभार्य्यामपि साध्वीमपि तां सीतां त्यक्तवतो नृपस्य वक्षसि असङ्घट्टसुखम् असम्भाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे दिदीपे । तस्य दारान्तरपरिग्रहो नाभूदिति भावः ॥८६

८४। वाच्यान्तरम् । तुषारवर्षिणा सहस्यचन्द्रेणेव रामेण सबाष्पेण बभूवे । कौलीनभीतेन वैदेहसुतां निरस्तवान् । मनसः, गृहात् च अपादाने पञ्चमी ।

८५। वाच्यान्तरम् । धीमता, वर्णाश्रमावेक्षण-जागरूकेण रजोरिक्तमनसा तेन, भ्रातृसाधारणभोगं ऋद्धं राज्यं शशासे ।

८६। वाच्यान्तरम् । वसन्त्या लक्ष्म्या सपत्नीरहितया इव रेजे । उत्प्रेक्षालङ्कारः ।

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्त्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७

अन्वयः। दशमुखरिपुः रामः सीतां हित्वा अन्यां स्त्रियं न उपयेमे (इति) यत्, तस्याः एव प्रतिकृतिसखः (सन्) क्रतून् आजहार (इति) यत्, तेन श्रवणविषयप्रापिणा भर्त्तुः वृत्तान्तेन सा दुर्वारं परित्यागदुःखं कथमपि विषेहे ॥८७

दशमुखरिपू रामः सीतां हित्वा त्यक्त्वा अन्यां स्त्रियं न उपयेमे न परिणीतवानिति यत्, "उपाद्यमः स्वीकरणे" इत्यात्मनेपदम्, किञ्च, तस्याः सीताया एव प्रतिकृतेः प्रतिकृता हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतून् आजहार आहृतवानिति यत्, तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्त्तुर्वृत्तान्तेन वार्त्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यत् दुःखं तत् कथमपि विषेहे विसोढ़वती ॥८७

८७। वाच्यान्तरम्। दशमुखरिपुणा अन्या (स्त्री) नोपयेमे। प्रतिकृतिसखेन सता क्रतवः आजह्रिरे। तया दुर्वारं परित्यागदुःखं कथमपि विषेहे, श्रवणविषयप्रापिणा तेन वृत्तान्तेन तृतीया हेतौ।

चतुर्दशो सर्गः समाप्तः।

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ
रघुवंशे महाकाव्ये सीतापरित्यागो नाम
चतुर्दशः सर्गः।

---

# पञ्चदशः सर्गः ।

—:०:०:—

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ १
लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २
अवेक्ष्य रामं ते तस्मिन् न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३

अन्वयः। कृतसीतापरित्यागः सः पृथिवीपालः रत्नाकरमेखलां केवलां पृथिवीम् एव बुभुजे ॥ १

अन्वयः। लवणेन तामिस्रेण विलुप्तेज्याः (अत एव) शरणार्थिनः यमुनाभाजः मुनयः शरण्यं तं अभ्ययुः ॥ २

अन्वयः। ते रामम् अवेक्ष्य तस्मिन् स्वतेजसा न प्रजह्रुः; त्राणाभावे शापास्त्राः (सन्तः) तपसः व्ययं कुर्वन्ति ॥ ३

अरण्यकं गृहस्थानं श्वशुरो यद्गुणःक्षणाः (?) ।
स्वयमौद्वाहिकं गेहं तस्मै रामाय ते नमः (?) ॥

कृतसीतापरित्यागः स पृथिवीपालो रामो रत्नाकर एव मेखला यस्यास्ताम् सार्वभौमेत्यर्थः, केवलां एकामित्यर्थः, पृथिवीमेव बुभुजे भुक्तवान्। न तु पार्थिवीमित्यर्थः। सापि रत्नखचितमेखला, पृथिव्याः कान्तसमाधिर्व्यज्यते। रामस्य स्त्र्यन्तरपरिग्रहो नासीति सीताभिप्रायः ॥ १

लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा रक्षसेत्यर्थः विलुप्तेज्या लुप्तयागक्रिया अतएव शरणार्थिनो रक्षणार्थिनो यमुनाभाजो यमुनातीरवासिनो मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारमभ्ययुः प्राप्ताः। यातेर्लङ् ॥ २

ते मुनयो राममवेक्ष्य रक्षितारमिति शेषः, तस्मिन् लवणे स्वतेजसा शापरूपेण न प्रजह्रुः। तथाहि—त्रायत इति त्राणं रक्षणम्, कर्तरि ल्युट्। तदभावे शाप एवास्त्रं येषां ते शापास्त्राः सन्तस्तपसो व्ययं कुर्वन्ति। शापदानात् तपसो व्यय इति प्रसिद्धेः ॥ ३

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ ४
ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५
आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६
यः कश्चन रघूणां हि परमेकः परन्तपः ।
अपवाद इवोत्सर्गं व्यावर्त्तयितुमीश्वरः ॥ ७

अन्वयः । काकुत्स्थः तेभ्यः विघ्नप्रतिक्रियाम् प्रतिशुश्राव । भुवि शार्ङ्गिणः प्रवृ[त्तिः]
धर्मसंरक्षणार्था एव ॥ ४

अन्वयः । ते रामाय विबुधद्विषः वधोपायम् आचख्युः । लवणः शूली दुर्ज[यः]
(किन्तु) विशूलः प्रार्थ्यताम् ॥ ५

अन्वयः । अथ तेषां क्षेमाय राघवः शत्रुघ्नम् आदिदेश । अस्य नाम अरिनिग्र[हात्]
यथार्थं करिष्यन् इव ॥ ६

अन्वयः । हि परन्तपः रघूणां मध्ये यः कश्चन एक, अपवादः उत्सर्गम् इव, प[रम्]
व्यावर्त्तयितुम् ईश्वरः ॥ ७

काकुत्स्थो रामस्तेभ्यो मुनिभ्यो विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतिज्ञा[तवान्]
तथाहि—भुवि शार्ङ्गिणो विष्णोः प्रवृत्तिः, रामरूपेणावतरणं धर्मरक्षणमेवार्थः प्रयो[जनं]
यस्याः सा तथैव ॥ ४

ते मुनयो रामाय विबुधद्विषः सुरारेर्लवणस्य वधोपायमाचख्युः । लुनातीति ल[वणः]
नन्द्यादित्वाल्ल्युः । तत्रैव निपातनात् णत्वम् । लवणः शूली शूलवान् दुर्जयोऽजय्यः, [किन्तु]
विशूलः शूलरहितः प्रार्थ्यतामभिगम्यताम् । "याञ्चायामभियाने च प्रार्थना कथ्यते बु[धैः]"
इति केशवः ॥ ५

अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवो रामः शत्रुघ्नमादिदेश । अतोऽस्य अन्व[र्थम्]
अस्य शत्रुघ्नस्य नाम अरिनिग्रहात् शत्रुहननाद्धेतोः, यथाभूतोऽर्थो यस्य तद् यथार्थं करि[ष्यन्-]
निव, शत्रून् हन्तीति शत्रुघ्नः "अमनुष्यकर्त्तृके च" इति चकारात् "कृतघ्नशत्रुघ्ना[दयः]
सिद्धाः" इति दुर्गसिंहः । पाणिनीयेऽपि बहुलग्रहणाद यत्नेष्टसिद्धिः, "कृत्यल्युटो बहुल[म्]"
इति ॥ ६

रामस्य स्वयमप्रयाणे हेतुमाह । हि यस्मात् परान् शत्रून् तापयतीति परन्तपः । "द्वि[षत्]
परयोस्तापेः" इति खच्प्रत्ययः । "खचि ह्रस्वः" इति ह्रस्वः रघूणां मध्ये यः कश्चन ए[कः]
अपवादो विशेषशास्त्रम् उत्सर्गं सामान्यशास्त्रमिव परं शत्रुं व्यावर्त्तयितुं बाधितु[म् ईश्वरः]
समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥ ७

अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी।
ययौ वनस्थलीः पश्यन् पुष्पिताः सुरभीरभीः॥ ८

रामादेशादनुगता सेना तस्यार्थसिद्धये।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत्॥ ९

आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान्॥ १०

तस्य मार्गवशादेका बभूव वसतिर्यतः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने॥ ११

अन्वयः। ततः अग्रजेन प्रयुक्ताशीः रथी अभीः दाशरथिः पुष्पिताः सुरभीः वनस्थलीः पश्यन् ययौ॥ ८

अन्वयः। रामादेशात् अनुगता सेना तस्य अध्ययनार्थस्य धातोः पश्चात् अधि इव अर्थसिद्धये अभवत्॥ ९

अन्वयः। रथप्रष्ठैः मुनिभिः आदिष्टवर्त्मा गच्छन् तपतां वरः सः वालखिल्यैः अंशुमान् इव विरराज॥ १०

अन्वयः। यतः तस्य मार्गवशात् रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने एका वसतिः बभूव॥ ११

ततोऽग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वादो रथी रथिकोऽभीर्निर्भीको दाशरथिः पुष्पाणि सञ्जातानि यासां ताः पुष्पिताः सुरभीरामोदमाना वनस्थलीः पश्यन् ययौ॥ ८

रामादेशादनुगता सेना तस्य शत्रुघ्नस्य, अध्ययनमर्थोऽभिधेयो यस्य तस्य, धातोः "इङ्-अध्ययने" इत्यस्य धातोः, पश्चादधिरुपसर्ग इव, अर्थसिद्धये प्रयोजनसाधनाय इत्येकत्र, अन्यत्र अभिधेयसाधनाय अभवत्। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। यथा "इङि-कोऽध्युपसर्गो न व्यभिचरते" इति न्यायेनाध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः सन्निधि-मात्रेणोपकरोति, सेनापि तस्य तद्वदिति भावः॥ ९

रथप्रष्ठैः रथाग्रगामिभिः "प्रष्ठोऽग्रगामिनि" इति निपातः। मुनिभिः पूर्वोक्तैरादिष्ट-वर्त्मा निर्दिष्टमार्गो गच्छन् तपतां दीदीप्यमानानां मध्ये वरः श्रेष्ठः शत्रुघ्न वालखिल्यैर्मुनिभिः अंशुमान् सूर्य इव विरराज। तेऽपि रथप्रष्ठा इत्यनुसन्धेयम्॥ १०

यतो गच्छतः। इण्धातोः शतृप्रत्ययः। तस्य शत्रुघ्नस्य मार्गवशात् रथस्वने उत्कण्ठा उन्मुखा मृगा यस्मिन् तस्मिन् वाल्मीकीये वाल्मीकिसम्बन्धिनि, "वृद्धाच्छः" इति छ-प्रत्ययः, तपोवने एका वसती रात्रिर्बभूव। यत्रैकां रात्रिमुषित इत्यर्थः। "वसती रात्रि-वेश्मनोः" इत्यमरः॥ ११

तमृषिः पूजयामास कुमारं क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥ १२

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।
सुतावसूत सम्पन्नौ कोशदण्डाविव क्षितिः ॥ १३

सन्तानश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान् ।
प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥ १४

स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।
वनात् करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।
क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥ १६

अन्वयः । क्लान्तवाहनं तं कुमारं ऋषिः तपःप्रभावसिद्धाभिः विशेषप्रतिपत्तिभिः पूजयामास ॥ १२

अन्वयः । तस्यां एव यामिन्याम् अस्य अन्तर्वत्नी प्रजावती क्षितिः सम्पन्नौ कोशदण्डौ एव, सुतौ असूत ॥ १३

अन्वयः । भ्रातुः सन्तानश्रवणात् सौमनस्यवान् सौमित्रिः प्रातः युक्तरथः (सन्) प्राञ्जलिः मुनिम् आमन्त्र्य ययौ ॥ १४

अन्वयः । सः च मधूपघ्नं (नाम लवणपुरं) प्राप, कुम्भीनस्याः कुक्षिजः वनात् करम् इव सत्त्वराशिम् आदाय उपस्थितः ॥ १५

अन्वयः । धूमधूम्रः वसागन्धी ज्वालाबभ्रुशिरोरुहः क्रव्याद्गणपरीवारः (अतएव) जङ्गमः चिताग्निः इव (स्थितः) ॥ १६

क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नम् ऋषिर्वाल्मीकिः तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिरुत्कृष्टसम्भावनाभिः पूजयामास ॥१२

तस्यामेव यामिन्यां रात्रौ अस्य शत्रुघ्नस्य । अन्तरस्या अस्तीत्यन्तर्वत्नी गर्भिणी । "अन्तर्वत्नी च गर्भिणी" इत्यमरः । अन्तर्वत्पतिवतोर्नुक् इति ङीप्, नुगागमश्च । प्रजावती भ्रातृजाया सीता क्षितिः सम्पन्नौ समग्रौ कोशदण्डाविव सुतौ असूत ॥१३

भ्रातुर्ज्येष्ठस्य सन्तानश्रवणात् हेतोः सौमनस्यवान् प्रीतिमान् सौमित्रिः शत्रुघ्नः प्रातर्युक्तरथः सज्जरथः सन् प्राञ्जलिर्मुनिमामन्त्र्य आपृच्छ्य ययौ ॥१४

स शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप । कुम्भीनसी नाम रावणस्वसा, तस्याः कुक्षिजः पुत्रो लवणश्च वनात् करं बलिमिव सत्त्वानां प्राणिनां राशिमादाय उपस्थितः प्राप्तः ॥१५

किम्भूतो लवण ? धूम इव धूम्रः कृष्णलोहितवर्णः, "धूम्रधूमलौ कृष्णलोहिते" इत्यमरः ।

अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध सम्मुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७
नातिपर्य्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् ।
दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः ॥ १८
इति सन्तर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया ।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम् ॥ १९
सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः ।
गात्रं पुष्परजः प्राप न शाखी नैर्ऋतेरितः ॥ २०

अन्वयः । लक्ष्मणानुजः अपशूलं तं लवणम् आसाद्य रुरोध । रन्ध्रप्रहारिणां जयः सम्मुखीनः हि ॥१७

अन्वयः । राक्षसः, अद्य मत्कुक्षेः भोजनं न अतिपर्य्याप्तम् आलक्ष्य भीतेन इव धात्रा दिष्ट्या मे त्वम् उपपादितः असि इति शत्रुघ्नं सन्तर्ज्य तज्जिघांसया प्रांशुम् द्रुमम्, मुस्तास्तम्बम् इव, उत्पाटयामास ॥१८—१९

अन्वयः । नैर्ऋतेरितः शाखी अन्तरा निशितैः बाणैः शकलीकृतः (सन्) सौमित्रेः गात्रं न प्राप, (किन्तु) पुष्परजः (प्राप) ॥२०

...गन्धो हृन्मेदोगन्धः सोऽस्यास्तीति वसागन्धी । "हृन्मेदस्तु वपा वसा" इत्यमरः । ...रा इव बभ्रवः पिशङ्गाः शिरोरुहाः केशाः यस्य स तथोक्तः । "विपुले नकुले विष्णौ ...; शाल्पिङ्गले विषु" इत्यमरः । क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः, तेषां गण एव ...चारो यस्य स तथोक्तः, अतएव जङ्गमश्चरिष्णुश्चिताग्निरिव स्थितः । क्रव्यादपक्षे धूमैर्धू... ...र्णैः ज्वाला एव शिरोरुहाः, क्रव्यादो गृध्रादय इत्यनुसन्धेयम् ॥१६

लक्ष्मणानुजः शत्रुघ्नः अपशूलं शूलरहितं तं लवणमासाद्य रुरोध । तथाहि—रन्ध्र... ...रिणां रन्ध्रप्रहरणशीलानाम्, अपशूलतैवात्र रन्ध्रम्, जयः सम्मुखीनो हि, सम्मुखस्य ...नो हि । "यथामुखसम्मुखस्य दर्शनः खः" इति खप्रत्ययः । अधिकारलक्षणार्थेऽस्य ...व एव ॥१७

...लक्ष्य राक्षसो लवणः, अद्य मत्कुक्षेः, भुज्यत इति भोजनम् भोज्यं मृगादिकम्, ...पर्य्याप्तमनतिसमग्रमालक्ष्य दृष्ट्वा भीतेनेव धात्रा दिष्ट्या भाग्येन मे त्वमुपपादितः ...दितोऽसि, इति शत्रुघ्नं सन्तर्ज्य, तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुमुन्नतं ..., मुस्तास्तम्बमिव अक्लेशेन उत्पाटयामास ॥१८—१९

नैर्ऋतेरितो रक्षःप्रेरितः शाखी अन्तरा मध्ये निशितैर्बाणैः शकलीकृतः सन् सौमित्रेः ...स्य गात्रं न प्राप, किन्तु, पुष्परजः प्राप ॥२०

विनाशात् तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम्॥ २१

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताड़ितः।
सिकतात्वादपि परां प्रपेदे परमाणुताम्॥ २२

तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः।
एकताल इवोत्पातपवनप्रेरितो गिरिः॥ २३

कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम्॥ २४

अन्वयः। रक्षः तस्य वृक्षस्य विनाशात् महोपलं पृथक् स्थितं कृतान्तस्य मुष्टिम् इव तस्मै प्रजिघाय ॥२१

अन्वयः। सः शत्रुघ्नेन ऐन्द्रम् अस्त्रम् उपादाय ताड़ितः (सन्) सिकतात्वात् अपि परां परमाणुतां प्रपेदे ॥२२

अन्वयः। निशाचरः दक्षिणं दोः उद्यम्य एकतालः उत्पातपवनप्रेरितः गिरिः इव [illegible] उपाद्रवत् ॥२३

अन्वयः। सः शत्रुः कार्ष्णेन पत्रिणा भिन्नहृदयः पतन् भुवः कम्पम् आनिनाय, आश्रम[illegible] वासिनां (कम्पम्) जहार ॥२४

रक्षो लवणस्तस्य वृक्षस्य विनाशाद्धेतोः महोपलं महान्तं पाषाणम् पृथक् स्थि[illegible] कृतान्तस्य यमस्य मुष्टिमिव मुष्टिसदृशं [illegible]। तस्मै शत्रुघ्नाय प्रजि[illegible] प्रहितवान् ॥२१

स महोपलः शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवताकमस्त्रमुपादाय ताड़ितोऽभिहतः सन् सिक[illegible] त्वात् सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽणुर्नास्ति स परमाणुरित्याहुः ॥२२

निशाचरो राक्षसो दक्षिणं दोः, "ककुद्दोषणी" इति भगवतो भाष्यकारस्य प्रयो[illegible] दोःशब्दस्य नपुंसकत्वं द्रष्टव्यम्। "भुजबाहू प्रवेष्टो दोः" इति पुंलिङ्गाभिधा[illegible] पुंस्त्वं च। तथा च प्रयोगः—"दोषं तस्य तथाविधस्य भजतः" इति। उद्यतं [illegible] मुद्यम्य। एकस्तालस्तदाख्यवृक्षो यस्मिन् स एकतालः, उत्पातपवनेन प्रेरितो गिरिरि[illegible] शत्रुघ्नं उपाद्रवत् अभिद्रुतः ॥२३

स शत्रुर्लवणः कार्ष्णेन वैष्णवेन पत्रिणा बाणेन। उक्तं रामायणे—"[illegible] प्रकल्पितो विष्णोस्तेजोमयः शरः" इति। "विष्णुर्नारायणः कृष्णः" इत्यमरः। भिन्न[illegible] पतन् भुवः कम्पम् आनिनाय आनीतवान्। द्विगुणभारादित्यर्थः। आश्रमवासिनां [illegible] जहार, तन्नाशादकुतोभया बभूवुरित्यर्थः ॥२४

वयसां पङ्क्तयः पेतुर्हतस्योपरि विद्विषः ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५

स हत्वा लवणं वीरस्तदा मेने महौजसः ।
भ्रातुः सोदर्य्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ २६

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः ॥ २७

उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः ॥ २८

या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९

अन्वयः। हतस्य विद्विषः उपरि वयसां पङ्क्तयः पेतुः तत्प्रतिद्वन्द्विनः मूर्ध्नि कुसुम-
यः (पेतुः) ॥२५

अन्वयः। सः वीरः लवणं हत्वा तदा आत्मानं महौजसः इन्द्रजिद्वधशोभिनः भ्रातुः
र्यं मेने ॥२६

अन्वयः। चरितार्थैः तपस्विभिः संस्तूयमानस्य तस्य विक्रमोदग्रं व्रीडया अवनतं
रः शुशुभे ॥२७

अन्वयः। पौरुषभूषणः अर्थेषु निर्ममः मधुराकृतिः सः कालिन्द्याः उपकूलं मथुरां
नाम ) पुरीं निर्ममे ॥२८

अन्वयः। या सौराज्यप्रकाशाभिः पौरविभूतिभिः स्वर्गाभिष्यन्दवमनं कृत्वा उपनि-
शिता इव बभौ ॥२९

हतस्य विद्वेष्टीति विद्विट् तस्य विद्विषो राक्षसस्योपरि वयसां पक्षिणां पङ्क्तयः पेतुः ।
तिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥२५
स वीरः शत्रुघ्नो लवणं हत्वा तदा आत्मानं महौजसो महाबलस्य इन्द्रजिद्वधेन शोभिनो
तुर्लक्ष्मणस्य समानोदरे शयितं सोदर्य्यमेकोदरं मेने। 'सोदराद्यः' इति यप्रत्ययः ॥२६
चरितार्थैः कृतकार्य्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेण उदग्रमुन्नतं
डया लज्जया अवनतं नम्रं शिरः शुशुभे। विक्रान्तस्य लज्जैव भूषणमिति भावः ॥२७
पौरुषभूषणः अर्थेषु विषयेषु निर्ममो निस्पृहः मधुराकृतिः सौम्यरूपः स शत्रुघ्नः
लिन्द्याः यमुनायाः उपकूलं कूले। विभक्त्यर्थेऽव्ययीभावः। मथुरां नाम पुरीं निर्ममे
मितवान् ॥ २८
या पूः, शोभनो राजा यस्याः पुरः सा सुराज्ञी, सुराज्ञ्या भावः सौराज्यं तेन प्रका-
शैः प्रकाशमानाभिः पौराणां विभूतिभिरैश्वर्यैः स्वर्गस्याभिष्यन्दोऽतिरिक्तजनः तस्य

तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम्।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३०

सखा दशरथस्यापि जनकस्य च मन्त्रकृत्।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।
कविः कुशलवावेव चकार किल नामतः ॥ ३२

साङ्गञ्च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३

अन्वयः। तत्र सौधगतः चक्रवाकिनीं यमुनां हेमभक्तिमतीं भूमेः प्रवेणीं इव पश्यन् पिप्रिये ॥३०

अन्वयः। दशरथस्य जनकस्य च सखा मन्त्रकृत् (वाल्मीकिः) अपि उभयप्रीत्या मैथिलेयौ यथाविधि सञ्चस्कार ॥३१

अन्वयः। सः कविः (वाल्मीकिः) कुशलवोन्मृष्टगर्भक्लेदौ तौ तदाख्यया नामतः कुशलवौ एव चकार किल ॥३२

अन्वयः। किञ्चित् उत्क्रान्तशैशवौ (तौ) साङ्गं च वेदं अध्याप्य कविप्रथमपद्धतिं स्वकृतिं च गापयामास ॥३३

कसनमाहरणं कृत्वा उपनिवेशिता उपस्थापिता इव बभौ। अत्र कौटिल्यः—'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति ॥२९

तत्र मथुरायां सौधगतो हर्म्यारूढः स चक्रवाकिनीं चक्रवाकवतीं यमुनां हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव। "वेणी प्रवेणी" इत्यमरः। पश्यन् पिप्रिये प्रीतः। "प्रीङ् प्रीणने" इति धातोर्दैवादिकाल्लिट् ॥३०

सम्प्रति रामसन्तानवृत्तान्तमाह। दशरथस्य जनकस्य च सखा मन्त्रकृत् मन्त्रद्रष्टा वाल्मीकिरपि। "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप्। उभयोर्दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं सञ्चस्कार संस्कृतवान्। जातकर्मादिभिरिति शेषः ॥३१

स कविर्वाल्मीकिः कुशैर्दर्भैर्लवैर्गोपुच्छलोमभिः। "लवौ लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु" इति वैजयन्ती। उन्मृष्टौ गर्भक्लेदौ गर्भोपद्रवौ ययोस्तौ कुशलवोन्मृष्टगर्भक्लेदौ मैथिलेयौ तेषां कुशानाञ्च लवानाञ्चाख्यया नामतो नाम्ना यथासंख्यं कुशलवावेव चकार किल। कुशोन्मृष्टः कुशः, लवोन्मृष्टः लवः ॥३२

किञ्चिदुत्क्रान्तशैशवौ अतिक्रान्तबाल्यौ तौ साङ्गञ्च वेदमध्याप्य कवीनां प्रथमपद्धतिं कविताबीजमित्यर्थः। स्वकृतिं काव्यं रामायणाख्यं गापयामास। गापयतेर्ण्यन्तस्य द्विकर्मकत्वात् "गतिबुद्धि—" इत्यादिना द्विकर्मकत्वम् ॥३३

रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।
तद्वियोगव्यथां किंचिच्छिथिलीचक्रतुः सुतौ ॥ ३४

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
तद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनवः ॥ ३५

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मधुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६

भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात् पौरैरीक्षितोऽत्यन्तगौरवम् ॥ ३८

अन्वयः। सुतौ रामस्य वृत्तं मातुः अग्रतः मधुरं गायन्तौ तद्वियोगव्यथां किंचित् शिथिलीचक्रतुः ॥३४

अन्वयः। रघोः वंश्याः त्रेताग्नितेजसः इतरे त्रयः अपि तद्योगात् पतिवत्नीषु द्विसूनवः आसन् ॥३५

अन्वयः। पूर्वजोत्सुकः शत्रुघ्नः बहुश्रुते शत्रुघातिनि सुबाहौ च सून्वोः मधुराविदिशे निदधे ॥३६

अन्वयः। सः मैथिलीतनयोद्गीतनिःस्पन्दमृगं वाल्मीकेः आश्रमं भूयः (अपि) तपोव्ययः मा भूत् इति अत्यगात् ॥३७

अन्वयः। वशी लवणस्य वधात् पौरैः अत्यन्तगौरवम् ईक्षितः ( सन् ) रथ्यासंस्कारशोभिनीम् अयोध्यां विवेश च ॥३८

तौ सुतौ रामस्य वृत्तं मातुरग्रतो मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किंचित् शिथिलीचक्रतुः ॥३४

रघोर्वंश्या वंशे भवाः, त्रेताग्नयस्त्रयस्त्रेताग्नयः, तेषां तेजो येषां ते त्रेताग्नितेजसः, इतरे अन्ये त्रयो भरतादयोऽपि तद्योगात् तेषां योगात् भरतादिसम्बन्धात् पतिवत्नीषु भर्तृमतीषु जीवत्पतिकासु स्वभार्यासु पत्नीष्वित्यर्थः। "पतिवत्नी सभर्तृका" इत्यमरः। "अन्तर्वत्पतिवतोर्नुक्" इति ङीप्प्रत्ययो नुगागमश्च। पत्नीषु द्विसूनव आसन्। द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रहः क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥३५

पूर्वजोत्सुको ज्येष्ठप्रियः शत्रुघ्नो बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोः मधुरा च विदिशा च नगर्यौ निदधे, निधाय गत इत्यर्थः ॥३६

स शत्रुघ्नो मैथिलीतनययोः कुशलवयोरुद्गीतेन निःस्पन्दमृगं गीतप्रियनिश्चलहरिणं वाल्मीकेराश्रमं भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिर्मा भूदिति हेतोः, अत्यगात्, अतिक्रम्य गत इत्यर्थः ॥३७

स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९

तमभ्यनन्दत् प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात् प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ ४०

स पृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम् ।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२

अन्वयः। स सभामध्ये सभासद्भिः उपस्थितं सीतापरित्यागात् भुवः असामान्य रामं ददर्श ॥३९

अन्वयः। अग्रजः लवणान्तकं प्रणतं तं कालनेमिवधात् प्रीतः तुराषाट् शार्ङ्गिणम् इव अभ्यनन्दत् ॥४०

अन्वयः। सः पृष्टः (सन्) सर्वतः वार्त्तं राज्ञे आख्यत्, सन्ततिं न आख्यत्, (कुतः?) काले प्रत्यर्पयिष्यतः आद्यस्य कवेः शासनात् ॥४१

अन्वयः। अथ जानपदः विप्रः अप्राप्तयौवनं शिशुं भूपतेः द्वारि अङ्कशय्यास्थं (य तथा) अवतार्य चक्रन्द ॥४२

ययौ स लवणस्य वधाद्धेतोः पौरैः पौरजनैरत्यन्तं गौरवं यस्मिन् कर्मणि तत ईक्षितः सन् रथ्यासंस्कारैस्तोरणादिभिः शोभते या तामयोध्यां विवेश च ॥३८

स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैरुपस्थितं सेवितं सीतापरित्यागाद्भुवोऽनन्य पतिमसाधारणपतिं रामं ददर्श ॥३९

अग्रजो रामो लवणस्यान्तकं हन्तारं प्रणतं तं शत्रुघ्नम्, कालनेमिर्नाम राक्षसः, त वधात् प्रीतः। तुरां वेगं सहत इति तुराषाडिन्द्रः। "छन्दसि सहः" इति ण्विः, सहतेर्ण्विपि कृते साहयतेः क्विप्, "अन्येषामपि दृश्यते" इति पूर्वपदस्य दीर्घः, "सहेः सा सः" इति षत्वम्। शार्ङ्गिणम् उपेन्द्रमिव अभ्यनन्दत् ॥४०

स शत्रुघ्नः पृष्टः सन् सर्वतो वार्त्तं कुशलं राज्ञे रामाय आख्यत् आख्यातवान्। चक्षिङो लुङ्, "चक्षिङः ख्याञ्" इति ख्याञादेशः, "अस्यतिवक्ति—" इत्यङ्, "आतो लोप इटि च" इत्याकारलोपः, ख्यातेर्वा लुङ्। सन्ततिं कुशलवोत्पत्तिं न आख्यत् कुतः? कालेऽवसरे प्रत्यर्पयिष्यत आद्यस्य कवेर्वाल्मीकेः शासनात् ॥४१

अथ जनपदे भवो जानपदो विप्रः, कश्चिदिति शेषः, अप्राप्तयौवनं शिशुम् मृत शेषः, भूपते रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य अङ्कस्थलेनैव अवरोप्य चुक्रोश ॥४२

शोचनीयासि वसुधे या त्वं दशरथाच्च्युता ।
रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता ॥ ४३

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ॥ ४४

स मुहूर्त्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौवेरं वैवस्वतजिगीषया ॥ ४५

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुरस्तस्य गूढरूपा सरस्वती ॥ ४६

राजन् ! प्रजासु ते कश्चित् अपचारः प्रवर्त्तते ।
तमन्विष्य प्रशमये भवितासि ततः कृती ॥ ४७

[अ]न्वयः। (हे) वसुधे ! दशरथात् च्युता या त्वं रामहस्तमनुप्राप्य कष्टात् कष्टतरं [गता (स]ती ) शोचनीया असि ॥४३

[अ]न्वयः। गोप्ता राघवः तस्य शुचः हेतुं श्रुत्वा जिह्राय, हि (यस्मात्) अकालभवः [मृत्युः इक्ष्व]ाकुपदं न अस्पृशत् ॥४४

[अ]न्वयः। सः दुःखितं द्विजं मुहूर्त्तं क्षमस्व इति आश्वास्य वैवस्वतजिगीषया कौवेरं [यानं सस्]मार ॥४५

[अ]न्वयः। सः रघूद्वहः आत्तशस्त्रः (सन्) तत् अध्यास्य प्रस्थितः। तस्य पुरः गूढरूपा [सरस्वत]ी उच्चचार ॥४६

[अ]न्वयः। (हे) राजन् ! ते प्रजासु कश्चित् अपचारः प्रवर्त्तते, तम् अन्विष्य प्रश[मयेः, ततः] कृती भविष्यसि ॥४७

[व]सुधे, दशरथात् च्युता या त्वं रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता सती [शोचनीय]ासि ॥४३

[गोप्ता] रक्षको राघवस्तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय [...]। कुतः ? हि यस्मात् अकालभवो मृत्युरिक्ष्वाकूणां पदं राष्ट्रं न अस्पृशत्। [...]ऽपि यवीयान् न म्रियत इत्यर्थः ॥४४

[स] रामो दुःखितं द्विजं मुहूर्त्तं क्षमस्व इत्याश्वास्य वैवस्वतस्य यमस्यापि जिगीषया [जेतुमिच्छ]या कौवेरं यानं पुष्पकं सस्मार ॥४५

[स र]घूद्वहो रामः आत्तशस्त्रः सन् तत् पुष्पकमध्यास्य प्रस्थितः। अथ तस्य पुरो गूढ[रूपा ... ]ऽशरीरा वाक् उच्चचार उद्बभूव ॥४६

[हे र]ाजन् ! ते प्रजासु कश्चिदपचारो वर्णधर्मव्यतिरेकः प्रवर्त्तते। तमपचारमन्विष्य [...], ततः कृती कृतकृत्यो भवितासि भविष्यसि ॥४७

इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कञ्चिदैक्ष्वाकः तपस्यन्तमधोमुखम् ॥ ४९

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५०

तपस्यनधिकारित्वात् प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१

स तद्वक्त्रं हिमक्लिष्ट-किञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत् ॥ ५२

अन्वयः । इति आप्तवचनात् रामः वर्णविक्रियां विनेष्यन् वेगनिष्कम्पकेतुना प[त्रेण]
दिशः पपात ॥४८

अन्वयः । अथ ऐक्ष्वाकः धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् अधोमुखं त[पस्यन्तं]
कञ्चित् ददर्श ॥४९

अन्वयः । राज्ञा पृष्टनामान्वयः धूमपः सः आत्मानं सुरपदार्थिनं शम्बुकं नाम [शूद्रम्]
आचष्ट किल ॥५०

अन्वयः । तपसि अनधिकारित्वात् प्रजानाम् अघावहं तं शीर्षच्छेद्यम् परि[च्छिद्य]
नियन्ता शस्त्रम् आददे ॥५१

इत्याप्तवचनात् रामो वर्णविक्रियां वर्णापचारं विनेष्यन् अपनेष्यन् वेगेन निष्कम्[प]
पत्रेण वाहनेन पुष्पकेण । "पत्रं वाहनपक्षयोः" इत्यमरः । दिशः पपात [ग]
तः ॥४८

अथः इक्ष्वाकुवंशप्रभव ऐक्ष्वाको रामः "कोपधादण्" इत्यणि कृते "दाण्डिनाय[न]
इत्यादिनोकारलोपनिपातः । धूमेन पीयमानेन अभिताम्राक्षं वृक्षशाखावलम्बिनम[धोमुखं]
तपस्यन्तं तपश्चरन्तं कञ्चित् पुरुषं ददर्श ॥४९

राज्ञा नाम च अन्वयश्च तौ, पृष्टौ नामान्वयौ यस्य स तथोक्तः, धूमं पिबतीति धू[मपः]
"सुपि" इति योगविभागात् कप्रत्ययः । स पुरुष आत्मानं सुरपदार्थिनं स्वर्गार्थिनम्
प्रयोजनमपि पृष्ट इति ज्ञेयम् । शम्बुकं नाम शूद्रमाचष्ट बभाषे किल ॥५०

तपसि अनधिकारित्वात् प्रजानामघावहं दुःखावहं तंशूद्रं शीर्षच्छेद्यम् "शीर्षच्छेदा[द्यच्च]"
इति यत् प्रत्ययः । परिच्छिद्य निश्चित्य नियन्ता रघुवंशो रामः शस्त्रमाददे जग्राह ॥५१

कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम्।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३
रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४
कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम्।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५
तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना।
पश्चान्निववृते रामः प्राक् परासुर्द्विजात्मजः ॥ ५६

अन्वयः। सः ज्योतिष्कणाहतश्मश्रु तद्वक्त्रं हिमक्लिष्टकिञ्जल्कं पङ्कजम् इव, कण्ठनालात् अपातयत् ॥५२

अन्वयः। शूद्रः राज्ञा स्वयं कृतदण्डः (सन्) सतां गतिं लेभे, दुश्चरेण अपि स्वमार्गविलङ्घिना तपसा न (लेभे) ॥५३

अन्वयः। रघुनाथः अपि मार्गसन्दर्शितात्मना महौजसा अगस्त्येन, इन्दुना शरत्कालः इव संयुयुजे ॥५४

अन्वयः। कुम्भयोनिः पीतेन समुद्रेण आत्मनिष्क्रयम् इव, दत्तम् दिव्यपरिग्रहम् अलङ्कारं तस्मै ददौ ॥५५

अन्वयः। मैथिलीकण्ठनिर्व्यापारेण बाहुना तम् दधत् रामः पश्चात् निववृते, परासुः द्विजात्मजः प्राक् निववृते ॥५६

स रामो ज्योतिष्कणैः स्फुलिङ्गैराहतानि दग्धानि श्मश्रूणि यस्य तत्, तस्य वक्त्रं हिमक्लिष्टकिञ्जल्कं पङ्कजमिव कण्ठ एव नालं तस्मात् अपातयत् ॥५२॥

शूद्रः शम्बुको राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् सतां गतिं लेभे। दुश्चरेणापि स्वमार्गविलङ्घिना अनधिकारदुष्टेनेत्यर्थः, तपसा न लेभे। अत्र मनुः—'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' इति ॥५३

रघुनाथोऽपि मार्गसंदर्शितात्मना महौजसा अगस्त्येन इन्दुना शरत्काल इव संयुयुजे। सङ्गतः। इन्दावपि विशेषणं योज्यम्। रघुनाथेत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ॥५४

कुम्भयोनिरगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयमिव आत्ममोचनमूल्यमिव दत्तम्, अलङ्कारं परिगृह्यत इति व्युत्पत्त्या परिग्रहः। दिव्यानां परिग्रहः परिग्राह्य इत्यर्थः, तमलङ्कारं तस्मै रामाय ददौ ॥५५

मैथिलीकण्ठनिर्व्यापारेण बाहुना तमलङ्कारं दधत् रामः पश्चात् निववृते निवृत्तः। परासुर्मृतो द्विजात्मजः प्राक् रामात् पूर्वं निववृते ॥५६

तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः।
स्तुत्या निवर्त्तयामास त्रातुर्वैवस्वतादपि॥ ५७

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः।
मेघाः शस्यमिवाम्भोभिः अभ्यवर्षन्नुपायनैः॥ ५८

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि॥ ५९

उपशल्यनिविष्टैस्तैः चतुर्द्वारमुखी बभौ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः॥ ६०

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः।
अनन्यजानेः सैवासीत् यस्माज्जाया हिरण्मयी॥ ६१

अन्वयः। पुत्रसमागतः द्विजः वैवस्वतात् अपि त्रातुः तस्य पूर्वोदितां निन्दां स्तुत्या निवर्त्तयामास॥५७

अन्वयः। अध्वराय मुक्ताश्वं तं रक्षःकपिनरेश्वराः मेघाः अम्भोभिः शस्यम् इव, उपायनैः अभ्यवर्षन्॥५८

अन्वयः। निमन्त्रिताः महर्षयः भौमानि धिष्ण्यानि न, (किन्तु) ज्योतिर्मयानि अपि (धिष्ण्यानि) हित्वा दिग्भ्यः एनं अभिजग्मुः॥५९

अन्वयः। चतुर्द्वारमुखी अयोध्या उपशल्यनिविष्टैः तैः सद्यः सृष्टलोका पैतामही तनुः इव बभौ॥६०

अन्वयः। वैदेह्याः त्यागः अपि श्लाघ्यः, यस्मात् प्राग्वंशवासिनः अनन्यजानेः पत्युः हिरण्मयी सा एव जाया आसीत्॥६१

पुत्रसमागतः पुत्रेण सङ्गतो द्विजो वैवस्वतादन्तकादपि त्रातुः रक्षकस्य "भीत्रार्थानां भयहेतुः" इत्यपादानात् पञ्चमी। तस्य रामस्य पूर्वोदितां पूर्वोक्तां निन्दां स्तुत्या निवर्त्तयामास॥५७

अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवविभीषणादयो राजानश्च मेघा अम्भोभिः शस्यमिव उपायनैरभ्यवर्षन्॥५८

निमन्त्रिता आहूता महर्षयश्च भूम्याः सम्बन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न। "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः। किन्तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः॥५९

चत्वारि द्वाराणि एव मुखानि यस्याः सा चतुर्द्वारमुखी अयोध्या उपशल्येषु ग्रामान्तेषु निविष्टैः। "ग्रामान्त उपशल्यं स्यात्" इत्यमरः। तैर्महर्षिभिः सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुर्मूर्त्तिरिव बभौ॥६०

वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्यः एव। कुतः? यस्मात् प्राग्वंशः प्राचीनस्थूणः यज्ञ-

विधेरधिकसम्भारः ततः प्रववृते मखः।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः॥ ६२

अथ प्राचेतसोपज्ञं रामायणमितस्ततः।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ॥ ६३

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम्॥ ६४

अन्वयः। ततः विधेः अधिकसम्भारः मखः प्रववृते। यत्र क्रियाविघ्नाः राक्षसाः एव रक्षिणः आसन्॥ ६२

अन्वयः। अथ मैथिलेयौ कुशलवौ गुरुचोदितौ (सन्तौ) प्राचेतसोपज्ञं रामायणम् इतस्ततः जगतुः॥ ६३

अन्वयः। रामस्य वृत्तं, वाल्मीकेः कृतिः, तौ किन्नरस्वनौ, (अतएव) तत् किम् ? [येन] शृण्वतां मनः हर्तुम् अलं न स्याताम्॥ ६४

...विशेषः तथाविनः, नास्त्यन्या जाया यस्य तस्यानन्यजानेः। जायाया निङ् इति ...समासान्तो निङादेशः। पत्युः रामस्य हिरण्मयी सौवर्णी। "दाण्डिनायन—" आदि-...त्वेन निपातः। सा निजैव जाया पत्नी आसीत्। कविवाक्यमेतत्॥ ६१

ततो विधेः शास्त्रादधिकसम्भारोऽतिरिच्यमानपरिकरः मखः प्रववृते प्रवृत्तः। यत्र मखे, ...यन्त एभिरिति विघ्नाः प्रत्यूहाः। मखे यज्ञे। "यज्ञार्थे कविधानम्" इति कः। क्रियाविघ्ना अनुष्ठानविघातकाः राक्षसा एव रक्षिणो रक्षका आसन्॥ ६२

अथ मैथिलेयौ मैथिलीतनयौ। "स्त्रीभ्यो ढक्"। कुशलवौ गुरुणा वाल्मीकिना ...दितौ प्रेरितौ सन्तौ, प्राचेतसः वाल्मीकिः, उपज्ञायत इत्युपज्ञा, "आतश्चोपसर्गे" इति ...र्मणि अङ्प्रत्ययः। प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम्, प्राचेतसेनादौ ज्ञातमित्यर्थः। ...पज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः। "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंस-...त्वम्। अय्यते ज्ञायतेऽनेनेत्ययनम्, रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम्। ...पूर्वपदात् संज्ञायाम्" इति णत्वम् उत्तरायणमितिवत्। इतस्ततो जगतुः ...ऽगासिष्टाम्॥ ६३

रामस्य वृत्तं वर्ण्यं वस्त्विति शेषः। वाल्मीकेः कृतिः काव्यम् गेयमिति शेषः। तौ ...यकौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ ; पुनरिति शेषः। अतएव तत् किम् ? येन ...र्वेण तौ शृण्वतां मनो हर्तुमलं शक्तौ न स्याताम्। सर्वं सरसमित्यर्थः॥ ६४

रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातः निर्वातेव वनस्थली ॥ ६६
वयोवेशविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७
उभयोर्न तथा लोकः प्रावीण्येन विसिस्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८

अन्वयः । तज्ज्ञैः, निवेदितं तयोः रूपे गीते च माधुर्य्यं सानुजः राम कुतूहली (सन्) ददर्श शुश्राव च ॥ ६५

अन्वयः । तद्गीतश्रवणैकाग्रा अश्रुमुखी संसत् प्रातः हिमनिष्यन्दिनी निर्वाता वनस्थली इव बभौ ॥ ६६

अन्वयः । जनता वयोवेशविसंवादि तदा तयोः रामस्य च सादृश्यं प्रेक्ष्य, नाक्षिकम्पं व्यतिष्ठत् ॥ ६७

अन्वयः । लोकः उभयोः प्रावीण्येन तथा न विसिस्मिये, यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया ( विसिस्मिये ) ॥ ६८

ते जानन्तीति तज्ज्ञाः तैस्तज्ज्ञैरभिज्ञैर्निवेदितं तयोः कुशलवयोः रूपे आकारे गीते च माधुर्य्यं रामणीयकं सानुजो रामः कुतूहली सानन्दः सन् यथासंख्यं ददर्श शुश्राव च ॥ ६५

तयोर्गीतश्रवणे एकाग्रा आसक्ता अश्रुमुखी आनन्दादिति भावः । संसत् सभा प्रातः हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव बभौ शुशुभे । आनन्दपारवश्यान्निष्पन्दमास्ते इत्यर्थः ॥ ६६

जनता जनानां समूहः । "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः । वयोवेशाभ्यामेव विसंवादि विलक्षणं तदा तयोः कुशलवयो रामस्य च सादृश्यं प्रेक्ष्य नास्ति अक्षिकम्पो यस्मिन् कर्म्मणि तद् यथा तथा । नञर्थस्य नशब्दस्य बहुव्रीहिः । व्यतिष्ठत अतिष्ठत् । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । विस्मयादनिमिषमद्राक्षीदित्यर्थः ॥ ६७

लोको जन उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिस्मिये न विस्मितवान् यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया नैस्पृह्येण विसिस्मिये ॥ ६८

गेये को विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९

अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७०

स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥ ७१

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तान्तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२

अन्वयः । गेये कः नु वां विनेता, इयञ्च कस्य कवेः कृतिः इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिम् अशंसताम् ॥ ६९

अन्वयः । अथ सावरजः रामः प्राचेतसम् उपेयिवान् (सन्) देहम् आत्मनः उरीकृत्य राज्यम् अस्मै न्यवेदयत् ॥ ७०

अन्वयः । कारुणिकः स कविः रामाय तौ मैथिलेयौ तदात्मजौ आख्याय सीतायाः सम्परिग्रहं वव्रे ॥ ७१

अन्वयः । (हे) तात ! ते स्नुषा नः समक्षं जातवेदसि शुद्धा, (किन्तु) रक्षसः दौरात्म्यात् अत्रत्याः प्रजाः तां न श्रद्दधुः ॥ ७२

गेये गीते को नु वां युवयोर्विनेता शिक्षकः, नुशब्दः प्रश्ने, नु पृच्छायां वितर्के च इत्यमरः । इयञ्च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिम् आशंसताम् उक्तवन्तौ । विनेतारं कविञ्चेत्यर्थः । "गेये केन विनीतौ वाम्" इति पाठं वामिति ...र्थप्रतिपादकमव्ययं द्रष्टव्यम् । तथा चायमर्थः—केन पुंसा वां युवां गेये गीतविषये ...तौ शिक्षितौ । कर्म्मणि निष्ठाप्रत्ययः ॥ ६९

अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान् प्राप्तः सन् देहमात्मन उरीकृत्य ...मानं स्थापयित्वेत्यर्थः राज्यम् अस्मै प्राचेतसाय न्यवेदयत् समर्पितवान् ॥ ७०

करुणा प्रयोजनमस्य कारुणिको दयालुः । "प्रयोजनम्" इति ठञ् । "स्याद्दयालुः कारुणिकः" इत्यमरः । स कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतावाख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे ॥ ७१

हे तात ! ते स्नुषा सीता नोऽस्माकम् अक्ष्णोः समीपं समक्षम् । "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा । ...विश्वास इत्यर्थः । ...तु रक्षसो रावणस्य दौरात्म्यादत्रत्याः प्रजास्तां न श्रद्दधुः न विश्वस्तुः ॥ ७२

ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया॥ ७२

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव॥ ७४

अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये॥ ७५

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया।
ऋचेवोदर्चिषं सूर्य्यं रामं मुनिरुपस्थितः॥ ७६

अन्वयः। मैथिली स्वचारित्रम् उद्दिश्य ताः प्रत्याययतु। ततः पुत्रवतीम् एनां त्वद-ज्ञया प्रतिपत्स्ये॥ ७२

अन्वयः। राज्ञा इति प्रतिश्रुते (सति) मुनिः आश्रमात् जानकीं शिष्यैः स्वसिद्धिं नियमैः इव आनाययामास॥ ७४

अन्वयः। अथ काकुत्स्थः रामः अन्येद्युः प्रस्तुतप्रतिपत्तये पुरौकसः सन्निपात्य कविं आह्वाययामास॥ ७५

अन्वयः। अथ असौ मुनि स्वरसंस्कारवत्या ऋचा उदर्चिषं सूर्य्यम् इव पुत्राभ्याम् (उपलक्षितया) सीतया रामं उपस्थितः॥ ७६

मैथिली स्वचारित्रम् उद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु। विश्वासस्य बुद्धि-त्वात्। "यो गमिरबोधने" इति इणो गम्यादेशो नास्ति। ततोऽनन्तरं पुत्रवतीम् एनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये॥ ७२

राज्ञा इति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यैः प्रयोज्यैः स्वसिद्धिं सा-सिद्धिं नियमैस्तपोभिरिव आनाययामास॥ ७४

अथ काकुत्स्थो रामः अन्येद्युरन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्य्यानुसन्धाना-पुरौकसः पौरान् सन्निपात्य मेलयित्वा कविं वाल्मीकिमाह्वाययामास आकारयामास॥ ७५

अथ स्वर उदात्तादिः संस्कारः शब्दशुद्धिः तद्वत्या ऋचा सावित्र्योदर्चि-सूर्य्यमिव, पुत्राभ्यामुपलक्षितया सीतया करणेन उदर्चिषं रामम् असौ मुनिरुपस्थित उप-तस्थे॥ ७६

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७

जनास्तदालोकपथात् प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८

तां दृष्टिविषये भर्त्तुः मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से ! स्ववृत्ते लोकमित्यशात् ॥ ७९

अथ वाल्मीकिशिष्येण पुण्यमावर्ज्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८०

वाङ्मनःकर्म्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि ! मामन्तर्ह्वातुमर्हसि ॥ ८१

अन्वयः । काषायपरिवीतेन स्वपदार्पितचक्षुषा शान्तेन वपुषा एव सा शुद्धा इति अन्व-
[मीयत] ॥ ७७

अन्वयः । तदालोकपथात् प्रतिसंहृतचक्षुषः ते सर्वे जनाः, फलिताः शालयः इव
[अवाङ्]मुखाः तस्थुः ॥ ७८

अन्वयः । आस्थितविष्टरः मुनिः (हे) वत्से ! भर्त्तुः दृष्टिविषये स्ववृत्ते लोकं निःसंशयं
[कुरु इ]ति ताम् अशात् ॥ ७९

अन्वयः । अथ वाल्मीकिशिष्येण आवर्ज्जितं पुण्यं पयः आचम्य सीता सत्यां सरस्वतीं
[उदीरया]मास ॥ ८०

अन्वयः । वाङ्मनःकर्म्मभिः पत्यौ मे व्यभिचारः न यथा, तथा (हे) विश्वम्भरे ! देवि
[माम् अ]न्तर्ह्वातुम् अर्हसि ॥ ८१

[क]षायेण रक्तं काषायम् "तेन रक्तं रागात्" इत्यण् । तेन परिवीतेन संवृतेन
[स्वपदा]र्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वी इत्यन्वमीयत
[अनुमि]ता ॥ ७७

[तदा]: सीतायाः कर्म्मण आलोकपथात् दर्शनमार्गात् प्रतिसंहृतचक्षुषो निवर्तितदृष्टयः
[सर्वे ज]नाः फलिताः शालय इव अवाङ्मुखा अवनतमुखाः तस्थुः ॥ ७८

[आ]स्थितविष्टरोऽधिष्टितासनो मुनिः, हे वत्से ! भर्तुर्दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते
[ल]ोकं निःसंशयं कुरु इति तां सीतामशात् शास्ति स्म ॥ ७९

[अथ] वाल्मीकिशिष्येण आवर्जितं दत्तं पुण्यं पय आचम्य सीता सत्यां सरस्वतीं वाच-
[मुदीरया]मास उच्चारयामास ॥ ८०

[वाङ्]मनःकर्म्मभिः पत्यौ विषये मे व्यभिचारः स्खालित्यं न यथा, नास्ति यदि. तथा
[विश्व]ं बिभर्त्तीति विश्वम्भरा भूमिः । "संज्ञायां भृतृ—" इत्यादिना खच्प्रत्ययः; "अरु-

एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद्भुवः।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी।
समुद्ररशना साक्षात् प्रादुरासीद्वसुन्धरा ॥ ८३

सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम्।
मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ॥ ८४

धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः।
गुरुः विधिबलापेक्षी शमयामास धन्विनः ॥ ८५

अन्वयः। साध्व्या तया एवम् उक्ते (सति) सद्योभवात् भुवः रन्ध्रात् शातह्रदं ज्योतिः इव, प्रभामण्डलम् उद्ययौ ॥ ८२

अन्वयः। तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी समुद्ररशना साक्षात् वसुन्धरा प्रादुरासीत् ॥ ८३

अन्वयः। सा भर्तृप्रणिहितेक्षणां सीताम् अङ्कम् आरोप्य तस्मिन् (भर्तरि) मा मेति व्याहरति (सति) एव पातालं अभ्यगात् ॥ ८४

अन्वयः। विधिबलापेक्षी गुरुः सीताप्रत्यर्पणैषिणः धन्विनः तस्य धरायां संरम्भं शमयामास ॥ ८५

द्विषत्—" इत्यादिना सुमागमः, हे विश्वम्भरे! देवि! माम् अन्तर्धातुं गर्भे वासयितुम् अर्हसि ॥ ८१

साध्व्या पतिव्रतया तया सीतया एवमुक्ते सति सद्योभवाद्भुवो रन्ध्रात् शातह्रदं ज्योतिरिव प्रभामण्डलमुद्ययौ ॥ ८२

तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुषी आसीना समुद्ररशना समुद्रमेखला साक्षात्, वसूनि धारयतीति वसुन्धरा भूमिः, "खचि ह्रस्वः" इति ह्रस्वः। प्रादुरासीत् ॥ ८३

सा वसुन्धरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीतामङ्कमारोप्य तस्मिन् भर्तरि रामे मा इति मा हरेति व्याहरति वदत्येव व्याहरन्तमनादृत्येत्यर्थः, "षष्ठी चानादरे" इति सप्तमी, पातालमभ्यगात् ॥ ८४

सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य धन्विन आत्तधनुषस्तस्य रामस्य धरायां विषये संरम्भं विधिबलापेक्षी दैवशक्तिदर्शी गुरुर्वशिष्ठः शमयामास। अवश्यम्भावी विधिरिति भावः ॥ ८५

ऋषीन् विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान्।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः॥ ८६
युधाजितश्च सन्देशात् स देशं सिन्धुनामकम्।
ददौ दत्तप्रभावाय भरताय भृतप्रजः॥ ८७
भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम्।
आतोद्यं ग्राहयामास समत्याजयदायुधम्॥ ८८
स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात् पुनः॥ ८९
अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवौ।
शासनाद् रघुनाथस्य चक्रे कारापथेश्वरौ॥ ९०

[अन्]वयः। रामः यज्ञान्ते पुरस्कृतान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः [निदधे]॥ ८६

[अन्]वयः। भृतप्रजः सः युधाजितः सन्देशात् सिन्धुनामकं देशं दत्तप्रभावाय भरताय [ददौ]॥ ८७

[अन्]वयः। तत्र भरतः युधि गन्धर्वान् निर्जित्य केवलम् आतोद्यं ग्राहयामास, आयुधं [समत्या]जयत्॥ ८८

[अन्]वयः। सः अभिषेकार्हौ तक्षपुष्कलौ (नाम) पुत्रौ तदाख्ययोः राजधान्योः अभि[षिच्य पु]नः रामान्तिकम् अगात्॥ ८९

[अन्]वयः। लक्ष्मणः अपि रघुनाथस्य शासनात् अङ्गदं चन्द्रकेतुं च आत्मसम्भवौ कारा[पथेश्वरौ] चक्रे॥ ९०

[...] यज्ञान्ते पुरस्कृतान् पूजितान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः [...]र्निदधे॥ ८६

[...] भृतप्रजः स रामो युधाजितो भरतमातुलस्य सन्देशात् सिन्धुनामकं देशं दत्त[...]दत्तैश्वर्याय. रामेणेति शेषः, भरताय ददौ॥ ८७

[...]सिन्धुदेशे भरतोऽपि युधि गन्धर्वान् निर्जित्य केवलमेकम् आतोद्यं वीणाम्। "ततं [...] वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्। [...]दं वाद्यं वादित्रातोद्यनामकम्॥" इत्यमरः। ग्राहयामास, आयुधं समत्याजयत्[...]न्। ग्रहित्यज्योरण्यन्तयोर्हि कर्मकत्वं नित्यमित्यनुसन्धेयम्॥ ८८

[...]नः, अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः तक्षपुष्कलाख्ययोरित्यर्थः [...]पुष्कलावत्यां तक्षं तक्षशिलायामिति राजधान्योर्नगर्योः अभिषिच्य पुनः रामान्तिकम् [...] ८९

इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां निवापान् विदधुः क्रमात् ॥ ९१

उपेत्य मुनिवेशोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्व शासनात् परमेष्ठिनः ॥ ९३

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापात् रामसन्दर्शनार्थिनः ॥ ९४

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ ९५

अन्वयः। इति आरोपितपुत्राः ते जनेश्वराः भर्तृलोकप्रपन्नानां जननीनां क्रमात् निवापान् विदधुः ॥९१

अन्वयः। अथ कालः मुनिवेशः (सन्) उपेत्य राघवं प्रोवाच। रहःसंवादिनौ आवां यः पश्येत् तं त्यजेः इति ॥९२

अन्वयः। स तथेति प्रतिपन्नाय नृपाय विवृतात्मा ( सन् ) परमेष्ठिनः शासनात् दिवम् अध्यास्व ( इति ) आचख्यौ ॥९३

अन्वयः। द्वाःस्थः लक्ष्मणः विद्वान् अपि रामसन्दर्शनार्थिनः दुर्वाससः शापात् भीतः ( सन् ) तयोः समयम् अभिनत् ॥९४

अन्वयः। योगवित् स सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनः भ्रातुः प्रतिज्ञाम् अवितथां चकार ॥९५

लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनादङ्गदं चन्द्रकेतुञ्च तदाख्यावात्मसम्भवौ कारापथो नाम देशः तस्येश्वरौ चक्रे ॥९०

इत्यारोपितपुत्राः ते जनेश्वरा रामादयो भर्तृलोकप्रपन्नानां स्वर्यातानां क्रमात् निवापान् श्राद्धादीन् विदधुः चक्रुः ॥९१

अथ कालोऽन्तको मुनिवेशः सन् उपेत्य राघवं प्रोवाच, किम् ? इत्याह, रहःसंवादिनौ सम्भाषिणौ आवां यः पश्यत् रहस्यभङ्गं कुर्यादित्यर्थः। तं त्यजेरिति ॥९२

स कालस्तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजस्वरूपः सन् परमेष्ठिनो ब्रह्मणः शासनाद्दिवमध्यास्व इत्याचख्यौ ॥९३

द्वाःस्थो द्वारि नियुक्तो लक्ष्मणो विद्वानपि पूर्वश्लोकोक्तं जानन्नपि रामसन्दर्शनार्थिनो दुर्वाससो मुनेः शापाद्भीतः सन् तयोः कालरामयोः समयं संवादम् अभिनत् विभेद ॥९४

योगविद् योगमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनो भ्रातुः प्रतिज्ञाम् अवितथां सत्यां चकार ॥९५

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥ ९६

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ९७

उदक् प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः।
अन्वितः पतिवात्सल्याद् गृहवर्जमयोध्यया ॥ ९८

जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः।
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ९९

अन्वयः। आत्मचतुर्भागे तस्मिन् प्राक् नाकम् अधितस्थुषि (सति) राघवः भुवि त्रिपात् धर्मः इव शिथिलं तस्थौ ॥९६

अन्वयः। स्थिरधीः सः रिपुनागाङ्कुशं कुशं कुशावत्यां निवेश्य सूक्तैः सतां जनिताश्रुलवं लवं शरावत्यां (निवेश्य) सानुजः अग्निपुरःसरः (सन्) पतिवात्सल्यात् गृहवर्ज्जम् अयोध्यया अन्वितः उदक् प्रतस्थे ॥९७॥९८

अन्वयः। चित्तज्ञाः हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिः अभिवृष्टां तस्य पदवीं जगृहुः ॥९९

चतुर्थो भागश्चतुर्भागः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत्, आत्मचतुर्भागे तस्मिन् लक्ष्मणे प्राङ्नाकमधितस्थुषि पूर्वं स्वर्गं जग्मुषि सति राघवो रामः, भुवि त्रिपाद्धर्म इव शिथिलं तस्थौ। पादविकलो हि शिथिलं तिष्ठतीति भावः। त्रेतायां धर्मस्त्रिपादि-त्युक्तम्। पादश्चतुर्थांशः। अङ्घ्रिश्च ध्वन्यते। "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः। त्रयः पादा यस्यासौ त्रिपात्। "संख्यासु पूर्वस्य" इत्यकारलोपः समासान्तः ॥९६

रिपुनागाङ्कुशम्। स्थिरधीः स रामः रिपव एव नागा गजास्तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्य्यां निवेश्य स्थापयित्वा, सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा येन तं लवं लवाख्यं पुत्रम्। "लवो लेशे विलासे च छेदने रामनन्दने" इति विश्वः। शरावत्यां पुर्य्याम्। "शरादीनाञ्च" इति शरकुशशब्दयोर्दीर्घः। निवेश्य सानुजो-ऽग्निपुरःसरः सन् पत्यौ भर्त्तरि वात्सल्यादनुरागात् गृहान् वर्ज्जयित्वा गृहवर्ज्जम्। "द्वितीयायाञ्च" इति णमुल्। अयं क्वचिदपरीक्षायामपीष्यते। 'अनुदात्त' पदमेकवर्ज्जम्' इत्येकवर्ज्जमिति सापेक्षतया व्याख्यातत्वात्। परीक्षा त्वरा। अयोध्यया अन्वितोऽनुगत उदक् प्रतस्थे ॥९७—९८

चित्तज्ञा हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिरभिवृष्टां तस्य रामस्य पदवीं जगृहुः। तेऽप्यनुजग्मुरित्यर्थः ॥९९

उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥ १००

यद्गोप्रतरकल्पोऽभूत् संमर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥ १०२

निर्वर्त्त्यैवं दशमुखशिरश्छेदकार्य्यं सुराणां
विष्वक्सेनः स्वतनुमविशत् सर्व्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयञ्चोभयं स्थापयित्वा
कीर्त्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३

अन्वयः। उपस्थितविमानेन भक्तानुकम्पिना तेन अनुयायिनां सरयूः त्रिदिवनिःश्रे[णिः]
चक्रे ॥१००

अन्वयः। तत् तत्र मज्जतां संमर्दः गोप्रतरकल्पः अभूत्, अतः तदाख्यया पावनं ती[र्थं]
भुवि पप्रथे ॥१०१

अन्वयः। विभुः सः विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु (सत्सु) त्रिदशीभूतपौरा[णां]
स्वर्गान्तरम् अकल्पयत् ॥१०२

अन्वयः। विष्वक्सेनः एवं सुराणां दशमुखशिरश्छेदकार्य्यं निर्व्वर्त्य लङ्का[नाथं]
पवनतनयं च उभयं कीर्त्तिस्तम्भद्वयम् इव दक्षिणे गिरौ च उत्तरे (गिरौ) च स्थापयि[त्वा]
सर्व्वलोकप्रतिष्ठां स्वतनुम् अविशत् ॥१०३

उपस्थितं प्राप्तं विमानं यस्य तेन, भक्ताननुकम्पत इति भक्तानुकम्पिना तेन रामेण [अनु]यायिनां सरयूस्त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे। 'निःश्रेणिस्त्वधिरोहणी' इत्यमरः ॥१००

यद्यस्मात् तत्र सरय्वां मज्जतां सम्मर्दः गोप्रतरो गोप्रतरणं तत्कल्पः अभूत्। [अत]स्तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे ॥१०१

विभुः प्रभुः स रामो विबुधानामंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्त्तिषु सत्सु, त्रिदशी[भा]वमूयं गता ये पौरास्तेषां नूतनसुराणां स्वर्गान्तरमकल्पयत् ॥१०२

विष्वक्सेनः विष्णुरेवं सुराणां दशमुखशिरश्छेदकार्य्यं निर्वर्त्त्यं निष्पाद्य, लङ्कानाथं विभीषणं पवनतनयं हनूमन्तञ्चोभयं कीर्त्तिस्तम्भद्वयमिव दक्षिणे गिरौ चित्रकूटे [च] गिरौ हिमवति च स्थापयित्वा, सर्वलोकप्रतिष्ठां, स्वतनुं स्वमूर्त्तिम् अविशत् ॥१०३

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ
रघुवंशे महाकाव्ये श्रीरामस्वर्गारोहणं नाम
पञ्चदशः सर्गः ।

# षोडशः सर्गः।

---

अथेतरे सप्त रघुप्रवीराः ज्येष्ठं पुरोजन्मतया गुणैश्च।
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि॥ १

ते सेतुवार्त्तागजबन्धमुख्यैः अभ्युच्छ्रिताः कर्म्मभिरप्यवन्ध्यैः।
अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः॥ २

चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम्।
सुरद्विपानामिव सामयोनिः भिन्नोऽष्टधा विप्रससार वंशः॥ ३

अन्वयः। अथ इतरे सप्त रघुप्रवीराः पुरोजन्मतया गुणैः च ज्येष्ठं कुशं रत्नविशेषभाजं चक्रुः, सौभ्रात्रम् कुलानुसारि हि॥ १

अन्वयः। सेतुवार्त्तागजबन्धमुख्यैः अवन्ध्यैः कर्म्मभिः अभ्युच्छ्रिताः अपि ते अन्योन्यदेशप्रविभागसीमां वेलां समुद्राः इव न व्यतीयुः॥ २

अन्वयः। चतुर्भुजांशप्रभवः दानप्रवृत्तेः अनुपारतानां तेषां सः वंशः सामयोनिः (दानप्रवृत्तेः अनुपारतानां) सुरद्विपानां (वंशः) इव, अष्टधा भिन्नः (सन्) विप्रससार॥ ३

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः।
तवारविन्दाक्ष! पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत्॥

अथ रामनिर्वाणानन्तरमितरे लवादयः सप्त रघुप्रवीराः पुरः पूर्वं जन्म यस्य तस्य भावस्तत्ता तया, गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं तत्तच्छ्रेष्ठवस्तुभागिनं चक्रुः। तदुक्तम्—'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति। तथाहि—सुभ्रातॄणां भावः सौभ्रात्रम्, 'हायनान्त—' इत्यादिना युवादित्वादन् प्रत्ययः। एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि॥ १

सेतुर्ज्जलबन्धः। वार्त्ता कृषिगोरक्षणादिः। 'वार्त्ता कृष्याद्युदन्तयोः' इति विश्वः। गजबन्धः वारीभ्यो गजग्रहणम्, ते मुख्यं प्रधानं येषां तैरवन्ध्यैः सफलैः कर्म्मभिरभ्युच्छ्रिताः अतिसमृद्धा अपीत्यर्थः। प्रविभज्यन्त इति प्रविभागाः, अन्योन्यदेशप्रविभागानां या सीमा तां वेलां समुद्रा इव न व्यतीयुर्नातिचक्रमुः। अत्र कामन्दकः—"कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम्। अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्द्धयेत्" इति॥ २

चतुर्भुजो विष्णुः, तस्यांशा रामादयः, ते प्रभवाः कारणानि यस्य स तथोक्तः, दानं त्यागो मदश्च। "दानं गजमदे त्यागे" इति विश्वः। प्रवृत्तिः व्यापारः प्रवाहश्च दानप्रवृत्तेरनुपारतानां

अथार्द्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः।
कुशः प्रवासस्थकलत्रवेशाम् अदृष्टपूर्वां वनितामपश्यत् ॥ ४
सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात् पुरुहूतभासः।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५
अथानपोढ़ार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम्।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्द्धविसृष्टतल्पः ॥ ६
लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ७

अन्वयः। अथ अर्द्धरात्रे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः कुशः प्रवासस्थकलत्रवेशाम् अदृष्टपूर्व्वां वनिताम् अपश्यत् ॥ ४

अन्वयः। सा साधुसाधारणपार्थिवर्द्धेः पुरुहूतभासः परेषां जेतुः बन्धुमतः तस्य ( कुशस्य ) पुरस्तात स्थित्वा जयशब्दपूर्व्वम् ( यथा तथा ) अञ्जलिं बबन्धः ॥ ५

अन्वयः। अथ सविस्मयः पूर्व्वार्द्धविसृष्टतल्पः दाशरथेः तनूजः अनपोढ़ार्गलम् अपि अगारम्, आदर्शतलं छायाम् इव, प्रविष्टां (-तां ) प्रोवाच ॥ ६

अन्वयः। सावरणे अपि गेहे लब्धान्तरा, योगप्रभावश्च ते न लक्ष्यते, मृणालिनी हैमम् उपरागम् इव, अनिर्वृतानाम् आकारं बिभर्षि च। ( किञ्च ) ( हे ) शुभे ! त्वं का, कस्य वा परिग्रहः, ते मदभ्यागमकारणं वा किम् ? वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति मत्वा आचक्ष्व ॥ ७—८

तेषां कुशलवादीनां स वंशः सामयोनिः सामवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंशः इव अष्टधा भिन्नः सन् विप्रससार विस्तृतोऽभूत्। सामयोनिरित्यत्र पालकाप्यः—"सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात समुत्पेतुर्मतङ्गजाः॥" इति ॥ २

अथ अर्द्धं रात्रेरर्द्धरात्रः, "अर्द्धं नपुंसकम्" इत्येकदेशिसमासः। "अहःसर्व्वैकदेशसंख्यापुण्याच्च रात्रेः" इति समासान्तोऽच् प्रत्ययः। "रात्राह्नाहाः पुंसि" इति नियमात् पुंस्त्वम्। अर्द्धरात्रे निशिथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः कुशः प्रवासस्थकलत्रवेषां प्रोषितभर्त्तृकावेषाम्, अदृष्टा पूर्व्वमित्यदृष्टपूर्व्वा ताम् सुप्सुपेति समासः वनितामपश्यत् ॥ ४

सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभास इन्द्रतेजसः परेषां शत्रूणां जेतुर्बन्धुमतस्तस्य कुशस्य पुरस्तात् स्थित्वा जयशब्दपूर्व्वं यथा तथा अञ्जलिं बबन्ध ॥ ५

अथ सविस्मयः पूर्व्वार्द्धेन शरीरपूर्व्वभागेन विसृष्टतल्पस्त्यक्तशय्यो, दाशरथेस्तनूजः कुशः अनपोढ़ार्गलम् अनुद्घाटितविष्कम्भमपि। 'तद्विष्कम्भेऽर्गलं न ना' इत्यमरः। अगारम् आदर्शतलं छायामिवम् प्रविष्टां तां वनितां प्रोवाच अवदत् ॥ ६

का त्वं शुभे ! कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ८
तमब्रवीत् सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः सम्प्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥ ९
वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्य्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥ १०
विशीर्णतल्पाट्टशतो निवेशः पर्य्यस्तशालः प्रभुणा विना मे ।
विडम्बयत्यस्तनिमग्नसूर्य्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११

अन्वयः । सा तम् अब्रवीत् अनवद्या या स्वपदोन्मुखेन गुरुणा नीतपौरा, (हे) राजन् ! मां सम्प्रति वीतनाथाम् तस्याः पुरः अधिदेवतां जानीहि ॥९

अन्वयः । सा अहं सौराज्यबद्धोत्सवया विभूत्या वस्वौकसाराम् अभिभूय समग्रशक्तौ सूर्य्यवंश्ये त्वयि सति करुणां अवस्थां प्रपन्ना ॥ १०

अन्वयः । विशीर्णतल्पाट्टशतः पर्य्यस्तशालः प्रभुणा विना मे निवेशः अस्तनिमग्नसूर्य्यम् उग्रानिलभिन्नमेघं दिनान्तं विडम्बयति ॥ ११

युग्मम् । सावरणेऽपि गेहे लब्धान्तरा लब्धावकाशा त्वमिति शेषः । योगप्रभावस्य ते न वस्यते । मृणालिनी हैमं हिमकृतमुपरागमुपद्रवमिव अनिर्वृतानां दुःखितानामाकारं बिभर्षि च, न हि योगिनां दुःखमस्तीति भावः । किञ्च, हे शुभे ! त्वं का, कस्य वा परिग्रहः पत्नी, ते तव मदभ्यागमे कारणं वा किम् ? वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिर्यस्य तत् तथाभूतं मत्वा आचक्ष्व ॥ ७—८

सा वनिता तु कुशमब्रवीत् । अनवद्या अदोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन गुरुणा त्वत्पित्रा नीतपौरा, हे राजन् मां सम्प्रति वीतनाथां अनाथां तस्याः पुरो नगर्य्या अयोध्याया अधिदेवतां जानीहि ॥ ९

सा अहं सौराज्येन राजन्वत्त्वा हेतुना बद्धोत्सवया विभूत्या वस्वौकसारा अलका पुरी । 'अलका पुरी वस्वौकसारा स्यात्' इति कोशः । अथवा मानसोत्तरशैलशिखरवर्त्तिनी शक्रनगरी । 'वस्वौकसारा शक्रस्य' इति विष्णुपुराणात् । तामभिभूय तिरस्कृत्य समग्रशक्तौ त्वयि सूर्य्यवंश्ये सति करुणामवस्थां दीनां दशां प्रपन्ना प्राप्ता ॥ १०

तल्पानि अट्टालिकाः । 'तल्पं शय्याट्टदारेषु' इत्यमरः । अट्टानि क्षौमभेदाः । "अट्टं क्षौमे च शुष्के च क्षौमेऽस्त्र्यर्थेऽट्टहासान्तरे" इति विश्वः । विशीर्णानि तल्पानामट्टानां च शतानि यस्य स तथोक्तः । 'विशीर्णकल्पाट्टशतो निवेशः' इति वा पाठः । अट्टाः क्षौमाः 'स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः । ईषत् असमाप्तं विशीर्णानि विशीर्णकल्पानि अट्टशतानि यस्य स

निशासु भास्वत्कलनूपुराणां यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥१२

आस्फालितं यत् प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥१३

वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥१४

सोपानमार्गेषु च येषु रामाः निक्षिप्तवत्यश्चरणान् सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे ॥१५

अन्वयः । निशासु भास्वत्कलनूपुराणां अभिसारिकाणां, यः राजपथः, सञ्चरः अभूत्, नदन्मुखोल्काविचितामिषाभिः शिवाभिः स वाह्यते ॥१२

अन्वयः । यत् अम्भः प्रमदाकराग्रैः आस्फालितं (सत्) मृदङ्गधीरध्वनिम् अन्वगच्छत् तत् दीर्घिकाणां (अम्भः) इदानीं वन्यैः महिषैः शृङ्गाहतं ( सत् ) क्रोशति ॥१३

अन्वयः । यष्टिनिवासभङ्गात् वृक्षेशया मृदङ्गशब्दापगमात् अलास्याः दवोल्काहतशेषबर्हाः क्रीडामयूराः वनबर्हिणत्वं प्राप्ताः ॥१४

अन्वयः । येषु सोपानमार्गेषु रामाः सरागान् चरणान् निक्षिप्तवत्यः, तेषु मे सद्यः हतन्यङ्कुभिः व्याघ्रैः अस्रदिग्धं पदं निधीयते ॥१५

तयोक्तः, पर्य्यस्तशालः स्रस्तप्राकारः । "प्राकारो वरणः शालः" इत्यमरः प्रभुणा स्वामिना विना एवम्भूतो मे निवेशो निवेशनम् अस्तनिमग्नसूर्य्यं अस्ताद्रिक्षीणार्कम् उग्रानिलेन भिन्नं मेघं दिनान्तं विडम्बयति अनुकरोति ॥११

निशासु भास्वन्ति दीप्तिमन्ति कलानि अव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम् । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः । यो राजपथः सञ्चरत्यनेनेति सञ्चरः सञ्चारसाधनम् अभूत् । "गोचरसञ्चर—" इत्यादिना घप्रत्ययान्तो निपातः । नदत्सु मुखेषु या उल्कास्ताभिर्विचितामिषाभिरन्विष्टमांसाभिः शिवाभिः क्रोष्ट्रीभिः स राजपथो वाह्यते गम्यते । वहेरन्तो वहिधातुरस्तीत्युपदेशः ॥१२

यदम्भः प्रमदाकराग्रैरास्फालितं ताडितं सत् जलक्रीडास्विति शेषः । मृदङ्गानां धीरध्वनिः तम् अन्वगच्छत् अन्वकरोत् । तद्दीर्घिकाणां अम्भः इदानीं वन्यैर्महिषैः वदं नि: शृङ्गैर्विषाणैराहतं सत् क्रोशति । न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः ॥१३

यष्टिरेव निवासः स्थानं तस्य भङ्गात् वृक्षे शेरत इति वृक्षेशयाः । "अधिकरणे शेते" इत्यच् प्रत्ययः । "शयवासवासिष्वकालात्" इत्यलुक् सप्तम्याः । मृदङ्गशब्दानां अपगमात् अलास्या नृत्यशून्याः दवोऽरण्यवह्निः । "दवदावौ वनारण्यवह्नी" इत्यमरः । तस्य उल्काभिः स्फुलिङ्गैर्हृतेभ्यः शेषाणि बर्हाणि येषां ते क्रीडामयूरा वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ॥१४

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १६

स्तम्भेषु योषित्प्रतियातनानाम् उत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥१७

कालान्तरश्यामसुधेषु नक्तम् इतस्ततो रूढ़तृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः ॥१८

आवर्ज्य शाखाः सदयञ्च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥१९

अन्वया । पद्मवनावतीर्णाः करेणुभिः दत्तमृणालभङ्गाः चित्रद्विपाः नखाङ्कुशाघातविभिन्नकुम्भाः (सन्तः) संरब्धसिंहप्रहृतं वहन्ति ॥१६

अन्वयः । उत्क्रान्तवर्णक्रमधूसराणां स्तम्भेषु योषित्प्रतियातनानां फणिभिः विमुक्ताः निर्मोकपट्टाः सङ्गात् स्तनोत्तरीयाणि भवन्ति ॥१७

अन्वयः । कालान्तरश्यामसुधेषु इतस्ततः रूढ़तृणाङ्कुरेषु हर्म्येषु नक्तं मुक्तागुणशुद्धयः अपि (ये) मूर्च्छन्ति स्म, ते एव चन्द्रपादाः न मूर्च्छन्ति ॥१८

अन्वयः । (किञ्च) विलासिनीभिः सदयं शाखाः आवर्ज्य यासां पुष्पाणि उपात्तानि ताः मदीयाः उद्यानलताः, वन्यैः पुलिन्दैः इव वानरैः क्लिश्यन्ते ॥१९

किञ्च, येषु सोपानमार्गेषु रामा रमण्यः सरागम् लाक्षारसार्द्रान् चरणान् निचिक्षिपुः, तेषु मे मम मार्गेषु सद्यो हतन्यङ्कुभिर्मारितमृगैर्व्याघ्रैरसृग्दिग्धं रुधिरलिप्तं पदं निधीयते ॥१५

पद्मवनमवतीर्णाः प्रविष्टाः तथा लिखिता इत्यर्थः । करेणुभिः करिणीभिः चित्रगताभिरेव । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । दत्तमृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः नखा एवाङ्कुशाः तेषाम् आघातैर्विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६

उत्क्रान्तवर्णक्रमा विशीर्णवर्णविन्यासास्ताश्च धूसराश्च यास्तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभिर्विमुक्ता निर्मोकाः कञ्चुका एव पट्टाः । "समौ कञ्चुकनिर्मोकौ" इत्यमरः । सङ्गात् सक्तत्वात् स्तनोत्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ॥१७

कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिनवर्णेषु इतस्ततो रूढ़तृणाङ्कुरेषु हर्म्येषु नक्तं रात्रौ मुक्तागुणानां शुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशा अपि ततः पूर्वं ये मूर्च्छन्ति स्म त एव चन्द्रपादाश्चन्द्ररश्मयः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । न मूर्च्छन्ति न प्रतिफलन्तीत्यर्थः ॥१८

रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवापि।
तिरस्क्रियन्ते कृमितन्तुजालैः विच्छिन्नधूमप्रसरा गवाक्षाः॥ २०
बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति।
उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि॥२१
तदर्हसीमां वसतिं विसृज्य मामभ्युपेतुं कुलराजधानीम्।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्त्तिम्॥२२
तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत् प्राग्रहरो रघूणाम्।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव॥ २३

अन्वयः। रात्रौ अनाविष्कृतदीपभासः दिवापि कान्तामुख-श्रीवियुता विच्छिन्नधूमप्रसरा गवाक्षाः कृमितन्तुजालैः तिरस्क्रियन्ते॥२०

अन्वयः। बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गम् अनाप्नुवन्ति, सरयूजलानि शून्यानि उपान्तवानीरगृहाणि दृष्ट्वा दूये॥२१

अन्वयः। ते गुरुः तां कारणमानुषीं तनुं हित्वा परमात्ममूर्त्तिं यथा, तत् इमां वसतिं विसृज्य कुलराजधानीम् माम् अभ्युपेतुम् अर्हसि॥२२

अन्वयः। रघूणां प्राग्रहरः तस्याः प्रणयं प्रतीतः (सन्) तथा इति प्रत्यग्रहीत्, पूः अपि अभिव्यक्तमुखप्रसादा (सती) शरीरबन्धेन तिरोबभूव॥२३

किञ्च, विलासिनीभिः सदयं शाखा लतावयवाम् आवर्ज्य आनमय्य यासां लतानां पुष्पाणि उपात्तानि गृहीतानि, ता मदीया उद्यानलताः वन्यैः पुलिन्दैः म्लेच्छविशेषैरिव वानरैः उभयैरपीत्यर्थः, क्लिश्यन्ते पीड्यन्ते। क्लिश्नातेः कर्मणि लट्। "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः॥१९

रात्रावनाविष्कृतदीपभासः दीपप्रभाशून्या इत्यर्थः, दिवापि दिवसेऽपि कान्तामुखानां श्रिया कान्त्या वियुता रहिताः विच्छिन्नो नष्टो धूमप्रसरो येषां ते गवाक्षाः कृमितन्तुजालैः लूतातन्तुवितानैस्तिरस्क्रियन्ते छाद्यन्ते॥२०

"बलिः पूजोपहारः स्यात्" इति शाश्वतः। बलिक्रियावर्जितानि सैकतानि येषां तानि स्नानीयानि स्नानसाधनानि चूर्णादीनि। "कृत्यल्युटो बहुलम्" इति करणेऽनीयर् प्रत्ययः, स्नानीयसंसर्गं अनाप्नुवन्ति। सरयूजलानि शून्यानि रिक्तानि उपान्तेषु वानीरगृहाणि येषां तानि च दृष्ट्वा दूये परितप्ये॥२१

तत् तस्मात् इमां वसतिं कुशावतीं विसृज्य कुलराजधानीम् अयोध्यां माम् अभ्युपेतुम् अर्हसि। कथमिव? ते गुरुः पिता रामस्तां प्रसिद्धां कारणवशात् मानुषीं तनुं मानुषमूर्त्तिं हित्वा परमात्ममूर्त्तिं यथा विष्णुमूर्त्तिमिव॥२२

रघूणां प्राग्रहरः श्रेष्ठः कुशस्तस्याः पुरः प्रणयं याच्ञां प्रतीतो हृष्टः सन् तथेति प्रत्यग्रहीत् स्वीकृतवान्। पूः पुराधिदेवतापि अभिव्यक्तमुखप्रसादा सती इष्टलाभादिति भावः।

तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिः शशंस ।
श्रुत्वा त एनं कुलराजधान्या साक्षात् पतित्वे वृतमभ्यनन्दन् ॥ २४

कुशावतीं श्रोत्रियसात् स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५

सा केतुमालोपवना बृहद्भिः विहारशैलानुगतेव नागैः ।
सेना रथोदारगृहा प्रयाणे तस्याभवज्जङ्गमराजधानी ॥ २६

तेनातपत्रामलमण्डलेन प्रस्थापितः पूर्वनिवासभूमिम् ।
बभौ बलौघः शशिनोदितेन वेलामुदन्वानिव नीयमानः ॥ २७

अन्वयः। नृपतिः तत् अद्भुतं रात्रिवृत्तं प्रातः संसदि द्विजेभ्यः शशंस, ते श्रुत्वा एनं कुलराजधान्या साक्षात् पतित्वे वृतम् अभ्यनन्दन् ॥ २४

अन्वयः। सः कुशावतीं श्रोत्रियसात् कृत्वा यात्रानुकूले अहनि सावरोधः ( सन् ) अभ्रवृन्दैः वायुः इव सैन्यैः अनुद्रुतः ( सन् ) अयोध्याभिमुखः प्रतस्थे ॥ २५

अन्वयः। केतुमालोपवना सा बृहद्भिः नागैः विहारशैलानुगता इव ( स्थिता ) रथोदारगृहा सेना तस्य प्रयाणे, जङ्गमराजधानी इव, अभवत् ॥ २६

अन्वयः। आतपत्रामलमण्डलेन तेन पूर्व्वनिवासभूमिं प्रस्थापितः बलौघः ( आतपत्रामलमण्डलेन ) उदितेन शशिना वेलां नीयमानः उदन्वान् इव बभौ ॥ २७

...तेन शरीरयोगेन कारणेन तिरोबभूव अन्तर्दधे। मानवं रूपं विहाय दैवं रूपमगादित्यर्थः ॥ २३

नृपतिः कुशस्तत् अद्भुतं रात्रिवृत्तं रात्रिवृत्तान्तं प्रातः संसदि सभायां द्विजेभ्यः शशंस। ते द्विजाः श्रुत्वा एनं कुशं कुलराजधान्या साक्षात् स्वयमेव पतित्वे विषये वृतं अभ्यनन्दन्। ...तेन वृतोऽसीत्यपूजयन् आशीर्भिरिति शेषः। अत्र गार्ग्यः—"दृष्ट्वा स्वप्नं शोभनं नैव ...त् पश्चाद्दृष्टो यः स पाकं विधत्ते। शंसेदिष्टं तत्र साधुर्द्विजेभ्यस्ते चाशीर्भिः प्रीणयेयुर्नरेन्द्रम्" ॥ इदमपि स्वप्नतुल्यमिति भावः ॥ २४

स कुशः कुशावतीं श्रोत्रियेषु छान्दसेषु अधीनां श्रोत्रियसात्। "तदधीनवचने" इति ...प्रत्ययः। "श्रोत्रियंश्छन्दोऽधीते" इति निपातः। "श्रोत्रियच्छान्दसौ समौ" इत्यमरः। ...यात्रानुकूलेऽहनि सावरोधः सान्तःपुरः सन् वायुरभ्रवृन्दैरिव सैन्यैरनुद्रुतोऽनुगतः सन् ...अयोध्याभिमुखः प्रतस्थे ॥ २५

केतुमाला एव उपवनानि यस्याः सा बृहद्भिर्नागैर्गजैर्विहारशैलैः क्रीडाशैलैरनुगता इव, ...रथा एव उदारगृहा यस्याः सा, सा सेना तस्य कुशस्य प्रयाणे जङ्गमराजधान्या... ...चारिणी नगरी इव अभवत् बभूव ॥ २६

...आतपत्रमेव अमलं मण्डलं बिम्बं यस्य तेन, तेन कुशेन पूर्व्वनिवासभूमिमयोध्यां प्रति...

तस्य प्रयातस्य वरूथिनीनां पीडामपर्य्याप्तवतीव सोढुम्।
वसुन्धरा विष्णुपदं द्वितीयम् अध्यारुरोहेव रजश्छलेन॥ २८

उद्यच्छमाना गमनाय पश्चात् पुरो निवेशे पथि च व्रजन्ती।
सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार॥ २९

तस्य द्विपानां मदवारिसेकात् खुराभिघाताच्च तुरङ्गमाणाम्।
रेणुः प्रपेदे पथि पङ्कभावं पङ्कोऽपि रेणुत्वमियाय नेतुः॥ ३०

मार्गैषिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा विभिन्ना।
चकार रेवेव महाविरावा बद्धप्रतिश्रुन्ति गुहामुखानि॥ ३१

अन्वयः। प्रयातस्य तस्य वरूथिनीनां (कर्त्रीणाम्) पीड़ांसोढुम् अपर्य्याप्तवता सा वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदम् अध्यारुरोह इव॥ २८

अन्वयः। पश्चात् गमनाय पुरः निवेशे उद्यच्छमाना पथि च व्रजन्ती नृपस्य सा सेना यत्र ददृशे तत्र एव सामग्र्यमतिं चकार॥ २९

अन्वयः। नेतुः तस्य द्विपानां मदवारिसेकात् तुरङ्गमाणां खुराभिघातात् च पथि रेणुः पङ्कभावं प्रपेदे, पङ्कः अपि रेणुत्वम् इयाय॥ ३०

अन्वयः। वैन्ध्येषु कटकान्तरेषु मार्गैषिणी (अतएव) बहुधा विभिन्ना महाविरावा सा सेना रेवा गुहामुखानि बद्धप्रतिश्रुन्ति चकार॥ ३१

प्रस्थापितो बलौघः आतपत्रवदमलमण्डलेन उदितेन शशिना वेलां नीयमानः प्राप्यमाणः उदकमस्यास्तीत्युदन्वान् उदधिरिव बभौ। "उदन्वानुदधौ च" इति निपातनात् साधुः॥ २७

प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां (कर्त्रीणाम्) "कर्तृकर्मणोः कृति" इति कर्त्तरि षष्ठी, पीड़ां सोढ़मपर्य्याप्तवती इव अशक्ता इव वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदं आकाशं अध्यारुरोह इव इत्युत्प्रेक्षा॥ २८

पश्चात् कुशावत्याः सकाशात् गमनाय प्रयाणाय तथा पुरोऽग्रे निवेशे निमित्ते निवेष्टुं चेत्यर्थः उद्यच्छमाना उद्योगं कुर्व्वती। "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यस्य सकर्म्मकाधिकारत्वादात्मनेपदम्। पथि च व्रजन्ती नृपस्य कुशस्य सा सेना यत्र पश्चात् पुरो मध्ये वा ददृशे तत्रैव सामग्र्यमतिं कृत्स्नताबुद्धिं चकार अपरिमिता तस्य सेनेत्यर्थः॥ २९

नेतुस्तस्य कुशस्य द्विपानां मदवारिभिः सेकात् तुरङ्गमाणां खुराभिघाताच्च यथासंख्यं पथि रेणु रजः पङ्कभावं पङ्कतां प्रपेदे। पङ्कोऽपि रेणुत्वमियाय। तस्य तावद्‌बलमस्तीत्यर्थः॥ ३०

वैन्ध्येषु विन्ध्यसम्बन्धिषु कटकान्तरेषु नितम्बावकाशेषु "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः। मार्गैषिणी मार्गान्वेषिणी अतएव बहुधा विभिन्ना महाविरावा दीर्घशब्दा सा

स धातुभेदारुणयाननेमिः प्रभुः प्रयाणध्वनिमिश्रतूर्य्यः ।
व्यलङ्घयद्विन्ध्यमुपायनानि पश्यन् पुलिन्दैरुपपादितानि ॥ ३२

तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुः हंसा नभोलङ्घनलोलपक्षाः ॥ ३३

स पूर्वजानां कपिलेन रोषात् भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४

इत्यध्वनः कैश्चिदहोभिरन्ते कूलं समासाद्य कुशः सरय्वाः ।
वेदिप्रतिष्ठान् विततध्वराणां यूपानपश्यच्छतशो रघूणाम् ॥ ३५

अन्वयः। धातुभेदारुणयाननेमिः प्रयाणध्वनिमिश्रतूर्य्यः सः प्रभुः पुलिन्दैः उपपादितानि उपायनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥३२

अन्वयः। तदीये तीर्थे गजसेतुबन्धात् प्रतीपगां गङ्गाम् उत्तरतः अस्य नभोलङ्घनलोलपक्षाः हंसाः अयत्नबालव्यजनीबभूवुः ॥ ३३

अन्वयः। सः कपिलेन रोषात् भस्मावशेषीकृतविग्रहाणां पूर्व्वजानां सुरालयप्राप्तिनिमित्तं नौलुलितं त्रैस्रोतसम् अम्भः ववन्दे ॥३४

अन्वयः। इति कैश्चित् अहोभिः अध्वनः अन्ते कुशः सरय्वाः कूलं समासाद्य विततध्वराणां रघूणां वेदिप्रतिष्ठान् शतशः अपश्यत् ॥३५

रेवा इव नर्म्मदा इव, "रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः। गुहाणि बद्धप्रतिश्रुन्ति प्रतिध्वानवन्ति चकार अकरोत् ॥३१

धातूनां गैरिकादीनां भेदेन अरुणा याननेमी रथचक्रधारा यस्य, प्रयाणे ये ध्वनयः शङ्खादयः तन्मिश्राणि तूर्य्याणि यस्य, एवम्बिधः स प्रभुः कुशः पुलिन्दैः किरातैरुपनीतानि समर्पितानि उपायनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥३२

तदीये विन्ध्ये तीर्थेऽवतारे गजा एव सेतुस्तस्य बन्धाद्धेतोः प्रतीपगां पश्चिमवाहिनीं गङ्गां उत्तरतोऽस्य कुशस्य नभोलङ्घनेन लोलपक्षा हंसा अयत्नेन बालव्यजनीबभूवुश्चामराणि अभवन्। अभूततद्भावे च्विः ॥३३

स कुशः कपिलेन मुनिना रोषात् भस्मावशेषीकृता विग्रहा देहा येषां तेषां पूर्व्वजानां सगराणां सुरालयस्य स्वर्गस्य प्राप्तौ निमित्तं नौभिर्लुलितं क्षुभितं त्रिस्रोतस इदं त्रैस्रोतसं गाङ्गमम्भो ववन्दे ॥३४

इति कैश्चित् अहोभिरध्वनोऽन्तेऽवसाने कुशः सरय्वाः कूलं समासाद्य विततध्वराणां रघूणां वेदिप्रतिष्ठान् येषां तान् यूपान् शतशः अपश्यत् ॥३५

आधूय शाखाः कुसुमद्रुमाणां स्पृष्ट्वा च शीतान् सरयूतरङ्गान्।
तं क्लान्तसैन्यं कुलराजधान्याः प्रत्युज्जगामोपवनान्तवायुः ॥ ३६

अथोपशल्ये रिपुमग्नशल्यः तस्याः पुरः पौरसखः स राजा।
कुलध्वजस्तानि चलध्वजानि निवेशयामास बली बलानि ॥ ३७

तां शिल्पिसङ्घाः प्रभुणा नियुक्ताः तथागतां सम्भृतसाधनत्वात्।
पुरं नवीचक्रुरपां विसर्गात् मेघा निदाघग्लपितामिवोर्वीम् ॥३८

ततः सपर्य्यां सपशूपहारां पुरः परार्द्ध्यप्रतिमागृहायाः।
उपोषितैर्वास्तुविधानविद्भिः निर्वर्त्तयामास रघुप्रवीरः ॥ ३९

अन्वयः। कुलराजधान्याः उपवनान्तवायुः कुसुमद्रुमाणां शाखाः आधूय शीतान् सरयूतरङ्गान् स्पृष्ट्वा च क्लान्तसैन्यं तं प्रत्युज्जगाम ॥३६

अन्वयः। अथ रिपुमग्नशल्य पौरसखः कुलध्वजः बली सः राजा चलध्वजानि तानि बलानि तस्याः पुरः उपशल्ये निवेशयामास ॥३७

अन्वयः। प्रभुणा नियुक्ताः शिल्पिसङ्घाः सम्भृतसाधनत्वात् तां तथागतां पुरं मेघाः अपां विसर्गात् निदाघग्लपितां उर्व्वीं इव, नवीचक्रुः ॥३८

अन्वयः। ततः रघुप्रवीरः परार्द्ध्यप्रतिमागृहायाः पुरः उपोषितैः वास्तुविधानविद्भिः (प्रयोज्यैः) सपशूपहारां सपर्य्यां निर्वर्त्तयामास ॥३९

कुलराजधान्या उपवनान्तवायुः कुसुमद्रुमाणां शाखा आधूय ईषद्धूत्वा, सुरभिरित्यर्थः। शीतान् सरयूतरङ्गान् च स्पृष्ट्वा, अनेन शैत्योक्तिः। क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम ॥३६

अथ रिपुषु मग्नं शल्यं शङ्कुः शरो वा यस्य सः, "शल्यं शङ्कौ शरे वंशे" इति विश्वः। पौराणां सखा पौरसखः, कुलस्य ध्वजश्चिह्नभूतो बली स राजा चलाश्चलन्तो वा ध्वजा येषां तानि, तानि बलानि सैन्यानि तस्याः पुरः पुर्य्या उपशल्ये ग्रामान्ते, "ग्रामान्त उपशल्यं स्यात्" इत्यमरः। निवेशयामास ॥३७

प्रभुणा नियुक्ताः शिल्पिनां तक्षादीनां सङ्घाः सम्भृतसाधनत्वात् मिलितोपकरणत्वात् तां तथागतां, शून्यामित्यर्थः। पुरम् अयोध्यां, मेघा अपां विसर्गात् जलसेकात् निदाघग्लपितां ग्रीष्मतप्तां उर्व्वीमिव नवीचक्रुः परिपूरयाञ्चक्रुः ॥३८

ततो रघुप्रवीरः कुशः प्रतिमा देवताप्रतिकृतयः, अर्च्चा इत्यर्थः। परार्द्ध्यप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुर उपोषितैर्व्वास्तुविधानविद्भिः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्य्यां निवर्त्तयामास कारयामास। अत्र ण्यन्तात् णिच् पुनरित्यनुसन्धेयम्। अन्यथा वृत्तेरकर्म्मकस्य करोत्यर्थत्वे कारयत्यर्थाभावप्रसङ्गात्। भवितव्यं वृत्तेरण्यन्तकर्त्ता प्रयोज्यत्वेन तन्निर्देशात् प्रयोगान्तरस्यापेक्षितत्वात् ॥३९

तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य।
यथार्हमन्यैरनुजीविलोकं सम्भावयामास यथाप्रधानम्॥ ४०

सा मन्दुरासंश्रयिभिस्तुरङ्गैः शालाविधिस्तम्भगतैश्च नागैः।
पूराबभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी॥ ४१

वसन् स तस्यां वसतौ रघूणां पुराणशोभामधिरोपितायाम्।
न मैथिलेयः स्पृहयाम्बभूव भर्त्रे दिवो नाप्यलकेश्वराय॥ ४२

अथास्य रत्नग्रथितोत्तरीयम् एकान्तपाण्डुस्तनलम्बिहारम्।
निःश्वासहार्य्यांशुकमाजगाम घर्म्मः प्रियावेशमिवोपदेष्टुम्॥ ४३

अन्वयः। सः तस्याः राजोपपदं निशान्तं कामी कान्ताहृदयमिव प्रविश्य अन्यैः (निशान्तैः) अनुजीविलोकं यथाप्रधानं यथार्हं सम्भावयामास॥ ४०

अन्वयः। विपणिस्थपण्या सा मन्दुरासंश्रयिभिः तुरङ्गैः शालाविधिस्तम्भगतैः नागैः च सर्वाङ्गनद्धाभरणा नारी इव आबभासे॥ ४१

अन्वयः। सः मैथिलेयः पुराणशोभां अधिरोपितायां तस्यां रघूणां वसतौ वसन् दिवः भर्त्रे अलकेश्वराय अपि न स्पृहयाम्बभूव॥ ४२

अन्वयः। अथ अस्य रत्नग्रथितोत्तरीयम् एकान्तपाण्डुस्तनलम्बिहारं निश्वासहार्य्यांशुकं प्रियावेशं उपदेष्टुं इव घर्म्मः आजगाम॥ ४३

स कुशस्तस्याः पुरः सम्बन्धि राजोपपदं राजशब्दपूर्व्वं निशान्तं राजभवनमित्यर्थः। "निशान्तं भवनोषसोः" इति विश्वः। कामी कान्ताहृदयमिव प्रविश्य अन्यैर्निशान्तैरनुजीवि-लोकं अमात्यादिकं यथाप्रधानं मान्यानुसारेण यथार्हं यथोचितं तत्तदुचितगृहैरित्यर्थः सम्भावयामास॥ ४०

विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा, "विपणिः पण्यवीथिका" इत्यमरः। सा पूरयोध्या मन्दुरासंश्रयिभिरश्वशालासंश्रयणशीलैः, "वाजिशाला तु मन्दुरा" इत्यमरः। "जिदृक्षि—" इत्यादिना इनिप्रत्ययः। तुरङ्गैरश्वैः शालासु गेहेषु ये विभिन्ना -पिताः स्तम्भास्तान् गतैः प्राप्तैर्नागैश्च सर्व्वाङ्गेषु नद्धानि आभरणानि यस्याः सा नारी इव आबभासे॥ ४१

स मैथिलेयः कुशः पुराणशोभां पूर्व्वशोभां अधिरोपितायां तस्यां रघूणां वसतौ अयो-ध्यायां वसन् दिवो भर्त्रे देवेन्द्राय तथा अलकेश्वराय अपि न स्पृहयाम्बभूव तावपि न -मास इत्यर्थः। "स्पृहेरीप्सितः" इति सम्प्रदानत्वात् चतुर्थी। एतेन अयोध्याया -नगरातिशायित्वं गम्यते।

कुशस्य कुमुद्वतीसङ्गमं प्रस्तौति—अथ अस्य कुशस्य रत्नैः अंशुकप्रान्तविभिन्नथितानि -रीयाणि यस्मिन् तं, एकान्त पाण्डूः स्तनयोर्लम्बिनो हारा यस्मिन् तं निःश्वासहार्य्याणि

अगस्त्यचिह्नादयनात् समीपं दिगुत्तरा भास्वति सन्निवृत्ते।
आनन्दशीतामिव वाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥ ४४

प्रवृद्धतापो दिवसोऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी।
उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविवास्ताम् ॥ ४५

दिने दिने शैवलवन्त्यधस्तात् सोपानपर्वाणि विमुञ्चदम्भः।
उद्दण्डपद्मं गृहदीर्घिकाणां नारीनितम्बद्वयसं बभूव ॥ ४६

वनेषु सायन्तनमल्लिकानां विजृम्भणोद्गन्धिषु कुड्मलेषु।
प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ॥ ४७

अन्वयः। अगस्त्यचिह्नात् अयनात् भास्वति समीपं सन्निवृत्ते (सति) उत्तरा दिक्, आनन्दशीतां वाष्पवृष्टिम् इव, हैमवतीं हिमस्रुतिं ससर्ज ॥४४

अन्वयः। अतिमात्रं प्रवृद्धतापः दिवसः अत्यर्थमेव तन्वी क्षणदा च, उभौ विरोधक्रियया विभिन्नौ सानुशयौ जायापती इव आस्तां ॥४५

अन्वयः। दिने दिने शैवलवन्ति अधस्तात् सोपानपर्व्वाणि विमुञ्चत् (अतएव) उद्दण्डपद्मं गृहदीर्घिकाणाम् अम्भः नारीनितम्बद्वयसं बभूव ॥४६

अन्वयः। वनेषु विजृम्भणोद्गन्धिषु सायन्तनमल्लिकानां कुड्मलेषु सशब्दं प्रत्येकनिक्षिप्तपदः भ्रमरः एषां सङ्ख्यां चकार इव ॥४७

अतिसूक्ष्माणि अंशुकानि यत्र तं, एवं शीतलप्रायं प्रियाया वेशं नेपथ्यं उपदेष्टुं [illegible] घर्म्मो ग्रीष्म आजगाम ॥४३

अगस्त्यश्चिह्नं यस्य तस्मात् अयनात् मार्गात् दक्षिणायनात्, भास्वति समीपं सन्निवृत्ते सति, उत्तरा दिक् आनन्दशीतां वाष्पवृष्टिमिव हैमवतीं हिमवत्सम्बन्धिनीं हिमस्रुतिं हिमनिष्यन्दं ससर्ज। अत्र प्रोषितप्रियासमागमसमाधिर्गम्यते ॥४४

अतिमात्रं प्रवृद्धतापो दिवसः अत्यर्थमेव अनल्पं तन्वी कृशा क्षणदा च इत्येतावुभौ विरोधक्रियया प्रणयकलहादिना विरोधाचरणेन विभिन्नौ सानुशयौ सानुतापौ जायापती दम्पती इव आस्ताम्। तयोरपि तापकार्श्यसम्भवात् तत्सदृशावभूतामित्यर्थः ॥४५

दिने दिने प्रतिदिनं शैवलवन्ति अधस्तात् यानि सोपानानां पर्वाणि भङ्गस्थानानि विमुञ्चन्, अतएव उदस्तपद्मं गृहदीर्घिकाणामम्भः नारीनितम्बः प्रमाणमस्य नारीनितम्बद्वयसं बभूव। विहारयोग्यमभूदित्यर्थः। प्रमाणे द्वयसच्—" इति द्वयसच् प्रत्ययः ॥४६

वनेषु विजृम्भणेन विकासेन उद्गन्धिषु उद्गतसौरभेषु "गन्धस्य—" इत्यादिना समासान्त इकारादेशः। सायन्तनमल्लिकानां कुट्मलेषु सशब्दं यथा तथा प्रत्येकमेकैकस्मिन् निक्षिप्तपदः मकरन्दलोभादित्यर्थः। भ्रमर एषां कुट्मलानां संख्या गणनां चकार इव ॥४७

स्वेदानुविद्धार्द्रनखक्षताङ्के भूयिष्ठसन्दष्टशिखं कपोले ।
च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ॥ ४८

यन्त्रप्रवाहैः शिशिरैः परीतान् रसेन धौतान् मलयोद्भवस्य ।
शिलाविशेषानधिशय्य निन्युः धारागृहेष्वातपमृद्धिमन्तः ॥ ४९

स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्य्यः केशेषु लेभे बलमङ्गनानाम् ॥ ५०

आपिञ्जरा बद्धरजःकणत्वात् मञ्जर्युदारा शुशुभेऽर्जुनस्य ।
दग्ध्वापि देहं गिरिशेन रोषात् खण्डीकृता ज्येव मनोभवस्य ॥ ५१

अन्वयः। स्वेदानुविद्धार्द्रनखक्षताङ्के कामिनीनां कपोले भूयिष्ठसन्दष्टशिखं (अतएव) कर्णात् च्युतम् अपि शिरीषपुष्पं सहसा न पपात ॥ ४८

अन्वयः। ऋद्धिमन्तः धारागृहेषु शिशिरैः यन्त्रप्रवाहैः परीतान् मलयोद्भवस्य रसेन धौतान् शिलाविशेषान् अधिशय्य आतपं निन्युः ॥ ४९

अन्वयः। वसन्तात्ययमन्दवीर्य्यः कामः स्नानार्द्रमुक्तेषु विन्यस्तसायन्तनमल्लिकेषु अनुधूपवासं अङ्गनानां केशेषु बलं लेभे ॥ ५०

अन्वयः। बद्धरजःकणत्वात् आपिञ्जरा उदारा अर्जुनस्य मञ्जरी देहं दग्ध्वा अपि रोषात् गिरिशेन खण्डीकृता मनोभवस्य ज्या इव शुशुभे ॥ ५१

स्वेदानुविद्धं आर्द्रं नूतनं नखक्षतं अङ्को यस्य तस्मिन् कामिनीनां कपोले भूयिष्ठसन्दष्टशिखं अतएव कर्णात् च्युतमपि शिरीषपुष्पं सहसा न पपात ॥ ४८

ऋद्धिमन्तो धनिका धारागृहेषु यन्त्रधारागृहेषु शिशिरैर्यन्त्रप्रवाहैर्यन्त्रसञ्चारितसलिलौघैः परीतान् व्याप्तान् मलयोद्भवस्य रसेन चन्दनोदकेन धौतान् क्षालितान् शिलाविशेषान् शिलासनानि अधिशय्य तेषु शयित्वा आतपं निन्युरातपपरिहारं चक्रुः ॥ ४९

वसन्तस्य आत्मसहकारिणोऽत्ययेन अतिक्रमेण मन्दवीर्य्योऽतिदुर्बलः कामः स्नानार्द्रेषु ... धूपसञ्चारणार्थमित्यर्थः। तेषु अनुधूपवासं धूपवासानन्तरं विन्यस्ताः सायन्तन- ... येषु तेषु अङ्गनानां केशेषु बलं लेभे। तैरुद्दीपित इत्यर्थः ॥ ५०

बद्धरजःकणत्वात् व्याप्तरजःकणत्वात् आपिञ्जरा, उदारा द्राघीयसी अर्जुनस्य ककुभ-... "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। मञ्जरी देहं दग्ध्वापि रोषात् गिरिशेन गिरि-... निवासत्वेन गिरिशः तेन लोमादित्वाच्छप्रत्ययः। गिरौ शेत इति विग्रहे तु 'गिरौ ...' इत्यस्य छन्दसि विधानात् लोके प्रयोगानुपपत्तिः स्यात्। तस्मात् पूर्वोक्तमेव विग्रह-... न्याय्यम्। खण्डीकृता मनोभवस्य ज्या मौर्वी इव शुशुभे ॥ ५१

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलञ्च ।
सम्बध्नता कामिजनेषु दोषाः सर्वे निदाघावधिना प्रमृष्टाः ॥५२
जनस्य तस्मिन् समये विगाढ़े बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ ५३
अथोर्म्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः ।
विहर्त्तुमिच्छा वनितासखस्य तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४
स तीरभूमौ विहितोपकार्य्याम् आनायिभिस्तामपकृष्टनक्राम् ।
विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ॥ ५५

अन्वयः । मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलञ्च सम्बध्नता निदाघावधिना कामिजनेषु ( विषये ) सर्वे दोषाः प्रमृष्टाः ॥५२

अन्वयः । तस्मिन् समये विगाढ़े ( सति ) जनस्य द्वौ सविशेषकान्तौ बभूवतुः तापापनोदक्षमपादसेवौ उदयस्थौ सः नृपतिः शशी च ॥५३

अन्वयः । ऊर्म्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे ग्रीष्मसुखे सरय्वा अम्भसि तस्य वनितासखस्य विहर्त्तुम् इच्छा बभूव ॥५४

अन्वयः । चक्रधरप्रभावः सः तीरभूमौ विहितोपकार्य्यां आनायाभिः अपकृष्टनक्रां तां श्रीमहिमानुरूपं विगाहितुं प्रचक्रमे ॥५५

मनोज्ञगन्धमिति सर्वत्र सम्बध्यते । सहकारभङ्गं चूतपल्लवखण्डं, पुराणं वासि शीरतेऽनेनेति शीधुः पक्वेक्षुरसप्रकृतिकः सुराविशेषस्तम्, "शीङो धुक्" इत्युणादिसूत्रे "शीङ्स्वप्ने" इत्यस्माद्धातोर्धुक्प्रत्ययः । "पक्वैरिक्षुरसैरस्त्री शीधुः पक्वरसः शिवः" इति यादवः । नवं पाटलायाः पुष्पं पाटलं च सम्बध्नता संघट्टयता निदाघावधिना ग्रीष्मकाले "अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च" इति विश्वः । कामिजनेषु विषये दोषास्तापादयः प्रमृष्टाः परिहृताः ॥५२

तस्मिन् समये ग्रीष्मे विगाढ़े कठिने सति जनस्य द्वौ सविशेषं सातिशयं यथा कान्तौ बभूवतुः । कौ द्वौ ? तापापनोदे क्षमा योग्या पादयोरङ्घ्रीः पादानां रश्मीनां सेवा ययोस्तौ उदयस्थौ अभ्युदयस्थौ स च नृपतिः शशी च ॥५३

अथ ऊर्म्मिषु लोलाः सतृष्णा उन्मदा राजहंसा यस्मिन् तस्मिन्, "लोलश्चलसतृष्णयोः" इत्यमरः । रोधोलतापुष्पाणां वहे प्रापके, पचाद्यच् । ग्रीष्मेषु सुखे सुखकरे अम्भसि पयसि तस्य कुशस्य वनितासखस्य वनिताभिः सहेत्यर्थः । विहर्त्तुमिच्छा बभूव ॥

चक्रधरप्रभावो विष्णुतेजाः स कुशस्तीरभूमौ विहितोपकार्य्या यस्यास्ताम्, आनायः एषामस्तीत्यानायिनो जालिकाः, "जालमानायः" इति निपातः । "आनायः पुंसि जालं स्यात्" इत्यमरः । तैरपकृष्टनक्रां अपनीतग्राहां तां सरं श्रीमहिम्नोः सम्पत्प्रभाव

सा तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः ।
सनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ॥ ५६

परस्पराभ्युक्षणतत्पराणां तासां नृपो मज्जनरागदर्शी ।
नौसंश्रयः पार्श्वगतां किरातीमुपात्तबालव्यजनां बभाषे ॥ ५७

पश्यावरोधैः शतशो मदीयैः विगाह्यमानो गलिताङ्गरागैः ।
सन्ध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥ ५८

विलुप्तमन्तःपुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भिः ।
तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९

अन्वयः । सा सरित् तीरसोपानपथावतारात् अन्योन्यकेयूरविघट्टिनीभिः सनूपुरक्षोभ-पदाभिः उद्विग्नहंसा आसीत् ॥ ५६

अन्वयः । नौसंश्रयः परस्पराभ्युक्षणतत्पराणां तासां मज्जनरागदर्शी नृपः पार्श्वगताम् उपात्तबालव्यजनां किरातीं बभाषे ॥ ५७

अन्वयः । गलिताङ्गरागैः मदीयैः शतशः अवरोधैः विगाह्यमानः एषः सरयूप्रवाहः साभ्रः सन्ध्योदयः इव अनेकं वर्णं पुष्यति, पश्य ॥ ५८

अन्वयः । नौलुलिताभिः अद्भिः अन्तःपुरसुन्दरीणां यत् अञ्जनं विलुप्तम्, तत् विलो-चनेषु मदरागशोभां बध्नतीभिः ( अद्भिः ), आसां प्रतिमुक्तम् ॥ ५९

...स्वरूपं योग्यं यथा तथा विगाहितुं प्रचक्रमे । अत्र कामन्दकः—"परितापिषु वासरेषु ...न् तटलेखास्थितमाप्तसैन्यचक्रम् । सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः" ...॥ ५५

सा सरित् सरयूस्तीरसोपानपथेन अवतारात् अवतरणात् अन्योन्य केयूरविघट्टिनीभिः ...सङ्घर्षिणीभिः सनूपुरक्षोभानि सनूपुरस्खलनानि पदानि यासां ताभिरङ्गनाभिरुद्वि-ग्नहंसा भीतहंसा आसीत् ॥ ५६

नौसंश्रयः परस्परं अभ्युक्षणे सेचने तत्पराणामासक्तानां तासां स्त्रीणां मज्जने रागो-...सतद्दर्शी नृपः पार्श्वगतां उपात्तबालव्यजनां गृहीतचामरां किरातीं चामरग्राहिणीं ...। "किरातस्तु द्रुमान्तरे" । "स्त्रियां चामरवाहिन्या मल्लजात्यन्तरे हयोः ॥" इति ...॥ ५७

गलिताङ्गरागमदीयैः शतशोऽवरोधैर्विगाह्यमानो विलोड्यमान एष सरयूप्रवाहः साभ्रः ...सन्ध्यादयः सन्ध्याविर्भाव इव, अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य । ...कर्म ॥ ५८

नौलुलिताभिर्नौक्षुभिताभिः अद्भिः अन्तःपुरसुन्दरीणां यत् अञ्जनं कज्जलं विलुप्तं हृतं ...अञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिर्घटयन्तीभिः अद्भिः आसां ...प्रत्यर्पितम् । ...तत्कार्यकारित्वात् प्रत्यर्पणमेवेति भावः ॥ ५९

एता गुरुश्रोणिपयोधरत्वात् आत्मानमुद्वोढुमशक्नुवन्त्यः ।
गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात् प्लवन्ते ॥ ६०

अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलान् छलयन्ति मीनान् ॥ ६१

आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्द्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्य्यमाणः संलक्ष्यते न छिदुरोऽपि हारः ॥ ६२

आवर्त्तशोभा नतनाभिकान्तेः भङ्गो भ्रुवां द्वन्द्वचरास्तनानाम् ।
जातानि रूपावयवोपमानान्यदूरवर्त्तीनि विलासिनीनाम् ॥ ६३

अन्वयः । गुरुश्रोणिपयोधरत्वात् आत्मानम् उद्वोढुम् अशक्नुवत्यः एताः बालाः गाढाङ्गदैः बाहुभिः अप्सु क्लेशोत्तरं ( यथा तथा ) रागवशात् प्लवन्ते ॥ ६०

अन्वयः । वारिविहारिणीनाम् प्रभ्रंशिनः निम्नगायाः स्रोतसि पारिप्लवाः अमी शिरीषप्रसवावतंसाः शैवाललोलान् मीनान् छलयन्ति ॥ ६१

अन्वयः । जलास्फालनतत्पराणाम् आसां मुक्ताफलस्पर्द्धिषु शीकरेषु शीर्य्यमाणः हारः ( अतएव ) छिदुरः अपि न संलक्ष्यते ॥ ६२

अन्वयः । विलासिनीनां रूपावयवोपमानानि अदूरवर्त्तीनि जातानि । नतनाभिकान्तेः आवर्त्तशोभा भ्रुवां भङ्गः स्तनानां द्वन्द्वचराः ॥ ६३

गुरु दुर्वहं श्रोणिपयोधरं यस्य आत्मन इति विग्रहः । गुरुश्रोणिपयोधरत्वात् आत्मानं शरीरं उद्वोढुम् अशक्नुवत्य एता बाला गाढाङ्गदैः श्लिष्टाङ्गदैर्बाहुभिः क्लेशोत्तरं दुःखप्रायं यथा तथा रागवशात् क्रीड़ाभिनिवेशपारतन्त्र्यात् अप्सु प्लवन्ते तरन्ति ॥ ६०

वारिविहारिणीनां आसां प्रभ्रंशिनो भ्रष्टा निम्नगायाः स्रोतसि पारिप्लवाश्चलाः । "चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः । अमी शिरीषप्रसवा एव अवतंसाः कर्णभूषाः शैवाललोलान् जलनीलीप्रियान् । "जलनीली तु शैवालम्" इत्यमरः । मीनान् छलयन्ति प्रादुर्भावयन्ति शैवालप्रियत्वाच्छिरीषेषु शैवालभ्रमात् प्रादुर्भावयन्तीत्यर्थः ॥ ६१

जलस्य आस्फालने तत्पराणां आसां स्त्रीणां मुक्ताफलस्पर्द्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषु उत्सर्पन्ति उत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्य्यमाणो गलन् हारोऽतएव छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते । "विदिभिदिच्छिदेः कुरच्" इति कुरच् प्रत्ययः । शीकरसंसर्गाच्छिन्न इति न ज्ञायत इति भावः ॥ ६२

विलासिनीनां विलसनशीलानां स्त्रीणाम् । "वौ कषलसकत्थस्रम्भः" इति घिनुण् प्रत्ययः । रूपावयवानामुपमेयानां यानि उपमानानि लोकप्रसिद्धानि तानि अदूरवर्त्तीनि अन्तिकगतानि जातानि । कानि किमुपमानमित्यपेक्षायामाह ? नतनाभिकान्तेर्निम्ननाभिशोभाया आवर्त्तशोभा । "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । भ्रुवां भङ्गस्तरङ्गः स्तनानां द्वन्द्वचराश्चक्रवाकाः, उपमानमिति सर्वत्र सम्बध्यते ॥ ६३

स्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु संमूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४

संदष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः ।
अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६५

एताः करोत्पीडितवारिधारा दर्पात् सखीभिर्वदनेषु सिक्ताः ।
वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६

उद्बन्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः ।
मनोज्ञ एव प्रमदामुखानाम् अम्भोविहाराकुलितोऽपि वेशः ॥ ६७

अन्वयः। उत्कलापैः प्रस्निग्धकेकैः तीरस्थलीबर्हिभिः अभिनन्द्यमानं रक्तं गीतानुगम् वारिमृदङ्गवाद्यं श्रोत्रेषु संमूर्च्छति ॥६४

अन्वयः। सन्दष्टवस्त्रेषु अबलानितम्बेषु इन्दुप्रकाशान्तरितोडुतुल्याः अमी जलापूरित-सूत्रमार्गाः रशनाकलापाः मौनं भजन्ते ॥६५

अन्वयः। दर्पात् करोत्पीडितवारिधाराः सखीभिः वदनेषु सिक्ताः एताः तरुण्यः वक्रेतराग्रैः अलकैः चूर्णारुणान् वारिलवान् वमन्ति ॥६६

अन्वयः। उद्बन्धकेशः च्युतपत्रलेखः विश्लेषिमुक्ताफलपत्रवेष्टः अम्भोविहाराकुलितः प्रमदामुखानां वेशः मनोज्ञः एव ॥६७

उत्कलापैरुद्बर्हैः प्रस्निग्धा मधुराः केका येषां तैस्तीरस्थलीषु स्थितैर्बर्हिभिर्मयूरैः अभिनन्द्यमानं रक्तं श्राव्यं गीतानुगम् गीतानुसारि आसां स्त्रीणां सम्बन्धि वारि एव मृदङ्गस्तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु संमूर्च्छति व्याप्नोति ॥६४

संदष्टवस्त्रेषु जलसेकात् संश्लिष्टांशुकेषु अबलानां नितम्बेषु अधिकरणेषु इन्दुप्रकाशेन अन्तरितानि आवृतानि यानि उडूनि नक्षत्राणि तत्तुल्याः मुक्तामयत्वादिति भावः। जलापूरितसूत्रमार्गाः निश्चला इत्यर्थः। रशना एव कलापा भूषाः। "कलापो भूषणे" इत्यमरः। मौनं निःशब्दतामित्यर्थः, भजन्ते ॥६५

दर्पात् सखीजनं प्रति करेणोत्पीडिता उत्सारिता वारिधारा याभिस्ताः स्वयमपि पुनः सखीभिर्वदनेषु सिक्ता एतास्तरुण्यो वक्रेतराग्रैर्जलसेकात् ऋजुभिः अलकैः करणैश्चूर्णैः अरुणान् वारिलवान् उदकबिन्दून् वमन्ति वर्षन्ति ॥६६

उद्बद्धाः केशा यस्मिन् सः, च्युतपत्रलेखः च्युतपत्ररचनः, विश्लेषिणो विश्लिष्टा मुक्ताफलपत्रवेष्टाः मुक्तामयताडङ्का यस्मिन् सः, एवमम्भोविहाराकुलितोऽपि प्रमदामुखानां वेशो नेपथ्यं मनोज्ञ एव। रम्याणां विकृतिरपि श्रियं तनोति इति भावः ॥६७

स नौविमानादवतीर्य्य रेमे विलोलहारः सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥ ६८
ततो नृपेणानुगताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९
वर्णोदकैः काञ्चनशृङ्गमुक्तैः तमायताक्ष्यः प्रणयादसिञ्चन् ।
तथागतः सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराजः ॥ ७०
तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥ ७१

अन्वयः । सः नौविमानात् अवतीर्य विलोलहारः ( सन् ) ताभिः सह, करेणुभिः (सह) स्कन्धावलग्नोद्धृतपद्मिनीकः वन्यः द्विपेन्द्रः इव अप्सु रेमे ॥ ६८

अन्वयः । ततः भ्राजिष्णुना नृपेण अनुगताः ताः स्त्रियः सातिशयं विरेजुः, प्रागेव मुक्ताः नयनाभिरामाः, उन्मयूखम् इन्द्रनीलं प्राप्य किमुत ? ॥ ६९

अन्वयः । आयताक्ष्यः तं काञ्चनशृङ्गमुक्तैः वर्णोदकैः प्रणयात् असिञ्चन्, तथागतः सधातुनिष्यन्दः अद्रिराजः इव अतितरां बभासे ॥ ७०

अन्वयः । अवरोधप्रमदासखेन तां सरिद्वरां विगाहमानेन तेन आकाशगङ्गारतिः अप्सरोभिः वृतः मरुत्वान् अनुयातलीलः ( अभूत् ) ॥ ७१

स कुशो नौर्विमानमिव नौविमानम् । उपमितसमासः । तस्मादवतीर्य्य विलोलहारः सन् ताभिः स्त्रीभिः सह करेणुभिः सह स्कन्धावलग्ना उद्धृतपद्मिनी उत्पाटितनलिनी यस्य स तथोक्तः ( सन् ) । 'नद्यृतश्च' इति कप्रत्ययः । वन्यो द्विपेन्द्र इव अप्सु रेमे ॥ ६८

ततो भ्राजिष्णुना प्रकाशनशीलेन । 'भुवश्च' इति चकारादिष्णुच् । नृपेण अनुगताः सङ्गतास्ताः स्त्रियः सातिशयं यथा तथा विरेजुः । प्रागेव इन्द्रनीलयोगात् पूर्वमेव, केवला अपीत्यर्थः । मुक्ता मणयो नयनाभिरामाः उन्मयूखमिन्द्रनीलं प्राप्य किमुत, अभिरामा इति किमु वक्तव्यमित्यर्थः ॥ ६९

तं कुशमायताक्ष्यः काञ्चनस्य शृङ्गैर्मुक्तानि तैर्वर्णोदकैः कुङ्कुमादिवर्णद्रव्यमिश्रितोदकैः प्रणयात् स्नेहात् असिञ्चन् । तथागतस्तथास्थितः वर्णोदकसिक्त इत्यर्थः । स कुशः सधातुनिष्यन्दो गैरिकद्रव्ययुक्तोऽद्रिराज इव अतितरां बभासेऽत्यर्थं बभासे ॥ ७०

अवरोधप्रमदासखेन अन्तःपुरसुन्दरीसहचरेण तां सरिद्वरां सरयूं विगाहमानेन तेन कुशेन आकाशगङ्गायां रतिः क्रीडा यस्य सोऽप्सरोभिर्वृत आवृतो मरुत्वान् इन्द्रोऽनुयातलीलोऽनुकृतश्रीः, अभूदिति शेषः, इन्द्रमनुकृतवानित्यर्थः ॥ ७१

त् कुम्भयोनेरधिगम्य रामः कुशाय राज्येन समं दिदेश ।
स्य जैत्राभरणं विहर्त्तुरज्ञातपातं सलिले ममज्ज ॥ ७२

त्वा यथाकाममसौ सदारस्तीरोपकार्य्यां गतमात्र एव ।
दिव्येन शून्यं वलयेनबाहुमपोढ़नेपथ्यविधिर्ददर्श ॥ ७३

जयश्रियः संवननं यतस्तत् आमुक्तपूर्वं गुरुणा च यस्मात् ।
सेहेऽस्य न भ्रंशमतो न लोभात् स तुल्यपुष्पाभरणो हि धीरः ॥७४

ततः समाज्ञापयदाशु सर्वान् आनायिनस्तद्विचये नदीष्णान् ।
वन्ध्यश्रमास्ते सरयूं विगाह्य तमूचुरम्लानमुखप्रसादाः ॥ ७५

अन्वयः । यत् रामः कुम्भयोनेः अगस्त्यात् अधिगम्य कुशाय राज्येन समं दिदेश, सलिले विहर्त्तुः अस्य तत् जैत्राभरणं अज्ञातपातं ( सत् ) ममज्ज ॥७२

अन्वयः । असौ सदारः ( सन् ) यथाकामं स्नात्वा तीरोपकार्य्यां गतमात्र एव अपोढ़नेपथ्यविधिः दिव्येन वलयेन शून्यं बाहुं ददर्श ॥७३

अन्वयः । यतः तत् जयश्रियः संवननं यस्मात् च गुरुणा आमुक्तपूर्वम्, अतः अस्य भ्रंशं न सेहे, लोभात् न, हि धीरः सः तुल्यपुष्पाभरणः ॥७४

अन्वयः । ततः नदीष्णान् सर्व्वान् आनायिनः तद्विचये आशु समाज्ञापयत्, ते सरयूं विगाह्य वन्ध्यश्रमाः अम्लानमुखप्रसादाः ( सन्तः ) तं ऊचुः ॥७५

यदाभरणं रामः कुम्भयोनेरगस्त्यादधिगम्य प्राप्य कुशाय राज्येन समं दिदेश ददौ राज्यसममूल्यमित्यर्थः । सलिले विहर्त्तुः क्रीड़ितुरस्य कुशस्य तत् जैत्राभरणं जयशीलं आभरणं अज्ञातपातं सत् ममज्ज बुब्रोड़ ॥७२

असौ कुशः सदारः सन् यथाकामं यथेच्छं स्नात्वा विगाह्य तीरे या उपकार्य्या पूर्वोक्ता तस्यां गत एव अपोढ़नेपथ्यविधिरकृतप्रसाधन एव दिव्येन वलयेन शून्यं बाहुं ददर्श ॥७३

यतः कारणात् तदाभरणं जयश्रियः संवननं वशीकरणम् । "वशंक्रिया संवननम्" इत्यमरः । यस्माच्च गुरुणा पित्रा आमुक्तपूर्वं पूर्वम् आमुक्तम्, धृतमित्यर्थः । सुप्सुपेति समासः । अतो हेतोरस्य आभरणस्य भ्रंशं न सेहे लोभान्न । कुतः ? हि यस्मात् धीरो विद्वान् सं तुल्यानि पुष्पाणि आभरणानि च यस्य सः, पुष्पेषु इव आभरणेषु धृतेषु निर्माल्यबुद्धिं करोतीत्यर्थः ॥७४

ततः नद्यां स्नान्ति कौशलेनेति नदीष्णा तान् । "सुपि" इति योगविभागात् कप्रत्ययः । "नदीष्णां स्नातेः कौशले" इति षत्वम् । सर्वान् आनायिनो जालिकान् तस्य आभरणस्य विचये मार्गणे निमित्तं आशु समाज्ञापयत् आदिदेश । ते आनायिनः सरयूं विगाह्य वन्ध्यश्रमा विफलप्रयासास्तथापि तद्भक्तिं ज्ञात्वा अम्लानमुखप्रसादाः सश्रीकमुखाः सन्तः तं कुशमूचुः ॥७५

कृतः प्रयत्नो न च देव ! लब्धं मग्नं पयस्याभरणोत्तमं ते।
नागेन लौल्यात् कुमुदेन नूनमुपात्तमन्तर्ह्रदवासिना तत् ॥ ७६
ततः स कृत्वा धनुराततज्यं धनुर्धरः कोपविलोहिताक्षः।
गारुत्मतं तीरगतस्तरस्वी भुजङ्गनाशाय समाददेऽस्त्रम् ॥ ७७
तस्मिन् ह्रदः संहितमात्र एव क्षोभात् समाविद्धतरङ्गहस्तः।
रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास ॥ ७८
तस्मात् समुद्रादिव मथ्यमानादुद्वृत्तनक्रात् सहसोन्ममज्ज।
लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजङ्गराजः ॥ ७९
विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशाम्पतिस्तम्।
सौपर्णमस्त्रं प्रतिसञ्जहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ ८०

अन्वयः। (हे) देव ! प्रयत्नः कृतः पयसि मग्नं ते आभरणोत्तमं न च लब्धं, (किन्तु) तत् अन्तर्ह्रदवासिना कुमुदेन नागेन लौल्यात् उपात्तम्, नूनम् (वितर्के) ॥७६

अन्वयः। ततः धनुर्धरः कोपविलोहिताक्षः तरस्वी सः तीरगतः (सन्) धनुः आत-तज्यम् कृत्वा भुजङ्गनाशाय गारुत्मतं अस्त्रं समाददे ॥७७

अन्वयः। यस्मिन् संहितमात्रे एव ह्रदः क्षोभात् समाविद्धतरङ्गहस्तः रोधांसि निघ्नन् अवपातमग्नः वन्यः करी इव परुषं ररास ॥७८

अन्वयः। मथ्यमानात् समुद्रात् इव उद्वृत्तनक्रात् तस्मात् ह्रदात्, लक्ष्म्या सार्धं सुरराज-वृक्षः इव कन्यां पुरस्कृत्य भुजङ्गराजः सहसा उन्ममज्ज ॥७९

अन्वयः। विशाम्पतिः विभूषणप्रत्युपहारहस्तम् उपस्थितं तं वीक्ष्य सौपर्णं अस्त्रं प्रतिसञ्जहार, सन्तः प्रह्वेषु अनिर्बन्धरुषः हि ॥८०

हे देव ! प्रयत्नः कृतः, पयसि मग्नं ते आभरणोत्तमं न च लब्धम्। किन्तु तत् आभरणं अन्तर्ह्रदवासिना कुमुदेन कुमुदाख्येन नागेन पन्नगेन लौल्यात् लोभात् उपात्तं गृहीतम्। नूनमिति वितर्के ॥७६

ततो धनुर्धरः कोपविलोहिताक्षस्तरस्वी बलवान् स कुशस्तीरगतः सन् धनुराततज्यम् अधिज्यं कृत्वा। भुजङ्गस्य कुमुदस्य नाशाय गारुत्मतं गरुत्मद्देवताकं अस्त्रं समाददे ॥७७

तस्मिन् अस्त्रे संहितमात्रे सति एव ह्रदः क्षोभाद्धेतोः समाविद्धाः सङ्घट्टितास्तरङ्गा एव हस्ता यस्य स रोधांसि निघ्नन् पातयन् अवपाते गजग्रहणगर्ते मग्नः पतितः। "अवपातस्तु हस्त्यर्थे गर्तश्छन्नस्तृणादिना" इति यादवः। वन्यकरी इव परुषं घोरं ररास दध्वान ॥७८

मथ्यमानात् समुद्रादिव उद्वृत्तनक्रात् क्षुभितग्राहात् तस्मात् ह्रदात् लक्ष्म्या सार्धं सुर-राजस्य इन्द्रस्य वृक्षः पारिजात इव कन्यां पुरस्कृत्य भुजङ्गराजः कुमुदः सहसा उन्ममज्ज ॥७९

विशाम्पतिर्मनुजपतिः कुशः "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। विभूषणं प्रत्युपहर्तुं

त्रैलोक्यनाथप्रभवं प्रभावात् कुशं द्विषामङ्कुशमस्त्रविद्वान् ।
मानोन्नतेनाप्यभिवन्द्य मूर्द्ध्ना मूर्द्धाभिषिक्तं कुमुदो बभाषे ॥ ८१

अवैमि कार्य्यान्तरमानुषस्य विष्णोः सुताख्यामपरां तनुं त्वाम् ।
सोऽहं कथं नाम तवाचरेयमाराधनीयस्य धृतेर्विघातम् ॥ ८२

कराभिघातोत्थितकन्दुकेयमालोक्य बालातिकुतूहलेन ।
ह्रदात् पतज्ज्योतिरिवान्तरिच्चादादत्त जैत्राभरणं त्वदीयम् ॥ ८३

तदेतदाजानुविलम्बिना ते ज्याघातरेखाकिणलाञ्छनेन ।
भुजेन रच्चापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ ८४

अन्वयः । अस्त्रविद्वान् कुमुदः त्रैलोक्यनाथप्रभवं (अतएव) प्रभावात् द्विषाम् अङ्कुशं मूर्द्धाभिषिक्तं कुशं मानोन्नतेन अपि मूर्द्ध्ना अभिवन्द्य बभाषे ॥८१

अन्वयः । त्वाम्, कार्य्यान्तरमानुषस्य विष्णोः सुताख्याम् अपरां तनुं अवैमि, सः अहं आराधनीयस्य तव धृतेः विघातं कथं नाम आचरेयम् ॥८२

अन्वयः । कराभिघातोत्थितकन्दुका इयं बाला अतिकुतूहलेन अन्तरिच्चात् ज्योतिः इव ह्रदात् पतत् त्वदीयं जैत्राभरणम् आलोक्य आदत्त ॥८३

अन्वयः । तत् एतत् आजानुलम्बिना ज्याघातरेखाकिणलाञ्छनेन भूमेः रच्चापरिघेण अंसलेन ते भुजेन पुनः योगं उपैतु ॥८४

...प्रत्यर्पयतीति विभूषणप्रत्युपहारः, कर्म्मण्यण् । विभूषणप्रत्युपहारो हस्तो यस्य तं उपस्थितं ...तुं वीक्ष्य सौपर्णं गारुत्मतम् अस्त्रं प्रतिसञ्जहार । तथाहि—सन्तः प्रह्वेषु नम्रेषु ...अरुषोऽनियतकोपा हि ॥८०

...अस्त्रे विद्वान् अस्त्रविद्वान्, "न लोक"—इत्यादिना षष्ठीसमासनिषेधः । "द्वितीया श्रित" ...गम्यादीनामुपसंख्यानात् द्वितीयेति, योगविभागाद्वा समासः । गारुड़ास्त्रमहिमाभिज्ञ... । कुमुदः त्रयो लोकास्त्रैलोक्यम्, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । त्रैलोक्य... नाथः रामः प्रभवो जनको यस्य तम्, अतएव प्रभावात् द्विषामङ्कुशं निवारकं मूर्द्धाभिषिक्तं ... मानोन्नतेन अपि मूर्द्ध्ना अभिवन्द्य प्रणम्य बभाषे ॥८१

...त्वाम्, ओदनान्तरस्तण्डुल इतिवत् कार्य्यान्तरः कार्य्यार्थः । "स्थानात्मायान्यतादर्थ्यरन्ध्रा... ...वान्तरम्" इति शाश्वतः । स चासौ मानुषश्चेति तस्य विष्णो रामस्य सुताख्यां पुत्र... अपरां तनुं मूर्त्तिमवैमि । "आत्मा वै पुत्रनामासि" इति श्रुतेरित्यर्थः । स जानन् ... आराधनीयस्य उपास्यस्य तव धृतेः प्रीतेः "धृ प्रीतौ" इति धातोः स्त्रियां क्तिन् । ...कथं नाम आचरेयम्, असम्भावितमित्यर्थः ॥८२

...कराभिघातेन उत्थित ऊर्द्ध्वं गतः कन्दुको यस्याः सा कन्दुकार्थं ऊर्द्ध्वं पश्यन्तीत्यर्थः । ...बाला अतिकुतूहलेन अत्यन्तकौतुकेन अन्तरिच्चात् ज्योतिर्नक्षत्रमिव "ज्योतिर्भद्योतदृष्टिषु" ... । ह्रदात् पतत् त्वदीयं जैत्राभरणं आलोक्य आदत्त आददात् ॥८३

इमां स्वसारं च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम्।
आत्मापराधं नुदतीं चिराय शुश्रूषया पार्थिव ! पादयोस्ते॥ ८५

इत्यूचिवानुपहृताभरणः क्षितीशं
श्लाघ्यो भवान् स्वजन इत्यनुभाषितारम्।
संयोजयां विधिवदास समेतबन्धुः
कन्यामयेन कुमुदः कुलभूषणेन॥ ८६

तस्याः स्पृष्टे मनुजपतिना साहचर्याय हस्ते
माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य।
दिव्यस्तूर्य्यध्वनिरुदचरद्व्यश्नुवानो दिगन्तान्
गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्य्यमेघाः॥ ८७

अन्वयः। (हे) पार्थिव ! ते पादयोश्चिराय शुश्रूषया आत्मापराधं नुदतीं इमां मे यवीयसीं स्वसारं च कुमुद्वतीं अनुमन्तुं न अर्हसीति न॥८५

अन्वयः। इति ऊचिवान् उपहृताभरणः, कुमुदः (हे कुमुद!) भवान् श्लाघ्यः स्वजन इत्यनुभाषितारं क्षितीशं समेतबन्धुः (सन्) कन्यामयेन कुलभूषणेन विधिवत् संयोजयां आस॥८६

अन्वयः। मनुजपतिना साहचर्याय माङ्गल्योर्णावलयिनि तस्याः हस्ते उच्छिखस्य पावकस्य पुरः स्पृष्टे (सति) दिगन्तान् व्यश्नुवान् दिव्यस्तूर्य्यध्वनिः उदचरत्, तदनु आश्चर्य्यमेघाः गन्धोदग्रं पुष्पं ववृषुः॥८७

तदेतत् आभरणं आजानुविलम्बिना दीर्घेण ज्यावातेन या रेखा रेखाकारा ... तासां किणं चिह्नं तदेव लाञ्छनं यस्य तेन भूमेः रक्षायाः परिघेण अर्गलेन, "परिघो योगभेदास्त्रमुद्गरेऽर्गलघातयोः" इत्यमरः। बलवता ते भुजेन पुनर्योगं सङ्गतिं ... एतैर्विशेषणैर्महाभाग्यशौर्य्यधुरन्धरत्वबलत्वादि गम्यते॥८४

किञ्च हे पार्थिव ! ते तव पादयोश्चिराय शुश्रूषया परिचर्य्यया "शुश्रूषा श्रोतुमिच्छा परिचर्य्याप्रदानयोः" इति विश्वः। आत्मापराधं आभरणग्रहणरूपं नुदतीं, परिजिहीर्षन्तीमित्यर्थः "आशंसायां भूतवच्च" इति चकाराद्वर्त्तमानार्थे शतृप्रत्ययः। "आच्छीनद्योर्नुम्" इत्यस्य वैकल्पिकत्वान्नुमभावः। इमां मे यवीयसीं कनिष्ठां स्वसारं भगिनीं कुमुद्वतीं अनुमन्तुं न अर्हसीति न अर्हस्येवेत्यर्थः॥८५

इति पूर्व्वश्लोकोक्तं ऊचिवान् उक्तवान्, ब्रुवः क्वसुः। उपहृताभरणः प्रत्यर्पिताभरणः कुमुदः हे कुमुद ! भवान् श्लाघ्यः स्वजनो बन्धुः, इत्यनुभाषितारं अनुवक्तारं क्षितीशं कुशं समेतबन्धुः सङ्गतबन्धुः सन् कन्यामयेन कन्यारूपेण कुलयोर्भूषणेन विधिवत् संयोजयामास। नकेवलं तदीयमेव किन्तु स्वकीयमपि भूषणं तस्मै दत्तवानिति ध्वनिः। आम्प्रत्ययानुप्रयोगव्यवधानन्तु प्रागेव समाहितम्॥८६

इत्थं नागस्त्रिभुवनगुरोरौरसं मैथिलेयं
लब्ध्वा बन्धुं तमपि च कुशः पञ्चमं तक्षकस्य ।
एकः शङ्कां पितृवधरिपोरत्यजद्वैनतेया-
च्छान्तव्यालामवनिमपरः पौरकान्तः शशास ॥८८

न्वयः। इत्थं नागः त्रिभुवनगुरोः औरसं मैथिलेयं बन्धुं लब्ध्वा कुशः अपि तक्षकस्य
तं बन्धुं लब्ध्वा एकः पितृवधरिपोः वैनतेयात् शङ्कां अत्यजत्, अपरः शान्तव्यालां
(अतएव) पौरकान्तः (सन्) शशास ॥ ८८

नुजपतिना कुशेन साहचर्य्याय सहधर्म्माचरणायेत्यर्थः। माङ्गल्या मङ्गले साधुर्य्या
सेषादिलोम "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः। अत्र लक्षणया तन्निमित्तं सूत्र-
ते। तया वलयिनि वलयवति तस्याः कुमुद्वत्या हस्ते पाणौ उच्छिखस्य उदर्चिषः
स्य पुरोऽग्रे स्पृष्टे गृहीते सति दिगन्तान् व्यश्नुवानी व्याप्नुवानी दिव्यतूर्य्यध्वनिरुद-
उत्थितः। तदनु आश्चर्य्या अद्भुता मेघा गन्धेन उदग्रं उत्कटं पुष्पं पुष्पाणि, जात्य-
पेकवचनम् ववृषुः। आश्चर्य्यशब्दस्य "रौद्रं तूग्रमयी त्रिषु। चतुर्दश" इत्यमरवचना-
ङ्गम् ॥ ८७

त्थं नागः कुमुदः त्रयाणां भुवनानां समाहारस्त्रिभुवनम् "तद्धितार्थे—" इत्यादिना
सः। अदन्तद्विगुत्वेऽपि पात्राद्यदन्तत्वान्नपुंसकत्वम् "पात्राद्यन्तैरनेकार्थो द्विगुर्लक्ष्यानु-
सः" इत्यमरः। तस्य गुरुः रामः तस्यौरसं धर्म्मपत्नीजं पुत्रम्। "औरसो धर्म्मपत्नीजः"
याज्ञवल्क्यः। मैथिलेयं कुशं बन्धुं लब्ध्वा कुशोऽपि च तक्षकस्य पञ्चमं पुत्रं तं
लब्ध्वा, एकस्तयोरन्यतरः कुमुदः पितृवधेन रिपोर्वैनतेयात् गरुड़ात्। गुरुणा वैष्णवा-
कुशेन स्वाजितशौर्य्यात् इति भावः। शङ्कां भयं अत्यजत्। अपरः कुशः शान्तव्यालां
शान्तया वीतसर्पभयां अवनिं अतएव पौरकान्तः पौरप्रियः सन् शशास ॥ ८८

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ
रघुवंशमहाकाव्ये कुमुद्वतीपरिणयो नाम
षोड़शः सर्गः।

# सप्तदशः सर्गः ।

—:०✿०:—

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना ॥ १

सः पितुः पितृमान् वंशं मातुश्चानुपमद्युतिः ।
अपुनात् सवितुर्वोभौ मार्गावुत्तरदक्षिणौ ॥ २

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात् पार्थिवकन्यानां पाणिमग्राहयत् पिता ॥ ३

अन्वयः । कुमुद्वती काकुत्स्थात् अतिथिं नाम पुत्रं चेतना पश्चिमात् यामिनीयामात् प्रसादम् इव, आप ॥ १

अन्वयः । पितृमान् अनुपमद्युतिः सः पितुः मातुः च वंशं सविता उत्तरदक्षिणौ उभौ मार्गौ इव अपुनात् ॥ २

अन्वयः । अर्थविदां वरः पिता तम् आदौ कुलविद्यानाम् अर्थम्; पश्चात् पार्थिवकन्यानां पाणिम् अग्राहयत् ॥ ३

नमो रामपदाम्भोजं रेणवो यत्र सन्ततम् ।
कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥

कुमुद्वती काकुत्स्थात् कुशात् अतिथिं नाम पुत्रम् चेतना बुद्धिः पश्चिमात् पश्चिमात् यामिन्या रात्रेर्यामात् प्रहरात् । "द्वौ यामप्रहरौ समौ" इत्यमरः । प्रसादं वैशद्यं इव प्राप । ब्राह्मे सर्वेषां बुद्धिवैशद्यं भवतीति प्रसिद्धिः ॥ १

पितृमान् प्रशंसार्थे मतुप् । सुशिक्षित इत्यर्थः । अनुपमद्युतिः, सवितुश्च इदं विशेषणम् सोऽतिथिः पितुः कुशस्य मातुः कुमुद्वत्याश्च वंशं सविता उत्तरदक्षिणौ उभौ मार्गौ इव अपुनात् पवित्रीकृतवान् ॥ २

अर्थान् शब्दार्थान् दानसंग्रहादिक्रियाप्रयोजनानि च विदन्तीत्यर्थविदः तेषां वरः श्रेष्ठः पिता कुशस्तं अतिथिं आदौ प्रथमं कुलविद्यानां आन्वीक्षिकीत्रयीवार्त्तादण्डनीतीनां अभिधेयं अग्राहयत् अबोधयत् । पश्चात् पार्थिवकन्यानां पाणिं अग्राहयत् लोकाचारवशात् उदवाहयदित्यर्थः । यद्वैष्यंन्तस्य सर्वत्र द्विकर्मकत्वमस्तीत्युक्तं प्राक् ॥ ३

जात्यस्तेनाभिजातेन शूरः शौर्य्यवता कुशः।
अमन्यतैकमात्मानम् अनेकं वशिना वशी ॥ ४

स कुलोचितमिन्द्रस्य साहायकमुपेयिवान्।
जघान समरे दैत्यं दुर्जयं तेन चावधि ॥ ५

तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती।
अन्वगात् कुमुदानन्दं शशाङ्कमिव कौमुदी ॥ ६

तयोर्दिवस्पतेरासीत् एकः सिंहासनार्द्धभाक्।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥ ७

अन्वयः। जात्यः शूरः वशी कुशः अभिजातेन शौर्य्यवता वशिना तेन एकम् आत्मानम् अनेकं अमन्यत ॥ ४

अन्वयः। सः कुलोचितं इन्द्रस्य साहायकं उपेयिवान् (सन्) समरे दुर्ज्जयं दैत्यं जघान, तेन अवधि च ॥ ५

अन्वयः। कुमुदस्य नागराजस्य स्वसा कुमुद्वती कुमुदानन्दं शशाङ्कं कौमुदी इव तं अन्वगात् ॥ ६

अन्वयः। तयोः एकः दिवस्पतेः सिंहासनार्द्धभाक्, द्वितीया अपि शच्याः पारिजातांश-भागिनी सखी आसीत ॥ ७

जातौ भवो जात्यः कुलीनः शूरो वशी कुशोऽभिजातेन कुलीनेन "अभिजातः कुलीनः स्यात्" इत्यमरः। शौर्य्यवता वशिना तेन अतिथिना करणेन एकं आत्मानं एको न भवतीत्यनेकस्तं अमन्यत। सर्वगुणसामग्र्यादात्मजमात्मानम् एव रूपान्तरममंस्त इत्यर्थः ॥ ४

सः कुशः कुलोचितं कुलाभ्यस्तं इन्द्रस्य सहायकं सहकारित्वं "योपधात्" इत्यादिना वुञ्। उपेयिवान् प्राप्तः सन् समरे नामतोऽर्थतश्च दुर्जयं दैत्यं जघान अवधीत्। तेन दैत्येन अवधि हतश्च। "लुङि च" इति हनो वधादेशः ॥ ५

कुमुदस्य नाम नागराजस्य स्वसा कुमुद्वती कुशपत्नी कुमुदानन्दं शशाङ्कं कौमुदी ज्योत्स्ना इव तं कुशम् अन्वगात्। कुशस्तु, कुः पृथ्वी तस्या मुत् प्रीतिः सैव आनन्दो यस्येति कुमुदानन्दः। परानन्देन स्वयमानन्दतीत्यर्थः ॥ ६

तयोः कुशकुमुद्वत्योर्मध्ये एकः कुशो। दिवस्पतेः इन्द्रस्य सिंहासनार्द्धं सिंहासनैकदेशं भजतीति भाक् आसीत्, द्वितीया कुमुद्वती शच्या इन्द्राण्याः पारिजातांशस्य भागिनी यास्त्वियो 'भजश्च' इत्यादिना भजेर्घिनुण् प्रत्ययः। सखी आसीत् कस्कादित्वात् दिवस्पतिः साधुः ॥ ७

तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः ।
स्मरन्तः पश्चिमामाज्ञां भर्त्तुः संग्रामयायिनः ॥ ८

ते तस्य कल्पयामासुः अभिषेकाय शिल्पिभिः ।
विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम् ॥ ९

तत्रैनं हैमकुम्भेषु सम्भृतैस्तीर्थवारिभिः ।
उपतस्थुः प्रकृतयः भद्रपीठोपवेशितम् ॥१०

नदद्भिः स्निग्धगम्भीरं तूर्य्यैराहतपुष्करैः ।
अन्वमीयत कल्याणं तस्याविच्छिन्नसन्तति ॥ ११

दूर्वायवाङ्कुरप्लक्ष-त्वगभिन्नपुटोत्तरान् ।
ज्ञातिवृद्धैः प्रयुक्तान् स भेजे नीराजनाविधीन् ॥ १२

अन्वयः । संग्रामयायिनः भर्त्तुः पश्चिमाम् आज्ञां स्मरन्त मन्त्रिवृद्धाः तदात्मसम्भवम् राज्ये समादधुः ॥ ८

अन्वयः । ते तस्य अभिषेकाय शिल्पिभिः उद्वेदि चतुस्तम्भप्रतिष्ठितं नवं विमानं कल्पयामासुः ॥ ९

अन्वयः । प्रकृतयः तत्र भद्रपीठोपवेशितम् एनं हैमकुम्भेषु सम्भृतैः तीर्थवारिभिः उपतस्थुः ॥ १०

अन्वयः । आहतपुष्करैः स्निग्धगम्भीरं नदद्भिः तूर्य्यैः तस्य अविच्छिन्नसन्तति कल्याणं अन्वमीयत ॥ ११

अन्वयः । सः दूर्वायवाङ्कुरप्लक्ष त्वगभिन्नपुटोत्तरान् ज्ञातिवृद्धैः प्रयुक्तान् नीराजनाविधीन् भेजे ॥ १२

संग्रामयायिनः संग्रामं यास्यतः, आवश्यकार्थे णिनिः । "अकेनोर्भविष्यदाधमर्ण्ययोः" इति षष्ठीनिषेधः । भर्त्तुः स्वामिनः कुशस्य पश्चिमां अन्तिमां आज्ञां विपर्य्यये पुत्रोऽभिषेक्तव्य इत्येवंरूपां स्मरन्तो मन्त्रिवृद्धास्तदात्मसम्भवं अतिथिं राज्ये समादधुर्निदधुः ॥ ८

ते मन्त्रिणस्तस्य अतिथेः अभिषेकाय शिल्पिभिः उद्वेदि उन्नतवेदिकं चतुःस्तम्भप्रतिष्ठितं चतुर्षु स्तम्भेषु प्रतिष्ठितं नवं विमानं मण्डपं कल्पयामासुः कारयामासुः ॥ ९

तत्र विमाने भद्रपीठे पीठविशेषे उपवेशितं एनं अतिथिं हैमकुम्भेषु सम्भृतैः संगृहीतैः तीर्थवारिभिः करणैः प्रकृतय उपतस्थुः ॥ १०

आहतं पुष्करं मुखं येषां तैः "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेऽपि च" इत्यमरः । स्निग्धं मधुरं गम्भीरञ्च नदद्भिस्तूर्य्यैस्तस्य अतिथेः अविच्छिन्नसन्तति अविच्छिन्नपारम्पर्यं कल्याणं भावि शुभं अन्वमीयत अनुमितम् ॥ ११

सः अतिथिः दूर्वा च यवाङ्कुराश्च प्लक्षत्वचश्च अभिन्नपुटाः बालपल्लवाश्च उत्तराणि प्रधा-

पुरोहितपुरोगास्तं जिष्णुं जैत्रैरथर्वभिः।
उपचक्रमिरे पूर्वम् अभिषेक्तुं द्विजातयः॥ १३

तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत।
सशब्दमभिषेकश्रीः गङ्गेव त्रिपुरद्विषः॥ १४

स्तूयमानः क्षणे तस्मिन् अलक्ष्यत स वन्दिभिः।
प्रवृद्ध इव पर्जन्यः सारङ्गैरभिनन्दितः॥ १५

तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः।
ववृधे वैद्युतस्याग्नेः वृष्टिसेकादिव द्युतिः॥ १६

स तावदभिषेकान्ते स्नातकेभ्यो ददौ वसु।
यावतैषां समाप्येरन् यज्ञाः पर्य्याप्तदक्षिणाः॥ १७

अन्वयः। पुरोहितपुरोगाः द्विजातयः जिष्णुं तं जैत्रैः अथर्वभिः पूर्वं अभिषेक्तुं उपचक्रमिरे॥१३

अन्वयः। तस्य मूर्ध्नि सशब्दं निपतन्ती ओघमहती अभिषेकश्रीः त्रिपुरद्विषः (मूर्ध्नि) निपतन्ती गङ्गा इव, व्यरोचत॥१४

अन्वयः। तस्मिन् क्षणे वन्दिभिः स्तूयमानः सः प्रवृद्धः सारङ्गैः अभिनन्दितः पर्जन्य इव अलक्ष्यत॥१५

अन्वयः। सन्मन्त्रपूताभिः अद्भिः स्नानं प्रतीच्छतः तस्य वृष्टिसेकात् वैद्युतस्य अग्नेः इव द्युतिः ववृधे॥१६

अन्वयः। सः अभिषेकान्ते स्नातकेभ्यः तावत् वसु ददौ यावता एषां पर्य्याप्तदक्षिणाः यज्ञाः समाप्येरन्॥१७

नानि येषु तान्, अभिन्नपुटानि मधूकपुष्पाणीति केचित्। कमलानीत्यन्ये। ज्ञातिषु ये ...तैः प्रयुक्तान् नीराजनाविधीन् भेजे॥१२

पुरोहितपुरोगा पुरोहितप्रमुखा द्विजातयो ब्राह्मणा जिष्णुं जयशीलं तं अतिथिं जैत्रैः जयशीलैः अथर्वभिर्मन्त्रविशेषैः करणैः पूर्वं अभिषेक्तुं उपचक्रमिरे॥१३

तस्य अतिथेर्मूर्ध्नि सशब्दं निपतन्ती ओघमहती महाप्रवाहा, अभिषिच्यतेऽनेन इत्यभिषेको जलम्, स एव श्रीः, यद्वा तस्य श्रीः, सद्भिः त्रिपुरद्विषः शिवस्य मूर्ध्नि निपतन्ती गङ्गा इव व्यरोचत। त्रयाणां पुराणां द्वेष्टीति विग्रहः॥१४

तस्मिन् क्षणेऽभिषेककाले वन्दिभिः स्तूयमानः सः अतिथिः प्रवृद्धः प्रवृद्धवान् कर्त्तरि क्तः। अतएव सारङ्गैश्चातकैरभिनन्दितः पर्ज्जन्यो मेघ इव अलक्ष्यत॥१५

सन्मन्त्रैः पूताभिः शुद्धाभिरद्भिः स्नानं प्रतीच्छतः कुर्वतस्तस्य, वृष्टिसेकात् विद्युतोऽयं वैद्युतः तस्य अविच्छिन्नस्य अग्नेः इव द्युतिर्ववृधे॥१६

ते प्रीतमनसस्तस्मै यामाशिषमुदेरयन् ।
सा तस्य कर्म्मनिर्वृत्तैः दूरं पश्चात् कृता फलैः ॥ १८

बन्धच्छेदं स बद्धानां बधार्हाणामबध्यताम् ।
धुर्य्याणाञ्च धुरो मोक्षमदोहञ्चादिशद्गवाम् ॥ १९

क्रीड़ापतत्रिणोऽप्यस्य पञ्जरस्थाः शुकादयः ।
लब्धमोक्षास्तदादेशात् यथेष्टगतयोऽभवन् ॥ २०

ततः कक्ष्यान्तरन्यस्तं गजदन्तासनं शुचि ।
सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः ॥ २१

अन्वयः । प्रीतमनसः ते तस्मै याम् आशिषम् उदेरयन्, कर्म्मनिर्वृत्तैः फलैः दूरं पश्चात् कृता ॥१८

अन्वयः । सः बद्धानां बन्धच्छेदं बधार्हाणाम् अबध्यतां धुर्य्याणां च धुरः मोक्षं गवाम् अदोहं च आदिशत् ॥१९

अन्वयः । पञ्जरस्थाः शुकादयः अस्य क्रीड़ापतत्रिणः अपि तदादेशात् लब्धमोक्षाः ( सन्तः ) यथेष्टगतयः अभवन् ॥२०

अन्वयः । ततः सः नेपथ्यग्रहणाय कक्ष्यान्तरन्यस्तं शुचि सोत्तरच्छदं गजदन्तासनं अध्यास्त ॥२१

सः अतिथिरभिषेकान्ते स्नातकेभ्यो गृहस्थेभ्यस्तावत् तावत्परिमाणं वसु धनं ददौ यावता वसुना एषां स्नातकानां पर्य्याप्तदक्षिणाः समग्रदक्षिणा यज्ञाः समाप्येरन् । तावद्ददावित्यन्वयः ॥१७

प्रीतमनसस्ते स्नातकास्तस्मै अतिथये यां आशिषं उदेरयन् व्याहरन्, सा आशीस्तस्य अतिथेः कर्म्मनिर्वृत्तैः पूर्वपुण्यनिष्पन्नैः फलैः साम्राज्यादिभिर्दूरं दूरतः पश्चात्कृता । स्वफलदानस्य तदानीमनवकाशात् कालान्तरोद्वीक्षणं न चकारेत्यर्थः ॥१८

सोऽतिथिर्बद्धानां बन्धच्छेदम्, बधार्हाणां अबध्यताम्, धुरं वहन्तीति धुर्य्या बलीवर्द्दादयः, तेषां धुरो भारस्य मोक्षम्, गवां अदोहं वत्सानां पानार्थं दोहनिवृत्तिञ्च आदिशत् आदिदेश ॥१९

पञ्जरस्थाः शुकादयोऽस्यातिथेः क्रीड़ापतत्रिणोऽपि किमुतान्यः ? इत्यपिशब्दार्थः । तदादेशात् तस्य अतिथेः शासनात् लब्धमोक्षाः सन्तः यथेष्टं गतिर्येषां ते स्वेच्छाचारिणः अभवन् ॥२०

ततः सोऽतिथिर्नेपथ्यग्रहणाय प्रसाधनस्वीकाराय कक्ष्यान्तरं हर्म्याङ्गणविशेषः । "कक्ष्या प्रकोष्ठे हर्म्यादेः" इत्यमरः । तत्र न्यस्तं स्थापितं शुचि निर्म्मलं सोत्तरच्छदं आस्तरणसहितं गजदन्तस्य आसनं पीठम् अध्यास्त । तत्रोपविष्ट इत्यर्थः ॥२१

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥ २२

तेऽस्य मुक्तागुणोन्नद्धं मौलिमन्तर्गतस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥ २३

चन्दनेनाङ्गरागञ्च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥ २४

आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ २५

अन्वयः। तोयनिर्णिक्तपाणयः प्रसाधकाः धूपाश्यानकेशान्तं तं तैः तैः आकल्पसाधनैः उपसेदुः ॥ २२

अन्वयः। ते मुक्तागुणोन्नद्धम् अन्तर्गतस्रजं अस्य मौलिं प्रभामण्डलशोभिना पद्मरागेण प्रत्यूपुः ॥ २३

अन्वयः। (किञ्च) मृगनाभिसुगन्धिना चन्दनेन अङ्गरागम् समापय्य ततः विन्यस्तरोचनं पत्रं च चक्रुः ॥ २४

अन्वयः। आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् राज्यश्रीवधूवरः सः अतिशयप्रेक्ष्यः आसीत् ॥ २५

तोयेन निर्णिक्तपाणयः क्षालितहस्ताः प्रसाधका अलङ्कर्त्तारो धूपेन गन्धद्रव्यधूपेन आश्यानकेशान्तं तं शोषितकेशपाशान्तं तं अतिथिं तैस्तैः आकल्पस्य नेपथ्यस्य साधनैर्गन्धमाल्यादिभिः उपसेदुः उपतस्थुः। अलञ्चक्रुरित्यर्थः ॥ २२

ते प्रसाधका मुक्तागुणेन मौक्तिकसरेण उन्नद्धं उद्बद्धं अन्तर्गतस्रजं अस्य अतिथेर्मौलिं धम्मिल्लं प्रभामण्डलशोभिना पद्मरागेण माणिक्येन प्रत्यूपुः प्रत्युप्तं चक्रुः ॥ २३

किञ्च, मृगनाभ्या कस्तुरिकया सुगन्धिना चन्दनेन अङ्गरागं अङ्गविलेपनं समापय्य ततः अनन्तरं विन्यस्ता रोचना गोरोचना यस्मिन् तत् पत्रं पत्ररचनं चक्रुः ॥ २४

आमुक्ताभरणः आसञ्जिताभरणः, स्रजोऽस्य सन्तीति स्रग्वी। 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः। हंसाश्चिह्नमस्येति हंसचिह्नं यद्दुकूलं तद्वान्। अत्र बहुव्रीहिणा एवार्थसिद्धावानर्थक्येऽपि सर्वधनीत्यादिवत् कर्मधारयादपि मत्वर्थीयं प्रत्ययमिच्छन्ति, एवमन्यत्रापि द्रष्टव्यम्। राज्यश्रीरेव वधूर्नवोढा तस्या वरो वोढा। "वधूः स्नुषा नवोढा स्त्री भार्यासु" "वरो जामातृषिङ्गयोः" इति विश्वः। सोऽतिथिः अतिशयेन प्रेक्ष्यो दर्शनीय आसीत्। वरो विशेषणः ॥ २५

नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।
विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥ २६

स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः ।
ययावुदीरितालोकः सुधर्मानवमां सभाम् ॥ २७

वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूड़ामणिभिरुद्घृष्ट-पादपीठं महीक्षिताम् ॥ २८

शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत् ।
श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव केशवम् ॥ २९

अन्वयः । हिरण्मये आदर्शे नेपथ्यदर्शिनः तस्य छाया उदिते सूर्ये मेरौ कल्पतरोः ( छाया ) इव विरराज ॥ २६

अन्वयः । सः राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः (जनैः) उदीरितालोक सुधर्मानवमां सभां ययौ ॥ २७

अन्वयः । तत्र वितानसहितं महीक्षितां चूड़ामणिभिः उद्घृष्टपादपीठं पैतृकम् आसनं भेजे ॥ २८

अन्वयः । तेन च आक्रान्तं श्रीवत्सलक्षणं महत् मङ्गलायतनं कौस्तुभेन ( आक्रान्तं श्रीवत्सलक्षणम् ) केशवं वक्षः इव, शुशुभे ॥ २९

हिरण्मये सौवर्णे आदर्शे दर्पणे नेपथ्यदर्शिनो वेषं पश्यतस्तस्य अतिथेश्छाया प्रतिबिम्बम् उदिते सूर्ये दर्पणकल्पे मेरौ यः कल्पतरुस्तस्य छाया इव विरराज । तस्य सूर्यसंक्रान्तबिम्बस्य सम्भवात् मेरावित्युक्तम् ॥ २६

सोऽतिथी राजककुदानि राजचिह्नानि छत्रचमरादीनि । प्राधान्ये राजलिङ्गे वृषाङ्के ककुदोऽस्त्रियाम्' इत्यमरः। तेषु व्यग्राः पाणयो येषां तैः, पार्श्ववर्तिभिर्जनैरुदीरितालोक उच्चारितजयशब्दः आलोको जयशब्दः स्यात्, इति हलायुधः। सुधर्मायाः देवसभाया अनवमां अन्यूनां सभामास्थानीं ययौ । 'स्यात् सुधर्मा देवसभा' इत्यमरः ॥ २७

तत्र सभायां वितानेन उल्लोचेन सहितम् । 'अस्त्री वितानमुल्लोचे' इत्यमरः । महीक्षितां राज्ञां चूड़ामणिभिः शिरोरत्नैः उद्घृष्टम् उल्लिखितं पादपीठं यस्य तत्, पितुरिदं पैतृकम् । 'ऋतष्ठञ्' इति ठञ्प्रत्ययः । आसनं सिंहासनं भेजे ॥ २८

तेन च आक्रान्तम्, श्रीवत्सो नाम रेखाविशेषः, तल्लक्षणं 'श्रीवत्सरूपम्' । 'श्रीवत्सनन्द्यावर्त्तादिविच्छेदा बहवो हयोः' इति सज्जनः । महत् अधिकं मङ्गलायतनं मङ्गलगृह सभारूपम् कौस्तुभेन मणिना आक्रान्तं श्रीवत्सलक्षणम्, केशवस्य इदं केशवं वक्ष इव शुशुभे ॥ २९

बभौ भूयः कुमारत्वादधिराज्यमवाप्य सः ॥
रेखाभावादुपारूढः सामग्र्यमिव चन्द्रमाः ॥ ३०
प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम् ।
मूर्त्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ ३१
स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ ३२
तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा ।
पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम् ॥ ३३

अन्वयः। सः कुमारत्वात् भूयः अधिराज्यम् अवाप्य, रेखाभावात् सामग्र्यम् उपारूढः चन्द्रमा इव, बभौ ॥३०

अन्वयः। प्रसन्नमुखरागं स्मितपूर्वाभिभाषिणम् तम् अनुजीविनः मूर्त्तिमन्तं विश्वासं अमन्यन्त ॥ ३१

अन्वयः। पुरुहूतश्रीः सः कल्पद्रुमनिभध्वजाम् पुरम् ऐरावतौजसा नागेन क्रममाणः द्यां चकार ॥३२

अन्वयः। तस्य एकस्य मूर्ध्नि छत्रम् उच्छ्रितम्, अमलत्विषा तेन कृत्स्नस्य जगतः पूर्वराजवियोगौष्म्यं हृतम् ॥३३

सोऽतिथिः कुमारत्वात् बाल्यात् भूयो यौवराज्यं अवाप्य एव अनन्तरम्, अधिराजस्य भावः आधिराज्यं महाराज्यं अवाप्य रेखाभावात् अर्द्धेन्दुत्वमवाप्य एव सामग्र्यमुपारूढः पूर्णतां गतश्चन्द्रमा इव बभौ इति व्याख्यानम्। तदपि यौवराज्याभावनिश्चये न्याय एव ॥३०
प्रसन्नो मुखरागो मुखकान्तिर्यस्य तं स्मितपूर्व्वं यथा तथा अभिभाषिणं आभाषणशीलं अतिथिं अनुजीविनो मूर्त्तिमन्तं विग्रहवन्तं विश्वासं विस्रम्भं अमन्यन्त। "समौ विश्रम्भविश्वासौ" इत्यमरः ॥३१
पुरुहूतश्रीः सोऽतिथिः कल्पद्रुमाणां निभाः समाना ध्वजा यस्यास्तां पुरम् अयोध्याम् ऐरावतस्य ओज इव ओजो बलं यस्य तेन नागेन कुञ्जरेण क्रममाणश्चरन्। 'अनुपसर्गाद्वा' इति वैकल्पिकमात्मनेपदम्। द्यां चकार। स्वर्गलोकसदृशीं चकारेत्यर्थः। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः ॥३२
तस्य एकस्य मूर्ध्नि छत्रं उच्छ्रितं उन्नमितम्, अमलत्विषा तेन छत्रेण कृत्स्नस्य जगतः पूर्वराजस्य कुशस्य वियोगेन यत् औष्म्यं सन्तापः तत् हृतं नाशितम्। अत्र छत्रोन्नमनसन्तापहरणयोः कारणकार्य्ययोर्भिन्नदेशत्वादसङ्गतिरलङ्कारः। तदुक्तम्—'कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः" इति ॥३३

धूमादग्नेः शिखाः पश्चाद् उदयादंशवो रवेः ।
सोऽतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः ॥ ३४

तं प्रीतिविशदैर्नेत्रैः अन्वयुः पौरयोषितः ।
शरत्प्रसन्नैर्ज्योतिर्भिः विभावर्य्य इव ध्रुवम् ॥ ३५

अयोध्यादेवताश्चैनं प्रशस्तायतनार्चिताः ।
अनुदध्युरनुध्येयं सान्निध्यैः प्रतिमागतैः ॥ ३६

यावन्नाश्यायते वेदिः अभिषेकजलाप्लुता ।
तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७

वशिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।
किन्तत् साध्यं यदुभये साधयेयुर्न सङ्गताः ॥ ३८

अन्वयः । अग्नेः धूमात पश्चात् शिखाः, रवेः उदयात् (पश्चात) अंशवः, सः तैजसाम् वृत्तिं अतीत्य गुणैः समम् एव उत्थितः ॥३४

अन्वयः । शरत्प्रसन्नैः ज्योतिर्भिः विभावर्य्यः ध्रुवम् इव पौरयोषितः प्रीतिविशदैः नेत्रैः तम् अन्वयुः ॥३५

अन्वयः । प्रशस्तायतनार्च्चिताः अयोध्यादेवताः च अनुध्येयम् एनम् प्रतिमागतैः सान्निध्यैः अनुदध्युः ॥३६

अन्वयः । अभिषेकजलाप्लुता वेदिः यावत् न आश्यायते तावत् एव अस्य दुःसहः प्रतापः वेलान्तं प्राप ॥३७

अन्वयः । गुरोः वशिष्ठस्य मन्त्राः, धन्विनः तस्य सायकाः, उभये सङ्गताः (सन्तः अस्य) यत् न साधयेयुः तत् साध्यं किम् ? ॥३८

अग्नेर्धूमात् पश्चात् अनन्तरमित्यर्थः । शिखा ज्वालाः, रवेरुदयात पश्चादनन्तरं अंशवः उत्तिष्ठन्त इति शेषः । सोऽतिथिस्तेजसां अग्न्यादीनां वृत्तिं स्वभावमतीत्य गुणैः समं सह एव उत्थितः उदितः । अपूर्व्वमिदमित्यर्थः ॥३४

पौरयोषितः प्रीत्या विशदैः प्रसन्नैर्नेत्रैः करणैस्तं अतिथिं अन्वयुः अनुजग्मुः । सहर्षं प्रसारमद्राक्षुरित्यर्थः । कथमिव ? शरदि प्रसन्नैर्ज्योतिर्भिर्नक्षत्रैर्विभावर्य्यो रात्रयो ध्रुवमिव, ध्रुवपाशबद्धत्वात् ताराचक्रस्य इत्यर्थः ॥३५

प्रशस्तेषु आयतनेषु आलयेषु अर्च्चिता अयोध्यादेवताश्चानुध्येयं अनुग्राह्यं एनं अतिथिं प्रतिमागतैः अर्च्चासंक्रान्तैः सान्निध्यैः सन्निधानैः अनुदध्युः अनुजगृहुः । "अनुध्यानमनुग्रहः" इत्युत्पलमालायाम् । तदनुग्रहबुद्ध्या सन्निदधुरित्यर्थः ॥३६

अभिषेकजलैः आप्लुता सिक्ता वेदिः अभिषेकवेदिर्यावत् न आश्यायते न शुष्यति कर्त्तरि लट् । तावदेव अस्य राज्ञो दुःसहः प्रतापो वेलान्तं वेलापर्य्यन्तं प्राप ॥३७

स धर्म्मस्थसख: शश्वत् अर्थिप्रत्यर्थिनां स्वयम् ।
ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रित: ॥ ३९

तत: परमभिव्यक्त-सौमनस्यनिवेदितै: ।
युयोज पाकाभिमुखै: भृत्यान् विज्ञापनाफलै: ॥ ४०

प्रजास्तद्गुरुणा नद्य: नभसेव विवर्द्धिता: ।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययु: ॥ ४१

अन्वय: । धर्मस्थसख: अतन्द्रित: स: शश्वत् अर्थिप्रत्यर्थिनां संशयच्छेद्यान् व्यवहारान् स्वयं ददर्श ३९

अन्वय: । तत: परं भृत्यान् अभिव्यक्तसौमनस्यनिवेदितै: पाकाभिमुखै: विज्ञापनाफलै: युयोज ॥४०

अन्वय: । तद्गुरुणा नभसा नद्य: इव विवर्द्धिता: प्रजा: तस्मिन् तु नभस्ये ता: इव भूयसीं वृद्धिम् आययु: ॥४१

गुरोर्वशिष्ठस्य मन्त्रा: धन्विनस्तस्य अतिथे: सायका:, इत्युभये सङ्गता: सन्तो यत् साध्यं न साधयेयुस्तत् तादृक् साध्यं किम्? न किञ्चिदित्यर्थ:, तेषामसाध्यं नास्तीति भाव: ॥३८

धर्मे तिष्ठन्तीति धर्मस्था: सभ्या: । "राज्ञा सभासद: कार्य्या रिपौ मित्रे च ये समा:" इत्युक्तलक्षणा:, तेषां सखा धर्मस्थसख:, तत्सहित इत्यर्थ: । अतन्द्रितोऽनलस: स नृप: शश्वत् अन्वहमित्यर्थ: । अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनाञ्च संशयच्छेद्यान् संशयाधीनोच्छेद्यान् परिच्छेद्यान् सन्दिग्धत्वात् अवश्यनिर्णेयानित्यर्थ: । व्यवहारान् ऋणादानादिविवादान् स्वयं ददर्श अनुसन्दधौ । नतु प्राड्विवाकमेव नियुक्तवानित्यर्थ: । अत्र याज्ञवल्क्य: —'व्यवहारान् नृप: पश्येद्विद्वद्भिर्ब्राह्मणै: सह' इति ॥३९

तत: परं व्यवहारदर्शनानन्तरं भृत्यान् अनुजीविन: अभिव्यक्तं मुखप्रसादादिलिङ्गै: स्फुटीभूतं तत् सौमनस्यं स्वामिन: प्रसन्नत्वं तेन निवेदितै: सूचितै: पाकाभिमुखै: सिद्धप्रायैर्विज्ञापनानां विज्ञप्तीनां फलै: प्रेप्सितार्थैर्युयोज योजयामास । अत्र बृहस्पति:— 'नियुक्त: कार्य्यनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान् जनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजेत् ॥' इति । कविश्च वक्ष्यति—"अक्षोभ्य:—" (१७।४४) इति । अत्र सौमनस्यसूचनादिभिर्नृपस्य वृत्तसमाधिर्ध्वन्यत इत्यनुसन्धेयम् ॥४०

प्रजास्तस्य अतिथेर्गुरुणा पित्रा कुशेन नभसा श्रावणमासेन नद्य इव विवर्द्धिता: । तस्मिन् अतिथौ तु नभस्ये भाद्रपदे मासि ता इव नद्य इव भूयसीं वृद्धिं अभ्युदयं आययु: । गुणोत्कर्षेण पितरं अतिशयितवानित्यर्थ: ॥४१

यद्‌वाच न तन्मिथ्या यद्ददौ न जहार तत्।
सोऽभूद्‌भग्नव्रतः शत्रून् उद्धृत्य प्रतिरोपयन् ॥ ४२

वयोरूपविभूतीनाम् एकैकं मदकारणम्।
तानि तस्मिन् समस्तानि न तस्योत्सिषिचे मनः ॥ ४३

इत्थं जनितरागासु प्रकृतिष्वनुवासरम्।
अक्षोभ्यः स नवोऽप्यासीत् दृढमूल इव द्रुमः ॥ ४४

अनित्याः शत्रवो बाह्याः विप्रकृष्टाश्च ते यतः।
अतः सोऽभ्यन्तरान्नित्याम् षट् पूर्वमजयद्रिपून् ॥ ४५

अन्वयः। सः यत् उवाच तत् न मिथ्या अभूत्, यत् ददौ तत् न जहार, (किन्तु) शत्रून् उद्धृत्य प्रतिरोपयन् अभग्नव्रतः (अभूत्) ॥४२

अन्वयः। वयोरूपविभूतीनाम् एकैकं मदकारणम्, तानि तस्मिन् समस्तानि, (तथापि) तस्य मनः न उत्सिषिचे ॥४३

अन्वयः। इत्थम् अनुवासरम् प्रकृतिषु जनितरागासु (सतीषु) सः नवः अपि, दृढमूलः द्रुमः इव, अक्षोभ्यः आसीत् ॥४४

अन्वयः। यतः ते बाह्याः शत्रवः अनित्याः विप्रकृष्टाश्च, अतः सः अभ्यन्तरान् नित्यान् षट् रिपुन् पूर्व्वम् अजयत् ॥४५

सोऽतिथिर्यद्वाक्यं दानवाचादिविषयं उवाच तत् न मिथ्या अनृतं न अभूत्। यत् वस्तु ददौ तत् न जहार न पुनराददे। किन्तु शत्रून् उद्धृत्य उत्खाय प्रतिरोपयन् पुनः स्थापयन् अभग्नव्रतो भग्ननियमोऽभूत् ॥४२

वयोरूपविभूतीनां यौवनसौन्दर्य्यैश्वर्य्याणां मध्ये एकैकं मदकारणं मदहेतुः, तानि मदकारणानि तस्मिन् राज्ञि समस्तानि, मिलितानीति शेषः। तथापि तस्य अतिथेर्मनो न उत्सिषिचे न जगर्व्व। सिञ्चतेः स्वरितेत्वादात्मनेपदम्। अत्र वयोरूपादीनां गर्व्वहेतुत्वात् मदस्य च मदिराकार्य्यत्वेन अतत्कारकत्वात् मदशब्देन गर्व्वो लक्ष्यत इत्याहुः। उक्तञ्च-"ऐश्वर्य्यरूपतारुण्यकुलविद्याबलैरपि इष्टलाभादिना च्चा परावज्ञा गर्व्व ईरितः। मदस्त्वानन्द-सम्मोहः सम्भेदो मदिराकृतः॥" इति। अतएव कविनापि 'उत्सिषिचे' इत्युक्तम्। न तु "उन्ममाद" इति ॥४३

इत्थं अनुवासरं अन्वहं प्रकृतिषु प्रजासु जनितरागासु सतीषु स राजा नवोऽपि दृढमूलो द्रुम इव अक्षोभ्योऽप्रधृष्य आसीत् ॥४४

यतो बाह्याः शत्रवः प्रतिनृपा अनित्याः, हिंसन्ति च्छिद्यन्ते चेत्यर्थः। किञ्च, ते बाह्या विप्रकृष्टा दूरस्थाश्च, अतः सोऽभ्यन्तरान् अन्तर्व्वर्त्तिनो नित्यान् षट् रिपून् कामक्रोधादीन् पूर्व्वं अजयत्। अन्तःशत्रुजयी बाह्या अपि न दुर्जया इति भावः ॥४५

प्रसादाभिमुखे तस्मिन् चपलापि स्वभावतः ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥ ४६

कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ४७

न तस्य मण्डले राज्ञः न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत् किञ्चित् व्यभ्रस्येव विवस्वतः ॥ ४८

रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम् ।
तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४९

अन्वयः । स्वभावतः चपला अपि श्रीः प्रसादाभिमुखे तस्मिन् निकषे हेमरेखा इव अनपायिनी आसीत् ॥४६

अन्वयः । केवला नीतिः कातर्य्यं, शौर्य्यं श्वापदचेष्टितं, अतः सः समेताभ्यां उभाभ्यां सिद्धिम् अन्वियेष ॥४७

अन्वयः । न्यस्तप्रणिधिदीधितेः तस्य राज्ञः व्यभ्रस्य विवस्वतः इव मण्डले किञ्चित् अदृष्टम् न अभवत् ॥४८

अन्वयः । रात्रिन्दिवविभागेषु महीक्षितां यत् आदिष्टम्, तत् सः विकल्पपराङ्मुखः (सन्) नियोगेन सिषेवे ॥४९

स्वभावतश्चपला चञ्चलापि श्रीः प्रसादाभिमुखे तस्मिन् नृपे निकषे निकषोपले हेमरेखा इव अनपायिनी स्थिरा आसीत् ॥४६

केवला शौर्य्यवर्जिता नीतिः कातर्य्यं भीरुत्वम्, शौर्य्यं केवलमित्यनुसञ्जनीयम्, केवलं नीतिविरहितं शौर्य्यं श्वापदचेष्टितम् व्याघ्रादिचेष्टाप्रायमित्यर्थः । 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति हलायुधः । अतो हेतोः सोऽतिथिः समेताभ्यां सङ्गताभ्यामुभाभ्यां नीतिशौर्य्याभ्यां सिद्धिं जयप्राप्तिम् अन्वियेष गवेषितवान् ॥४७

न्यस्ताः सर्व्वतः प्रहिताः प्रणिधयश्चरा एव दीधितयो रश्मयो यस्य तस्य । "प्रणिधिः प्रार्थने चरे" इति शाश्वतः । तस्य राज्ञः, व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्य्यस्य इव, मण्डले विषये किञ्चिदल्पमपि अदृष्टं अज्ञातं न अभवत् न आसीत् । स चारचक्षुषा सर्वमपश्यदित्यर्थः ॥४८

रात्रौ च दिवा च रात्रिन्दिवम्, 'अचतुर—' इत्यादिनाधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः अव्ययान्तत्वादव्ययत्वम् । अत्र षष्ठ्यार्थलक्षणया रात्रिन्दिवमिति, अहोरात्रयोरित्यर्थः । तयोर्विभागा अंशाः प्रहरादयः, तेषु महीक्षितां राज्ञां यत् आदिष्टं इदं अस्मिन् काले कर्त्तव्यमिति मन्वादिभिरुपदिष्टं, तत् स राजा विकल्पपराङ्मुखः संशयरहितः सन् नियोगेन निश्चयेन सिषेवे । अनुष्ठितवानित्यर्थः । अत्र कौटिल्यः—'कार्य्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेन वा अन्येन वेति विकल्पः । अनेन चेति समुच्चयः" इति ॥४९

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः ।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥ ५०

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१

दुर्गाणि दुर्ग्रहाण्यासन् तस्य रोद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ ५२

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्माणः तस्य गूढं विपेचिरे ॥ ५३

अन्वयः। तस्य प्रतिदिनं मन्त्रिभिः सह मन्त्रः बभूव, सेव्यमानः अपि गुप्तद्वारः सः जातु न सूच्यते ॥५०

अन्वयः। यथाकालम् स्वपन् अपि सः परेषु स्वेषु च क्षिप्तैः अविज्ञातपरस्परैः अपसर्पैः जजागार ॥५१

अन्वयः। द्विषां रोद्धुः अपि तस्य दुर्ग्रहाणि दुर्गाणि आसन्, गजास्कन्दी सिंहः भयात् गिरिगुहाशय न हि ॥५२

अन्वयः। भव्यमुख्याः प्रत्यवेक्ष्याः (अतएव) निरत्ययाः गर्भशालिसधर्माणः तस्य समारम्भाः गूढं विपेचिरे ॥५३

तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रो विचारो बभूव। स मन्त्रः सेव्यमानः अपि अन्वहं आवर्त्त्यमानोऽपि जातु कदाचिदपि न सूच्यते न प्रकाश्यते। तत्र हेतुः—गुप्तद्वार इति। संवृतेङ्गिताकारादिज्ञानमार्ग इत्यर्थः ॥५०

यथाकालं उक्तकालानतिक्रमेण स्वपन् अपि योऽतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु मन्त्र्यादितीर्थेष्विति शेषः। क्षिप्तैः प्रहितैरविज्ञाताः परस्परं येषां तैः, अन्योन्याविज्ञातैरित्यर्थः। अपसर्पैश्चरैः, "अपसर्पश्चरः स्पशः" इत्यमरः। जजागार बुद्धवान्। चारचक्षुः सर्व्वमज्ञासीदित्यर्थः। अत्र कामन्दकः—"चारान् विचारयेत् तीर्थेष्वात्मनश्च परस्य च पाषण्डादनविज्ञातानन्योन्यमितरैरपि ॥" इति ॥५१

द्विषां रोद्धू रोधकस्य अपि न तु स्वयं रोध्यस्येत्यर्थः। तस्य राज्ञो दुर्ग्रहाणि परैर्दुर्ग्रहाणि दुर्गाणि मह्रीदुर्गादीनि आसन्। न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्यासेन आह—न हीति। गजान् आस्कन्दति हिनस्तीति गजास्कन्दी सिंहो भयाद्धेतोः गिरिगुहासु शेत इति गिरिगुहाशयो नहि। किन्तु स्वभावत एवेति शेषः। "अधिकरणे शेतेः" इत्यच्प्रत्ययः। अत्र मनुः—"धन्वदुर्गं मह्रीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥" इति ॥५२

भव्यमुख्याः कल्याणप्रधानाः न तु विपरीताः. प्रत्यवेक्ष्या एतावत् कृतमेतावत् कर्त्तव्यमित्यनुसन्धानेन विचारणीयाः अतएव निरत्यया निर्बाधा गर्भेऽभ्यन्तरे पच्यते इ शाल्यन्तरे

अपथेन प्रववृते न जातूपचितोऽपि सः ।
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ॥ ५४
कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः ।
यस्य कार्य्यः प्रतीकारः स तन्नैवोदपादयत् ॥ ५५
शक्येष्वेवाभवद् यात्रा तस्य शक्तिमतः सतः ।
समीरणसहायोऽपि नाम्भःप्रार्थी दावानलः ॥ ५६
न धर्म्ममर्थकामाभ्यां बबाधे न च तेन तौ ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥ ५७

अन्वयः । सः उपचितः अपि ( सन् ) जातु अपथेन न प्रववृते, लवणाम्भसः वृद्धौ ( सत्यां ) नदीमुखेन एव प्रस्थानं ॥ ५४

अन्वयः । प्रकृतिवैराग्यं सद्यः कामं शमयितुं क्षमः सः यस्य प्रतीकारः कार्य्यः, तत् न उदपादयत् ॥ ५५

अन्वयः । शक्तिमतः सतः तस्य शक्येषु एव यात्रा अभवत्, समीरणसहायः अपि दावानलः अम्भःप्रार्थी न ॥ ५६

अन्वयः । सः अर्थकामाभ्यां धर्म्मं न बबाधे, तेन च तौ न, अर्थं कामेन कामं वा अर्थेन न ( बबाधे ), ( किन्तु ) त्रिषु सदृशः ॥ ५७

अधर्माणः अतिनिगूढा इत्यर्थः । "धर्म्मादनिच् केवलात्" इत्यनिच्प्रत्ययः समासान्तः । तस्य राज्ञः समारभ्यन्त इति समारम्भाः कर्म्माणि गूढमप्रकाशं विपेचिरे फलिता इत्यर्थः । "फलानुमेयाः प्रारम्भाः" इति भावः ॥ ५३

सः अतिथि उपचितोऽपि वृद्धिं गतोऽपि सन् जातु कदाचिदपि अपथेन कुमार्गेण न प्रववृते न प्रवृत्तः, मर्य्यादां न जहावित्यर्थः । तथाहि—लवणाम्भसो लवणसागरस्य वृद्धौ पूरोत्पीड़े सत्यां नदीमुखेनैव नदीप्रवेशमार्गेणैव प्रस्थानं निःसरणम्, न त्वन्यथेत्यर्थः ॥ ५४

प्रकृतिवैराग्यं प्रजाविरागम्, दैवादुत्पन्नमिति शेषः । सद्यः कामं सम्यक् शमयितुं प्रतिकर्त्तुं क्षमः शक्तः स राजा यस्य प्रकृतिवैराग्यस्य प्रतीकारः कार्य्यः कर्त्तव्यः, अनर्थहेतुत्वादित्यर्थः । तत् वैराग्यं न उदपादयत् । उत्पन्नप्रतीकारादनुत्पादनं वरमिति भावः । अत्र कौटिल्यः—"क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रं वा भर्त्तारं घ्नन्ति वा स्वयम्" । तस्मात् प्रकृतीनां विरागकारणानि नोत्पादयेदित्यर्थः ॥ ५५

शक्तिमतः शक्तिसम्पन्नस्यापि सतस्तस्य राज्ञः शक्येषु शक्तिविषयेषु स्वस्मात् हीनबलेष एव विषये यात्रा दण्डयात्रा अभवत्, न तु समधिकेष्वित्यर्थः । तथाहि—समीरणसहायोऽपि दावानलः अम्भःप्रार्थी जलान्वेषी न, दग्धुमिति शेषः । किन्तु तृणकाष्ठादिकमेवान्विष्यतीत्यर्थः । अत्र कौटिल्यः—"समज्यायोभ्यां सन्दधीत हीनेन विगृह्णीयात्" इति ॥ ५६

हीनान्यनुपकर्त्तॄणि प्रवृद्धानि विकुर्वते ।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥ ५८

परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्बलिष्ठश्चेत् परस्मादास्त सोऽन्यथा ॥ ५९

कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।
अम्बुगर्भो हि जीमूतः चातकैरभिनन्द्यते ॥ ६०

अन्वयः । मित्राणि हीनानि अनुपकर्त्तॄणि, प्रवृद्धानि विकुर्वते, (अतः) तेन मध्यमशक्तीनि स्थापितानि ॥ ५८

अन्वयः । सः परात्मनोः शक्त्यादीनां बलाबलं परिच्छिद्य एभिः परस्मात् बलिष्ठः चेत् ययौ, अन्यथा न (ययौ) ॥ ५९

अन्वयः । कोशेन आश्रयणीयत्वं (भवति) इति तस्य अर्थसंग्रहः, हि अम्बुगर्भः जीमूतः चातकैः अभिनन्द्यते ॥ ६०

स राजा अर्थकामाभ्यां धर्म्मं न बबाधे न नाशितवान् । तेन धर्म्मेण च तौ अर्थकामौ न । अर्थं कामेण कामं वा अर्थेण न बबाधे । एकत्रैवासक्तो नाभूदित्यर्थः । किन्तु त्रिषु धर्मार्थकामेषु सदृशस्तुल्यवृत्तिः, अभूदित्यर्थः ॥ ५७

मित्राणि हीनानि अतिक्षीणानि चेत् अनुपकर्त्तॄणि अनुपकारीणि । प्रवृद्धानि अतिसमृद्धानि चेत् विकुर्व्वते विरुद्धं चेष्टन्ते, अपकुर्व्वत इत्यर्थः । "अकर्म्मकाच्च" इत्यात्मनेपदम् । अतः कारणात् तेन राज्ञा मित्राणि सुहृदः, "मित्रं सुहृदि मित्रोऽर्के" इति विश्वः । मध्यमशक्तीनि न अतिक्षीणोच्छ्रितानि यथा तथा स्थापितानि ॥ ५८

"शक्येष्वेवाभवद्यात्रा" (१७ । ५६) इत्यादिनोक्तमर्थं सोपस्कारमाह—

सः अतिथिः परात्मनोः शत्रोरात्मनश्च शक्त्यादीनां शक्तिदेशकालादीनां बलाबलं न्यूनाधिकभावं परिच्छिद्य निश्चित्य एभिः शक्त्यादिभिः परस्मात् शत्रोर्बलिष्ठः स्वयमतिशयेन बलवान् चेत्, बलशब्दात् मतुबन्तादिष्ठन्प्रत्ययः, "विन्मतोर्लुक्" इति मतुपो लुक् । ययौ यात्रां चक्रे । अन्यथा अबलिष्ठश्चेत् आस्त अतिष्ठत, न ययावित्यर्थः । अत्र मनुः—"यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् । परस्य विपरीतं चेत् तदा यायाद्रिपून् प्रति ॥ यदा तु स्यात् परिक्षीणो वाहनेन बलेन च । तदासीत् प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥" इति ॥ ५९

कोशेन अर्थचयेन आश्रयणीयत्वं भजनीयत्वम्, भवतीति शेषः । इति हेतोस्तस्य राज्ञः कर्त्तुः अर्थसंग्रहः, न तु लोभादित्यर्थः । तथाहि—अम्बु गर्भे यस्य सः अम्बुगर्भः, जीवनस्य जलस्य मूतः पुटबन्धो जीमूतो मेघः । "मूङ् बन्धने" पृषोदरादित्वात् साधुः । चातकैरभिनन्द्यते सेव्यते । अत्र कामन्दकः—"धर्म्महेतोस्तथार्थाय भृत्यानां रक्षणाय च । आपदर्थञ्च संरक्ष्यः कोशो धर्म्मवतां सदा ॥ ६०

परकर्म्मापहः सोऽभूदुद्यतः स्वेषु कर्म्मसु ।
आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन्रिपून् ॥ ६१

पित्रा संवर्द्धितो नित्यं कृतास्त्रः साम्परायिकः ।
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥ ६२

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात् तत् अयस्कान्त इवायसम् ॥ ६३

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४

अन्वयः। सः परकर्म्मापहः (सन्) स्वेषु कर्म्मसु उद्यतः अभूत्, रिपून् रन्ध्रेषु प्रहरन् आत्मनः रन्ध्रं आवृणोत ॥ ६१

अन्वयः। दण्डवतः तस्य पित्रा नित्यं संवर्द्धितः कृतास्त्रः साम्परायिकः दण्डः स्वदेहात् न व्यशिष्यत ॥ ६२

अन्वयः। सर्पस्य शिरोरत्नम् इव अस्य शक्तित्रयं परः न चकर्ष, सः (तु) परस्मात् तत् अयस्कान्तः आयसं इव (चकर्ष) ॥ ६३

अन्वयः। स्रवन्तीषु वापीषु इव, वनेषु उपवनेषु इव, अद्रिषु स्वकीयेषु वेश्मसु इव सार्थाः स्वैरं चेरुः ॥ ६४

स राजा परेषां कर्म्माणि सेतुवार्त्तादीनि अपहन्तीति परकर्म्मापहः सन्, अन्येष्वपि दृश्यत. इत्यपिशब्दसामर्थ्याद्धन्तेर्डप्रत्ययः। स्वेषु कर्म्मसु उद्यतः उद्युक्तः अभूत्। किञ्च, रिपून् रन्ध्रेषु प्रहरन् आत्मनो रन्ध्रं व्यसनादिकमावृणोत् संवृतवान्। अत्र मनुः—"नास्य छिद्रं परो विद्यात् विद्याच्छिद्रं परस्य तु गूहेत् कूर्म इवाङ्गानि रक्षेत् विवरमात्मनः॥" इति ॥ ६१

दण्डो दमः सैन्यं वा तद्वतो दण्डवतो दण्डसम्पन्नस्य तस्य राज्ञः पित्रा कुशेन नित्यं संवर्द्धितः पुष्टः कृतास्त्रः शिक्षितास्त्रः, सम्परायो युद्धम्, "युद्धायत्योः सम्परायः" इत्यमरः। तदर्हतीति साम्परायिकः, "तदर्हति" इति ठक्प्रत्ययः। दण्डः सैन्यम्, "दण्डो यमे मानभेदे लगुड़े दमसैन्ययोः" इति विश्वः, स्वदेहात् न व्यशिष्यत न अभिद्यत। स्वदेहेऽपि अवयवानि यौव्यानि, मूलबलं स्वदेहमिव अरक्षदित्यर्थः ॥ ६२

सर्पस्य शिरोरत्नमिव अस्य राज्ञः शक्तित्रयं परः शत्रुर्न चकर्ष। स तु परस्मात् शत्रोः शक्तित्रयं अयस्कान्तो मणिविशेषः आयसं लौहविकारमिव अकर्ष ॥ ६३

स्रवन्तीषु नदीषु वापीषु दीर्घिकासु इव "वापी तु दीर्घिका" इत्यमरः। वनेषु अरण्येषु उपवनेषु आरामेषु इव। "आरामः स्यादुपवनम्" इत्यमरः। अद्रिषु स्वकीयेषु वेश्मसु इव सार्थाः वणिक्प्रभृतयः स्वैरं स्वेच्छया चेरुश्चरन्ति स्म ॥ ६४

तपो रक्षन् स विघ्नेभ्यः तस्करेभ्यश्च सम्पदः।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक्॥ ६५

खनिभिः सुषुवे रत्नं क्षेत्रैः शस्यं वनैर्गजान्।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः॥ ६६

स गुणानां बलानाञ्च षण्णां षण्मुखविक्रमः।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु॥ ६७

इति क्रमात् प्रयुञ्जानः राजनीतिं चतुर्विधाम्।
आतीर्थादप्रतीघातं स तस्याः फलमानशे॥ ६८

अन्वयः। विघ्नेभ्यः तपः तस्करेभ्यः सम्पदः च रक्षन्, सः आश्रमैः वर्णैः (च) यथास्वं षड्‌शभाक् चक्रे॥६५

अन्वयः। भूः तस्मै रक्षासदृशं एव वेतनं दिदेश, खनिभिः रत्नं, क्षेत्रैः शस्यम्, वनैः गजान् सुषुवे॥६६

अन्वयः। षण्मुखविक्रमः सः षण्णां गुणानां बलानां च साधनीयेषु विनियोगज्ञः बभूव॥६७

अन्वयः। इति चतुर्व्विधां राजनीतिं क्रमात् प्रयुञ्जानः सः आतीर्थात् तस्याः फलम् अप्रतीघातम् आनशे॥ ६८

विघ्नेभ्यस्तपो रक्षन्, तस्करेभ्यः सम्पदश्च रक्षन्, स राजा आश्रमैर्ब्रह्मचर्यादिभिर्वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षड्‌शभाक् चक्रे यथाक्रममाश्रमैस्तपसो वर्णैः सम्पदश्च षष्ठांशभाक् कृत इत्यर्थः षष्ठोऽशः षड्‌शः, संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक्॥६५

भूर्भूमिस्तस्मै राज्ञे रक्षासदृशं रक्षानुरूपमेव वेतनं भृतिं दिदेश ददौ। कथम्? खनिभिराकरैः। "खनिः स्त्रियामाकरः स्यात्" इत्यमरः। रत्नं माणिक्यादिकं सुषुवे अजीजनत, क्षेत्रैः शस्यं, वनैर्गजान् हस्तिनः सुषुवे॥६६

षण्मुखविक्रमः स राजा षण्णां गुणानां सन्धिविग्रहादीनां बलानां मूलभृत्यादीनाञ्च साधनीयेषु वस्तुषु साध्येषु अर्थेषु विनियोगं जानातीति, विनियोगस्य ज्ञ इति वा विनियोगज्ञः कर्म्मविवक्षायामुपपदसमासः, अतोऽनुपसर्गे कः, इति कप्रत्ययः। शेषविवक्षायां षष्ठीसमासः, "इगुपध—" इत्यादिना कप्रत्ययः। बभूव। "इदमव प्रयोक्तव्यम्" इत्यादि अज्ञासीदित्यर्थः॥६७

इति चतुर्व्विधां, सामादुपायैरिति शेषः। राजनीतिं दण्डनीतिं क्रमात् सामादिक्रमादेव प्रयुञ्जानः स राजा आतीर्थात् मन्त्राद्यष्टादशात्मकतीर्थपर्यन्तम्, "योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्" इति हलायुधः।

कूटयुद्धविधिज्ञेऽपि तस्मिन् सन्मार्गयोधिनि ।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ ६९

प्रायः प्रतापभग्नत्वात् अरीणां तस्य दुर्लभः ।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः ॥ ७०

प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः ।
स तु तत्समवृद्धिश्च न चाभूत् ताविव क्षयी ॥ ७१

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः ।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥ ७२

अन्वयः । कूटयुद्धविधिज्ञे अपि सन्मार्गयोधिनि तस्मिन् वीरगामिनी जयश्रीः अभिसारिकावृत्तिं भेजे ॥६९

अन्वयः । अरीणां प्रतापभग्नत्वात् तस्य गन्धभिन्नान्यदन्तिनः गन्धद्विपस्य इव प्रायः रणः दुर्लभः ॥७०

अन्वयः । प्रवृद्धौ ( सत्यां ) चन्द्रः हीयते, समुद्रः अपि तथाविधः, सः तु तत्सम-वृद्धिः च, तौ इव क्षयी न अभूत ॥७१

अन्वयः । अत्यर्थं कृशाः ( अतएव ) अर्थिनः सन्तः महतः तस्य अभिगमनात् उदधेः (अभिगमनात् ), जीमूताः इव दातृत्वं प्रापुः ॥७२

...: नीतेः फलं अप्रतीघातं अप्रतिबन्धं यथा तथा आनशे प्राप्तवान् । मन्त्रादिषु ...ष्विस्य य उपायः प्रयुज्यते ।" स तस्य फलति इत्यर्थः ॥६८

कूटयुद्धविधिज्ञेऽपि कपटयुद्धप्रकाराभिज्ञेऽपि सन्मार्गेण योधिनि धर्मयोद्धरि तस्मिन् ...यो वीरगामिनी जयश्रीः अभिसारिकावृत्तिं भेजे । "कान्तार्थिनी तु या याति ...तं साभिसारिका" इत्यमरः जयश्रीस्तमन्विष्य आगच्छदित्यर्थः ॥७८

अरीणां सर्वेषामपि प्रतापेन अतितेजसा एव भग्नत्वात् तस्य राज्ञः, गन्धेन एव ...भग्नाः अन्ये दन्तिनो येन तस्य गन्धद्विपस्य इव प्रायः प्रायेण रणो दुर्लभः । खलर्थ-...पि शेषविवक्षया षष्ठीमिच्छन्तीत्युक्तम् ॥७०

प्रवृद्धौ सत्यां चन्द्रो हीयते । समुद्रोऽपि तथाविधश्चन्द्रवदेव प्रवृद्धौ हीयते । ...:" इति वा पाठः । स राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य स ...वृद्धिश्च अभूत् । तौ चन्द्रसमुद्रौ इव क्षयी. "जिदृक्षि—" इत्यादिना इनिप्रत्ययः । ...भूत् ॥७१

अत्यर्थं कृशा दरिद्रा अतएव अर्थिनो याचनशीलाः सन्तो विद्वांसो महतस्तस्य राज्ञः ...गमनात् उदधेः अभिगमनात् जीमूता इव दातृत्वं प्रापुः । अर्थिषु दानशील-...त्वं प्रयच्छन्तीत्यर्थः ॥७२

स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन् ।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥ ७३

दुरितं दर्शनेन घ्नन् तत्त्वार्थेन नुदंस्तमः ।
प्रजाः स्वतन्त्रयाञ्चक्रे शश्वत् सूर्य्य इवोदितः ॥ ७४

इन्दोरगतयः पद्मे सूर्य्यस्य कुमुदेऽंशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥ ७५

पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम् ।
जिगीषोरश्वमेधाय धर्म्यमेव बभूव तत् ॥ ७६

अन्वयः । सः स्तुत्यं एव समाचरन् ( अतएव ) स्तूयमानः ( सन् ) जिह्राय, तथापि तत्कारिद्वेषिणः तस्य यशः ववृधे ॥७३

अन्वयः । ( सः ) उदितः सूर्य्यः इव दर्शनेन दुरितं घ्नन् तत्त्वार्थेन तमः नुदन् शश्वत् प्रजाः स्वतन्त्रयाञ्चक्रे ॥७४

अन्वयः । इन्दोः अंशवः पद्मे अगतयः, सूर्य्यस्य ( अंशवः ) कुमुदे ( अगतयः ), गुणिनः तस्य गुणाः विपक्षे अपि अन्तरं लेभिरे ॥७५

अन्वयः । अश्वमेधाय जिगीषोः अस्य विचेष्टितं यद्यपि पराभिसन्धानपरं, ( तथापि ) तत् धर्म्यं एव बभूव ॥७६

स राजा स्तुत्यं स्तोत्रार्हमेव यत् तदेव समाचरन् अतएव स्तूयमानः सन्, जिह्राय लज्जां । तथापि ह्रीणत्वेऽपि तत्कारिणो द्वेष्टीति तत्कारिद्वेषिणस्तस्य राज्ञो यशो ववृधे । गुणाढ्यस्य सतः पुंसः स्तुतौ लज्जैव भूषणम् इति भावः ॥७३

स राजा उदितः सूर्य्य इव दर्शनेन दुरितं घ्नन् निवर्त्तयन् । तथाच स्मर्य्यते— "अग्निश्चित् कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः ॥" इति । तत्त्वस्य वस्तुतत्त्वस्य अर्थेन समर्थनेन च तमोऽज्ञानं ध्वान्तञ्च नुदन् शश्वत् प्रजाः स्वतन्त्रयाञ्चक्रे स्वाधीनाश्चकार ॥७४

इन्दोः अंशव पद्मे अगतयः प्रवेशरहिता इत्यर्थः । सूर्य्यस्य अंशवः कुमुदे अगतयः, गुणिनस्तस्य गुणास्तु विपक्षे शत्रौ अपि अन्तरं अवकाशं लेभिरे प्रापुः ॥७५

अश्वमेधाय जिगीषोः अस्य विचेष्टितं दिग्विजयरूपं यद्यपि पराभिसन्धानपरं शत्रुवञ्चनप्रधानं तथापि तत् धर्म्यं धर्मादनपेतमेव । "धर्म्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । बभूव । मन्त्रप्रभावोत्साहशक्तिभिः परान् स दम्यात्" इति कौटिल्यः ॥७६

एवमुद्यन् प्रभावेण शास्त्रनिर्दिष्टवर्त्मना ।
वृषेव देवो देवानां राज्ञां राजा बभूव सः ॥ ७७

पञ्चमं लोकपालानामूचुः साधर्म्ययोगतः ।
भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥ ७८

दूरापवर्जितच्छत्रैः तस्याज्ञां शासनार्पिताम् ।
दधुः शिरोभिर्भूपाला देवाः पौरन्दरीमिव ॥ ७९

ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ ।
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८०

अन्वयः । एवं शास्त्रनिर्दिष्टवर्त्मना प्रभावेण उद्यन् सः वृषा देवानां देवः इव राज्ञां [राज]ा बभूव ॥७७

अन्वयः । ( तं ) साधर्म्ययोगतः लोकपालानां पञ्चमं, महतां भूतानां षष्ठं, कुल-[भूभृ]ताम् अष्टमं ऊचु ॥७८

अन्वयः । भूपालाः शासनार्पिताम् तस्य आज्ञां देवाः पौरन्दरीं ( आज्ञाम् ) इव [दूराप]वर्जितच्छत्रैः शिरोभिः दधुः ॥७९

अन्वयः । सः महाक्रतौ ऋत्विजः दक्षिणाभिः तथा आनर्च, यथा अस्य धनदस्य च [नाम] साधारणीभूतम् ॥८०

---

[ए]वं शास्त्रनिर्दिष्टवर्त्मना शास्त्रोपदिष्टमार्गेण कोशदण्डजेन तेजसा । "स प्रभावः [प्रता]प तत् तेजः कोशदण्डजम्" इत्यमरः । उद्यन् उद्युञ्जानः सः, वृषा वासवो [देवा]नां देवो देवदेव इव राज्ञां राजा राजराजो बभूव ॥७७

[त]ं राजानमितिशेषः । साधर्म्ययोगतो यथाक्रमं लोकसंरक्षणपरोपकारभूधारण-[सम]ानधर्मत्ववलात् लोकपालानां इन्द्रादीनां चतुर्णां पञ्चमं ऊचुः । महतां भूतानां [पृथिव्या]दीनां पञ्चानां षष्ठं ऊचुः । कुलभूभृतां कुलाचलानां महेन्द्रमलयादीनां सप्तानां [अष्टम]ं ऊचुः ॥७८

[भू]पालाः शासनेषु पत्रेषु अर्पितां उपन्यस्तां तस्य राज्ञ आज्ञां देवाः पौरन्दरीं ऐन्द्रीं [आज्ञाम]् इव दूरापवर्जितच्छत्रैर्दूरात् परिहृतातपत्रैः शिरोभिर्दधुः ॥७९

[स] राजा महाक्रतौ अश्वमेधे ऋत्विजो याजकान् दक्षिणाभिस्तथा आनर्च अर्चयामास । [अर्च]तेर्भौवादिकात् लिट् । यथा अस्य राज्ञो धनदस्य च नाम साधारणीभूतं एका[र्थ]म् । उभयोरपि धनदसंज्ञा यथा स्यात् तथेत्यर्थः ॥८०

इन्द्राद् वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभूत्
यादोनाथः शिवजलपथः कर्म्मणे नौचराणाम्
पूर्वापेक्षी तदनु विदधे कोषवृद्धिं कुवेरः
तस्मिन् दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१

अन्वयः। इन्द्रात् वृष्टिः अभूत्, यमः नियमितगदोद्रेकवृत्तिः (अभूत्), यादोनाथः नौचराणां कर्म्मणे शिवजलपथः (अभूत्), तदनु पूर्व्वापेक्षी कुवेरः कोषवृद्धिं विदधे, (इत्थं) लोकपालाः तस्मिन् (विषये) दण्डोपनतचरितं भेजिरे ॥८१

इन्द्रात् वृष्टिरभूत, यमो नियमिता निवारिता गदस्य रोगस्य उद्रेक एव वृत्तिर्येन स: अभूत्। यादोनाथो वरुणो नौचराणां नाविकानां कर्म्मणे सञ्चाराय शिवजलपथः सुचरजलमार्गः अभूत्। तदनु पूर्व्वापेक्षी रघुरामादिमहिमाभिज्ञः कुवेरः कोषवृद्धिं विदधे। इत्थं लोकपालास्तस्मिन् राज्ञि विषये दण्डोपनतस्य शरणागतस्य चरितं वृत्तिं भेजिरे। "दुर्व्वलो बलवत्सेवी विरुद्धाच्छङ्कितादिभिः। वर्त्तेत दण्डोपनतो भर्त्तर्य्येवं सर्व्वदा स्थितः॥" इति कौटिल्यः ॥८१

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ सूरि-
विरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो
महाकवि-कालिदासकृतौ रघुवंशे
महाकाव्ये अतिथिवर्णनो नाम
सप्तदशः सर्गः।

———

# अष्टादशः सर्गः ।

——:०:——

अथास्यार्थपतेः सुतायामुत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव ॥ १

तेनोरुवीर्य्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना ।
सुवृष्टियोगादिव जीवलोकः शस्येन सम्पत्तिफलोन्मुखेन ॥ २

शब्दादि निर्विश्य सुखं चिराय तस्मिन् प्रतिष्ठापितराजशब्दः ।
कौमुद्वतेयः कुमुदावदातैः द्यामर्जितां कर्म्मभिरारुरोह ॥ ३

अन्वयः। निषिद्धशत्रुः सः नैषधस्य अर्थपतेः सुतायां निषधात् नगेन्द्रात् अनूनसारं पुत्रं उत्पादयामास, यं निषधाख्यं एव आहुः॥ १

अन्वयः। सुवृष्टियोगात् सम्पत्तिफलोन्मुखेन शस्येन जीवलोकः इव उरुवीर्य्येण (अतएव) प्रजायै कल्पिष्यमाणेन तेन यूना पिता ननन्द ॥ २

अन्वयः। कौमुद्वतेयः शब्दादि सुखं निर्विश्य चिराय तस्मिन् प्रतिष्ठापितराजशब्दः (सन्) कुमुदावदातैः कर्म्मभिः अर्ज्जितां द्यां आरुरोह ॥ ३

यत्पादपांसुसम्पर्कादहल्यासीदपांसुला ।
कारुण्यसिन्धवे तस्मै नमो वैदेहिबन्धवे ॥

निषिद्धशत्रुर्निवारितरिपुः सः अतिथिर्नैषधस्य निषधदेशाधीश्वरस्य अर्थपतेः राज्ञः सुतायां निषधात् निषधाख्यात् नगेन्द्रात् पर्वतात् अनूनसारं अन्यूनबलं पुत्रं उत्पादयामास। यं निषधाख्यं निषधनामकं एव आहुः॥ १

उरुवीर्य्येण अतिपराक्रमेण अतएव प्रजायै लोकरक्षणार्थं कल्पिष्यमाणेन तेन यूना तेन पिता अतिथिः सुवृष्टियोगात् सम्पत्तिफलोन्मुखेन पाकोन्मुखेन शस्येन जीवलोक ननन्द जहर्ष ॥ २

कुमुद्वत्या अपत्यं पुमान् कौमुद्वतेयः अतिथिः शब्दादि शब्दस्पर्शादि सुखं सुखसाधनं निर्विश्योपभुज्य चिराय तस्मिन् निषधाख्ये पुत्रे प्रतिष्ठापितराजशब्दो दत्तराज्यः कुमुदावदातैर्निर्म्मलैः कर्म्मभिः अश्वमेधादिभिः अर्जितां सम्पादितां द्यां स्वर्गम् आरु-
॥ ३

पौत्रः कुशस्यापि कुशेशयाक्षः ससागरां सागरधीरचेताः।
एकातपत्रां भुवमेकवीरः पुरार्गलादीर्घभुजो बुभोज ॥ ४
तस्यानलौजास्तनयस्तदन्ते वंशश्रियं प्राप नलाभिधानः।
यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ॥ ५
नभश्चरैर्गीतयशाः स लेभे नभस्तलश्यामतनुं तनूजम्।
ख्यातं नभःशब्दमयेन नाम्ना कान्तं नभोमासमिव प्रजानाम् ॥ ६
तस्मै विसृज्योत्तरकोशलानां धर्मोत्तरस्तत् प्रभवे प्रभुत्वम्।
मृगैरजर्य्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध ॥ ७

अन्वयः। कुशेशयाक्षः सागरधीरचेताः एकवीरः पुरार्गलादीर्घभुजः कुशस्य पौत्रः अपि ससागराम् एकातपत्रां भुवं बुभोज ॥ ४

अन्वयः। अनलौजाः नलाभिधानः तस्य तनयः तदन्ते वंशश्रियं प्राप। नलिनाभवक्त्रः यः गजः नड्वलानि इव, परेषां बलानि अमृद्नात् ॥ ५

अन्वयः। नभश्चरैः गीतयशाः सः नभस्तलश्यामतनुं नभःशब्दमयेन नाम्ना ख्यातं नभोमासम् इव प्रजानां कान्तं तनूजं लेभे ॥ ६

अन्वयः। धर्मोत्तरः प्रभवे तस्मै तत् उत्तरकोशलानां प्रभुत्वम् विसृज्य जरसा उपदिष्टं मृगैः अजर्य्यं पुनः अदेहबन्धाय बबन्ध ॥ ७

कुशेशयाक्षः शतपत्रलोचनः। 'शतपत्रं कुशेशयम्' इत्यमरः। सागरधीरचेताः समुद्रगम्भीरचित्त एकवीरः असहायशूरः पुरस्य अर्गला कपाटविष्कम्भः. "तद्विष्कम्भोऽर्गलं ना ना" इत्यमरः। तद्वद्दीर्घभुजः कुशस्य पौत्रो निषधोऽपि ससागरां एकातपत्रां भुवं बुभोज पालयामास। "भुजोऽनवने" इत्युक्तेः परस्मैपदम् ॥ ४

अनलौजा नलाभिधानो नलाख्यस्तस्य निषधस्य तनयस्तस्य निषधस्य अन्ते अवसाने वंशश्रियं राज्यलक्ष्मीं प्राप। नलिनाभवक्त्रो यो नलः गजो नड्वलानि नडप्रायस्थलानि इव। "नडशादाड्ड्वलच् इति ड्वलच्प्रत्ययः। परेषां बलानि अमृद्नात ममर्द ॥ ५

नभश्चरैर्गन्धर्वादिभिर्गीतयशसः स नलो नभस्तलश्यामतनुं नभःशब्दमयेन नाम्ना ख्यातम्, नभःशब्दसंज्ञकमित्यर्थः। नभोमासमिव श्रावणमासमिव प्रजानां कान्तं प्रियं तनुजं पुत्रं लेभे ॥ ६

धर्मोत्तरो धर्मप्रधानः स नलः प्रभवे समर्थाय तस्मै नभसे तदुत्तरकोशलानां प्रभुत्वमाधिपत्यं विसृज्य दत्त्वा जरसा जरया उपदिष्टम् वार्द्धके चिकीर्षितमित्यर्थः। मृगैः अजर्य्यं तैः सह सङ्गतम्। "अजर्य्यं सङ्गतम्" इति निपातः। पुनरदेहबन्धाय पुनर्देहसम्बन्धनिवृत्तये बबन्ध। मोक्षार्थं वनं गत इत्यर्थः। अदेहबन्धायेत्यत्र प्रसज्यप्रतिषेधेऽपि नञ् समासः इष्यते ॥ ७

तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीक: ।
शान्ते पितर्य्याहृतपुण्डरीका यं पुण्डरीकाक्षमिव श्रिता श्री: ॥ ८

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं वने तप: क्षान्ततरश्चचार ॥ ९

अनीकिनीनां समरेऽग्रयायी तस्यापि देवप्रतिम: सुतोऽभूत् ।
व्यश्रूयतानीकपदावसानं देवादि नाम त्रिदिवेऽपि यस्य ॥ १०

पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान् बभूव ॥ ११

अन्वय: । तेन द्विपानां पुण्डरीक: इव राज्ञाम् अजय्य: पुण्डरीक: (पुत्र:) अजनि, पितरि शान्ते (सति) आहृतपुण्डरीका श्री: यं पुण्डरीकाक्षं इव श्रिता ॥८

अन्वय: । अमोघधन्वा स: प्रजाक्षेमविधानदक्षं क्षमया प्रपन्नं क्षेमधन्वानं पुत्रम् क्ष्मां लम्भयित्वा क्षान्ततर: (सन्) वने तप: चचार ॥९

अन्वय: । तस्य अपि समरे अनीकिनीनाम् अग्रयायी देवप्रतिम: सुत: अभुत्, अनीकपदावसान देवादि यस्य नाम (देवानीक: इति) त्रिदिवे अपि व्यश्रूयत ॥१०

अन्वय: । स: पिता समाराधनतत्परेण तेन पुत्रेण यथैव पुत्री बभूव, तथैव स: पुत्र: आत्मजवत्सलेन तेन पित्रा पितृमान् बभूव ॥११

तेन नभसा द्विपानां पुण्डरीको दिग्गजविशेष इव राज्ञां अजय्यो जेतुं अशक्य: । "क्षय्यजय्यौ शक्यार्थे" इति निपातनात साधु: पुण्डरीक: पुण्डरीकाख्य: पुत्र: अजनि जनित: । पितरि शान्ते स्वर्गते सति आहृतपुण्डरीका गृहीतश्वेतपद्मा श्री: यं पुण्डरीकं पुण्डरीकाख्यं पुण्डरीकाक्षम् इव श्रिता ॥८

अमोघं धनुर्यस्य स: अमोघधन्वा । "धनुषश्च" इत्यनङादेश: समासान्त: । स पुण्डरीक: प्रजानां क्षेमविधाने दक्षं क्षमयोपपन्नं क्षान्तियुक्तं क्षेमं धनुर्यस्य तं क्षेमधन्वानं नाम पुत्रम् । "वा संज्ञायाम्" इत्यनङादेश: । क्ष्मां लम्भयित्वा प्रापय्य । लभेर्गत्यर्थत्वाद्द्विकर्मकत्वम् । क्षान्ततर: अत्यन्तसहिष्णु: सन् वने तपश्चचार ॥९

तस्य क्षेमधन्वन: अपि समरे अनीकिनीनां चमूनाम् अग्रयायी देवप्रतिम इन्द्रादिकल्प: सुत: अभूत् । अनीकपदावसानम् अनीकशब्दान्तं देवादि देवशब्दपूर्वं यस्य नाम देवानीक इति नामधेयं त्रिदिवे स्वर्गे अपि व्यश्रूयत विश्रुतम् ॥१०

स पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण तेन पुत्रेण यथैव पुत्री बभुव तथैव पुत्रो देवानीक आत्मजवत्सलेन तेन पित्रा पितृमान् बभूव । लोके पितृत्वपुत्रत्वयो: अनयोरेव आसीदित्यर्थ: ॥११

पूर्वस्तयोरात्मसमे चिरोढ़ामात्मोद्भवे वर्णचतुष्टयस्य।
धुरं निधायैकनिधिर्गुणानां जगाम यज्वा यजमानलोकम्॥ १२

वशी सुतस्तस्य वशंवदत्वात् स्वेषामिवासीत् द्विषतामपीष्टः।
सकृद्विविग्नानपि हि प्रयुक्तं माधुर्य्यमीष्टे हरिणान् ग्रहीतुम्॥ १३

अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास।
यो हीनसंसर्गपराङ्मुखत्वात् युवाप्यनर्थैर्व्यसनैर्विहीनः॥ १४

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः।
उपक्रमैरस्खलितैश्चतुर्भिः चतुर्दिगीशश्चतुरो बभूव॥ १५

अन्वयः। गुणानाम् एकनिधिः यज्वा तयोः पूर्व्वः आत्मसमे आत्मोद्भवे चिरोढ़ां वर्णचतुष्टयस्य धुरं निधाय यजमानलोकं जगाम ॥१२

अन्वयः। तस्य वशी सुतः वशंवदत्वात् स्वेषाम् इव द्विषताम् अपि इष्टः आसीत्। हि (तथाहि) प्रयुक्तम् माधुर्य्यं सकृत् विविग्नान् अपि हरिणान् ग्रहीतुम् ईष्टे ॥१३

अन्वयः। अहीनबाहुद्रविणः हीनसंसर्गपराङ्मुखत्वात् युवा अपि अनर्थैर्व्यसनैः विहीनः यः अहीनगुर्नाम, सः समग्रां गां शशास ॥१४

अन्वयः। पुंसां अन्तरज्ञः चतुरः सः गुरोः अनन्तरम् अवतीर्णः आद्यः पुमान् इव अस्खलितैः चतुर्भिः उपक्रमैः चतुर्दिगीशः बभूव ॥१५

गुणानामेकनिधिर्यज्वा विधिवदिष्टवान्, तयोः पितृपुत्रयोर्मध्ये पूर्व्वः पिता क्षेमधन्वा आत्मसमे स्वतुल्ये आत्मोद्भवे पुत्रे देवानीके चिरोढ़ां चिरधृतां वर्णचतुष्टयस्य धुरं रक्षाभारं निधाय यजमानलोकं यष्टृलोकं नाकं जगाम ॥१२

तस्य देवानीकस्य वशी समर्थः सुतः अहीनगुर्नामेति वक्ष्यमाणनामकः वशं यथा मधुरं वदतीति वशंवदः। "प्रियवशे वदः खच्" इति खच्प्रत्ययः। तस्य भावस्त तस्मात्। इष्टवादित्वात्। स्वेषामिव द्विषतां अपि इष्टः प्रियः आसीत्। यथार्थैव वशीक निधारणं लभ्यते। तथाहि—प्रयुक्तमुच्चारितं माधुर्य्यं सकृदेकवारं विविग्नान् भीतान् अपि हरिणान् ग्रहीतुं वशीकर्त्तुं ईष्टे शक्नोतीति॥१२

अहीनबाहुद्रविणः समग्रभुजपराक्रमः। "द्रविणं काञ्चनं वित्तं द्रविणञ्च पराक्रमः" इति विश्वः। हीनसंसर्गपराङ्मुखत्वात् नीचसंसर्गविमुखत्वाद्धेतोर्युवा अपि अनर्थकरैर्व्यसनैः पानद्यूतादिभिर्विहीनो रहितो योऽहीनगुर्नाम स पूर्वोक्तो देवानीकसुतः समग्रां सर्व्वां गां भुवं शशास ॥१४

पुंसां अन्तरज्ञो चित्तज्ञश्चतुरो निपुणः सः अहीनगुः गुरोः पितुरनन्तरम् अवतीर्णः भुवं प्राप्त आद्यः पुमान् विष्णुरिव अस्खलितैरप्रतिहतैश्चतुर्भिरुपक्रमैः सामाद्युपायैः। 'सामादिभिरुपक्रमैः" इति मनुः। चतुर्दिगीशश्चतसृणां दिशामीशो बभूव ॥१५

तस्मिन् प्रयाते परलोकयात्रां जेतर्य्यरीणां तनयं तदीयम् ।
उच्चैःशिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रम् ॥ १६

तस्याभवत् सूनुरुदारशीलः शिलः शिलापट्टविशालवक्षाः ।
जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामव्रजदीड्यमानः ॥ १७

तमात्मसम्पन्नमनिन्दितात्मा कृत्वा युवानं युवराजमेव ।
सुखानि सोऽभुङ्क्त सुखोपरोधि वृत्तं हि राज्ञामुपरुद्धवृत्तम् ॥ १८

तं रागबन्धिष्ववितृप्तमेव भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार ॥ १९

अन्वयः । अरीणां जेतरि तस्मिन् परलोकयात्रां प्रयाते ( सति ) उच्चैःशिरस्त्वात् जितपारियात्रं तदीयं तनयं लक्ष्मीः सिषेवे किल ॥ १६

अन्वयः । तस्य उदारशीलः शिलापट्टविशालवक्षाः शिलः सूनुः अभवत् । यः शिलीमुखैः जितारिपक्षः अपि ईड्यमानः ( सन् ) शालीनताम् अव्रजत् ॥ १७

अन्वयः । अनिन्दितात्मा सः आत्मसम्पन्नं युवानं तं युवराजं कृत्वा एव सुखानि अभुङ्क्त, हि ( यस्मात् ) राज्ञां वृत्तं सुखोपरोधि ( अतएव ) उपरुद्धवृत्तम् ॥ १८

अन्वयः । रागबन्धिषु भोगेषु अवितृप्तम् एव ( सन्तम् ) विलासिनीनां सौभाग्यविशेषभोग्यं तं अरतिक्षमा अपि ( अतएव ) वृथा मत्सरिणी जरा जहार ॥ १९

अरीणां जेतरि तस्मिन् अहीनगौ परलोकयात्रां प्रयाते प्राप्ते सति उच्चैः शिरस्त्वादुन्नतशिरस्त्वात् जितः पारियात्रः कुलशैलविशेषो येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मीः राजलक्ष्मीः सिषेवे किल ॥ १६

तस्य पारियात्रस्य उदारशीलो महावृत्तः 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । शिलापट्टविशालवक्षाः शिलः शिलाख्यः सूनुरभवत् । यः सूनुः शिलीमुखैर्बाणैः । "अलिबाणौ शिलीमुखौ" इत्यमरः । जितारिपक्षः अपि ईड्यमानः स्तूयमानः सन् शालीनतां अधृष्टतां लज्जां अव्रजत् अगच्छत् । 'स्यादधृष्टे तु शालीनः' इत्यमरः । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः ॥ १७

अनिन्दितात्मा अगर्हितस्वभावः स पारियात्रः आत्मसम्पन्नं बुद्धिसम्पन्नं 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्युभयत्राप्यमरः । युवानं तं शिलं युवराजं कृत्वा एव सुखानि अभुङ्क्त । न त्वकृत्वा इति एवकारार्थः । किमर्थं युवराजशब्दकरणमित्याशङ्क्य अन्यथा सुखोपभोगो दुर्लभ इत्याह—सुखोपरोधीति । हि यस्मात् राज्ञां वृत्तं प्रजापालनादिरूपं सुखोपरोधि बहुलत्वात् सुखप्रतिबन्धकम् । अतएव उपरुद्धवृत्तं, कारादिबद्धसदृशमित्यर्थः । उपरुद्धस्य स्वयमूढभारस्य च सुखं नास्तीति भाव ॥ १८

रागं बध्नन्तीति रागबन्धिनः रागप्रवर्त्तका इत्यर्थः, तेषु भोगेषु विषयेषु अवितृप्तमेव सन्तं, विलासिनीनां भोक्त्रीणां सौभाग्यविशेषेण सौन्दर्य्यातिशयेन हेतुना भोग्यं भोगार्हम्

उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरन्ध्रः ।
सुतोऽभवत् पङ्कजनाभकल्पः कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ २०

ततः परं वज्रधरप्रभावः तदात्मजः संयति वज्रघोषः ।
बभूव वज्राकरभूषणायाः पतिः पृथिव्याः किल वज्रनाभः ॥२१

तस्मिन् गते द्यां सुकृतोपलब्धां तत्सम्भवं शङ्खणमर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे रत्नोपहारैरुदितैः खनिभ्यः ॥ २२

तस्यावसाने हरिदश्वधामा पित्र्यं प्रपेदे पदमश्विरूपः ।
वेलातटेषूषितसैनिकाश्वं पुराविदो यं व्युषिताश्वमाहुः ॥ २३

अन्वयः। तस्य उन्नाभ इति उद्गतनामधेयः अयथार्थोन्नतनाभिरन्ध्रः पङ्कजनाभकल्पः कृत्स्नस्य नृपमण्डलस्य नाभिः सुतः अभवत ॥ २०

अन्वयः। ततः परं वज्रधरप्रभावः संयति वज्रघोषः वज्रणाभः तदात्मजः वज्राकरभूषणायाः पृथिव्याः पतिः बभूव किल ॥ २१

अन्वयः। तस्मिन सुकृतोपलब्धां द्यां गते ( सति ; ) उत्खातशत्रुम् शङ्खणं तत्सम्भवं अर्णवान्ता वसुधा खनिभ्यः उदितैः रत्नोपहारैः उपतस्थे ॥ २२

अन्वयः। तस्य अवसाने हरिदश्वधामाः अश्विरूपः पित्र्यं पदं प्रपेदे। वेलातटेषु उषितसैनिकाश्वं यं पुराविदः व्युषिताश्वम् आहुः ॥ २३

"चजोः कु घिण्यतोः" इति कुत्वम्। तं पारियात्रं रतिक्षमा न भवतीत्यरतिक्षमा अपि अतएव वृथा मत्सरिणी रतिक्षमाम् विलासिनीष्वित्यर्थः। जरा जहार वशीचकार ॥ १९

तस्य शिलाख्यस्य उन्नाभ इत्युद्गतनामधेयः प्रसिद्धनामा यथार्थं यथा तथा उन्नतं नाभिरन्ध्रं यस्य सः गम्भीरनाभिरित्यर्थः। तदुक्तम्—"स्वरः सत्त्वं च नाभिश्च गाम्भीर्यं त्रिषु शस्यते"। पङ्कजनाभकल्पो विष्णुसदृशः कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधानं "नाभिः प्रधाने कस्तूरीमदेऽपि क्वचिदीरितः" इति विश्वः। सुतः अभवत। "अच् प्रत्यन्ववपूर्व्वात् सामलोम्नः" इत्यवाजिनि योगविभागादुन्नाभपद्मनाभादयः सिद्धाः ॥ २०

ततः परं वज्रधरप्रभाव इन्द्रतेजाः संयति संग्रामे वज्रघोषोऽशनितुल्यध्वनिर्वज्रणाभो नाम तस्य उन्नाभस्य आत्मजो वज्राणां हीरकाणामाकराः खनय एव भूषणानि यस्यास्तस्याः पृथिव्याः पतिः बभूव किल खलु। "वज्रं लक्ष्मी कुलिशशस्त्रयोः। मणिभेदे रत्नभेदेऽशनावासनान्तरे"। इति केशवः ॥ २१

तस्मिन् वज्रणाभे सुकृतोपलब्धां सुधर्म्मार्जितां द्यां स्वर्गं गते सति, उत्खातशत्रुं उद्धृतशत्रुं शङ्खणं नाम तत्सम्भवं तदात्मजं अर्णवान्ता वसुधा खनिभ्य आकरेभ्य उदितैरुत्पन्नैः रत्नोपहारैरुत्कृष्टवस्तुसमर्पणैः उपतस्थे सिषेवे। "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इति भरतविश्वौ ॥ २२

तस्य शङ्खणस्य अवसाने अन्ते हरिदश्वधामा सूर्य्यतेजाः अश्विनीरिव रूपं यस्य इत्यश्विरूपी ऽतिसुन्दरः तत्पुत्र इति शेषः। पित्र्यमिति सम्बन्धिपदसामर्थ्यात्, पित्र्यं पदं प्रपेदे। वेलाव-

आराध्य विश्वेश्वरमीश्वरेण तेन क्षितेर्विश्वसहो विजज्ञे।
पातुं सहो विश्वसखः समग्रां विश्वम्भरामात्मजमूर्त्तिरात्मा ॥ २४
अंशे हिरण्याक्षरिपोः स जाते हिरण्यनाभे तनये नयज्ञः।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ॥ २५
पिता पितॄणामनृणस्तमन्ते वयस्यनन्तानि सुखानि लिप्सुः।
राजानमाजानुविलम्बिबाहुं कृत्वा कृती वल्कलवान् बभूव ॥ ॥२६
कौशल्य इत्युत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य।
तस्यौरसः सोमसुतः सुतोऽभून्नेत्रोत्सवः सोम इव द्वितीयः ॥ २७

अन्वयः। तेन क्षितेः ईश्वरेण विश्वेश्वरं आराध्य विश्वसहः (नाम) विश्वसखः समग्रां विश्वम्भरां पातुं सहः आत्मजमूर्त्तिः आत्मा विजज्ञे ॥२४

अन्वयः। नयज्ञः सः हिरण्याक्षरिपोः अंशे हिरण्यनाभे तनये जाते (सति) तरूणां सानिलः हिरण्यरेताः इव द्विषां सुतराम् असह्यः अभूत् ॥२५

अन्वयः। पितॄणाम् अनृणः (अतएव) कृती पिता अन्ते वयसि अनन्तानि सुखानि लिप्सुः आजानुविलम्बिबाहुं तं राजानं कृत्वा वल्कलवान् बभूव ॥२६

अन्वयः। उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सोमसुतः तस्य द्वितीयः सोमः इव नेत्रोत्सवः कौशल्यः इति औरसः सुतः अभूत् ॥२७

…षु उषिता निविष्टाः सैनिका अश्वाश्च यस्य तम्, अन्वर्थनामानमित्यर्थः। यं पुत्रं पुराविदो …श्वा व्युषिताश्वं आहुः ॥२३

तेन क्षितेरीश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिं आराध्य उपास्य विश्वसहो नाम विश्वसखः समग्रां सर्व्वां विश्वम्भरां भुवं पातुं रक्षितुं, सहत इति सहः अमः, पचाद्यच्। आत्मजमूर्त्तिः पुत्ररूपी "आत्मा स्वयमेव, आत्मा वै पुत्रनामासि" इति श्रुतेः। विजज्ञे …जज्ञे। विपूर्वो जनिर्गर्भविमोचने वर्त्तते। यथाह—भगवान् पाणिनिः—"स मां …जायते" इति ॥२४

नयज्ञो नीतिज्ञः स विश्वसहः हिरण्याक्षरिपोर्विष्णोरंशे हिरण्यनाभे नाम्नि तनये जाते …ति तरूणां सानिलो हिरण्यरेता हुतभुक् इव द्विषां सुतरामसह्यः अभूत ॥२५

पितॄणां अनृणः निवृत्तपितृऋण इत्यर्थः। "प्रजया पितृभ्यः" इति श्रुतः। अतएव कृती …कृत्य इत्यर्थः। पिता विश्वसहः अन्ते वयसि वार्द्धके अनन्तानि अविनाशीनि सुखानि …लिप्सुः मुमुक्षुरित्यर्थः। आजानुविलम्बिबाहुं दीर्घबाहुम्, भाग्यसम्पन्नमिति भावः तं हिरण्य-…नाभं राजानं कृत्वा वल्कलवान् बभूव। वनं गत इत्यर्थः ॥२६

उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सूर्य्यवंशाभरणस्य सोमसुतः सोमं सुतवतः …यजन इत्यर्थः। "सोमे सुञः" इति क्विप्। तस्य हिरण्यनाभस्य द्वितीयः सोमश्चन्द्र इव नेत्रोत्सवो नयनानन्दकरः कौशल्य इति प्रसिद्ध औरसो धर्म्मपत्नीजः सुतः अभूत् ॥२७

यशोभिराब्रह्मसभं प्रकाशः स ब्रह्मभूयं गतिमाजगाम।
ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम्॥ २८

तस्मिन् कुलापीड़निभे निपीड़ं सम्यङ्महीं शासति शासनाङ्काम्।
प्रजाश्चिरं सुप्रजसि प्रजेशे ननन्दुरानन्दजलाविलाच्यः॥ २९

पात्रीकृतात्मा गुरुसेवनेन स्पष्टाकृतिः पत्त्ररथेन्द्रकेतोः।
तं पुत्त्रिणां पुष्करपत्त्रनेत्रः पुत्त्रः समारोपयदग्रसङ्ख्याम्॥ ३०

वंशस्थितिं वंशकरेण तेन सम्भाव्य भावी स सखा मघोनः।
उपस्पृशन् स्पर्शनिवृत्तलौल्यः त्रिपुष्करेषु त्रिदशत्वमाप॥ ३१

अन्वयः। आब्रह्मसभं यशोभिः प्रकाशः सः ब्रह्मिष्ठं स्वतनुप्रसूतं ब्रह्मिष्ठम् एव निजे अधिकारे आधाय ब्रह्मभूयं गतिं आजगाम॥२८

अन्वयः। कुलापीड़निभे सुप्रजसि तस्मिन् प्रजेशे शासनाङ्कां महीं निपीड़ं सम्यक् शासति (सति) आनन्दजलविलाच्यः प्रजाः चिरं ननन्दुः॥२९

अन्वयः। गुरुसेवनेन पात्रीकृतात्मा पत्त्ररथेन्द्रकेतोः स्पष्टाकृतिः पुष्करपत्त्रनेत्रः पुत्रः पुत्त्रिणाम् अग्रसङ्ख्यां समारोपयत्॥३०

अन्वयः। स्पर्शनिवृत्तलौल्यः (अतएव) मघोनः सखा भावी सः वंशकरेण तेन वंशस्थितिं सम्भाव्य त्रिपुष्करेषु उपस्पृशन् त्रिदशत्वं आप॥३१

आब्रह्मसभाया आब्रह्मसभं ब्रह्मसदनपर्य्यन्तम्, अभिविधावव्ययीभावः। यशोभिः प्रकाशः प्रसिद्धः स कौशल्यः अतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठं ब्रह्मविदमित्यर्थः। ब्रह्मशब्दात् मतुबन्तादिष्ठन्प्रत्यये 'विन्मतोर्लुक्' इति मतुपो लुक् 'नस्ताद्धिते' इति टिलोपः। ब्रह्मिष्ठं ब्रह्मिष्ठाख्यं स्वतनुप्रसूतं स्वात्मजमेव निजे स्वकीये अधिकारे प्रजापालनकृत्ये आधाय निधाय ब्रह्मणो भावो ब्रह्मभूयं ब्रह्मत्वं तदेव गतिस्तां आजगाम, मुक्तः अभूदित्यर्थः। "स्याद्ब्रह्मभूयं ब्रह्मत्वं" इत्यमरः। भुवो भावे क्यप्॥२८

कुलापीड़निभे कुलशेखरतुल्ये, "वैकक्षकन्तु तत यत् तिर्य्यक्क्षिप्तमुरसि शिखास्वापीड़शेखरौ" इत्यमरः। सुप्रजसि सत्सन्तानवति 'नित्यमसिच् प्रजामेधयोः" इत्यसिच् प्रत्ययः। तस्मिन् प्रजेशे ब्रह्मिष्ठे शासनचिह्नां महीं निपीड़ निर्बाधं यथा तथा सम्यक् शासति सति आनन्दजलाविलाच्य आनन्दवाष्पाकुलनेत्राः प्रजाश्चिरं ननन्दुः॥२९

गुरुसेवनेन पित्रादिशुश्रूषया पात्रीकृतात्मा योग्यीकृतात्मा, "योग्यभाजनयोः पात्रम्" इत्यमरः। पत्त्ररथेन्द्रकेतोर्गरुड़ध्वजस्य स्पष्टाकृतिः स्पष्टवपुः। तत्स्वरूप इत्यर्थः। "आकृतिः कथिता रूपे सामान्यवपुषोरपि" इति विश्वः। पुष्करपत्त्रनेत्रः पद्मदलाक्षः पुत्त्रः पुत्राख्यो राजा। यद्वा पुत्त्रशब्द आवर्तनीयः। पुत्रः पुत्राख्यः पुत्रः सुतः, तं ब्रह्मिष्ठं पुत्रिनामग्रसंख्यां समारोपयत्, अग्रगण्यं चकारेत्यर्थः॥३०

तस्य प्रभानिर्जितपुष्परागं पौष्यास्तिथौ पुष्यमसूत पत्नी।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये ॥ ३२

महीं महेच्छः परिकीर्य्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा।
तस्मात् संयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ॥ ३३

ततः परं तत्प्रभवः प्रपेदे ध्रुवोपमेयो ध्रुवसन्धिरुर्वीम्।
यस्मिन्नभूज्ज्यायसि सत्यसन्धे सन्धिर्ध्रुवः सन्नमतामरीणाम् ॥ ३४

सुतं शिशावेव सुदर्शनाख्यं दर्शात्ययेन्दुप्रियदर्शने सः।
मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः ॥ ३५

अन्वयः। तस्य पत्नी पौष्यां तिथौ प्रभानिर्जितपुष्परागं पुष्यं असूत, द्वितीये पुष्ये इव तस्मिन् उदिते ( सति ) जनाः समग्रां पुष्टिं अपुष्यन् ॥ ३२

अन्वयः। महेच्छः जन्मभीरुः सः सूनौ महीं परिकीर्य्य मनीषिणे जैमिनये अर्पितात्मा ( सन् ) संयोगात् तस्मात योगं अधिगम्य अजन्मने अकल्पत ॥ ३३

अन्वयः। ततः परं तत्प्रभवः ध्रुवोपमेयः ध्रुवसन्धिः उर्वीं प्रपेदे। ज्यायसि सत्यसन्धे यस्मिन् सन्नमताम् अरीणां सन्धिः ध्रुवः अभूत् ॥ ३४

अन्वयः। मृगायताक्षः नृसिंहः सः दर्शात्ययेन्दुप्रियदर्शने सुदर्शनाख्ये सुते शिशौ(सति) एव मृगयाविहारी ( सन् ) सिंहात् विपदम् अवापत् ॥ ३५

स्पृश्यन्त इति स्पर्शा विषयाः, तेभ्यो निवृत्तलौल्यः निवृत्ततृष्णः अतएव मघोन इन्द्रस्य सखा मित्रं भावी भविष्यन्, स्वर्गं जिगमिषुरित्यर्थः। स ब्रह्मिष्ठो वंशकरेण वंशप्रवर्त्तकेन तेन पुत्रेण वंशस्थितिं कुलप्रतिष्ठां सम्भाव्य सम्पाद्य त्रिषु पुष्करेषु तीर्थविशेषेषु, "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति समासः। उपस्पृशन् स्नानं कुर्व्वन् त्रिदशत्वं देवभूयमाप ॥ ३१

तस्य पुत्राख्यस्य पत्नी पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ। "पुष्ययुक्ता पौर्णमासी पौषी" इत्यमरः। नक्षत्रेण युक्तः काल, इत्यण् प्रत्ययः, "टिड्ढाणञ्—" इत्यादिना ङीप्। प्रभया निर्जितः पुष्परागो मणिविशेषो येन तं पुष्यं पुष्याख्यमसूत। द्वितीये पुष्ये पुष्यनक्षत्र इव तस्मिन् उदिते सति जनाः समग्रां पुष्टिं वृद्धिमपुष्यत् ॥ ३२

महेच्छो महाशयः, "महेच्छस्तु महाशयः" इत्यमरः। जन्मभीरुः संसारभीरुः स पुत्रः सूनौ महीं परिकार्य्य विसृज्य मनीषिणे ब्रह्मविद्याविदुषे जैमिनये सुतर्थेऽर्पितात्मा शिष्यभूतः सन्नित्यर्थः। संयोगाद्योगिनस्तस्मात् जैमिनेर्योगं योगविद्यामधिगम्य अजन्मने जन्मनिवृत्तये मोक्षाय अकल्पत समपद्यत। क्लृपेः सम्पद्यमाने चतुर्थी वक्तव्या। मुक्त इत्यर्थः ॥ ३३

ततः परं स पुष्यः प्रभवः कारणं यस्य स तत्प्रभवः तदात्मज इत्यर्थः। ध्रुवसन्धिः उर्वीं प्रपेदे। ध्रुवेण औत्तानपादिना उपमेयः "ध्रुव औत्तानपादिः स्यात्" इत्यमरः। ज्यायसि श्रेष्ठे सत्यसन्धे सत्यप्रतिज्ञे यस्मिन् ध्रुवसन्धौ सन्नमताम् अनुव्रतानामित्यर्थः। अरीणां सन्धिर्ध्रुवः स्थिरोऽभूत्। ततः सार्थकनामा इत्यर्थः ॥ ३४

स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥ २६

नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ॥ २७

लोकेन भावी पितुरेव तुल्यः सम्भावितो मौलिपरिग्रहात् सः ।
दृष्टो हि वृण्वन् कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः ॥ २८

तं राजवीथ्यामधिहस्ति यान्तमाधोरणालम्बितमग्र्यवेशम् ।
षड्वर्षदेशीयमपि प्रभुत्वात् प्रैक्षन्त पौराः पितृगौरवेण ॥ २९

अन्वयः । स्वर्गामिन तस्य अमात्यवर्गः अनाथदीनाः प्रकृतीः अवेक्ष्य कुलतन्तुम् एकं तम् ऐकमत्यात् विधिवत साकेतनाथं चकार ॥ २६

अन्वयः । अप्रौढनरेन्द्रं तत् रघोः कुलं नवेन्दुना नभसा शावैकसिंहेन काननेन च कुड्मलपुष्करेण तोयेन च उपमेयम् आसीत् ॥ २७

अन्वयः । सः मौलिपरिग्रहात् पितुः तुल्यः एव भावी लोकेन सम्भावितः ( तथाहि ) कलभप्रमाणः मेघः पुरोवातम् अवाप्य आशाः वृण्वन् दृष्टो हि ॥ २८

अन्वयः । राजवीथ्याम् अधिहस्ति यान्तं आधोरणालम्बितं अग्र्यवेशम् षड्वर्षदेशीयम् अपि तं पौराः प्रभुत्वात् पितृगौरवेण प्रैक्षन्त ॥ २९

मृगायताक्षो नृसिंहः पुरुषश्रेष्ठः स ध्रुवसन्धिर्दशांत्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सति एव मृगयाविहारी सन् सिंहात विपदं मरणम् अवापत। व्यसनासक्तिरनर्थावहेति भावः ॥ ३५

स्वर्गामिनः स्वर्यातस्य तस्य ध्रुवसन्धेरमात्यवर्गः आनाथा : नाथहीना अतएव दीनाः शोच्या प्रकृतीः प्रजा अवेक्ष्य कुलतन्तुं कुलावलम्बनमेकमद्वितीयं तं सुदर्शनम् ऐकमत्यात् विधिवत् साकेतनाथम् अयोध्याधीश्वरं चकार ॥ ३६

अप्रौढनरेन्द्रं तत् रघोः कुलं, नवेन्दुना बालचन्द्रेण नभसा व्योम्ना। शावः शिशुरेकः सिंहो यस्मिन्। "पृथकः शावकः शिशुः" इत्यमरः। तेन काननेन च, कुड्मलं कुड्मलावस्थं पुष्करं पङ्कजं यस्मिन् तेन तोयेन च उपमेयमुपमातुमर्हमासीत्। नवेन्द्वाद्युपमानेन तस्य वर्धिष्णुताशौर्यश्रीमत्त्वानि सूचितानि ॥ ३७

स बालो मौलिपरिग्रहात् किरीटस्वीकाराद्धेतोः पितुस्तुल्यः पितृस्वरूप एव भावी भविष्यति लोकेन जनेन सम्भावितस्तर्कितः। तथाहि—कलभप्रमाणः कलभमात्रोऽपि मेघः पुरोवातमवाप्य आशा दिशो वृण्वन् गच्छन् दृष्टो हि ॥ २८

राजवीथ्यां राजमार्गेऽधिहस्ति हस्तिनि विभक्त्यर्थेऽव्ययीभावः। यान्तं गच्छन्तम् हस्तिनमारुह्य गच्छन्तमित्यर्थः। आधोरणालम्बितः शिशुत्वात् सादिना गृहीतम् अग्र्यवेशम् उदारनेपथ्यं षड्वर्षाणि भूतः षड्वर्षः। "तद्धितार्थः—" इत्यादिना समासः। तमपीटी

र्मं न सोऽकल्पत पैतृकस्य सिंहासनस्य प्रतिपूरणाय ।
जोमहिम्ना पुनराप्तृतात्मा तद्व्याप चामीकरपिञ्जरेण ॥ ४०
ादधः किञ्चिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम् ।
लक्तौ भूपतयः प्रसिद्धैर्ववन्दिरे मौलिभिरस्य पादौ ॥ ४१
णौ महानील इति प्रभावादल्पप्रमाणेऽपि यथा न मिथ्या ।
दो महाराज इति प्रतीतस्तथैव तस्मिन् युयुजेऽर्भकेऽपि ॥ ४२
न्तसञ्चारितचामरस्य कपोललोलोभयकाकपक्षात् ।
ाननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानाम् ॥ ४३

न्वयः। सः पैतृकस्य सिंहासनस्य कामं प्रतिपूरणाय न अकल्पत, चामीकरपिञ्जरेण
हिम्ना पुनः आप्तृतात्मा (सन्) तत् व्याप ॥४०

न्वयः। तस्मात् अधः किञ्चिदिव अवतीर्णौ तपनीयपीठं असंस्पृशन्तौ सालक्तकौ
ादौ भूपतयः प्रसिद्धैः मौलिभिः ववन्दिरे ॥४१

न्वयः। अल्पप्रमाणे अपि मणौ प्रभावात् महानीलः इति शब्दः यथा मिथ्या न,
र्भके अपि तस्मिन् प्रतीतः महाराजः इति (शब्दः न मिथ्या) युयुजे ॥४२

न्वयः। पर्य्यन्तसञ्चारितचामरस्य तस्य कपोललोलोभयकाकपक्षात् आननात्
ः विवादः अर्णवानां वेलासु अपि न चस्खाल ॥४३

ौ 'भूतो भावोत्यधिकारे चित्तवति नित्य'मिति तद्धितस्य लुक्। ईषदसमाप्तः षड्वर्षः
ेशीयः। "ईषदसमाप्तौ—"इत्यादिना देशीयर्प्रत्ययः। तं षड्वर्षदेशीयमपि बालमपि
ं पौराः प्रभुत्वात् पितृगौरवेण प्रेचन्त। पितरि यादृग्गौरवं तादृशेनैव दृष्ट-
॥३९

ुदर्शनः पैतृकस्य सिंहासनस्य कामं सम्यक् प्रतिपूरणाय न अकल्पत। बालत्वात्
पर्य्याप्त इत्यर्थः। चामीकरपिञ्जरेण कनकगौरेण तेजोमहिम्ना पुनस्तेजःसम्पदा
त्मा विस्तारितदेहः सन् तत् सिंहासनं व्याप व्याप्तवान् ॥४०
त् सिंहासनात् अपादानात् अधः अधोदेशं प्रति किञ्चिदिव अवतीर्णौ हृस्वत्वा
ठं काञ्चनपीठम् असंस्पृशन्तौ अल्पकत्वात् अव्याप्तौ सालक्तकौ लाक्षारसावसिक्तौ
र्शनस्य पादौ भूपतयः प्रसिद्धैरुन्नतै मौलिभिः मुकुटैर्ववन्दिरे प्रणेमुः ॥४१
प्रमाणेऽपि मणौ इन्द्रनीले प्रभावात् तेजिष्ठत्वाद्धेतोर्महानील इति शब्दः यथा
रर्थकः न, तथैव अर्भके शिशावपि तस्मिन् सुदर्शने प्रतीतः प्रसिद्धः महाराज इति
मिथ्या युयुजे ॥४२
ोः पार्श्वयोः सञ्चारिते चामरे यस्य तस्य बालस्य सम्बन्धिनः कपोलयोर्लोलौ उभौ
ौ यस्य तस्मात् आननादुच्चरितो विवादो वचनम् अर्णवानां वेलास्वपि न चस्खाल,

निर्वृत्तजाम्बूनदपट्टशोभे न्यस्तं ललाटे तिलकं दधानः।
तेनैव शून्यान्यरिसुन्दरीणां मुखानि स स्मेरमुखश्चकार ॥ ४४

शिरीषपुष्पाधिकसौकुमार्य्यः खेदं स यायादपि भूषणेन।
नितान्तगुर्वीमपि सोऽनुभावाद्धुरं धरित्र्या बिभराम्बभूव ॥ ४५

न्यस्ताक्षरामक्षरभूमिकायां कात्स्न्येन गृह्णाति लिपिं न यावत्।
सर्वाणि तावच्छ्रुतवृद्धयोगात् फलान्युपायुङ्क्त स दण्डनीतेः ॥ ४६

उरस्यपर्य्याप्तनिवेशभागां प्रौढ़ीभविष्यन्तमुदीक्षमाणा।
सञ्जातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ ४७

अन्वयः। निर्वृत्तजाम्बूनदपट्टशोभे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः अरिसुन्दरीणां मुखानि तेन एव शून्यानि चकार ॥४४

अन्वयः। शिरीषपुष्पाधिकसौकुमार्य्यः (अतएव) सः भूषणेन अपि खेदं यायात् (एवम्भूतः) सः नितान्तगुर्वीम् अपि धरित्र्याः धुरम् अनुभावात् बिभराम्बभूव ॥४५

अन्वयः। अक्षरभूमिकायां न्यस्ताक्षरां लिपिं कात्स्न्येन यावत् न गृह्णाति, सः तावत् श्रुतवृद्धयोगात् सर्वाणि दण्डनीतेः फलानि उपायुङ्क्त ॥४६

अन्वयः। उरसि अपर्य्याप्तनिवेशभागा प्रौढ़ीभविष्यन्तम् उदीक्षमाणा लक्ष्मीः सञ्जातलज्जा इव तम् आतपत्रच्छायाच्छलेन उपजुगूह ॥४७

शिशोरपि तस्य आज्ञाभङ्गो नासीदित्यर्थः। चपलसंसर्गेऽपि महान्तो न चलन्तीति भावः। उभयकालपचादित्वत "वृत्तिविषये उभयपुत्र इतिवदुभशब्दस्थाने उभयशब्दप्रयोगः" प्राक् ॥४३

निर्वृत्ता जाम्बूनदपट्टशोभा यस्य तस्मिन् धृतकनकपट्टशोभे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः स्मितमुखः स राजा अरिसुन्दरीणां मुखानि तेनैव तिलकेनैव शून्यानि चकार अखिलमपि शत्रुवर्गम् अवधीदिति भावः ॥४४

शिरीषपुष्पाधिकसौकुमार्य्यः कोमलाङ्ग इत्यर्थः। अतएव स राजा भूषणेनापि खेदं यायात् गच्छेत्। एवम्भूतः स नितान्तगुर्वीमपि धरित्र्या धुरं भुवो भारम् अनुभावात् सामर्थ्यात् बिभराम्बभूव बभार। "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः ॥४५

अक्षरभूमिकायामक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखाभ्यासां लिपिं वर्णात्मिकां मातृकां कात्स्न्येन यावत् न गृह्णाति, स सुदर्शनस्तावत् श्रुतवृद्धयोगात् वृद्धसंसर्गात् सर्वाणि दण्डनीतेर्दण्डशास्त्रस्य फलानि उपायुङ्क्त अन्वभूत्। प्रागेव बाल्ये तस्य पश्चादभ्यस्यमानं शास्त्रं संवादार्थमिव अभवदित्यर्थः ॥४६

उरसि अपर्य्याप्तो निवेशभागो निवासावकाशो यस्याः सा, अतएव प्रौढ़ीभविष्यन्तं तमुदीक्षमाणा प्रौढ़वपुष्मान् भविष्यतीति प्रतीक्षमाणा लक्ष्मीः सञ्जातलज्जा इव तम्

अनुवानेन युगोपमानमवद्धमौर्वीकिणलाञ्छनेन ।
अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ॥ ४८

न केवलं गच्छति तस्य काले ययुः शरीरावयवा विवृद्धिम् ।
वंश्या गुणाः खल्वपि लोककान्ताः प्रारम्भसूक्ष्माः प्रथिमानमापुः॥४९

स पूर्वजन्मान्तरदृष्टपाराः स्मरन्निवाक्लेशकरो गुरूणाम् ।
तिसृस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥५०

व्युह्य स्थितः किञ्चिदिवोत्तरार्द्धमुन्नद्धचूडोऽञ्चितसव्यजानुः ।
आकर्णमाकृष्टसवाणधन्वा व्यरोचतास्त्रेषु विनीयमानः॥ ५१

अन्वयः। युगोपमानं अनस्‌तुवानेन अवद्धमौर्वीकिणलाञ्छनेन अस्पृष्टखड्गत्सरुणा च तस्य भुजेन भूमिः रक्षावती आसीत् ॥ ४८

अन्वयः। काले गच्छति (सति) तस्य केवलं शरीरावयवाः विवृद्धिं न ययुः. (किन्तु) वंश्याः लोककान्ताः प्रारम्भसूक्ष्माः तस्य गुणाः अपि प्रथिमानं आपुः खलु: ॥ ४९

अन्वयः। सः पूर्वजन्मान्तरदृष्टपाराः स्मरन् इव गुरूणाम् अक्लेशकरः (सन्) त्रिवर्गाधिगमस्य मूलं तिस्रः विद्याः पित्र्याः प्रकृतीः च जग्राह ॥ ५०

अन्वयः। अस्त्रेषु विनीयमानः उत्तरार्द्धं किञ्चित् इव व्युह्य स्थितः, उन्नद्धचूडः अञ्चितसव्यजानुः आकर्णं आकृष्टसवाणधन्वा (सन्) व्यरोचत ॥ ५१

...तुं वञ्चिता इव तं सुदर्शनमातपत्रच्छायाछलेन उपजुगूह आलिलिङ्ग। कचच्छाया ...रूपेति। प्रसिद्धिः प्रौढाङ्गनायाः प्रौढपुरुषालाभे लज्जा भवतीति ध्वनिः ॥ ४७

युगोपमानं युगसादृश्यमनस्‌तुवानेन अप्राप्तवता। अवद्धं मौर्वीकिणो ज्याघातग्रन्थिरेव ...नं यस्य तेन, अस्पृष्टः खड्गत्सरुः खड्गमुष्टिर्येन तेन, "त्सरुः खड्गादिमुष्टौ स्यात्" ...इ। एवंविधेनापि च तस्य सुदर्शनस्य भुजेन भूमिः रक्षावती आसीत्। शिशोरपि ...तेजसा रक्षितेत्यर्थः ॥ ४८

काले गच्छति सति तस्य केवलं शरीरावयवा एव विवृद्धिं प्रसारं न ययुः, किन्तु वंशे ...वंश्या लोककान्ता जनप्रियाः प्रारम्भे आदौ सूक्ष्मास्तस्य गुणाः शौर्यौदार्यादयोऽपि ...नं पृथुलमापुः खलु ॥ ४९

...सः सुदर्शनः पूर्वस्मिन् जन्मान्तरे जन्मविशेषे दृष्टपाराः स्मरन्निव गुरूणाम् अक्लेशकरः ...णां धर्मार्थकामानां वर्गस्त्रिवर्गः तस्य अधिगमस्य प्राप्तेर्मूलं तिस्रो विद्याः त्रयीवार्त्ता-...तीः पित्र्याः पितृसम्बन्धिनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार। अत्र कौटिल्यः ...धर्माधर्मौ त्रय्याम् अर्थानर्थौ वार्त्तायां नयानयौ दण्डनीत्याम्" इति। अत्र दण्डनीतिः ...रा काममूलमिति द्रष्टव्यम्। आन्वीक्षिका अनुपादानं त्रय्यन्तर्भावपक्षमाश्रित्य। ...कामन्दकः—"त्रयी वार्त्ता दण्डनीतिस्तिस्रो विद्या मनीषिताः। त्रय्या एव विभा-...गेन सान्वीक्षिकी मता" इति ॥ ५०

अथ मधु वनितानां नेत्रनिर्वेशनीयं
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।
अकृतकविधि सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५२

प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५३

अन्वयः । अथ सः वनितानां नेत्रनिर्वेशनीयं मधु रागबन्धप्रवालं मनसिजतरुपुष्पम् अकृतकविधि सर्व्वाङ्गीणम् आकल्पजातम् आद्यं विलसितपदं यौवनं प्रपेदे ॥ ५२

अन्वयः । दूतिसन्दर्शिताभ्यः प्रतिकृतिरचनाभ्यः समधिकतररूपाः शुद्ध-सन्तानकामैः अमात्यैः आहृताः राजकन्याः यूनः तस्य प्रथमपरिगृहीते श्रीभुवौ अधिविविदुः ॥ ५३

अस्त्रेषु धनुर्विद्यायां विनीयमानः शिक्षमाणः अएतव उत्तरार्द्धं पूर्व्वकायं किञ्चित् व्युह्य विस्तार्य्य स्थितः, उन्नद्धचूडं ऊर्द्धम् उत्कृष्य बद्धकेशः, अञ्चितम् आकुञ्चितं सव्यं जानु यस्य स, आकर्णम् आकृष्टं सवाणं धनुर्धन्व वा येन स तथोक्तः सन् व्यरोचत अशोभत ॥ ५१

अथ स सुदर्शनो वनितानां नेत्रैः निर्वेशनीयं भोग्यं नेत्रपेयम् इत्यर्थः । "निर्व्वेशो भृति भोगयोः" इत्यमरः । मधु चौद्रं रागबन्धः अनुरागसन्तान एव प्रवालः पल्लवो यस्य, तत् मनसिज एव तरुस्तस्य पुष्पं पुष्पभूतम् अकृतकविधि अकृत्रिमसम्पादनम्, सर्व्वाङ्गं व्याप्नोतीति सर्व्वाङ्गीणम् । "तत्सर्व्वादेः—" इत्यादिना खप्रत्ययः । आकल्पजातम् आभरणसमूहभूतम्, आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे । विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्धाकरणात् सविशेषणमालारूपकमेतत् ॥ ५२

दूतिभिः कन्यापरीक्षणार्थं प्रेषिताभिः सन्दर्शिताभ्यो दूतिसन्दर्शिताभ्यः, प्रतिकृतीनां तूलिकादिलिखितकन्याप्रतिमानां रचनाभ्यो विन्यासेभ्यः, "पञ्चमी विभक्ते" इति पञ्चमी समधिकतररूपाः चित्रनिर्म्माणादपि रमणीयनिर्म्माणा इत्यर्थः । शुद्धसन्तानकामैरमात्यैराहृता आनीता राजकन्या यूनस्तस्य सुदर्शनस्य सम्बन्धिन्यौ प्रथमपरिगृहीते श्रीभुवौ श्रीभूय ते अधिविविदुरधिविन्ने चक्रुः । आत्मना सपत्नीभावं चक्रुरित्यर्थः । "कृतसापत्निकाध्यूढाधिविन्ना" इत्यमरः ॥ ५३

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ सूरिविरचितया सञ्जीवनीसमाख्यया
व्याख्यया समेतो महाकवि—कालिदासकृतौ रघुवंशे महाकाव्ये
वंशानुक्रमो नाम अष्टादशः सर्गः ।

———

# एकोनविंशः सर्गः ।

अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥ १
तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः सञ्चिकाय फलनिःस्पृहस्तपः ॥ २
लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥ ३

अन्वयः। श्रुतवताम् अपश्चिमः वशी राघवः पश्चिमे वयसि स्वे पदे अग्नितेजसं तनयम् अग्निवर्णम् अभिषिच्य नैमिषं शिश्रिये ॥१

अन्वयः। तत्र तीर्थसलिलेन दीर्घिकाः, अन्तरितभूमिभिः कुशैः तल्पं, उटजेन सौधवासं विस्मृतः सः फलनिःस्पृहः ( सन् ) तपः सञ्चिकाय ॥ २

अन्वयः। तत्सुतः लब्धपालनविधौ खेदं न आप, हि ( यस्मात् ) भुजनिर्जितद्विषा गुरुणा मेदिनी अस्य भोक्तुम् कल्पिता, प्रसाधयितुं न ॥३

मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगलं निविडायताम् ॥

श्रुतवतां श्रुतसम्पन्नानाम् अपश्चिमः प्रथमो वशी जितेन्द्रियो राघवः सुदर्शनः पश्चिमे वयसि वार्द्धके स्वे पदे स्थाने अग्नितेजसं तनयम् अग्निवर्णम् अभिषिच्य नैमिषं नैमिषारण्यं शिश्रिये श्रितवान् ॥१

तत्र नैमिषे तीर्थसलिलेन दीर्घिकाः विहारवापीः, अन्तरितभूमिभिः कुशैस्तल्पं शय्याम्, उटजेन पर्णशालया सौधवासं विस्मृतः, विस्मृतवान् सः। कर्त्तरि क्तः। फले स्वर्गादि-फले निःस्पृहस्तपः सञ्चिकाय सञ्चितवान् ॥२

तत्सुतः सुदर्शनपुत्रः अग्निवर्णो लब्धपालनविधौ लब्धस्य राज्यस्य पालनकर्मणि खेदं न आप, अक्लेशेन अपालयत् इत्यर्थः। कुतः? हि यस्मात् भुजनिर्जितद्विषा गुरुणा पित्रा मेदिनी अस्य अग्निवर्णस्य भोक्तुमेव कल्पिता, प्रसाधयितुं न। प्रसाधनं संशोधनम् अलङ्कृतिर्ध्वन्यते। तथा च, यथालङ्कृता नीता युवतिः केवलमुपभुज्यते इति भावः ॥३

सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्त्तयत् समाः।
सन्निवेश्य सचिवेष्वतःपरं स्त्रीविधेयनवयौवनोऽभवत्॥ ४
कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः॥ ५
इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम्।
अन्तरेव विहरन् दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः॥ ६
गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम्॥ ७

अन्वयः। अभिकः सः कुलोचितम् अधिकारं काश्चन समाः स्वयम् अवर्त्तयत्, अतःपरं सचिवेषु सन्निवेश्य स्त्रीविधेयनवयौवनः अभवत्॥४

अन्वयः। कामिनीसहचरस्य कामिनः तस्य मृदङ्गनादिषु वेश्मसु अधिकर्द्धिः उत्तरः उत्सवः ऋद्धिमन्तं पूर्व्वम् उत्सवम् अपोहत्॥५

अन्वयः। इन्द्रियार्थपरिशून्यम् एकम् अपि क्षणान्तरं सोढुम् अक्षमः सः दिवानिशम् अन्तः एव विहरन् समुत्सुकाः प्रजा न व्यपैक्षत॥६

अन्वयः। जातु मन्त्रिणां गौरवात् प्रकृतिकाङ्क्षितं यत् अपि दर्शनं ददौ, तत् गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम्॥७

अभिकः कामुकः "अनुकामिकाभीकः कामिता, इति निपातः। "कम्रः कामयिताभीकः कमनः कामनोऽभिकः" इत्यमरः। सः अग्निवर्णः कुलोचितम् अधिकारं प्रजापालनं काश्चन समाः कतिचित् वत्सरान् स्वयम् अवर्त्तयन् अकरोत। अतःपरं सचिवेषु सन्निवेश्य निधाय स्त्रीविधेयं स्वाधीनं नवं यौवनं यस्य सः अभवत्। स्त्र्यासक्तः अभूदित्यर्थः॥४

कामिनीसहचरस्य कामिनस्तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्मसु अधिकर्द्धिः पूर्व्वस्मादधिकसम्भार उत्तर उत्सवः ऋद्धिमन्तं साधनसम्पन्नं पूर्वं उत्सवं अपोहत् अपानुदत्। उत्तरमुत्तरमधिका तस्योत्सवपरम्परा ववृधेत्यर्थः॥५

इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि क्षणान्तरं क्षणभेदं सोढुमक्षमोऽसहः स अग्निवर्णो दिवानिशं अन्तरेव विहरन् समुत्सुका दर्शनाकाङ्क्षिणीः प्रजा न व्यपैक्षत, न अपेक्षितवान्॥६

जातु कदाचित् मन्त्रिणां गौरवात् गुरुत्वाद्धेतोः मन्त्रिवचनानुरोधादित्यर्थः। प्रकृतिभिः प्रजाभिः काङ्क्षितं यत् अपि दर्शनं ददौ। तत् अपि गवाक्षविवरावलम्बिना केवलेन चरणेन चरणमात्रेण कल्पितं सम्पादितम्। नतु मुखावलोकनप्रदानेनेत्यर्थः॥७

तं कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८
यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत विगाढमन्मथः ॥ ९
तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १०
घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः प्रियासखः ।
अभ्यपद्यत स वासितासखः पुष्पिताः कमलिनीरिव द्विपः ॥ ११

अन्वयः। कोमलात्मनखरागरूषितं (अतएव)नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणं तं अनुजीविनः कृतप्रणतयः ( सन्तः ) भेजिरे ॥८

अन्वयः। विगाढमन्मथः सः यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाः तदम्बुभिः गूढमोहनगृहाः च दीर्घिकाः व्यगाहत ॥ ९

अन्वयः। तत्र अङ्गनाः तत्र सेकहृतलोचनाञ्जनैः धौतरागपरिपाटलाधरैः ( अतएव ) अर्पितप्रकृतकान्तिभिः ( एवम्भूतैः ) मुखैः तं अधिकं व्यलोभयन् ॥ १०

अन्वयः। प्रियासखः सः घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः द्विपः पुष्पिताः कमलिनीः इव अभ्यपद्यत ॥ ११

कोमलेन मृदुलेन आत्मनखानां रागेणारुण्येन रूषितं छुरितम्। अतएव नवदिवाकरातपेन स्पृष्टं व्याप्तं तत पङ्कजं तस्य तुलां साम्यतामधिरोहति प्राप्नोतीति तुलाधिरोहणम् तं चरणम् अनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषेविरे ॥ ८

विगाढमन्मथः प्रौढमदनः सोऽग्निवर्णो यौवनेन हेतुना उन्नतानां विलासिनीस्तनानां क्षोभेण आघातेन लोलानि चञ्चलानि कमलानि यासां ताः। तदम्बुभिस्तासां दीर्घिकाणामम्बुभिर्गूढानि अन्तरितानि मोहनगृहाणि सुरतभवनानि यासु ताश्च दीर्घिका व्यगाहत। स्त्रीभिः सह दीर्घिकासु विजहारेत्यर्थः ॥ ९

तत्र दीर्घिकास्वङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः। रज्यतेऽनेनेति रागो रागद्रव्यं लाक्षादिरागस्य परिपाटलोऽङ्गगुणः। 'गुणे शुक्लादयः पुंसि' इत्यमरः। धौतौ रागपरिपाटलौ येषां ते तथोक्ताः अधरा येषां तैः। निवृत्तसाङ्क्रामिकरागैरित्यर्थः अतएव अर्पितप्रकृतकान्तिभिः अभिव्यञ्जितस्वाभाविकरागैरित्यर्थः। एवम्भूतैर्मुखैस्तमग्निवर्णमधिकं व्यलोभयन् प्रलोभितवत्यः ॥ १०

प्रियासखः सः अग्निवर्णो घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन कर्षिणीर्मनोहारिणीः, रच्यन्त इति रचनाः, पानभूमय एव रचनाः, रचिताः पानभूमय इत्यर्थः। वासितासखः

सातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गना: ।
ताभिरप्युपहृतं मुखासवं सोऽपिबत् वकुलतुल्यदोहदः ॥ १२

अङ्कमङ्कपरिवर्त्तनोचिते तस्य निन्यतुरशून्यतामुभे ।
वल्लकी च हृदयङ्गमस्वना वल्गुवागपि च वामलोचना ॥ १३

स स्वयं प्रहृतपुष्करः कृती लोलमाल्यवलयो हरन् मनः ।
नर्त्तकीरभिनयातिलङ्घिनीः पार्श्ववर्त्तिषु गुरुष्वलज्जयत् ॥ १४

चारु नृत्यविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालकेश्वरौ ॥ १५

अन्वयः। अङ्गनाः रहः सातिरेकमदकारणं तेन दत्तं मुखासवम् अभिलेषुः, वकुल-तुल्यदोहदः सः अपि ताभिः उपहृतं अपिबत् ॥ १२

अन्वयः। अङ्कपरिवर्त्तनोचिते उभे तस्य अङ्कम् अशून्यतां निन्यतुः, हृदयङ्गमस्वना वल्लकी च, वल्गुवाक् वामलोचना अपि च ॥ १३

अन्वयः। कृती स्वयं प्रहृतपुष्करः लोलमाल्यवलयः मनः हरन् सः अभिनयातिलङ्घिनीः नर्त्तकीः गुरुषु पार्श्ववर्त्तिषु ( सत्सु ) अलज्जयत् ॥ १४

अन्वयः। ( किञ्च ) चारु नृत्यविगमे परिश्रमात् स्वेदभिन्नतिलकं तन्मुखं प्रेमदत्त-वदनानिलः पिबन् अमरालकेश्वरौ अत्यजीवत् ॥ १५

करिणीसहचरः। "वासिता स्त्रीकरिण्योश्च" इत्यमरः। द्विपः पुष्पिताः कमलिनीरिव अभ्यपद्यत अभिगतः ॥ ११

अङ्गना रहो रहसि सातिरेकस्य सातिशयस्य मदस्य कारणं तेन अग्निवर्णेन दत्तं मुखासवं अभिलेषुः। वकुलेन तुल्यदोहदस्तुल्याभिलाषः "अथ दोहदम्। इच्छाकाङ्क्षा स्पृहेहा तृट्" इत्यमरः। वकुलद्रुमस्य अङ्गनामद्यार्थित्वात् तुल्याभिलाषित्वम्। सोऽपि ताभिरङ्गनाभिरुपहृतं दत्तं मुखासवं अपिबत् ॥ १२

अङ्कपरिवर्त्तनोचिते उत्सङ्गविहारार्हे उभे तस्य अग्निवर्णस्य अङ्कं अशून्यतां पूर्णतां निन्यतुः ? के उभे। हृदयङ्गमस्वना मनोहरध्वनिर्वल्लकी वीणा च, मधुरभाषिणी वाम-लोचना कामिन्यपि च। हृदयं गच्छतीति हृदयङ्गमः। "खच् प्रकरणे गमेः सुप्युपसं-ख्यानात् इति खच् प्रत्ययः। अङ्काधिरोपितयोर्वीणावामाक्ष्योर्वाद्यगीताभ्यासरतेत्यर्थः ॥ १३

कृती कुशलः स्वयंप्रहृतपुष्करो वादितवाद्यमुखो लोलानि माल्यानि वलयानि च यस्य स तथोक्तो मनो हरन् नर्त्तकीनामिति शेषः। सोऽग्निवर्णोऽभिनयातिलङ्घिनीः अभिनयेषु स्खलन्तीत्यर्थः। नर्त्तकीर्विलासिनीः "शिल्पिनि ष्वुन्" इति ष्वुन् प्रत्ययः। "षिद्गौरादिभ्यश्च" इति ङीष्। "नर्त्तकीलासिके समे" इत्यमरः। गुरुषु नाट्याचार्येषु पार्श्व-वर्त्तिषु समीपस्थेषु सत्सु एव अलज्जत लज्जां अगमयत ॥ १४

किञ्च, चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमात् नर्त्तनप्रयासात् स्वेदेन

तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥ १६

अङ्गुलीकिसलयाग्रतर्जनं भ्रुविभङ्गकुटिलञ्च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः ॥ १७

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः ॥ १८

अन्वयः । उपसृत्य नवेषु काम्यवस्तुषु सङ्गिनः (सतः) तस्य सावरणदृष्टसन्धयः समागमाः वल्लभाभिः सामिभुक्तविषयाः चक्रिरे ॥ १६

अन्वयः । सः प्रणयिनीः वञ्चयन् अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितं असकृत् मेखलाभिः बन्धनं च अवाप ॥ १७

अन्वयः । सुरतवाररात्रिषु दूतिविदितं पृष्ठतः निषेदुषा तेन विप्रलम्भपरिशङ्किनः प्रियजनस्य कातरं वचः शुश्रुवे ॥ १८

मिश्रतिलकं विशीर्णतिलकं तन्मुखं नर्त्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्त्तितमुखमारुतः पिबन् अमराणामलकायाश्च ईश्वरौ इन्द्रकुबेरौ अत्यजीवत् अतिक्रम्य अजीवत् । ततोऽप्युत्कृष्टजीवित आसीदित्यर्थः । इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥ १५

उपसृत्य अन्यत्र गत्वा नवेषु नूतनेषु काम्यवस्तुषु शब्दादिषु इन्द्रियार्थेषु सङ्गिन आसक्तिमतः सतस्तस्य सावरणाः प्रच्छन्नाः दृष्टाः प्रकाशाश्च सन्धयः साधनानि येषु ते समागमाः सङ्गमाः वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्द्धोपभुक्तेन्द्रियार्थाश्चक्रिरे । यथेष्टं भुञ्जात् तर्हि अयं निस्पृहः सन् अस्मत्समीपं न आयास्यतीति भावः । अत्र गोनर्द्दीयः—"सन्धिर्द्विविधः । सावरणः प्रकाशश्च । सावरणो भिक्षुकादिना । प्रकाशः स्वयमुपेत्य तेनापि" इति । "इतः स्वयमुपसृत्य विशेषार्थं तत्र स्थितोऽनुपपन्नातं स्वयं सन्धयः" इति वात्स्यायनः । अन्यत्र गतं कथञ्चित् सन्धाय पुनरनुपगमायार्द्धोपभोगेन अनिष्टपतर्पणं चक्रुरित्यर्थः ॥ १६

सोऽग्निवर्णः प्रणयिनीः प्रेयसीर्वञ्चयन् अन्यत्र गच्छन् अङ्गुल्यः किसलयानि तेषामग्राणि तैस्तर्ज्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणञ्च असकृत् मेखलाभिर्बन्धनञ्च अवाप । अपराधिनो दण्डा इति भावः ॥ १७

सुरतस्य वारो वासरः तस्य रात्रिषु दूतीनां विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेन अग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः प्रियजनस्य जनस्य प्रियजनः तस्य कातरं वचः प्रियानयनेन मां पाहि इत्येवमादि दीनवचनं शुश्रुवे ॥ १८

लौल्यमेत्य गृहिणीपरिग्रहान्नर्त्तकीष्वसुलभासु तद्वपुः।
वर्त्तते स्म स कथञ्चिदालिखन्नङ्गुलीक्षरणसन्नवर्त्तिकः॥ १९
प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम्।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम्॥ २०
प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः।
प्राञ्जलिः प्रणयिनीः प्रसादयन् सोऽदुनोत् प्रणयमन्थरः पुनः॥२१
स्वप्नकीर्त्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम्।
प्रच्छदान्तगलिताश्रुविन्दुभिः क्रोधभिन्नवलयैर्विवर्त्तनैः॥ २२

अन्वयः। गृहिणीपरिग्रहात् नर्त्तकीषु असुलभासु (सतीषु) लौल्यम् एत्य अङ्गुलीक्षरणसन्नवर्त्तिकः सः तद्वपुः आलिखन् कथञ्चित् वर्त्तते स्म॥ १९

अन्वयः। प्रेमगर्व्वितविपक्षमत्सरात् आयतात् मदनाच्च देव्यः उज्झितरुषः (सत्यः) तं उत्सवविधिच्छलेन कृतार्थतां निन्युः॥ २०

अन्वयः। सः प्रातः एत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः प्रणयिनीः प्राञ्जलिः प्रसादयन् (तथापि) प्रणयमन्थरः (सन्) पुनः अदुनोत्॥ २१

अन्वयः। स्वप्नकीर्त्तितविपक्षं अवदन्त्यः एव प्रच्छदान्तगलिताश्रुविन्दुभिः क्रोधभिन्नवलयः निवर्त्तनैः प्रत्यभैत्सुः॥ २२

गृहिणीपरिग्रहात् राज्ञीभिः समागमाद्धेतोर्नर्त्तकीषु वेश्यासु असुलभासु दुर्लभासु सतीषु लौल्यम् औत्सुक्यम् एत्य प्राप्य अङ्गुल्योः क्षरणेन स्वेदेन सन्नवर्त्तिकी विगलितशलाकः सः अग्निवर्णस्तासां नर्त्तकीनां वपुस्तद्वपुः आलिखन् कथञ्चित् वर्त्तते स्म अवर्त्तत॥ १९

प्रेम्णा स्वविषयेण प्रियस्य अनुरागेण हेतुना गर्विते विपक्षे सपत्नजने मत्सरात् वैरात् आयतात् प्रवृद्धात् मदनाच्च हेतोर्देव्यो राज्ञ्य उज्झितरुषः त्यक्तरोषाः सत्यस्तं महीक्षितम् उत्सवविधिच्छलेन महोत्सवकर्म्मव्याजेन कृतः अर्थः प्रयोजनं येन स कृतार्थः तस्य भावस्तत्तां निन्युः। मदनमहोत्सवव्याजात् नीतेन तेन स्वमनोरथं कारयामासुरित्यर्थः॥ २०

सः अग्निवर्णः प्रातरेत्य आगत्य परिभोगशोभिना दर्शनेन हेतुना हृग्रेर्ष्यन्ताभ्रूट्। कृता खण्डनव्यथा यासां तास्तथोक्ताः खण्डिता इत्यर्थः। तदुक्तम्—"ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति। प्रणयिनीः प्राञ्जलिः प्रसादयन् तथापि प्रणयमन्थरः प्रणयेन नर्त्तकीगतेन मन्थरः अलसः अत्र शिथिलप्रयत्नः सन् इत्यर्थः। पुनरदुनोत् पर्य्यतापयत्॥ २१

स्वप्ने कीर्त्तितो विपक्षः सपत्नजनो येन तं, तमग्निवर्णम् अवदन्त्य एव त्वया गोत्रस्खलनं कृतमित्यनुपालम्भमाना एव प्रच्छदस्य आस्तरणपटस्य अन्ते मध्ये गलिता अश्रुविन्दवो येषु तैः, क्रोधेन भिन्नानि भग्नानि वलयानि येषु तैः, विवर्त्तनैः पराङ्मुखलुण्ठनैः प्रत्यभैत्सुः प्रतिपक्षः, तिरस्कुर्वन्त्यर्थः॥ २२

क्लृप्तपुष्पशयनान् लतागृहानेत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत् परिजनाङ्गनारतं सोऽवरोधभयवेपथूत्तरम् ॥ २३

नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥ २४

चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् ॥ २५

अन्वयः। सः दूतिकृतमार्गदर्शनः (सन्) क्लृप्तपुष्पशयनान् लतागृहान् एत्य अवरोधभयवेपथूत्तरं परिजनाङ्गनारतं अन्वभूत ॥२३

अन्वयः। मया ते वल्लभजनस्य नाम प्राप्य तस्य भाग्यम् अपि काङ्क्ष्यते। ननु मम मनः लोलुपम् इति गोत्रविस्खलितं तम् अङ्गना ऊचुः ॥२४

अन्वयः। चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलं अलक्तकाङ्कितं शयनं (कर्तृ) उत्थितस्य विलासिनः तस्य विभ्रमरतानि अपावृणोत् ॥२५

सः अग्निवर्णो दूतिभिः कृतमार्गदर्शनः सन् क्लृप्तपुष्पशयनान् लतागृहान् एत्य अवरोधादन्तःपुरजनाद्भयेन यो वेपथुः कम्पस्तदुत्तरं तत्प्रधानं यथा तथा परिजनाङ्गनारतं दासीरतम् अन्वभूत्। परिजनाश्चासावङ्गना चेति विग्रहः। अत्र ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वत्वं कृतम्। 'अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद्गिराम्' इत्युपदेशात् ॥२३

मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नाम्ना आह्वानं लब्ध्वा तस्य त्वद्वल्लभजनस्य यद्भाग्यम् तत् परिहासकारणम् इति शेषः। यदपि काङ्क्ष्यते। ननु बत मम मनो लोलुपं लुब्धम् इति अनेन प्रकारेण गोत्रे नाम्नि विस्खलितं स्खलितवर्त्म तम् अग्निवर्णम् ऊचुः। "गोत्रं नाम्नि कुलेऽचले" इति यादवः। तन्नामलाभे सति तद्भाग्यमपि काङ्क्षिणो मनः अहो तृष्णेति सोल्लुण्ठमुपालभन्त इत्यर्थः ॥२४

चूर्णबभ्रु चूर्णैर्व्यानतकरणैरधोमुखावस्थितायाः स्त्रियाश्चिकुरगलितैः कुङ्कुमादिभिर्बभ्रु पिङ्गलम् "बभ्रुः स्यात् पिङ्गले त्रिषु" इत्यमरः। ललितस्रगाकुलं करिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया पतिताभिः लुलितस्रग्भिराकुलम्, छिन्नमेखलं हरिविक्रमकरणे स्त्रिया उत्क्षिप्तैकचरणत्वात् गलितमेखलम्, अलक्तकाङ्कितं धेनुकबन्धे भूतलनिहितकान्ताचरणत्वात् लाक्षारागकर्षितं शयनं कर्तृ, उत्थितस्य शयनादिति भावः। विलासिनस्तस्य अग्निवर्णस्य विभ्रमरतानि लीलारतानि सुरतबन्धविशेषानित्यर्थः। अपावृणोत् स्फुटीचकार। व्यानतादीनां लक्षणं रतिरहस्ये—"व्यानतं रतमिदं प्रिया यदि स्यादधोमुखचतुष्पदाकृतिः। तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितस्थितिः॥ भूगतस्तनभुजास्यमस्तकामुन्नतां स्फिचमधोमुखीं स्त्रियम्। क्रामति स्वकरकृष्टमेहने वल्लभे करिपदं तदुच्यते ॥ योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयः। न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा॥ आतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये॥" इति ॥२५

स: स्वयं चरणरागमादधे योषितां न च तथा समाहित: ।
लोभ्यमाननयन: श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभि: ॥ २६
चुम्बने विपरिवर्त्तिताधरं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ २७
दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थित: ।
छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार स: ॥ २८
कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयो: ।
प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम् ॥ २९

अन्वय: । स: स्वयं योषितां चरणरागं आदधे, (किञ्च) श्लथांशुकै: नितम्बिभि: मेखलागुणपदै: लोभ्यमाननयन: (सन्) तथा समाहित: न (आदधे) ॥२६

अन्वय: । चुम्बने विपरिवर्त्तिताधरं रशनाविघट्टने हस्तरोधि सर्वत: विघ्नितेच्छं वधूरतं तस्य मन्मथेन्धनं अभूत् ॥२७

अन्वय: । स: दर्पणेषु परिभोगदर्शिनी: वधू: नर्मपूर्वं अनुपृष्ठसंस्थित: (सन्) स्मित-मनोज्ञया छायया ह्रीनिमीलितमुखी: चकार ॥२८

अन्वय: । प्रिया: शयनोत्थितं तं कण्ठसक्तमृदुबाहुबन्धनं अग्रपादयो: न्यस्तपादतलं निशात्ययविसर्गचुम्बनं प्रार्थयन्त ॥२९

सोऽग्निवर्ण: स्वयमेव योषितां चरणयो: रागं लाक्षारसमादधे अर्पयामास । किञ्च, श्लथांशुकै: प्रियाङ्कस्पर्शादिति भाव:, नितम्बिभिर्नितम्बवद्भिर्मेखलागुणपदैर्जघनै: "पश्चान्नितम्ब: स्त्रीकट्या: क्लीवे तु जघनं पुर:" इत्यमर: । लोभ्यमाननयन आकृष्यमाणदृष्टि: सन्, तथा समाहितोऽवहितो न आदधे, सम्यग्रागरचना स्यादिति भाव: ॥२६

चुम्बने प्रवृत्ते सति विपरिवर्त्तिताधरं परिहृतोष्ठं रशनाविघट्टने मेखलाविश्लेषणे प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि इत्थं सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्य अग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनं अभूत् ॥२७

सोऽग्निवर्णो दर्पणेषु परिभोगदर्शिनी: सम्भोगचिह्नानि पश्यन्तीर्वधूर्नर्मपूर्वं परिहासपूर्वं अनुपृष्ठं तासां पृष्ठभागे संस्थित: सन् स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीर्लज्जावनतमुखीश्चकार, समागतं दृष्ट्वा लज्जिता इत्यर्थ: ॥२८

प्रिया: शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदुबाहुबन्धनं यस्मिन् तत् अग्रपादयो: स्वकीययोर्न्यस्ते पादतले यस्मिन् तत् निशात्यये विसर्गो विसृज्य गमनं, तत्र यत् चुम्बनं तत् प्रार्थयन्त । "दुह्याच्—" इत्यादिना द्विकर्मकत्वम् । अत्र गोनर्दीय:— "रतावसाने यदि चुम्बनादि प्रयुज्य यायात् मदनोऽस्य दास:" इति ॥२९

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा व्यक्तलक्ष्म परिभोगमण्डनम् ॥ ३०

मित्रकृत्यमपदिश्य पार्श्वत: प्रस्थितं तमनवस्थितं प्रिया: ।
विद्म हे शठ ! पलायनच्छलान्यञ्जसेति रुरुधु: कचग्रहै: ॥ ३१

तस्य निर्दयरतिश्रमालसा: कण्ठसूत्रमपदिश्य योषित: ।
अध्यशेरत बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम् ॥ ३२

अन्वय: । युवा स: अतिशक्रशोभिनं दर्पणतलस्थम् आत्मन: राजवेषं प्रेक्ष्य तथा न पिप्रिये, यथा व्यक्तलक्ष्म परिभोगमण्डनं ( प्रेक्ष्य ) ॥३०

अन्वय: । मित्रकृत्यम् अपदिश्य पार्श्वत: प्रस्थितम् अनवस्थितम् तं प्रिया: हे शठ ! पलायनच्छलानि अञ्जसा विद्म इति कचग्रहै: रुरुधु: ॥३१

अन्वय: । निर्दयरतिश्रमालसा: योषित: कण्ठसूत्रम् अपदिश्य पीवरस्तनविलुप्तचन्दनं तस्य बृहद्भुजान्तरम् अध्यशेरत ॥३२

युवा स: अग्निवर्णोऽतिशक्रं यथा तथा शोभमानमतिशक्रशोभिनं दर्पणतलस्थं दर्पणसंक्रान्तमात्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष, यथा व्यक्तलक्ष्म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥३०

मित्रकृत्यं सुहृत्कार्यमपदिश्य व्याजीकृत्य पार्श्वत: प्रस्थितमन्यतो गन्तुमुद्युक्तमनवस्थितमवस्थातुमक्षमं तमग्निवर्णं प्रिया हे शठ ! हे गूढविप्रियकारिन् ! "गूढाविप्रियकृच्छठ:" इति दशरूपके । तव पलायनस्य छलानि अञ्जसा तत्त्वत: "तत्त्वे त्वद्धाञ्जसा द्वयम्" इत्यमर: । विद्म जानीम, "विदो लटो वा" इति वैकल्पिक आदेश: । इति उक्त्वेति शेष: कचग्रहै: केशाकर्षणै: रुरुधु: । अत्र गोनर्दीय:—"ऋतुस्नातामभिगमने मित्रकार्ये तथापदि । सर्वेष्वेतेषु प्रियतम: समन्व्यो वारगम्यया ॥" इति विरक्तलक्षणप्रस्तावे वात्स्यायन:—"मित्रकार्यं चापदिश्यान्यत्र शेते" इति ॥३१

निर्दयरतिश्रमेण अलसा निश्चेष्टा योषित: कण्ठसूत्रं आलिङ्गनविशेषमपदिश्य व्याजीकृत्य पीवरस्तनाभ्यां विलुप्तचन्दनं प्रमृष्टाङ्गरागं तस्य अग्निवर्णस्य बृहद्भुजान्तरमध्यशेरत वक्ष:स्थले शेरते स्म । कण्ठसूत्रलक्षणन्तु—"यत् कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निबिडोपगूहात् । परिश्रमार्थं शनकैर्विदग्धास्तत् कण्ठसूत्रं प्रवदन्ति सन्त: ॥" इदमेव रतिरहस्ये, स्तनालिङ्गनमित्युक्तम् । तथाच—"उरसि च प्रियसुखेरादिशन्ती वराङ्गी स्तनयुगमुपधत्ते यत् स्तनालिङ्गनं तत्" इति ॥३२

सङ्गमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः ।
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥ ३३

योषितामुडुपतेरिवार्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन् ।
आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ॥ ३४

वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः ।
शिल्पकार्य उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन् ॥ ३५

अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन् ।
स प्रयोगनिपुणैः प्रयोक्तृभिः सञ्जघर्ष सह मित्रसन्निधौ ॥ ३६

अन्वयः । सङ्गमाय निशि गूढचारिणं चारदूतिकथितं तम् अङ्गनाः पुरः गताः (सत्यः) (हे) कामुक ! तमोवृतः (सन्) कुतः वञ्चयिष्यसि इति चकृषुः ॥३३

अन्वयः । उडुपतेः अर्चिषां इव योषितां स्पर्शनिर्वृतिं अवाप्नुवन्, रात्रिजागरपरः दिवाशयः असौ कुमुदाकरोपमां प्राप ॥३४

अन्वयः । दशनपीडिताधराः नखपदाङ्कितोरवः वेणुना वीणया (च) उभयेन वेजिताः शिल्पकार्य्यः तं विजिह्मनयनाः (सत्यः) व्यलोभयन् ॥३५

अन्वयः । अङ्गसत्त्ववचनाश्रयं नृत्यम् मिथः स्त्रीषु उपधाय दर्शयन् सः मित्रसन्निधौ प्रयोगनिपुणैः प्रयोक्तृभिः सञ्जघर्ष ॥३६

सङ्गमाय सुरतार्थं निशि गूढमज्ञातं चरति इष्टगृहं प्रति गच्छतीति गूढचारी तं चारदूतिकथितं, चरन्तीति चारा गूढचारिण्यः, 'ज्वलिति कसन्तेभ्यो णः' इति णप्रत्ययः। चाराश्च ताः दूत्यश्च चारदूतयः, ताभिः कथितं निवेदितं तमग्निवर्णम् अङ्गनाः पुरः अग्रे गताः अवरुद्धमार्गाः सत्य इत्यर्थः। हे कामुक ! तमसा वृतो गूढः सन् कुतो वञ्चयिष्यसीति उपालभ्येति शेषः, चकृषुः स्ववासं निन्युरित्यर्थः ॥३३

उडुपतेरिन्दोरर्चिषां भासामिव 'ज्वाला भासो नपुंस्यर्चिः' इत्यमरः। योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन्। किञ्च, रात्रिषु जागरपरः दिवा दिवसेषु शेते स्वपितीति दिवाशयः, "अधिकरणे शेतेः" इत्यच्प्रत्ययः। असौ अग्निवर्णः कुमुदाकरस्य उपमां सादृश्यमारुरोह प्राप ॥३४

दशनैः पीडिताधरा दष्टोष्ठाः। नखपदैर्नखक्षतैरङ्कितोरवश्चिह्नितोरुस्थलाः, वनिताधरोरुत्वादक्षमा इत्यर्थः। तथापि वेणुना वीणया चेत्युभयेन। अधरोरुपीडाकारिणेत्यर्थः। वेजिताः पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति शिल्पकार्य्यो गायिकाः। "कर्मण्यण्" इत्यण्। 'टिड्ढाणञ्—' इत्यादिना ङीप्। तं विजिह्मनयनाः कुटिलदृष्टयः सत्यः, स्वं वैष्टितं जानन्नपि वृथा न पीडयतीति साभिप्रायं पश्यन्त्य इत्यर्थः व्यलोभयन्। तथाविधाश्लोकनमपि तस्याकर्षकमेवाभूदिति भावः ॥३५

अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत् कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७
विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवास्ता विवृत्य विशतीर्भुजान्तरम् ॥ ३८
कार्त्तिकीषु सवितानहर्म्यभाग् यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९

अन्वयः । प्रावृषि अंसलम्बिकुटजार्जुनस्रजः नीपरजसाङ्गरागिणः तस्य प्रमदबर्हिणेषु कृत्रिमाद्रिषु विहारविभ्रमः अभूत् ॥ ३७

अन्वयः । स विग्रहात् शयने पराङ्मुखीः अबलाः अनुनेतुं न तत्वरे, घनशब्दविक्लवाः विवृत्य भुजान्तरं विशतीः ताः आचकाङ्क्ष ॥ ३८

अन्वयः । कार्त्तिकीषु यामिनीषु सवितानहर्म्यभाक् ललिताङ्गनासखः सः सुरतश्रमापहां मेघमुक्तविशदां चन्द्रिकाम् अन्वभुङ्क्त ॥ ३९

अङ्गं हस्तादि, सत्त्वमन्तःकरणम्, वचनं गेयं चाश्रयः कारणं यस्य तदङ्गसत्त्ववचनाश्रयम् । आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधमित्यर्थः । यथाह भरतः—"सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः" इति । नृत्यमभिनयं मिथो रहसि स्त्रीषु नर्तकीषूपधाय निधाय अयन् स मित्रसन्निधौ सहचरसमक्षं प्रयोगेऽभिनये निपुणैः कृतिभिः प्रयोक्तृभिरभिनयार्थप्राचकैर्नाट्याचार्यैः सह सङ्घर्षं सस्पर्धं कृतवान् । सङ्घर्षः पराभिभवेच्छा ॥ ३६

इतः प्रभृति तस्य कृत्रिमाद्रिषु विरचितविहारप्रकारमाह—प्रावृषि अंसलम्बिन्यः कुटजानामर्जुनानां ककुभानाञ्च स्रजो यस्य तस्य । नीपानां कदम्बकुसुमानां रजसा अङ्गरागिणोऽङ्गरागवतस्तस्य अग्निवर्णस्य प्रमदबर्हिणेषु उन्मत्तमयूरेषु कृत्रिमाद्रिषु विहार एव विभ्रमो विलासः अभूत् अभवत् ॥ ३७

प्रावृषेण्यनुषज्यते । सोऽग्निवर्णो विग्रहात् प्रणयकलहात शयने पराङ्मुखीरबला अनुनेतुं न तत्वरे न त्वरितवान् । किन्तु घनशब्देन घनगर्जितेन विक्लवाः शङ्किताः अत एव स्वयमेवाभिमुखीभूय भुजान्तरं विशतीः प्रविशन्तीः "आच्छीनद्योर्नुम्" इति नुमागमः । ता अबला आचकाङ्क्ष । स्वयंग्रहादेव आभिमुख्यमैच्छदित्यर्थः ॥ ३८

कार्त्तिकस्येमाः कार्त्तिक्यः, "तस्येदम्" इत्यण् । तासु यामिनीषु निशासु । शरद्राविसवितानानि उपरि वस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक् । भजेः ण्विप्रत्ययः । हिमवारणार्थं सवितानमुक्तम् । ललिताङ्गनासखः स अग्निवर्णः सुरतश्रमापहां मेघमुक्ता चासौ विशदा च ताम् बहुलग्रहणात् सविशेषणसमासः । चन्द्रिकामन्वभुङ्क्त ॥ ३९

सैकतञ्च सरयूं विवृण्वतीं श्रोणिबिम्बमिव हंसमेखलम् ।
स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ॥ ४०
मर्मरैरगुरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥ ४१
अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः ॥ ४२
दक्षिणेन पवनेन सम्भृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
अन्वनैषुरवधूतविग्रहास्तं दुरुत्सहवियोगमङ्गनाः ॥ ४३

अन्वयः । हंसमेखलं सैकतं श्रोणिबिम्बम् इव विवृण्वतीं स्वप्रियाविलसितानुकारिणीं सरयूं च सौधजालविवरैः व्यलोकयत् ॥ ४०

अन्वयः । मर्मरैः अगुरुधूपगन्धिभिः व्यक्तहेमरशनैः हैमनैः निवसनैः सुमध्यमाः एकतः आग्रथनमोक्षलोलुपं तं जह्रुः ॥ ४१

अन्वयः । निवातकुक्षिषु गर्भवेश्मसु अर्पितस्तिमितदीपदृष्टयः सर्वसुरतान्तरक्षमाः शिशिररात्रयः तस्य साक्षितां ययुः ॥ ४२

अन्वयः । अङ्गनाः दक्षिणेन पवनेन सम्भृतं सपल्लवं चूतकुसुमं प्रेक्ष्य अवधूतविग्रहाः (सत्यः) दुरुत्सहविरहं तम् अन्वनैषुः ॥ ४३

किञ्च, हंसा एव मेखला यस्य तत् सैकतं पुलिनं श्रोणिबिम्बमिव विवृण्वतीम् अतएव स्वप्रियाविलसितानि अनुकरोतीति तद्विधां सरयूं सौधस्य जालानि गवाक्षाः त एव विवराणि तैर्व्यलोकयत् ॥ ४०

मर्मरैः संस्कारविशेषात् शब्दायमानैः "अथ मर्मरः । स्वनिते वस्त्रवर्णानाम्" इत्यमरः । अगुरुधूपगन्धिभिर्व्यक्तहेमरशनैर्लौल्यात् लक्ष्यमाणकनकमेखलागुणैर्हैमनैर्हेमन्ते भवैः "सर्वत्राण् च तलोपश्च" इति हेमन्तशब्दादण्प्रत्ययस्तलोपश्च । निवसनैरंशुकैः सुमध्यमाः स्त्रिय एकतो नितम्बे कटौ च आग्रथनमोक्षयोर्नीवीबन्धविस्रंसनयोर्लोलुपं आसक्तं तं जह्रुराचक्षुः ॥ ४१

निवाता वातरहिताः कुक्षयोऽभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेषु अर्पिता दत्ता स्तिमिता निवातत्वात् निश्चला दीपा दृष्टयो याभिस्ताः, अवानिमिषदृष्टित्वं च गम्यते । सर्वसुरतान्तरक्षमाः तापस्वेदापनोदनत्वात् दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयस्तस्य अग्निवर्णस्य साक्षितां ययुः । विविक्तकालदेशत्वात् यथेष्टविहारीत्यर्थः ॥ ४२

अङ्गना दक्षिणेन पवनेन मलयानिलेन सम्भृतं जनितं सपल्लवं चूतकुसुमं प्रेक्ष्य अवधूतविग्रहास्त्यक्तविरोधाः सत्यो दुरुत्सहवियोगं दुःसहविरहं तं अन्वनैषुः । तद्विरहमसहमानाः स्वयमेव अनुनीतवत्य इत्यर्थः ॥ ४३

ताः स्वमङ्कमधिरोप्य दोलया प्रेङ्खयन् परिजनापविद्धया ।
मुक्तरज्जु निविडं भयच्छलात् कण्ठबन्धनमवाप बाहुभिः ॥ ४४

तं पयोधरनिषिक्तचन्दनैर्मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५

यत् स लग्नसहकारमासवं रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात् कृशश्चित्तयोनिरभवत् पुनर्नवः ॥ ४६

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहितः ॥ ४७

अन्वयः । ताः स्वम् अङ्कम् अधिरोप्य परिजनापविद्धया दोलया मुक्तरज्जु (यथा तथा) प्रेङ्खयन् भयच्छलात् बाहुभिः निविडं कण्ठबन्धनम् अवाप ॥४४

अन्वयः । प्रियाः पयोधरनिषिक्तचन्दनैः मौक्तिकग्रथितचारुभूषणैः श्रोणिलम्बिमणिमेखलैः ग्रीष्मवेषविधिभिः तं सिषेविरे ॥४५

अन्वयः । सः लग्नसहकारं रक्तपाटलसमागमं आसवं पपौ (इति) यत्, तेन मधुनिर्गमात् कृशः तस्य चित्तयोनिः पुनः नवः अभवत् ॥४६

अन्वयः । अनङ्गवाहितः अन्यकार्यविमुखः सः पार्थिवः, एवम् इन्द्रियसुखानि निर्विशन् आत्मलक्षणनिवेदितान् ऋतून् अत्यवाहयत् ॥४७

ता अङ्गनाः स्वम् अङ्कं स्वकीयमुत्सङ्गमधिरोप्य परिजनेन अपविद्धया सम्प्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयन् चालयन् भयच्छलात् पतनभयमिषात् बाहुभिरङ्गनाभुजैर्निविडं कण्ठबन्धनं अवाप प्राप । स्वयंग्राहं असुखमन्वभूदित्यर्थः ॥४४

प्रियाः पयोधरेषु स्तनेषु निषिक्तं उचितं चन्दनं येषु तैः मौक्तिकैर्ग्रथितानि प्रोतानि चारुभूषणानि येषु तैः, मुक्ताप्रायाभरणैरित्यर्थः । श्रोणिलम्बिन्यो मणिमेखला मरकतादिमणियुक्तकटिसूत्राणि येषु तादृशैर्ग्रीष्मवेषविधिभिः उष्णकालोचितनेपथ्यविधानैः शीतलोपायैरित्यर्थः । तं अग्निवर्णं सिषेविरे ॥४५

सोऽग्निवर्णो लग्न सहकारस्य चूतपल्लवो यस्मिन् तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यत्र तं आसवं मद्यं पपौ इति यत्, तेन आसवपानेन मधुनिर्गमात् वसन्तापगमात् कृशो मन्दवीर्यस्तस्य चित्तयोनिः कामः पुनर्नवः प्रबलः अभवत् ॥४६

एवमनङ्गवाहितः कामप्रेरितोऽन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन् अनुभवन् आत्मनो लक्षणैः कुटजकदम्बधारणादिचिह्नैर्निवेदितान् अयं ऋतुः इदानीं वर्त्तत इति ज्ञापितान् ऋतून् वर्षादीन् अत्यवाहयत् अगमयत् ॥४७

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसम्भवो दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८
दृष्टदोषमपि तन्न सोऽत्यजत् सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते ॥ ४९
तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहानिराययौ कामयानसमवस्थया तुलाम् ॥ ५०

अन्वयः । प्रमत्तम् अपि तं प्रभावतः अन्यपार्थिवाः आक्रमितुम् न शेकुः, रतिरागसम्भवः आमयः तु दक्षशापः चन्द्रम् इव अक्षिणोत् ॥४८

अन्वयः । भिषजाम् अनाश्रवः सः दृष्टदोषं अपि तत् सङ्गवस्तु न अत्यजत्, (तथा हि) इन्द्रियगणः स्वादुभिः विषयैः हृतः तु (चेत्) ततः दुःखं निवार्यते ॥४९

अन्वयः । तस्य पाण्डुवदना अल्पभूषणा सावलम्बगमना मृदुस्वना राजयक्ष्मपरिहानिः कामयानसमवस्थया तुलाम् आययौ ॥५०

प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतः अन्यपार्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः । रतिरागसम्भव आमयो व्याधिस्तु क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव अक्षिणोत् अकर्शयत् । शापोऽपि रतिरागसम्भव इति । तत्र दक्षः किल अन्याः स्वकन्याः उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप । स शापस्य अद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥४८

भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । 'वचने स्थित आश्रवः' इत्यमरः । अविधेय इत्यर्थः । स दृष्टदोषमपि रोगजननादिति शेषः । तत् सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं वस्तु न अत्यजत् । तथाहि—इन्द्रियगणः स्वादुभिर्विषयैर्हृतस्तु हृतश्चेत् ततस्तेभ्यो विषयेभ्यः दुःखं कृच्छ्रेण निवार्यते यदि, वार्य्येतेति शेषः । दुस्त्यजाः खलु विषया इत्यर्थः ॥४९

तस्य राज्ञः पाण्डुवदना अल्पभूषणा परिमिताभरणा सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्याः सा सावलम्बगमना मृदुस्वना हीनस्वरा राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोगः तेन या परिहाणिः क्षीणावस्था सा, कामयते विषयान् इच्छति कामयानः कर्त्तरि शानच् 'अनित्यमागमशासनम्' इति मुमागमाभावः । एतदेव अभिप्रेत्य उक्तं वामनेनापि—"कामयानशब्दः सिद्धोऽनादिश" इति । तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । कामवती विशेषोऽवस्था । "विशेषः कालिकोऽवस्था" इत्यमरः ॥५०

व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्म्मपल्वलम् ।
राज्ञि तत्कुलमभूत् क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥ ५१

वाढ़मेष दिवसेषु पार्थिवः कर्म्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥ ५२

स त्वनेकवनितासखोऽपि सन् पावनीमनवलोक्य सन्ततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥ ५३

तं गृहोपवन एव सङ्गताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः सम्भृते शिखिनि गूढ़मादधुः ॥ ५४

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्म्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥ ५५

अन्वयः । राज्ञि क्षयातुरे ( सति ) तत् कुलं पश्चिमकलास्थितेन्दु व्योम वा, पङ्कशेषं घर्मपल्वलम् इव, वामनार्चिः दीपभाजनं इव अभूत ॥ ५१

अन्वयः । वाढ़म् एषः पार्थिवः दिवसेषु पुत्रजन्मने कर्म्म साधयति इति अदर्शितरुजः ( सन्तः ) अस्य मन्त्रिणः अघशङ्किनीः प्रजाः शश्वत् ऊचुः ॥ ५२

अन्वयः । सः तु अनेकवनितासखः ( सन् ) अपि पावनीं सन्ततिम् अनवलोक्य वैद्ययत्नपरिभाविनं गदं प्रदीपः वायुम् इव न अत्यगात ॥ ५३

अन्वयः । पश्चिमक्रतुविदा पुरोधसा सङ्गताः मन्त्रिणः गृहोपवने एव रोगशान्तिम् अपदिश्य तम् सम्भृते शिखिनि गूढ़म् आदधुः ॥ ५४

अन्वयः । आशु कृतप्रकृतिमुख्यसंग्रहैः तैः मन्त्रिभिः साधु दृष्टशुभगर्भलक्षणा तस्य सहधर्मचारिणी नराधिपश्रियं प्रत्यपद्यत ॥ ५५

राज्ञि क्षयातुरे सति तत्कुलं रघुकुलं पश्चिमकलायां स्थित इन्दुर्यस्मिन् तत् कलावशिष्टेन्दु व्योम वा व्योम इव वाशब्द इवार्थे । यथाह दण्डी—"इववत् वायथाशब्दौ" इति । पङ्कशेषं घर्मपल्वलमिव वामनार्चिरल्पशिखं दीपभाजनं दीपपात्रमिव अभूत् ॥ ५१

वाढ़ं सत्यमेषः पार्थिवो दिवसेषु पुत्रजन्मने पुत्रोदयार्थं कर्म जपादिकं साधयति । एवमदर्शितरुजो निगूहितरोगाः सन्तः अस्य राज्ञो मन्त्रिणः अघशङ्किनीर्व्यसनशङ्किनीः प्रजाः शश्वत् ऊचुः ॥ ५२

स तु अग्निवर्णोऽनेकवनितासखः सन् अपि पावनीं पितृणमोचनीं सन्ततिम् अनवलोक्य अनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगं प्रदीपो वायुमिव न अत्यगात् न अतिक्रान्, ममारेत्यर्थः ॥ ५३

पश्चिमक्रतुविदा अन्त्येष्टिविधिज्ञेन पुरोधसा सङ्गताः समेता मन्त्रिणो गृहोपवन एव आराम एव "आरामः स्यादुपवनम्" इत्यमरः । रोगशान्तिमपदिश्य शान्तिकर्मापदिश्य तं अग्निवर्णं सम्भृते समिद्धे शिखिनि अग्नौ गूढ़म् अप्रकाशं आदधुर्निदधुः ॥ ५४

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः॥ ५६

तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
मन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना।
मौलैः सार्द्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा॥ ५७

अन्वयः। तथाविधनरेन्द्रविपत्तिशोकात् उष्णैः विलोचनजलैः प्रथमाभितप्तः, तस्याः गर्भः कनककुम्भमुखोज्झितेन शिशिरेण वंशाभिषेकविधिना निर्व्वापितः॥५६

अन्वयः। प्रसवसमयाकाङ्क्षिणीनां प्रजानां भावार्थं क्षितिः अन्तर्गूढं नभोबीजमुष्टिम् इव तं (गर्भं) दधाना हेमसिंहासनस्था अव्याहताज्ञा राज्ञी मौलैः स्थविरसचिवैः सार्द्धं भर्तुः राज्यं विधिवत् अशिषत्॥५७

अथ शीघ्रं कृतं प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः सन्निपातनं येषाङ्गैर्लक्ष-लिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्य अग्निवर्णस्य सहधर्म-चारिणी नराधिपश्रियं प्रत्यपद्यत राजलक्ष्मीं प्राप॥५५

तथाविधया नरेन्द्रविपत्त्या यः शोकस्तस्मादुष्णैर्विलोचनजलैः प्रथमाभितप्तस्तस्या गर्भः कनककुम्भानां मुखैर्धारैरुज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना वंशराज्याभिषेकजलेन निर्व्वापितः आप्यायितः॥५६

प्रसवो गर्भमोचनम्। फलञ्च विवक्षितम्, "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः। तस्य यः समयस्तदाकाङ्क्षिणीनां प्रजानां, भावार्थं भावाय भूतये इत्यर्थः। "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु" इति यादवः। क्षितिरन्तर्गूढं नभोबीजमुष्टिमिव श्रावणमासि उप्तं यथा धत्ते तद्वदित्यर्थः। मुष्टिशब्दो द्विलिङ्गः। 'अलीवौ मुष्टिमुस्तकौ' इति यादवः। अन्तर्गूढमन्तर्गतं तं गर्भं दधाना हेमसिंहासनस्था अव्याहताज्ञा राज्ञी मौलैर्मूले भवैर्मूलादागतैर्वा सार्द्धं रित्यर्थः। स्थविरसचिवैर्वृद्धामात्यैः सार्द्धं भर्तुः राज्यं विधिवत् विध्यर्हं यथाशास्त्रमित्यर्थः। अर्हार्थे वतिप्रत्ययः। अशिषत् शास्ति स्म। "सर्त्तिशास्त्यर्त्तिभ्यश्च" इति च्लेरङ्। "शास इदङ्हलोः" इतीकारः॥५७

इति श्रीमहामहोपाध्याय कोलाचल मल्लिनाथ-सूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि-कालिदासकृतौ रघुवंशे महाकाव्ये अग्निवर्ण-शृङ्गारो नाम एकोनविंशः सर्गः।

———

समाप्तम्।

